द्वित्तवृत्त्या बाध्येतेति'। यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्ततइति राज्ञोनन्तरो राजानन्तर इत्यादिषु सावकाशा समासवृत्तिस्तद्धितवृत्त्या बाध्येत यथा दाक्षिरित्यण् प्रत्यय इञेति भावः । 'एतदपीति'। समासवृत्त्याख्यं कार्यमित्यर्थः ॥

"प्राग्दीव्यतोण्" ॥ 'तेन दीव्यतीति वक्ष्यतीति'। यदि तस्येदमनुकरणं प्राग्दीव्यतेरिति वक्तव्यं कथं प्राग्दीव्यतइति निर्द्देशात आह । 'तदेकदेश इति'। भवति हि समुदायगुणीभूतस्याप्येकदेशस्य पृथक्कृत्यानुकरणं यथास्य वामीयमित्यत्रेति भावः । प्रत्यय इत्यादिवदणित्येवाधिकारे सत्यत इञित्यादिनापवादप्रकरणेन विच्छिन्नस्याणस्तेन रक्तं रागादित्यादिष्वर्थेषूपस्थानं न स्यात् तस्मादधिकारपरिमाणख्यापनार्थं प्राग्दीव्यतइत्युक्तम् । 'त्रिष्वपि दर्शनेष्वित्यादि'। नन्वधिकारपक्षेपि प्रतियोगमुपस्थानादत इञ् अणवेत्यणपि प्राप्नोति, परिभाषापक्षेपि प्राग्दीव्यतीयाः प्रकृतयस्ताभ्यः सर्वाभ्योण् परिभाष्यमाणः केनापवादविषये न स्यात्, एवं विधिपक्षेपि सर्वत्र प्रसङ्गः, एवं मन्यते यदयं पीलाया वेति सूत्रमारभते तज्ज्ञापयति नापवादविषयेण् भवतीति अन्यथा द्व्यच इति ठक् सिद्धः, अनेन चाणित्यनर्थकं तत्स्यादिति, उदश्वितोन्यतरस्यामिति विकल्पवचनमप्यस्मिन्नर्थे लिङ्गम् । वयं तु ब्रूमः । प्राग्दीव्यत इति नेदं दीव्यतीतिशब्दैकदेशस्य दीव्यच्छब्दस्यानुकरणं किं तर्हि तत्रत्योऽर्थो निर्द्दिश्यते दीव्यतोर्थात्प्रागिति, तत्र दिवेर्लटि कर्त्तर्य्यर्थादित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाप्यप्रथमान्तेन सामानाधिकरण्याल्लटः शत्रादेशः कृतः, तत्रावधेरर्थत्वादवधिमन्तोप्यर्था एव प्रतीयन्ते सजातीयविषयत्वेन प्रसिद्धतरत्वादवध्यवधिमद्भावस्य, ततश्च प्राग्दीव्यतो येर्थास्तेष्वेवास्य त्रिष्वपि पक्षेषु व्यापारः, तत्र समानेर्थे प्रकृतिविशेषादुत्पद्यमानोपवादोऽणं बाधतइति सिद्धमिष्टम् ॥

"अश्वपत्यादिभ्यश्च" ॥ 'प्राग्दीव्यतीयेष्विति'। अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावाद्बहुवार्थे वृद्धाच्छः, अव्ययानां भमात्रे इति टिलोपो न भवति, लुङ्मुखस्वरोपचारा इति परिगणनात् । अत एवा-

ण्यपत्येष्वपि न भवति, अमेहक्कतसित्रेभ्य इति परिगणनाद्वा, गणपतिशब्दस्यात्र पाठाद्गाणपत्यो मन्त्र इत्यपशब्दः। एतेन चैत्रपत्य व्याख्यातम्, चैत्रपत्यं चरुं निर्वपेदिति तु छान्दसं, चैत्रपत्यं प्राश्नन्तीति छन्दोवदृषयः कुर्वन्ति ॥

"दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ॥ पतिशब्दस्योत्तरपदशब्देन[1] बहुव्रीहौ कृते पश्चाद् द्वन्द्वो न तु द्वन्द्वस्योत्तरपदशब्देन बहुव्रीहिरित्याह। 'पत्युत्तरपदाच्चेति'। एतच्च प्रत्यासत्तेर्व्याख्यानाद्वा लभ्यते, अदितिग्रहणं तु तदुत्तरपदपरिग्रहार्थं स्यात्, नह्यदित्युत्तरपदं दित्युत्तरपदं भवति, पत्यन्तादिति नोक्तं बह्वच्पूर्वान्माभूदिति। 'वाङ्मतिपितृमतांमिति'। कुर्वादिषु मतिपितृमच्छब्दयोः पाठोऽपत्यार्थो भावायामपि ण्यो यथा स्यादिति, अनेन तु छन्दसि सर्वत्रैव प्राग्दीव्यतीयेषु ण्यविधिः, केचिद्वाक्शब्दमपि तत्रैव पठन्ति, तेन वाना वाच्या गते वत्सा इति प्रयोगोपपत्तिः। 'यमाच्चेति'। यमशब्दोपि सूत्रे पठितव्य इत्यर्थः। 'पृथिव्या ञाञाविति'। ञाञोः स्त्रियां विशेष इत्याह। 'पार्थिवा पार्थिवीति'। 'स्थाम्न इति'। बलवचनोयं, तस्य केवलस्य यद्यप्यपत्येन योगो नास्ति जातादिना तु योगः सम्भवत्येव, सर्वेषु च प्राग्दीव्यतीयेष्वयं विधिः, तस्मादश्वत्थाम इति भाष्योदाहरणाच्च तदन्तविधिर्भवति। 'अश्वत्थाम इति'। अश्वस्येव स्थाम यस्येति बहुव्रीहौ अकारच्छिलोपः, पृषोदरादित्वात्सकारस्य तकारः। 'लोम्नोपत्ये बहुष्विति'। बाह्वादिष्वयं पठ्यतइतीञि प्राप्ते बहुष्वकारः, केवलस्यापत्येनायोगात्सामर्थ्यात्तदन्तविधिः। 'उडुलोमा इति'। उडूनीव लोमान्यस्य, शरा इव लोमान्यस्येति बहुव्रीहिः,। ननु बाह्वादिलक्षणे इञ्यपि कृते तस्य बह्वच इति लुकि सुबन्तादिञुत्पन्न इति प्रत्ययलक्षणेन सुबन्तं पदमिति पदसञ्ज्ञायां नलोपेन सिद्धं, सिद्धं तु नामेदमुडुलोमैः उडुलोमभ्य इत्येवमादौ सुब्विधौ नलोपस्यासिद्धत्वादैसादिर्न स्यात्, इञो लुगपि प्राच्यभरतगो-

[1] सहेत्यधिकं २ पुं

त्वादन्यत्र न सिद्ध्यति, न वात्र पदसञ्ज्ञा, असर्वनामस्थानइति निषेधात् । यथा च प्रत्ययलक्षणेन प्राप्तायाः सुबन्तमित्यस्या अपि पदसञ्ज्ञायाः स निषेधस्तथोक्तं पुरस्तात् । 'सर्वत्रेति' । नापत्यएव, यद्वा प्राग्दीव्यतीयेऽन्यत्र च, तेन गवा चरतीत्यत्रापि गव्य इति भवति । 'गोरूप्यमिति' । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः, मयड् वेति रूप्यमयटौ । 'ण्यादय इति' । येन नाप्राप्तिन्यायेनाण एव ण्यादयोऽपवादा अणपवादैस्तु ढगादिभिः सह सम्प्रधारणायां परत्वात्तएव स्युरिति वार्त्तिकारम्भः, अर्थविशेषोऽपत्यादिलक्षणं निमित्तं यस्य सोऽर्थविशेषलक्षणः, यस्तु तस्येदमित्यर्थसामान्यलक्षणोऽणपवादः स परत्वाद्भवति, उड्डपतिर्नाम पत्रं तस्येदमौडुपतं, पत्राध्वर्युपरिषदश्चेत्यञ् भवति न तु ण्यः । 'दितेरपत्यमिति' । अत्रतश्चानिञ इति ढक् न भवति, दैत्येय इत्यादावेव तु भवति । 'वानस्पत्यमिति' । अचित्तादिलक्षणष्ठक् न भवति आपूपिकादावेव तु भवति । 'कथं दैतेय इति' । 'अत्र तर्हीति' । गम्यमानत्वाच्च प्रयुक्तं, यदि ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेन भवन्ति, कथं तर्हि दैतेयः सिध्यतीत्यर्थ । 'दितिशब्दादित्यादि' । ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ङीषन्तादपि ण्य एव प्राप्नोति, तत्राह । 'लिङ्गविशिष्टपरिभाषा चानित्येति' । अन्ये तु भाष्यवार्त्तिकयोरनुक्तत्वाद्दैतेय इत्यसाधुरिति स्थिताः ॥

"उत्सादिभ्योऽञ्" ॥ 'तदपवादानां चेति' । इञादीनाम् । 'बष्कयासइति' । बष्कयशब्दोऽनुत्पादयति, असे, असमास इत्यर्थः । पूर्वाचार्यसंज्ञेयं,बाष्कयः । असइति किम् । गोबष्कयिः,[1] ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेवात्र न भविष्यति, ज्ञापनार्थं तु एतज्ज्ञापयति भवत्यत्र तदन्तविधिरिति, किं सिद्धं भवति, धेनुशब्दोऽत्र पठ्यते तदन्तादपि भवति अधेनूनां समूह आधेनवमिति । 'उदस्थानदेशइति' । उदस्थानशब्दोऽसमुत्पादयति देशे वाच्ये, औदस्थानो देशः, देशादन्यत्र यदृच्छया कश्चिदुदस्थानः, तस्यापत्यमौदस्थानिः । 'पृषदंश-

[1] पारमबष्कयिरित्यधिकं २ पु॰ ।

इति'। पृषच्छब्दोऽमुत्पादयति अंशे वाच्ये, पार्षतोंशः, अंशादन्यत्राण्येव भवति। 'त्रैष्मी त्रिष्टुबिति'। ग्रीष्मो देवता अस्या इत्यशेषार्थविवक्षायामौत्सर्गिकोऽणेव भवति, ग्रीष्मे भवेत्यादिशेषविवक्षायां तु छत्वमेव सिद्धं, नह्यनेनाञा शैषिकस्याणो बाधप्रसङ्गः, अर्थविशेषलक्षणानामेव प्रत्ययानां घयादिभिर्बाधनात्, छत्वण् तु शेषमात्रे विधानार्थविशेषलक्षणः, कक्षान्तरप्राप्तश्च, कथं, कालाट्ठञ् अणोऽपवादः तस्याप्यण्। 'छन्दश्चेह वृत्तं गृह्यतइति'। यस्य त्रिष्टुबादयो विशेषाः। 'न वेद इति'। तेन वेदविषये ऽपि वृत्तेभिधेये ऽञः प्रतिषेधादण्व भवति त्रैष्मी त्रिष्टुबिति॥

"स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्"॥ 'स्त्रीशब्दात्पुंसशब्दाच्चेति'। स्त्र्यधिकारविहितानां टाबादीनां पुंसि सञ्ज्ञायां घ इत्येतदधिकारविहितानां च प्रत्ययानां ग्रहणं न भवति, स्त्रीपुंसशब्दयोरस्वरितत्वात्, नापि स्त्रीपुंसार्थग्रहणं, स्वंरूपं शब्दस्येति वचनात्। 'पौंस्नमिति'। संयोगान्तस्य लोप इति पुंसशब्दसकारस्य लोपः, तत्र कर्तव्ये ऽनुस्वारस्यासिद्धत्वात्सकारस्य संयोगान्तत्वात्। अत एव संयोगान्तलोपप्रसङ्गान्नञ्स्नञोभाभ्यां न विधीयते, एवं हि मा भूवन् मा च भूत्वन् अत्र प्रकृतस्तत्रैतावदस्तु स्त्रीपुंसयोर्नञ्चेति, तत्रायमप्यर्थः, स्त्रैणी पौंस्नी अत्र इतीकारः सिद्धो भवति, नैवं शङ्क्यं स्त्रैणाः पौंस्नाः, यञञोश्चेति बहुषु लुक् प्राप्नोति, इह च स्त्रैणानां सङ्घः सङ्घाङ्कलक्षणेष्वञ्यञिञामित्यण् प्राप्नोति, नैष दोषः। उभयत्रापि गोत्रइति वर्तते, लौकिकस्य च गोत्रस्य ग्रहणं ऋषिप्रजनं च लोके गोत्रमुपचरन्ति, न च स्त्र्यर्थेनापि पुंशब्दवाच्य सामान्यं, नस्तद्धितइति टिलोपस्तर्हि प्राप्नोति, प्रकृत्यैकाजिति प्रकृतिभावो भविष्यति, इष्ठेमेयस्स्विति तत्रानुवर्तते, एवं तर्हि नञ्विधानसामर्थ्याट्टिलोपो न भविष्यति, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते तत्र टिलोपार्थमेव नञ्विधानं स्यात् स्त्रीशब्दस्यापि नञेव लोपस्य निमित्तम्, अन्यथा यस्येति लोपात्परत्वाद्वृद्धिः स्यात्, यथा श्रीर्देवता अस्य श्रायं हविरिति,

तस्माद्यथान्यासमेवास्तु । 'योगापेतं चेति' । स्त्रीपुंमाभ्यामित्यय योगो वत्यर्थे न प्रवर्त्ततइत्येवं ज्ञापनशरीरं न तु स्नञ् वत्यर्थे न प्रवर्त्ततइत्यर्थः । कथं स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्ता चेति, आ च त्वादित्यत्र परिहारो भविष्यति ॥

"द्विगोर्लुगनपत्ये" ॥ 'द्विगोरिति षष्ठीति' । आनन्तर्यलक्षणायां तु पञ्चम्यां पञ्चकपालस्य पुरोडाशस्येदं, तस्येदमित्यण्, पाञ्चकपालमित्यत्रापि प्राप्नोतीति भावः । यद्यपि यद्यानन्तर्ययोगे स्यात्स एव दोषो यः पञ्चम्यां, ततश्च षष्ठ्याश्रयणमनर्थकं स्यादिति मत्वाह । 'द्विगोर्यः सम्बन्धी निमित्तत्वेनेति' । यस्य तद्धितस्यार्थे तद्धितार्थोत्तरपदेति द्विगुर्विहितः स निमित्तत्वेन सम्बन्धी । 'पञ्चकपाल इति' । संस्कृतं भक्षा इत्यत्रार्थे विवक्षिते द्विगुः, अण्, तस्य लुक्, । 'द्विवेद इति' । तदधीते तद्वेदेत्यत्रार्थे द्विगुः । 'द्वैदेवदत्तिरिति' । द्वयोर्देवदत्तयोरपत्यम्, अत इञ्, अपतनादपत्यं, यस्य पित्रादिषु द्वौ देवदत्तसञ्ज्ञकौ स एवमुच्यते, एकस्य वा दत्तपुत्रोऽन्यस्य साक्षात्पुत्रः । 'द्विगुनिमित्तविज्ञानादिति' । द्विगुनिमित्तस्य प्रत्ययस्य लुग्विधानादित्यर्थः । 'पञ्चकपालस्येदमिति' । अत्र संस्कृतार्थे यः प्रथममुत्पन्नः प्रत्ययः स एव द्विगोर्निमित्तं न द्वितीय इति तस्य लुङ् न भवति । 'अथ वेत्यादि' । पूर्वं लुगित्यनेनोपस्थापितस्य प्रत्ययस्य द्विगोरित्यनेन वैयधिकरण्यमाश्रित्य व्याख्यातम्, इदानीं सामानाधिकरण्यमित्येष विशेषः । कथं पुनर्द्विगोरेव लुग् लभ्यतइत्याह । 'द्विगोरिति स्थानषष्ठीति' । 'ननु चेत्यादि' । प्रत्ययस्य लुक्श्लुलुप इति प्रत्ययादर्शनस्य लुकादयः संज्ञा विहितास्ततश्च द्विगोर्लुगिति नैव समञ्जसमिति भावः । 'उपचारेण त्वित्यादि' । अतस्मिंस्तद्रूपारोप उपचारः, परत्र परशब्दप्रयोगो लक्षणा, उपचारेण निमित्तेन या लक्षणा तयेत्यर्थः । अन्ये तूपचारेणेत्यस्य विवरणं लक्षणयेत्येतदित्याहुः । अद्विगुरूपस्तद्धितो द्विगुरूपतया यया बुद्ध्या विवक्ष्यते सा लक्षणा । 'उपचार एवेति' । उपचारस्य निबन्धनं द्विगुनिमित्तत्वं, भवति हि कारणे कार्योपचार आयुर्घृतमिति यथा ।

'द्विगुनिमित्तकोऽपि तर्हीत्यादि'। कार्येऽपि कारणवदुपचारो दृश्यते यथा पुरातनं कर्म भुज्यतइति, ततश्च द्विगुर्यस्य प्रत्ययस्य निमित्तं सोऽपि गुणकल्पनया गुणशब्देनोपचारस्य निमित्तभूतो धर्मो विवक्षितः, तन्निमित्ता कल्पना गुणकल्पना सा पुनरुपचारात्मिका बुद्धिः, तया कस्मान्न द्विगुरित्युच्यते, अर्हत्येवायमेवंविधं वचनमित्यर्थः। परिहरति। 'न तस्येति'। तत्र हि सन्निहितमपि द्विगुत्वं प्रत्ययोत्पत्तौ नोपयुज्यते, नह्यसौ द्विगोरित्येवं विधीयते किं तर्हि प्रातिपदिकादित्येवमित्यर्थः। 'इतरास्त्विति'। प्रत्ययः, यस्य लुग्दर्शितो द्विगुत्वस्यैव निमित्तमिति तदर्थं हि समासो विधीयते तस्यैव च द्विगुसञ्ज्ञा तेनासौ द्विगुत्वस्यैव निमित्तम्। 'यद्येवमित्यादि'। उभयोरपि पक्षयोरेतच्चोद्यं, नह्यत्र द्विगोर्निमित्तत्वेन सम्बन्धी तद्धितः, नापि द्विगुनिमित्तत्वादुपचारेण तद्व्यपदेशार्हः, अत्र हि समाहारे द्विगौ निष्पन्ने पश्चात्तद्धित उत्पद्यते, स च द्विगोर्निमित्तं न भवतीति चोद्यार्थः। परिहरति। 'नैवात्र तद्धित उत्पद्यतइति'। अनभिधानादिति भावः। यदि नोत्पद्यते कथमस्मिन्नर्थे पञ्चकपाल इति रूपसिद्धिस्तस्मादुत्पद्यतएवात्र तद्धितस्तस्य च लुग्विधेय इत्यत आह। 'त्रैशब्द्यं हीति'। त्रय एव शब्दास्त्रैशब्द्यं, चातुर्वर्ण्यादिः। इह ह्यस्माभिस्त्रैशब्द्यं साध्यं तच्च पञ्चकपालीशब्दात्तद्धितोत्पत्तिमन्तरेणापि सिद्ध्यतीति नास्मात्तद्धित उत्पद्यते, तानेव त्रीन् शब्दान्दर्शयति। 'पञ्चसु कपालेष्विति'। 'द्वयोः शब्दयोरिति'। यः समाहारे द्विगुः यश्च तद्धितार्थे द्वावपि तौ समानार्थौ तयोरेकेन पूर्वेण विग्रहः। अवधारणमत्र द्रष्टव्यं विग्रह एव न तद्धितोत्पत्तिरनभिधानात्, अपरस्मात्पञ्चकपालादुत्पत्तिः, सोऽयमव्यविकन्याय उच्यते, तद्यथा अवेर्मांसमित्यविशब्देन विग्रह एव, अविकशब्दादुत्पत्तिर्विग्रहश्च आविकमविकस्य मांसमिति। 'सा च व्यवस्थितविभाषेति'। एवं कृत्वा त्रैविद्यः पाञ्चनदं षाड्कुल इत्यत्रापि लुङ् न भवति, अथ वा त्र्यवयवा विद्या त्रिविद्या शाकपार्थिवादि,स्तामधीते त्रैविद्यः, विद्यात्रयरूपस्य च समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदाभावः। पञ्चानां नदीनां समा-

अथ न्यायापेतत्वं दर्शयति अपि चेत्यादिना, श्रुतिन्यायापेतमिति हि पूर्वमुक्तम्। अपि चेति—न केवलं श्रुत्यपेतत्वमेव अपि तु न्यायापेतत्वं चेत्यर्थः। तिरोहितस्वरूपस्य हि भेददर्शनं तत्र तिरोधानदूषणेनैव परमतं समूलमुन्मूलितं भवतीति तिरोधिं दुदूषयिषुस्तन्मतमुपन्यस्य तदनुपपत्तिं प्रतिजानीते निर्विशेषेत्यादिना, कथमित्यत्राह तिरोधानं नामेति, प्रकाशनिवृत्तिस्तिरोधानमस्तु ततः किमित्यत्राह स्वरूपेति, नित्यं विभुमित्यादिश्रुतयो नित्यत्वं वदन्ति अनृतेन हि प्रत्यूढा इत्यादयस्तिरोधानं वदन्ति, एवं नित्यत्वतिरोधानयोरुभयोरपि श्रुतिप्रतिपन्नत्वान्नानित्यत्वमिति शङ्कायां श्रुतिरप्ययोग्यार्थं वक्तुं नालमित्यभिप्रायेणाह प्रकाशपर्यायमिति, वाद्यन्तरैरिव ज्ञानस्य जडत्वमङ्गीकृतं चेत्प्रकाशस्य तद्व्यतिरिक्तत्वात् तन्निवृत्तिः स्वरूपनाशो न स्यात्

**अपि च निर्विशेषज्ञानमात्रं ब्रह्म तच्चाच्छादिकाविद्या*तिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्ययमर्थो न घटते—तिरोधानं नाम प्रकाशनिवारणं स्वरूपातिरेकिप्रकाशधर्म्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनाश एव स्यात्, प्रकाशपर्यायं ज्ञानं नित्यं स च प्रकाशोऽविद्यानि†वारित इति बालिशभाषितमिदम्**

न च तथाऽभ्युपगतं, ब्रह्म ज्ञानस्वरूपं ज्ञानं च स्वयंप्रकाशमित्येवाभ्युपगतमित्यभिप्रायेण प्रकाशपर्यायमित्युक्तं, तिरोधानं प्रकाशनिवृत्तिः तस्मात्स्वयम्प्रकाशरूपं ज्ञानं नित्यं, तच्चाविद्यातिरोहितमिति व्याहतमितीममर्थं श्रुतिर्न प्रतिपादयतीत्यर्थः । एवं स्वयम्प्रकाशत्वश्रुतिं तिरोधानश्रुतिमुभयं श्रद्दधानेन त्वया व्याहतार्थ उक्तः स्यादित्युक्तम् ।

* आच्छादिकाऽविद्यातिरोहितस्वस्वरूपमित्येव मूलटीकयोः प्रामाणिकः पाठः तत्र पुँल्लिङ्गत्वाप्रवृत्तिमूलं तु श्रीभाष्यटिप्पण्यां निरवोचमिति तत्र द्रष्टव्यम्।

† अविद्यातिरोहित इति पा०।

उक्तार्थं च विवृण्वन् अन्यतरपरिग्रहे अन्यतरत् त्याज्यमित्याह अविद्ययेति, अविद्यया प्रकाशस्तिरोहित इत्यस्यार्थः प्रकाशस्य प्रागभावः प्रध्वंसाभावो वा इत्यर्थः। तत्रानुत्पाद्यस्य प्रकाशस्य प्रध्वंसाभाव एव तिरोधिः स्यादित्याह प्रकाशस्येति, एवं तिरोधानश्रुतिं उद्दधानेन त्वया स्वयम्प्रकाशत्वश्रुतिस्त्याज्या स्यात्स्वरूपनाशप्रसङ्गादित्युक्तम्। अथ स्वप्रकाशत्वाभ्युपगमे तिरोधानश्रुतिस्त्याज्या स्यादित्याह प्रकाशोनित्य इति, सत्स्वनिर्वचनीय एवेति-व्याहतत्वादयमर्थो विद्वत्सन्निधौ वक्तुमयोग्य इत्युपालम्भः। उक्तदोषः सिद्धान्तिनोऽपि प्रसजतीति चोदयति ननु चेत्यादिना, भवतोऽपीति, सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानघन एव प्रज्ञानघन एव इत्यादिभिर्ज्ञानस्वरूपत्वं त्वयाऽभ्युपगन्तव्यं, स चेति,

**अविद्यया प्रकाशस्तिरोहित इति प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य विनाशो वा प्रकाशस्यानुत्पाद्यत्वाद्वि* नाश एव स्यात्, प्रकाशो नित्यो निर्विकारस्तिष्ठतीति चेत् सत्यामप्यविद्यायां ब्रह्मणि न किञ्चित्तिरोहितमिति† नानात्वं पश्यतीति भवतामयं व्यवहारः सत्स्वनिर्वचनीय एव ॥**

अत्रायं पुरुषः स्वयंज्योतिर्भवति आत्मा ज्योतिः सम्राडिति होवाचेत्यादिभिः स्वयम्प्रकाशत्वमभ्युपेत्य, तस्येति, तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसञ्ज्ञिता इत्यादिभिस्तिरोधानमभ्युपेत्य देवत्वाद्यध्याससिद्ध्यर्थमित्यर्थः। त्वत्पक्षे दोषाधिक्यमस्तीत्याह किञ्चेति, प्रयोजकं तुल्यं चेत्कथं दोषाधिक्यमिति चेत् उच्यते भेदवादिना सुखित्वदुःखित्वशिष्याचार्य्यबद्धमुक्तादिव्यवस्थाः प्रामाणिकत्वेनाभ्युपेताः तिरोधानेन सर्वात्मनां स्वरूपनाशे सति प्रामाणिकानेकव्यवस्थाभङ्गः स्यात्, अस्मत्पक्षे तु व्यवस्थानां काल्पनिकत्वान्न तद्भङ्गाद्दोषः। त्वत्पक्षे तु स्वरूपनाशप्रसङ्गात्प्रामाणिकत्वेनाभ्युपग-

* स्वरूपनाश एव स्यादिति पा०।

† एवं नानात्वमिति पा०।

स्तानेकव्यवस्थाभङ्गप्रसङ्गाच्च दोषाधिक्यमिति भावः । परिहरणीय इत्यस्यायमभिप्रायः सर्वत्र हि प्रतिबन्दीप्रयोगः परिहारसाम्याभिप्रायेण, अन्यथा प्रतिबन्दी निष्प्रयोजना, न हि त्वं चोर इत्यत्र त्वमपि चोर इत्युक्ते दोषपरिहारः स्यात् । तस्मात्परिहारतुल्यत्वमेव प्रतिबन्दीं वदतोऽभिप्रेतमित्यत्रापि यस्त्वया परिहार उच्यते सोऽस्मत्पक्षेऽपि समानं इति परिहरति—

**ननु च भवतोऽपि विज्ञानस्वरूप आत्माऽभ्युपगन्तव्यः स च स्वयम्प्रकाशः तस्य च देवादिस्वरूपात्माभिमाने स्वरूपप्रकाश–तिरोधानमवश्यमाश्रयणीयं, स्वरूपप्रकाशे सति स्वात्मन्याकारान्तराध्यासायोगादतो भवतश्चायं समानो दोषः ।**

अत्रोच्यते इत्यादिना, प्रतिबन्दीं वदता पूर्वपक्षिणाऽयमर्थोऽभिप्रेतः, न हि वचनविरोधे न्यायः प्रवर्तत इति न्यायाज्जीवस्वरूपनित्यत्वे तस्य च तिरोधाने शास्त्रसिद्धे सति तद्विरुद्धस्तर्को न प्रवर्तत इति परिहारं वदसि चेत्सोऽस्मत्पक्षेऽपि तुल्य इति एतत्प्रतिवक्ति स्वभावत इति, वचनविरोधे केवलतर्को यद्यपि न प्रवर्तते तथाऽपि वचनान्तरविरोधो दुर्वारः । ब्रह्मणोहेयप्रत्यनीकत्वकल्याणगुणाकरत्ववचनैर्जगतस्तद्विभूतित्वविधायिवचनैश्च ब्रह्मणो भ्रमाश्रयत्वादिकं जगतोभ्रमविषयत्वं च विरुद्धमिति ब्रह्मणस्तिरोधानादिकं वचनं न प्रतिपादयितुमलम् । एवं वचनविरोधेन भवदभिमतार्थस्य व्याहतस्य श्रुत्या प्रतिपादयितुमशक्यत्वात् अस्मदुक्तस्तर्कस्त्वन्मते प्रवर्तते एवेति । अस्मत्पक्षे तु जीवस्वरूपतिरोधानादेर्वचनान्तरविरोधाभावाज्जीवस्वरूपतिरोधानादिकं वचनं प्रतिपादयत्येवेति तद्विरोधे न तर्कः प्रवर्तत इति न परिहारसाम्यमित्यभिप्रायेण स्वभावत इत्यादिकमुच्यते

**किञ्चास्माकमेकस्मिन्नेवात्मनि भवदुदीरितं दुर्घटत्वं**

**भवतामात्मानन्त्याभ्युपगमात्सर्वेष्वयं दोषः परिहरणीयः । अत्रोच्यते स्वभावतो मलप्रत्यनीकानन्तज्ञानान-**

न केवलं मलराहित्यम् अपि तु मलविरोधीत्यभिप्रायेण मलप्रत्यनीकेत्युक्तं, पञ्चगव्यादिव्यावृत्त्यर्थं स्वभावत इत्युक्तम् । अनन्तम्—अपरिच्छिन्नं स्वरूपं-धर्मिस्वरूपं, प्रदेशभेदेन जडत्वाननुकूलत्वाशङ्काव्यावृत्त्यर्थं एकशब्दः । स्वाभाविकशब्देन स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिरभिप्रेता सावधिकातिशयव्यावृत्त्यर्थमनवधिकातिशयशब्दः । अपरिमितः—असंख्येयः उदारगुणसागरो यस्येति बहुव्रीहिः । एवमुभयलिङ्गत्ववचनविरोधोदर्शितः; अनेन भ्रमाश्रयत्वं दुर्वचमित्युक्तं भवति । अथ विभूतेर्भ्रमविषयत्वानुपपत्तिरुच्यते, तत्र नित्यविभूतिमत्त्वमुच्यते निमिषेत्यादिना, अपरिमितव्यवच्छेदस्वरूपेति निमेषकाष्ठाद्यवच्छेदाः कालस्यासाधारणधर्म्मा इत्यर्थः । अन्यथा व्यवच्छेदवादिति हि वक्तव्यं न तु व्यवच्छेदस्वरूपेति, कालो हि स्वयं परिणामी प्रकृतेः परिणामहेतुः, निमेषादयः कालपरिणामविशेषाः सर्वे निमेषा जज्ञिरे इति श्रुतेः, एवं स्वयं परिणामित्वमुक्तम् ।

**न्दैकस्वरूपं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं निमेषकाष्ठाकलामुहूर्तादिपरार्द्धपर्यन्तापरिमितव्यवच्छेदस्वरूपसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतकालकृतपरिणामास्पृष्टान-**

अथ प्रकृतिपरिणामहेतुत्वमुच्यते सर्वोत्पत्तीति, आदि-शब्देन जायमानाद्यवस्थात्रयं विवक्षितं सर्वशब्देन विशदाविशदपरिणामाश्च विवक्षिताः । निमित्तशब्देनोपादानत्वाधिष्ठातृत्वव्यावृत्तिः, यथा ब्रह्मण उपादानत्वं प्रकृतिद्वारकं तथा ब्रह्मण एवोपकरणत्वमपि कालद्वारकमित्यभिप्रायः । एवं सर्गस्थितिनाशानां जगतो योऽजगन्मयः मूलभूतो नमस्तस्मै इति वचनस्य कलामुहूर्तादिमयश्च काल इत्यस्य चार्थो विवक्षितः । जगन्मय आदित्यचन्द्राद्यवच्छेद्यतया सर्गाद्यवच्छेदकतया जगन्मूर्त्तिरित्यर्थः । एवंविधकालापरिणाम्या नित्यविभूतिरित्याह कालकृतपरिणा-

मास्पृष्टेति, कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरित्य-स्यायोऽभिप्रेतः । अनन्तत्वेऽभिहितेऽपि महच्छब्देन विशेषणं ली-लाविभूत्यपेक्षया महत्त्वाभिप्रायम्, आनन्त्यं हि विभूतिद्वयसाधारणं भो-गोपकरणाद्यानन्त्यपरो वा महच्छब्दः । अस्पृष्टानन्तमहाविभूतीति ब्रह्म-विशेषणं, महाविभूतिसंस्थानं शुद्धे महाविभूत्याख्ये इति वचने महाविभू-ति-शब्देन स्मारिते ।

**न्तमहाविभूतिस्वलीलापरिकर-स्वांशभूतानन्तबद्धमु-क्तनानाविधचेतन-तद्भोग्यभूतानन्तविचित्रपरिणाम-**

अथ लीलाविभूतिमत्त्वमुच्यते स्वलीलेत्यादिना, मुक्तस्य लीलापरि-करत्वं मोचनलीलापरिकरत्वात् स्वांशभूतशब्देन विशेषणतयांऽशत्वं विवक्षितं मुक्तेषु नानाविधत्वं स एकधा भवतीत्यादिश्रुत्युक्तं, भगवल्ली-लान्तर्गतस्वसङ्कल्पगृहीतदेहवैविध्यरूपं चेतनेतर-शब्देनाचेतनशब्दार्थो व्याख्यातः । वस्तुजात-शब्देन प्रधानाव्यक्तकाला विवक्षिताः पूर्वं कालकी-र्तनं नित्यविभूतेस्तादधीन्यव्यावृत्त्यै, एवंविधस्य वस्तुजातस्यान्तर्यामित्वेन कृतं सर्वशरीरत्वसर्वप्रकारावस्थानं सर्वशरीरतया सर्वप्रकारत्वेनावस्थान-मन्तर्यामित्वकृतं तेनावस्थानेनावस्थितं-विशिष्टमित्यर्थः । एवं शरीरश-रीरिभावकथनेन ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थं स्वरूपेण भ्रान्तिदर्शनतः स्थितमित्यादिवाक्योक्तं भ्रान्तिदर्शनं ब्रह्मणश्शरीरभूतजी-वद्वारकमित्युक्तं भवति । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वे हेतुर्विवक्षितः सर्वप्रकारशब्देन ।

**शक्तिचेतनेतरवस्तुजातान्तर्यामित्वकृतसर्वशरीरत्व-सर्वप्रकारावस्थानावस्थितं परं ब्रह्म च वेद्यं, त-त्साक्षात्कारक्षमभगवद्द्वैपायन-पराशर-वाल्मीकि-मनु-याज्ञवल्क्य-गौतमापस्तम्बप्रभृतिमुनिगणप्रणी-त-विध्यर्थवादमन्त्ररूपवेदमूले-तिहासपुराणधर्म्म-**

एवं जगतो भगवद्विभूतित्वविधायिवाक्यैर्विरोधाज्जगतो भ्रमविषयत्वमयुक्तमित्युक्तं भवति, एवंविधं परं ब्रह्म वेद्यमभ्युपगच्छतामित्यन्वयः स्वाभिमतार्थवाचिनो वचनस्य तत्प्रामाण्यस्य मिथ्यात्वं वदता त्वया न हि वचनविरोधे न्यायः प्रवर्त्तेत इति परिहारो दुर्वचः । वचनस्य प्रामाण्यस्य च मिथ्यात्वादित्यभिप्रायेण प्रमाणस्वरूपं दर्शयति तत्साक्षादित्यादिना, तत्साक्षात्कारक्षमशब्देन भगवद्द्वैपायनादिपरमर्षिगणपरिगणनेन चेतरेषां चानुपलब्धेरित्युक्तस्मृत्यधिकरणस्यार्थोऽभिप्रेतः । तत्र कपिलस्य वेददर्शनयोगिप्रत्यक्षाख्यपरिकरद्वयसम्भवादाप्तिः पूर्वपक्षिता । सिद्धान्ते तु परिकरद्वयं तुल्यं वक्तृबहुत्वमधिकहेतुरिति ह्युक्तं तदत्र स्मारितम् । तद्वाक्यानां प्रामाण्यं कथमित्यत्राह विध्यर्थवादेति, विधिमूलं धर्म्मशास्त्रं, मन्त्रार्थवादमूलमितिहासपुराणमित्यर्थः । धर्म्मशास्त्रेतिहासपुराणेषु सर्वेष्वपि विध्यर्थवादमन्त्रार्थेषु सत्स्वपि प्राचुर्य्यादेवमुक्तम् । अनधीतशाखार्थैः सहाधीतशाखार्थविशदीकरणमुपबृंहणं, परमार्थभूत—शब्देन परपक्षे वचनविरोधे तर्काप्रवृत्तिरूपपरिहारो दुर्वचः वचनतत्प्रामाण्यादेरपारमार्थ्यादिति सूचितम् ॥

## शास्त्रोपबृंहितपरमार्थभूतानादिनिधनाविच्छिन्नपाठसम्प्रदाय ऋग्यजुस्सामाथर्वरूपानन्तशाखं वेदं चा-

अनादिनिधनादिशब्देन वेदप्रामाण्यं विवक्षितं, किमर्थमुपबृंहणापेक्षा अनन्ता वै वेदा इति वेदानामानन्त्यादिति चेत् न ऋग्यजुःसामाथर्वाख्यानां वेदानां चतुःसङ्ख्यासङ्ख्यातत्वेनानन्त्याभावादिति चेत् तत्राह ऋग्यजुःसामाथर्वरूपानन्तशाखमिति, यथा देवमनुष्यादिचतुष्कोटिनिविष्टाः प्राणिनोऽसंख्येया एवमृग्यजुस्सामादिचतुष्कोटिनिविष्टा अपि वेदाः शाखाभेदेनानन्ता इत्यर्थः । वेदं चाभ्युपगच्छतामिति प्रमाणं प्रमेयं च परमार्थत्वेनाभ्युपगच्छतामित्यर्थः । उक्तार्थेषु ऋषिवचनानि परिगणनक्रमेणोपादत्ते यथोक्तमित्यादिना, यो मामिति, अजमिति अचेतनबद्धव्यावृत्तिः । अनादिमजमिति मुक्तव्यावृत्तिः, लोकमहेश्वरमिति नित्यसिद्धव्या-

वृत्तिः लोक्यत इति व्युत्पत्त्या, एवं विज्ञानतोमुक्तिरुक्ता असम्मूढः स मर्त्येष्वित्यादिना तदत्राभिप्रेतम्। चिदचिद्विलक्षणत्वायाह द्वाविमाविति, अत्र व्यापनभरणस्वाम्यादयः प्रतिपन्नाः। तत्रैव नित्यविभूतिमत्त्वे प्रमाणमाह कालमिति, लीलाविभूतिमत्त्वे वचनमाह अव्यक्तादीति, तदायत्तोत्पत्त्यादिकत्वे तच्छेषत्वे च प्रमाणमाह—

भ्युपगच्छतामस्माकं किन्न सेत्स्यति, यथोक्तं भगवता द्वैपायनेन महाभारते—

कृष्ण एवेति, व्याख्येयं पदं व्याचष्ट कृष्णस्येति, उक्तमर्थं विशदीकर्त्तुमनुक्तं च दर्शयितुमाह भगवता पराशरेणेति, सर्वशब्दानां वस्तुमात्रमुपलक्ष्यमिति न मुख्यार्थो ब्रह्मेति वादश्चात्र परिहृतो भवति। भगवच्छब्दनिर्वचनात् महाविभूत्याख्ये सर्वकारणकारणे इत्युभयविभूतिमत्त्वं सिद्धं, शुद्धे इति, ज्ञानशक्तीति, विना हेयैरित्यादिभिरुभयलिङ्गत्वं ब्रह्मणस्सिद्धं त्यनिविभूतेरकालकाल्यत्वे वचनमाह कलेति, मनुनापीति, प्रशासितृत्वादिगुणा उक्ता इत्यभिप्रायः। याज्ञवल्क्येनापीति उक्तमित्यन्वयः। ईश्वरज्ञानान्न तु निर्विशेषज्ञानादिति भावः। आपस्तम्बवचनं व्याचष्टे सर्वं इत्यादिना, अङ्गं वपुर्वर्ष्म पुरं प्रतीकमिति हि नैघण्टुकाः।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ कालं स पचते तत्र न कालस्तत्र वै प्रभुः। एते वै निरयास्तात!स्थानस्य परमात्मनः॥ अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्यवधार्यताम्॥ कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः॥

कृष्णस्य हि कृते भूतमिदं विश्वं चराचरमिति ॥ कृष्णस्य हि कृते इति कृष्णस्य शेषभूतं सर्वमित्यर्थः । भगवता पराशरेणाप्युक्तं—शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय! भगवच्छब्दः सर्वकारणकारणे ॥ ज्ञानशक्तिबलैश्वर्य्यवीर्य्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ एवमेष महाशब्दो मैत्रेय! भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥

एवमुभयलिङ्गत्वोभयविभूतिमत्त्वप्रतिपादकवचनैर्विरोधात् वचनं ब्रह्मणस्तिरोधानादिकं न प्रतिपादयतीति हेतोश्च वचनतत्प्रामाण्यादेर्मिथ्यात्वाभ्युपगमाच्च । न हि वचनविरोधे न्यायः प्रवर्त्तत इति परिहारस्त्वत्पक्षे वक्तुमशक्यः । अस्मत्पक्षे तु जीवस्वरूपतिरोधानादेर्वचनान्तरविरोधाभावात् तद्वाक्यं प्रतिपादयतीत्यनेन वचन—तत्प्रामाण्यादेर्मिथ्यात्वाभावाच्च न हि वचनविरोधे न्यायः प्रवर्त्तत इति परिहारः सुवच एवेत्यभिप्रायः ।

एवम्प्रकारममलं स*त्यं व्यापकमक्षयम् । समस्तहेयरहितं विष्णवाख्यं परमं पदम् ॥ कलामुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः । क्रीडतो बालकस्येव चेष्टास्तस्य निशामयेत्यादि ॥ मनुनाऽपि प्रशासितारं सर्वेषामणीयांसमणीयसामित्यादिनोक्तं, याज्ञवल्क्येनापि क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मतेति, आप-

* नित्यमिति पा०।

स्तम्बेनापि पूः प्राणिनः सर्वगुहाशयस्येति, सर्वे प्राणिनः गुहाशयस्य परमात्मनः पूः—पुरं शरीरमित्यर्थः। प्राणिन इति जीवात्मकभूतसंघाताः ।

एवमभिप्रेतस्य परिहारस्यास्फुटत्वात्तमज्ञानवृपपत्त्यैव परिहारमपेक्षमाणः पूर्व्वपक्षी सोपालम्भं चोदयति ननु चेति, परिहरति उच्यत इत्यादिना, न केवलं वचनविरोधादेव परिहारः केवलतर्केणापि परिहारो विद्यत एवेत्यभिप्रायेणाह एवमिति, एवमभ्युपगच्छतां—तत्त्वप्रमाणं तत्त्वप्रमेयं च पारमार्थिकत्वेनाभ्युपगच्छतामित्यर्थः । आत्मधर्मभूतस्येत्यनेन स्वरूपव्यावृत्तिः पारमार्थिकं सङ्कोचं विकासं ब्रुवतामिति न हि ब्रह्माज्ञानवादिना सङ्कोचविकासौ वक्तुं शक्यौ तथा सति तावपि व्यावहारिकौ स्यातां न परमार्थौ सङ्कोचविकासयोरपारमार्थ्ये सङ्कोचविकासविषयभ्रमहेतुतया तिरोधानं वक्तव्यं तत्रापि व्यावहारिकसङ्कोचाभ्युपगमे तद्विषयभ्रमहेतुतया पुनरपि तिरोधानमित्यनवस्था स्यादित्यभिप्रायेण पारमार्थिकं सङ्कोचं विकासञ्चेत्युक्तं, सर्वमिदं परिहृतमिति

ननु च किमनेनाडम्बरेण चोद्यं तु न परिहृतम्, उच्यते एवमभ्युपगच्छतामस्माकमात्मधर्म्मभूतस्य चैतन्यस्य स्वाभाविकस्यापि कर्म्मणा पारमार्थिकं सङ्कोचं विकासं च ब्रुवतां सर्वमिदं परिहृतं, भवतस्तु प्रकाश एव स्वरूपमिति प्रकाशो न धर्म्मभूतस्तस्य सङ्कोचविकासौ वा नाभ्युपगम्येते। प्रकाशप्रसरानुत्पत्तिमेव तिरोधानभूताः कर्म्मोदयः कुर्वन्ति। अविद्या चेत् तिरोधानं तिरोधानभूतया तया स्वरूपभूतप्रकाशनाश इति पूर्व्वमेवोक्तः ।

देवादिभ्रमस्याधिष्ठानस्फुरणसापेक्षत्वादत्र धर्म्मिस्वरूपं स्वयम्प्रकाशः

रूपमधिष्ठानतया स्फुरति नात्र ज्ञानान्तरापेक्षा अजडत्वात् जडत्वाद्धि शुक्त्यादेर्ज्ञानान्तरापेक्षा एवं धर्मिस्वरूपमधिष्ठानं स्फुरति भ्रमविरोधिनोऽगुणत्वनित्यत्वाद्याकारास्तु ज्ञानान्तरवेद्या इति तत्तिरोधानाद् भ्रम उपपद्यते, तिरोधानं च प्रकाशनिवृत्तिः प्रकाशश्च न ज्ञानस्वरूपः अपि तु प्रसराख्योज्ञानधर्म्मः प्रकाशरूपप्रसराभावश्च सङ्कोचः, भावान्तरस्यैवाभावत्वात्सङ्कोचाभावः प्रसरः, स एव तिरोधाननिवृत्तिरिति न तदा भ्रमः, एवं सति ज्ञानं धर्म्मिस्वरूपं च नित्यं ज्ञानधर्म्मभूतप्रसरस्यैव प्रकाशत्वात्, तदभावस्य च सङ्कोचत्वात्प्रसराख्यप्रकाशनिवृत्तिरूपं तिरोधानम् उपपद्यत इत्यर्थः । अयं च परिहारो भवत्पक्षे वक्तुमशक्य इत्याह भवतस्त्विति, स्वरूपेऽपि प्रकाशे तस्य सङ्कोचविकासावभ्युपगतौ चेत् न स्वरूपनाशः । तथा च नाभ्युपेतमित्याह तस्येति, त्वन्मते सङ्कोचविकासावभ्युपगतौ स्यातां ततः कथं प्रकाशनिवृत्तिरित्यत्राह—

**अस्माकं त्वविद्यारूपेण कर्म्मणा स्वरूपनित्यधर्म्मभूतज्ञानप्रकाशः सङ्कुचितः । तेन देवादिस्वरूपात्माभिमानोभवतीति विशेषः, यथोक्तम् अविद्या कर्म्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिस्सा वेष्टिता**

प्रकाशप्रसरे इति, प्रकाश एव प्रसरः प्रकाशप्रसरः । यद्वा प्रकाशशब्दवाच्यस्य ज्ञानस्य प्रसरः तस्यानुत्पत्तिरित्यर्थः । प्रकाशशब्दो हि धर्म्मिपरो धर्म्मपरश्च भानुर्भानुमांस्तेजस्तेजस्वीतिवत् । एवकारेण स्वरूपाभावधर्म्मभूतज्ञानाभावौ च व्यावर्त्तितौ । तिरोधानभूतास्तिरोधायकभूताः, कर्म्मादय इत्यादिशब्देन प्रकृतिर्वासना च गृह्यते । वासनारेणुकुण्ठितः, गुणमायासमावृतः इत्यादिवचनात् । एवं स्वपक्षे परपक्षेऽपि स्वरूपनाशप्रसङ्गतदप्रसङ्गरूपं वैषम्यं वक्तुं तदुपयोग्यर्थशिक्षा कृता । अथ स्वरूपनाशप्रसङ्ग—तदप्रसङ्गरूपवैषम्यं दर्शयति अविद्या चेदिति, प्रकाशनिवृत्तिर्हि तिरोधानं स्वरूपस्य प्रकाशरूपत्वात् प्रकाशनिवृत्तिरूपतिरोधानं स्वरूपनाशःस्यात् त्वन्मते । अस्मन्मते आत्मधर्म्मभूतज्ञानसङ्कोचस्तिरोधिरिति धर्मिस्वरूपस्य ज्ञानस्य च

नित्यत्वमुपपद्यते तेन सङ्कोचेन भ्रमविरोध्याकाराग्रहणाद्भ्रमोऽप्युपपद्यते इत्यर्थः । ननु भ्रमविरोध्याकारो नामासाधारणधर्म्मः आत्मनोऽसाधारणाबुद्धिसुखेच्छादयो गृह्यन्त इति भ्रमो नोपपद्यत इति चेन्न असाधारणधर्म्मस्य भ्रमविरोधित्वे द्वयमपेक्षितं स्वरूपज्ञानमसाधारणत्वेन ज्ञानं च, शुक्तित्वादयोऽप्यन्यत्रासाधारणत्वेन ज्ञाता एव हि भ्रमविरोधिनः अध्यासादसाधारणत्वाग्रहणम्—

**नृप! सर्वगा ॥ संसारतापानखिलानवाप्नोत्यतिसन्ततान् । तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥ सर्वभूतेषु भूपाल! तारतम्येन वर्त्तते ॥ इति, क्षेत्रज्ञानां स्वधर्म्मभूतस्य ज्ञानस्य कर्म्मसंज्ञयाऽविद्यया सङ्कोचं विकासं च दर्शयति ।**

असाधारणत्वाग्रहणादध्यास इति परस्पराश्रयो न दोषः स्यात्, बीजाङ्कुरन्यायादिति एवं तर्केणैव परिहार उक्तः । स्वोक्ता तर्कसरणिः प्रमाणानुसारिणीति दर्शयति यथोक्तमिति, तारतम्येन वर्तत इत्यनेन ज्ञानस्य सङ्कोचविकासौ सिद्धौ । न ह्यणुमात्रस्य स्वरूपस्य तारतम्यं, तस्माद्धर्म्मभूतज्ञानद्वारकमेवात्मनस्तारतम्यमिति, ज्ञानद्वारकत्वं च तत्रैवोपरितनश्लोकैर्विवृतमप्राणिमत्सु स्वल्पा सा स्थावरेष्वित्यादिभिः । उदाहृतश्लोकार्थमाह क्षेत्रज्ञानामिति, अत्रोच्यत इत्यादिग्रन्थस्यायमर्थः प्रतिपाद्यः स्वरूपनाशप्रभृतीनि यानि दूषणानि त्वन्मते लक्ष्यन्ते तेषामस्मन्मतेऽपि साम्यापादनमनुपपन्नं निर्विशेषत्वजीवब्रह्मैकत्वजगन्मिथ्यात्वप्रयुक्तत्वात्तेषां दूषणानामित्यभिप्रायेण स्वभावत इत्यादिग्रन्थजातमुक्तम् । एवं सामान्येनोक्ते सति प्रस्तुतचोद्यविशेषस्य कः परिहार उक्त इत्यभिप्रायेण ननु च किमनेनाऽऽडम्बरेणेत्यादि चोद्यम् उक्तम् । उच्यत इत्यादिना प्रस्तुतचोद्यविशेषपरिहारश्चोक्त इति ॥

अथ स्वरूपानुपपत्तिमाह अपि चेति, अच्छादिकेत्यादिना तदभ्युपगमप्रकारमाह अच्छादिकाविद्यार्थच्छदार्थविवरणार्थं ब्रह्मस्वरूपतिरोधानहेतु-

दोषरूपेत्युक्तं दूषयति तस्या इति, यथा प्रपञ्चो मिथ्यात्वेन स्वदर्शनहेतुदोषान्तरापेक्षः तथा दोषोऽपि मिथ्यात्वाद्दोषान्तरापेक्ष इत्यनवस्थादुःस्थत्वाच्च सा भेदभ्रममूलदोषः स्यात्, अतः परमार्थदोषेऽभ्युपगन्तव्ये सति तस्य ब्रह्मव्यतिरिक्तत्वे अद्वैतहानिप्रसङ्गाद्ब्रह्मैव दोषः स्यादित्यर्थः । उपपादकस्योपपादकान्तरापेक्षा न भवतीति न्यायः परमार्थविषय इति न तेनात्र परिहारः शक्यते वक्तुं कथमुच्यते उपपादकस्योपपादकान्तरानपेक्षत्वं नाम परप्रतीतेः स्वप्रतीतेश्च स्वस्यैव हेतुत्वं, तच्च परमार्थविषये सम्भवति परमार्थो हि प्रतीतिनिरपेक्षः स्वरूपेण सन् स्वप्रतीतेः परप्रतीतेश्च हेतुर्भवति । अपरमार्थस्तु न स्वरूपेण सन् अतः स्वविषयप्रतीत्यतिरेकेण सत्ताऽभावादात्माश्रयदोषः प्रसज्येत । न हि प्रतीतिः स्वयमेव स्वात्मनो हेतुर्भवतीत्यात्माश्रयदोषप्रसङ्गादुपपादकस्योपपादकान्तरानपेक्षत्वरूपन्यायाचात्र परिहारः शक्यते वक्तुमित्यभिप्रायेण स्वदर्शनमूलदोषापेक्षत्वादित्युक्तम् । आत्माश्रयदोषो माभूत् तथा सत्युपपादकमुपपादकान्तरानपेक्षमिति

**अपि च आच्छादिकाऽविद्याश्रुतिभिश्चैक्योपदेशबलाच्च ब्रह्मस्वरूपतिरोधानहेतुदोषरूपाऽऽश्रीयते । तस्याश्च मिथ्यारूपत्वेन प्रपंचवत् स्वदर्शनमूलदोषापेक्षत्वात् ।**

न्यायेन माध्यमिकस्याधिष्ठानापारमार्थ्यं सुवचं भवति, उपपादकमुपपादकान्तरानपेक्षमिति न्यायेनाधिष्ठानानवस्थायाः परिहृतत्वादिति एवमनवस्थापरिहारार्थमद्वैतहानिपरिहारार्थं च ब्रह्मैव दोषः स्यादित्यर्थः । प्रपञ्चस्यादिमत्त्वाद्दोषान्तरापेक्षत्वं दोषस्य त्वनादेर्न दोषान्तरापेक्षेति चेत्तत्राह तस्याश्चानादित्वेऽपीति, जीवभेदस्य स्वरूपानादित्वेऽपि दोषसापेक्षत्वाभ्युपगमाज्जीवभेदोऽत्र प्रतीबन्दीत्वेनाभिप्रेतः । मिथ्याभूतस्य प्रतीयमानत्वव्यतिरेकेण स्वरूपाभावात्तत्प्रतीतेश्च स्वरूपप्रयुक्तत्वे सत्युक्तदोषप्रसङ्गादतिरिक्तहेतोश्च पूर्वकालवर्त्तितया पश्चाद्भाविनो

मिथ्याभूतस्य स्वरूपानादित्वमेवानुपपन्नमित्यभिप्रायः । जीवभेदस्य स्वरूपानादित्वेऽपि मिथ्याभूतस्य तस्य ब्रह्मदृश्यत्वेनैवानादित्वात्तदपरमार्थभेददर्शनस्य स्वरूपप्रयुक्तत्वे तदनिर्मोक्षप्रसङ्गात् । निर्मोक्षे च स्वरूपोच्छेदप्रसङ्गाच्च । तद्दर्शनहेतुदोषापेक्षाऽस्तीति चेद् दोषस्यापि तत्तुल्यमित्यर्थः । परमार्थदोषानभ्युपगमाच्चेति, अद्वैतहानिप्रसङ्गादिति भावः । एवमनवस्थाऽऽद्वैतहानिपरिहारार्थं ब्रह्मैव दोषः स्यादित्यर्थः । ततः किमनिष्टं स्यादित्यत्राह तस्येति, दुर्घटत्वेनानवस्थापरिहारोऽप्यतिदुर्बलः तथा सति तत्त्वज्ञानोदयेऽपि सा तिष्ठतु उपपत्त्यनपेक्षत्वात् ।

## न सा मिथ्या दर्शनमूलदोषः स्यादिति ब्रह्मैव मिथ्यादर्शनमूलं स्यात् । तस्याश्चानादित्वेऽपि

न हि निवर्त्तकसन्निधौ निवर्त्यं तिष्ठतीति चेत्तर्ह्युपपत्तिमती सेति न दुर्घटत्वम् । किञ्च प्रपञ्चस्यापि मिथ्यात्वेन दुर्घटत्वान्मूलदोषापेक्षा न स्यात् कारणेन विना कार्यं न सम्भवतीति चेत् उपपत्त्यपेक्षत्वं स्यात् । जीवभेदोऽपि दुर्घटत्वान्मूलदोषानपेक्षः स्यात् । अधिष्ठानापारमार्थ्येऽपि दुर्घटत्वादधिष्ठानान्तरानपेक्षत्वेनानवस्था न स्यात् । दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्त्यनपेक्षत्वम् अपरमार्थत्वप्रयुक्तोपपत्तिरपेक्षितैव यथा प्रासादनिगरणादिषु परमार्थत्वप्रयुक्तोपपत्तिरल्पास्येन विपुलनिगरणायोगरूपा पेक्षिता निगरणसाधनस्य निगरणीयाद्विपुलत्वं ह्यपेक्षितं पारमार्थ्ये तच्च प्रासादनिगरणादावनपेक्षितम् । एवं परमार्थत्वप्रयुक्तोपपत्तिरेवानपेक्षिता अपरमार्थत्वप्रयुक्तोपपत्तिस्त्वपेक्षिता अधिष्ठानं त्वपरमार्थत्वप्रयुक्तमिति अधिष्ठानापारमार्थ्ये तदपेक्षयाऽनवस्थेति चेत् दोषश्चापरमार्थत्वप्रयुक्त इति दोषापारमार्थ्ये तदपेक्षयाऽनवस्था स्यादिति । एकजीववादं निराकरोति अत एवेति, अत एव—ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाभ्युपगमादेवेत्यर्थः ।

## मिथ्यारूपत्वादेव ब्रह्मदृश्यत्वेनैवानादित्वात्तद्दर्शनमूलपरमार्थदोषानभ्युपगमाच्च ब्रह्मैव तद्दर्शनमूलं

स्यात् तस्य नित्यत्वादनिर्मोक्ष एव, अत एवेदमपि निरस्तम्—

किं निरस्तमिति शङ्कायां निरसनीयमुपन्यस्यति एकमेवेति, स्वप्नदृष्टश-रीराणां निर्जीवत्वे कथमेकस्य सजीवत्वमितरेषां निर्जीवत्वं चेति शङ्काया-मेकस्य सजीवत्वमितरेषां निर्जीवत्वं चाह तत्रेत्यादिना ग्रन्थद्वयेन तेषां मिथ्यात्वं कथमित्यत्राह अनेनैकेनैवेति, इतिः समाप्तौ, एतत्कथं निरस्तं भवतीति शङ्कायामत एवेत्यभिप्रेतमर्थं विवृणोति ब्रह्मणेति, जीवभावो जीवत्वं किं प्रातिभासिकजीवैकत्वमुच्यते उत पारमार्थिकजीवैकत्वं? प्रा-तिभासिकजीवैकत्वं चेत्स्वप्नजागरयोर्जीवबहुत्वप्रतिभासाद् दृष्टान्तदार्ष्ट-न्तिकयोर्जीवबहुत्वप्रतिभासः सार्वलौकिको विरुध्येत, पारमार्थिकजीवैकत्वं चेदेकोऽपि जीवो न पारमार्थिकतयाऽभ्युपगत इति तत्सुतरामनुपपन्नमित्य-भिप्रायः । ब्रह्मणा कल्पितत्वादित्यन्वयः । स्वस्वरूपव्यतिरिक्तस्येति हेतु-गर्भविशेषणं न कश्चिद्विशेष इति ।

एकमेव शरीरं जीववत् निर्जीवानीतराणि शरी-राणि स्वप्नदृष्टनानाविधशरीराणां यथा निर्जीवत्वं तत्र स्वप्ने द्रष्टुः शरीरमेकमेव जीववत् तस्य स्वप्न-वेलायां दृश्यभूतनानाविधानन्तशरीराणां निर्जीव-त्वमेव अनेनैकेनैव परिकल्पितत्वाज् जीवा मिथ्याभू-ता इति ब्रह्मणा स्वस्वरूपव्यतिरिक्तस्य जीवभावस्य सर्वशरीराणां च कल्पितत्वादेकस्मिन्नपि शरीरे शरीर-वज्जीवसद्भावस्य च मिथ्यारूपत्वात् सर्वाणि शरीरा-णि मिथ्यारूपाणि, तत्र जीवभावश्च मिथ्यारूप इत्ये-कस्य शरीरस्य तत्र जीवसद्भावस्य च न कश्चिद्वि-शेषः । अस्माकं तु स्वप्ने द्रष्टुः स्वशरीरस्य तस्मिन्ना-

त्मसद्भावस्य च प्रबोधवेलायामबाधितत्वादन्येषां शरीराणां तद्गतजीवानां च बाधितत्वात् ते सर्वे मिथ्याभूताः स्वशरीरमेकं तस्मिन् जीवभावश्च परमार्थ इति विशेषः ।

प्रातिभासिकत्वं स्वप्नदृष्ट शरीरस्यस्यान्यशरीरस्यस्य च जीवभावस्याविशिष्टम् पारमार्थिकत्वं तु न कस्यचिदपीत्यर्थः । प्रपञ्चसत्यत्वपक्षे कथंस्वप्नदृष्टतद्द्रष्टृविशेषः सिध्यतीत्यत्राह अस्माकं त्विति, तस्मिन् जीवभावश्च जीवसद्भाव इत्यर्थः । लोकसिद्धप्रक्रियया स्वाप्नार्थानां बाधाभ्युपगमः सूत्रकारेणापि हि तथा कृतं सू॰ वैधर्म्याच्च न स्वप्नादिवत् इत्यत्र, एवमेकजीववादः प्रसङ्गान्निरस्तः । अथ निवर्तकानुपपत्तिं निवृत्त्यनुपपत्तिं चाह अपि चेत्यादिना, किं–शब्दः क्षेपार्थः । निवर्तकनिवृत्त्योः पराभ्युपगतप्रकारं शङ्कते ऐक्येति, तत्र निवृत्तिं दूषयति अनिर्वचनीयेति, शब्दशक्त्यैव पञ्चमकोट्यभावो दर्शितः । अनिर्वचनीयप्रत्यनीकं निर्वचनीयं नञर्थस्य हि स्वरूपनिरूपक एव प्रत्यनीक इति भावः ।

अपि च केन वाऽविद्यानिवृत्तिः सा च कीदृशीति विवेचनीयम् । ऐक्यज्ञानं निवर्त्तकं, निवृत्तिश्चानिर्वचनीयप्रत्यनीकाकारेति चेत् अनिर्वचनीयप्रत्यनीकं निर्वचनीयं तच्च सद्वाऽसद्वा द्विरूपं वा कल्पान्तरं न विद्यते ।

अनिर्वचनीयप्रत्यनीकं न तावदनिर्वचनीयमपि तु निर्वचनीयमेव, तत्र त्रैविध्यमाह तच्चेति, एवं शब्दस्वभावात् पञ्चमकोटिर्नास्ति अर्थस्वभावाच्च । तथा अविद्यानिवृत्तिः किं ख्याता ? उत अख्याता ? अख्यातत्वे असत्त्वं, ख्यातत्वे किं बाध्या ? उताबाध्येति ? विकल्पः, बाध्या चेदनिर्वचनीयता । किञ्च निवृत्तेर्बाध्यत्वे निवर्त्यमज्ञानं स्थितं स्यात्, निवृत्तेरसत्त्वेऽपि तुल्यमेव तत्, अबाध्या चेत्सत्त्वम् । अबाध्यत्वेऽप्यादिमत्त्वाच्च सत्त्वमिति चेन्न

आदिमत्त्वं नित्यवैलक्षण्यं न तु सद्वैलक्षण्यं प्रतिपन्नोपाधावबाध्यत्वं हि सत्यत्वं तदेव हि सत्त्वं त्वन्मते प्रतिपन्नोपाधौ बाधात् सद्व्यावृत्तिरित्युक्तेः तत्र सत्त्वपक्षे किं काल्पनिकं सत्? उताकल्पनिकं सदिति? विकल्पमभिप्रेत्याकाल्पनिकसत्त्वे च ब्रह्मव्यतिरिक्तत्वपक्षे अद्वैतहानिप्रसङ्गः । अव्यतिरिक्तत्वपक्षे दूषणं वक्ष्यते । काल्पनिकसत्त्वे दूषणमाह ब्रह्मव्यतिरेकेणेति, व्यावहारिकमद्वि अनिर्वचनीयं तस्मादविद्या न निवृत्ता स्यात् । असत्त्वपक्षेऽपि दूषणमिदमेव । निवृत्तिरसती चेत् द्वौ नञौ प्रकृतमर्थं सूचयत इति

**ब्रह्मव्यतिरेकेणैतदभ्युपगमे पुनरविद्या न निवृत्ता स्यात् । ब्रह्मैव चेन्निवृत्तिः तत्प्रागप्यविशिष्टमिति वेदान्तज्ञानात् पूर्वमेव निवृत्तिः स्यात्, ऐक्यज्ञानं निवर्तकं तदभावात् संसार इति भवद्दर्शनं विहन्यते ।**

न्यायादविद्या ह्यनिवृत्ता स्यात् । द्विरूपत्वपक्षेऽपि सदंशेनाद्वैतहानिः, असदंशेन निवृत्तेरसत्त्वादविद्या स्थितिरेवेत्यर्थः । सदंशेऽपि काल्पनिकत्वाकाल्पनिकत्वविकल्पः पूर्ववत्, अकाल्पनिकसत्त्वे च ब्रह्मस्वरूपानतिरिक्तत्वपक्षमाशङ्क्य दूषयति ब्रह्मैवेति, तत्त्वज्ञानात्पूर्वमेव निवृत्तिरस्तु ततः किमित्यत्राह ऐक्यज्ञानमिति, ननु यथा भावान्तराभाववादपक्षे भूतलमेव घटाभावोऽभ्युपगतः तथा स्वरूपमेवाविद्याविनिवृत्तिः स्यादिति चेत् न भूतले वैलक्षण्यमस्त्येव कालविशेषविशिष्टदेशविशेषत्वं तत् तदेव घटाभावः; तच्चाभाववादिनाऽभ्युपगतम् । एकस्मिन्देशे कालभेदेन घटभावाभावसम्भवात्, एकस्मिन्काले देशभेदेन घटभावाभावसम्भवाच्च । अनेनाभाववादिभिरुक्तो विकल्पः परिहृतः । केवलभूतलमेवाभाव इति वाक्ये केवल-शब्दार्थः किं भूतलातिरिक्तः तद्भावाङ्गीकारः, भूतलमेव चेत्सघटेऽप्यभावप्रसङ्ग इति हि तैर्विकल्प्य दूषणमुक्तं तत् परिहृतमनेन वैलक्षण्येन । एवं वैलक्षण्यानभ्युपगमाद् ब्रह्मस्वरूपमेव निवृत्तिर्भवितुं नार्हति स्वरूपमेवाविद्यानिवृत्तिश्चेदविद्याऽनुदय एव स्यात् ।

वात्स्वरूपानुबन्धिधर्मत्वोपपत्तिः पुंस्त्वादिवत्, यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोऽप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्की भवति, सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि "तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीर"मिति शरीरस्वरूपव्यपदेशात्, सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तं, तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्य्यादावुपलभ्यते, एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः, अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम् ।

टी० "स्वरूपनिरूपणे"ति, अणुत्वादयोऽपि हि यावदात्मभाविन इति तद्व्यावृत्त्यर्थं च स्वरूपनिरूपणधर्मत्वादित्युक्तं स्वरूपं धर्मिस्वरूपम् आत्म-शब्दः स्वरूपपर इत्यर्थः । चकारार्थमाह "चकारा"दिति, अनन्तरसूत्रशङ्कामाह "यच्चोक्त"मिति, सू· पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्, जागर्यादिष्वित्यत्रादि-शब्देन स्वप्नदशा विवक्षिता, पुंस्त्व-शब्देन धातुर्लक्षितः, आदि-शब्देन योषितोऽप्युपलक्षणमिति गम्यते बाल्ये स नास्तीति शङ्कायामाह "सप्तधातुमयत्वं ही"ति, ज्ञानस्योपलब्धिर्विषयसम्बन्धसापेक्षेत्युक्तं भवति, विद्यमानस्यानभिव्यक्तस्य कदाचिदभिव्यक्तिमात्रे दृष्टान्तोऽयं विषयसम्बन्धार्हत्वं प्रकाशार्हत्वं च तदानीमप्यस्तीति न स्वयं प्रकाशत्वहानिः, एवं स्वयं प्रकाशस्वरूपज्ञानोपलब्धेर्विषयसम्बन्धसापेक्षत्वेऽहमर्थस्यापि तथात्वं स्यादित्यत्राह "सुषुप्त्यादिष्वपी"ति, तस्येति विषयसम्बन्ध उपलब्धिश्च जागर्यादावित्यर्थः अहंप्रत्ययगोचरत्वे जडत्वादिप्रसङ्गमाशङ्क्याह "एते चात्मन"इति, नित्योपलब्ध्याद्यप्रसङ्गार्थमाह–

सू० स चायमात्माऽणुपरिमाणः न प्रेत्य संज्ञाऽस्तीत्यपि न

मुक्तस्य ज्ञानाभाव उच्यते अपि तु "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं तन्मुक्तस्य न विद्यते "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः नोपजनं स्मरन्निदं शरीरं मनसैतान्कामान्पश्यन् रमत इत्यादिश्रुत्यैकार्थ्यात् ॥

संप्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह—

**सू० नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवाऽन्यथा ॥ ३२ ॥**

अन्यथा—सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सदैव प्रसज्येयाताम्, अन्यतरनियमो वा उपलब्धिरेव वा नित्यं स्यादनुपलब्धिरेव वा, एतदुक्तं भवति लोके तावद्वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुः स्यात् उपलब्धेरेव वा अनुपलब्धेरेव वा उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत यद्युपलब्धेरेव सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात्, अथानुपलब्धेरेव सर्वदा सर्वत्रोपलब्धिर्न स्यादिति, अस्माकं शरीरस्यान्तरेवात्रस्थितत्वादात्मनस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्थासिद्धिः करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वात् अदृष्टादेरप्यनियमादुक्तदोषः समानः ॥ ज्ञाधिकरणं समाप्तम् ॥

टी० "स चायं"मिति, न प्रेत्येति देहात्माभिमानधर्मो नास्ती-

त्यर्थः । संप्रतीति ज्ञानात्मवादे विभुत्वपक्षे दूषणं जडात्मवादे विभुत्वेन दूषणमुभयं सूत्रविवक्षितं, व्याख्यास्यते च तत्र प्रथमपक्षे दूषणं प्रतिजानीते "संप्रती"ति, सू॰ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा, नित्योपलब्धिः प्रसज्यतां कथं नित्यानुपलब्धिप्रसङ्गः? उभयप्रसङ्गो वा कथ? मित्यत्राह "एतदुक्त"मिति, विकल्पशिरस्त्रयाभिप्रायेण दूषणत्रयमुच्यत इत्यर्थः । लोके तावदिति आत्मा कुत्रचिदुपलभ्यते न गङ्गातीरादिषूपलभ्यते एवं विद्यमानयोरुपलब्ध्यनुपलब्ध्योरुभयोरपि हेतुस्स्यादित्येकं शिरः उपलब्धेरेव वा अनुपलब्धेरेव वेति इत्यत्रापि हेतुः स्यादित्यनुवर्तते, एवं शिरस्त्रयं विवक्षितं किमुपलब्धिरेव स्वरूपम्? उतानुपलब्धिरेव? उतोभय? मित्यर्थः, हेतु-शब्दप्रयोगो हेत्वन्तरनैरपेक्ष्यार्थः । उक्तदूषणस्य स्वपक्षास्पर्शित्वमाह "अस्माक"मिति, जडात्मपक्षे विभुत्वे दूषणमाह "कारणायत्त"ति,—

कर्त्रधिकरणम् । **सू॰ कर्त्ता शास्त्रार्थवत्त्वात्** ॥ ३३ ॥

अयमात्मा ज्ञाता स चाणुपरिमाण इत्युक्तम्, इदानीं किं स एव कर्त्ता? उत स्वयमकर्त्तैव सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते, किमत्र युक्तम् अकर्त्तैवात्मेति कुतः आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते तथा हि कठवल्लीषु जीवस्य न जायते म्रियत इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् उभौ तौ न विजानीतो नायं हन्ति न हन्यत" इति, हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः । तथा च भगवता

स्वयमेव जीवस्याकर्तृत्वं स्वरूपं कर्तृत्वाभिमानस्तु व्यामोह इत्युच्यते "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते॥ नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टाऽनुपश्यति। कार्य्यकारणकर्तृत्वे हेतुः" प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते इति च, अतः पुरुषस्य भोक्तृत्वमेव प्रकृतेरेव तु कर्तृत्वमेवं प्राप्त प्रचक्ष्महे।

टी० अदृष्टादेरप्यनियमादिति तत्तत्कर्मानुष्ठानहेतुभूतशरीराणां सर्वात्मसाधारणत्वाददृष्टानियम इत्यर्थः। उक्तदोषः समान इति करणादिकं किमुपलब्धेर्हेतुः? उतानुलब्धेः? उतोभयोरिति? विकल्प्य पूर्ववद्दूषणं व्यक्तमिति भावः। परेषां सूत्रान्तरास्वारस्यं द्रष्टृ-शब्दस्येव ज्ञ-शब्दस्य ज्ञप्तिवाचित्वाभावात्, धीरो मनीषी ज्ञः प्राज्ञ इत्यभिधानविदः। अत एवानुत्पन्नत्वेनाविकृतब्रह्मण एवोपाधिना जीवभावेनावस्थानात्तस्य च चैतन्यस्वरूपत्वादिति व्याख्यानमपि क्लिष्टम् एतच्छब्देन साध्यतया प्रकृतानुत्पत्तिपरामर्शे तस्याः साक्षादेव ज्ञानस्वरूपत्वसाधकत्वाभावात् तदुपपादकब्रह्मानन्यत्वं, तेन ब्रह्मप्रतिपादकवाक्यजातं तेन तस्य ज्ञानस्वरूपत्वं च लक्षयित्वा तेन परमसाध्यस्योपपादनीयत्वात्साधकतया प्रकृतपरामर्शित्वं तु युक्तं प्रकृतत्वाविशेषेऽपि पूर्वसूत्रस्थपञ्चमी तुल्यार्थेन प्रत्ययेन साधकविषयस्वप्रकृत्यर्थसाम्यस्य च ज्ञाप्यमानतया योग्यतावशाच्छ्रुतिविशेषे प्रतिपन्ने तस्या व्यवधानेन ज्ञानस्वरूपताप्रतिपादने 'विलम्बत्वया-भावाच्च ज्ञानमात्रस्वरूपत्वे साध्ये ज्ञातृत्ववादिनीनां धर्मधर्मिभेदनिर्देशपराणां धर्मनित्यत्व वादिनीनां जानात्येवायम् अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेत्येवमादीनां श्रुतीनां बाधो दुस्तरः,'। तत्र नानुच्छित्तिरेव धर्मतया विवक्षिता अविनाशीत्यनेन पुनरुक्तिप्रसङ्गात् 'अत उच्छेदरहितज्ञानधर्मकत्वं विवक्षितम् अपरैस्त्वत एवेति पदं ताभ्यः श्रुति-

भ्य इति व्याख्यातं तदप्यविरुद्धं श्रुतेरिति तु व्याख्यानं ततोऽप्युचितम् उत्तरसूत्रस्थाया: षष्ठ्या अन्वयसामर्थ्येन श्रुतेरिति पदानुषङ्गस्य सूत्रकृताऽभिप्रेतत्वावगमात्, न ह्युत्क्रान्तिगत्यागतीनां ताभ्य इत्यन्वयो घटते श्रुतिभ्य इति अध्याहारे तु घटे[1] न अध्याहारसाकाङ्क्षपदानुषङ्गादपि निरपेक्षपदानुषङ्गोहि युज्यते अश्रुतेरिति पदस्यानुपपत्तिश्च पूर्वमेव दर्शिता अन्ये तु यत एवं नात्यन्तिकनाश: प्रलये जीवस्य किन्तु विभागशक्त्यवशेष एव अत एव ज्ञत्वमपि सिद्धं, तस्यामवस्थायां यद्वैतं न पश्यति पश्यद्वैतं न पश्यतीति ज्ञात्वाविनाशत्वविचनमस्ति हीति व्याचक्षते तदपि कल्पान्तरसाकाङ्क्षहेतूपस्थापकत्वादपि तद्विलम्बानपेक्षहेतूपस्थापकत्वस्य न्याय्यतया प्रत्युक्तं प्रलये विभागशक्त्यवशेषावस्थानं हि न साक्षादेव ज्ञानस्वरूपत्वसाधकं किन्तु प्रलयविषयश्रुत्युपस्थापनद्वारेण । किञ्च ज्ञाननित्यत्वं चैवमुपपादयन्ति सर्वा: संविदोऽङ्गारादर्चिष इव नवनीतपिण्डाद् घृतमिव पुरुषाद्विभज्यन्ते तेनै संयुज्यन्ते च, अतो ज्ञाननित्यत्वे न कारकवैयर्थ्यमिति। तत्र किञ्चिद्विमर्शनीयम्। किञ्च नवनीतपिण्डस्येवात्मन: स्वरूपैकदेश एव विभज्यमानो विषयेषु प्रसर्पति संकुचति च? उत तदपृथक्सिद्धं ज्ञानतया तत्सजातीयं द्रव्यान्तर? मिति, यदि प्रथमपक्ष: परिगृह्यते तत्र ब्रूम: अणुत्वं तावत् भवदभिमतं तत्स्वरूपाद्विभक्तश्चन्द्रादिषु प्रसृत: किमात्मैकदेश? उत कृत्स्नात्मा? कृत्स्नात्मा चेच्चन्द्रग्रहणवेलायां शरीरं निरात्मकं स्यात्, यद्येकदेश: प्रसृत: स चेदखण्डित: प्रसृतो न पुनरेति आत्माऽपि शरीरात् बहिराकृष्ट: स्यादिति शरीरं निरात्मकं स्यात्, यदि खण्डितोऽपसर्पेन्मृत्पिण्डविशीर्णधूलीपटलवच्च पुनरेयात् तदानीमात्मैकदेशहानि: स्यात्, एवं त्रिचतुरपर्यायैरात्मोच्छित्ति: स्यात्, अनुच्छेदे च ज्वालाया इव प्रतिक्षणोत्पत्तिरात्मन: स्यात्, यद्यखण्डित एव प्रसृत्य पुन: संकुचति पटग्रहणदशायां घटग्रहणाय पूर्वप्रसृत एवांश: प्रसर्पति? उत प्राक्प्रसृतांशे शरीरस्थे पूर्वं शरीरस्थांश: पश्चात्संसर्पति? द्वितीये पक्षे धर्मधर्मिभावाव्यवस्थानाच्छरीरस्थस्य धर्मिणोऽहंप्रत्ययवेद्यस्यात्मत्वाद्-

[1] घटते इति पा०।

र्मित्वाद्विषयसम्बन्धिज्ञानानामिच्छादीनामिव स्वस्मै भासमानत्वाभावाच्च प्रत्यक्त्वाप्रत्यक्त्वधर्मधर्मित्वादीनामंशभेदेनानियतत्वादात्मांशस्य कदाचिदनात्मत्वं प्रत्यगंशस्य कदाचित्पराक्त्वं धर्मिण एव कदाचित्स्वधर्मत्वं च स्यात्, ततश्च कटकमुकुटादीनामिवाहमर्थस्य कर्तृभोक्त्रादिमत्त्वं स्यात्, अहमर्थस्यैव कर्तृत्वभोक्तृत्वयोगात् अहंभावस्य चात्मन्यनियतप्रदेशवृत्तित्वाच्च । यदि प्रथमः पक्षो रोचते तर्हि प्रसर्पणाप्रसर्पणरूपविरुद्धस्वभावभाक्त्वाद्धर्मधर्मिणोर्भिन्नद्रव्यत्वम् अन्यधर्मज्ञानस्यान्यं प्रति धर्मत्वाभावादपृथक्सिद्धधर्मत्वं तस्य च सङ्कोचविकासभाक्त्वं चाभ्युपगन्तव्यं तथा सति धर्मान्यथाभावरूपावस्थापत्तिरुत्पत्त्यादिस्वरूपान्यथाभावाभावान्नित्यत्वमित्यविरुद्धमध्यमास्थेयम् उत्क्रान्ति इत्यादिसूत्रगणमधिकरणान्तरं परे व्याचक्षते तदयुक्तं तत्त्वचिन्तोपयोगित्वात्परिमाणचिन्तनस्य उपयोगश्च फलिफलभावे दर्शितः तत्र परेऽणुत्वं पूर्वपक्षीकृत्य विभुत्वमेव सिद्धान्तयन्ति तत्र न तावदियं परब्रह्मविषयाचिन्ता तद्विभुत्वस्य बह्वधिकरणसिद्धत्वात्, अल्पपरिमाणश्रुतीनां च निचाय्यत्वादेवमित्यनेन कृतनिर्वाहत्वाच्च शङ्कानुत्थानात्, जीवविषयेऽणुत्वस्य पूर्वपक्षीकरणमयुक्तम् अणुत्वश्रुतीनां निरवकाशत्वप्रसङ्गात्, औपाधिकाकारविषयत्वं तासामिति चेत् किमणुत्वं यावज्जीवभावमवतिष्ठते? उत न? प्रथमे यावत्क्षीरभावभाविनो माधुर्यस्येव यावद्द्रव्यभाविनोऽणुत्वस्यौपाधिकत्वमयुक्तं, द्वितीये जीवस्यामोक्षस्थायित्वं न सिद्ध्येत्, ततश्च वेदान्तानामनारम्भः स्याज्जीवभावनिवृत्तिर्हि परेषां मोक्षः, अवच्छेदकोपाध्यपगमे ब्रह्मताऽऽपन्नस्य पुनरुपाध्यन्तरेण जीवभावापत्तौ घटागमापायितया घटच्छिद्रस्येवादिमत्त्वं जीवस्य प्रसज्येत् । ननूपासनार्थमल्पपरिमाणत्वं पूर्वं निरूपितमत्र ब्रह्मणो जीवभावेनाणुत्वस्य स्वाभाविकत्वनिराकरणमधिकरणकृत्यमिति चेन्न उपाध्यसम्भवात्, न तावदविद्या, तस्य अणुत्वाभावेन तदवच्छिन्नस्याप्यणुत्वानुपपत्तेः, यद्वाऽध्यवसायादिवृत्तिभेदेन बुद्ध्यादिशब्दवाच्यं मनो बुद्ध्याख्यं महत्तत्त्वं वोपाधिः तन्नैतस्माज्जायते प्राणो मनः महान्यक्ते लीयते इत्यादिश्रुत्यवग-

तान्मनन्त्यादिसर्गात्पूर्वं जीवभावाभावात् जीवस्यादिमत्त्वं स्यात् । ननु यथा त्वन्मते जीव त्मधर्मभूतस्य ज्ञानस्य विभोरपि कर्मणाऽत्यन्तसङ्कोचः प्रलयदशायामप्युपपद्यते तथाकृत्स्नप्रलयदशायामन्तःकरणाद्यभावेऽपि कर्मकृतमणुत्वं जीवस्य सम्भवतीति चेत् न अवच्छेदकाभावचोद्यस्य सङ्कोचसद्भावप्रतिबन्द्या परिहारायोगात् स्वतो विकासशक्तियुक्तस्य धर्मभूतस्य ज्ञानस्य विकासप्रतिबन्धकं कर्माभ्युपगम्यते न तु विकसितस्यैकदेशावच्छेदकमिष्यते त्वन्मतेऽपि सर्वगतस्यैव सतो ब्रह्मणः क्वचित्प्रदेशेऽणुत्वमवच्छेदकपरिमितद्रव्यसापेक्षं विकासप्रतिबन्धकेन कर्मणा न सम्पत्स्यते अत आमोक्षस्थायिनः कस्यचिदुपाधेरसम्भवाज्जीवाणुत्वस्यौपाधिकत्वमयुक्तम् । किञ्च बालाग्रशतभागस्य आराग्रमात्र इत्यादिष्वणुत्वश्रुतिषूपाधिर्न श्रूयते यथा परमात्मनो विभुत्वश्रुतिषु, तस्य चाणुत्वमुपाधिपूर्वकमुच्यते एष आत्माऽन्तर्हृदयेऽणीयान्व्रीहेरित्यादिषु अत उपाध्यनुक्तेः परमात्मविभुत्ववज्जीवाणुत्वमपि नोपाधिकृतम् । किञ्च एषोऽणुरात्मा चेतसा वेदितव्य इत्यणुपरिमाणस्य मुमुक्षुवेदितव्यत्वश्रवणाच्चाणुत्वं स्वाभाविकं न ह्यौपाधिकाकारो जवीस्य स्थूलत्वादिवच्छोकमोहादिवच्च मुमुक्षोरनुसन्धेयः, तेन प्रद्योतेनैष आत्मा निष्क्रामतीत्यत्रात्म–शब्दस्य निष्कृष्टात्मविषयत्वात्तस्य निष्क्रमणार्हत्वावगमाच्चाणुत्वं स्वाभाविकं न ह्यात्म–शब्द उपाधिसंसृष्टपरः लक्षणाप्रसङ्गात्, उपाधीनां जीवस्य च पृथक्पृथगुत्क्रमणश्रवणाच्चाणुत्वं निरुपाधिकं तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति हि श्रूयते मनश्च प्राणशब्दवाच्येष्वन्तर्भूतं दशमे पुरुषे प्राणा आत्मैकादश इति श्रुतेः, मनोव्यतिरिक्ता बुद्धिरणुत्वोपाधिरिति चेत् बुद्धिर्वाऽन्यद्वा तत्किञ्चिदुपाधित्वेनोच्यतां तत्किं मनोवृत्तिरूप ? मुत तत्त्वान्तरम् ? आद्ये मनसः पृथगुत्क्रान्तिश्रवणात् जीवस्य तद्वृत्तितोऽपि पृथगुत्क्रान्तिः सिद्धा । तत्त्वान्तरत्वे च समष्टिरूपस्य तस्याणुत्वाभावान्नोपाधित्वं, व्यष्टिरूपत्वे च देहसंघाततदाश्रयतदाश्रितेष्वन्यतमेन भवितव्यं संघातरूपत्वे तस्याणुत्वाभावादनुपाधित्वं देहाश्रयतया जीवोपकरणत्वे मुख्यप्राणान्तर्भावात्ततः पृथगु-

त्क्रान्तिसिद्धिः, देहस्थतया जीवोपकरणत्वे प्राण-शब्दवाच्येष्वन्तर्भावात्ततः पृथगुत्क्रमणं सिद्धम् । किञ्च न केवलमुपाध्यनुक्तेरेवाणुत्वस्य स्वाभाविकत्वावगमः किन्तु निरुपाधिकस्वरूपस्याणुत्ववैशिष्ट्यावगमाच्च तदवगमः एषोऽणुरात्मेत्यात्मा ह्यणुत्वेन विशिष्यते न तु बुद्धिः आत्म-शब्दो ह्यात्ममात्रवाची न तूपाधिसंसृष्टवाची । ननु स चाऽनन्त्याय कल्पत इति श्रुतिरणुत्वस्यौपाधिकत्वमवगमयतीति चेन्न स इत्यणुत्वविशिष्टं जीवं परामृश्य विधीयमानस्यानन्त्यस्य तदविरोधेन वर्णनीयत्वात् वस्तुमात्रपरत्वे हि तच्छब्दस्य प्रकृतपरामर्शित्वं न स्यात्, न हि घटे प्रस्तुते मृन्मात्रं परामर्शमर्हति विशेषणप्रहाणेऽपि स्वारस्यं न स्यात् यो बालः स युवेत्युक्ते यथा कालभेदादविरोधः एवं यः पूर्वमणुः स पश्चादानन्त्याय कल्पत इत्यर्थ इति चेन्न उपक्रमावगतस्याणुत्वस्य चरमावगतेनान्यथासिद्धेनानन्त्येन सङ्कोचायोगात्, बाल्ययौवनयोः क्रमभावस्य प्रत्यक्षसिद्धत्वादगत्या बाल-शब्दः सङ्कोचितः, इह तु गत्यन्तरसद्भावात्तदनुपपन्नं, गत्यन्तरं चात्रैव वक्ष्यामः स्वरूपेणानन्त्यस्य दुर्निरूपत्वाच्चाणुत्वश्रुतिसङ्कोचो निष्फलः तथा हि पूर्वमणुस्वरूपस्य जीवस्यानन्त्यं नामाऽनन्तेन ब्रह्मणैक्यापत्तिर्वा? स्वरूपशैथिल्येन मृत्पिण्डस्येव प्रसर्पणं वा? पटवद्वेष्टितस्य स्वरूपस्य प्रसारितत्वं वा संभाव्यते? प्रथमं तावदशाब्दत्वादनुपपन्नं, न हि देवत्वाय कल्पत इत्युक्ते देवैरन्यैरैक्यमुक्तं स्यात्, अपि तु स्वस्य देवत्वजातियोग एव, अरोगत्वाय कल्पत इत्युक्ते स्वेतरनिरामयपुरुषान्तरैक्यं न सिद्ध्येत्किन्तु स्वस्यारोग्यगुणयोग एवमानन्त्यशब्दोऽपि प्रकृत्यर्थभूतविशेषणान्वयं धर्मिणो दर्शयति न तु वस्त्वन्तरं तेनैक्यापत्तिं भेदनिवृत्तिं वा प्रकृत्यंशस्य प्रत्ययांशस्य वा तद्वाचित्वाभावात्संयुक्तमेतत् सरमतरं च नित्यो नित्यानामिति नित्यत्वाक्षरत्वश्रुतिविरोधात् स्वरूपशैथिल्येन प्रसर्पणमनुपपन्नम् आत्मन्युपचयापचयविरहस्य प्रामाणिकत्वात्स्वरूपनि[१]वृत्तिरनुपपन्ना वेष्टितस्य प्रसरणमपि नाशङ्कनीयम् एकस्मिञ्छरीरे कृत्स्नस्य ब्रह्मणो वेष्टितत्वेन शरीरान्तरस्य जीवशून्यत्वप्रसङ्गात्, ब-

१ स्वरूपशुद्धिरपि इति पा० ।

स्तया एव ह्युपाधिना जीवभावो भवद्भिरभ्युपगम्यते जीवबहुत्वमिच्छताम- प्यश्रुतवेष्टनकल्पने गौरवं प्रसज्येत । नन्वनन्यथासिद्धे कल्पके गौरवमपि न दोषः, सत्यमिह तु तदन्यथासिद्धेः कल्पनमयुक्तम् अणुत्वोपाध्यवच्छिन्न- स्यैव देहान्तरावस्थितजीवस्याङ्गुष्ठपरिमाणत्वं श्रूयते "प्राणाधिपः सञ्च- रति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूप" इति, तथा "ऽस्य सोम्य महतो वृक्षस्य मूले हन्यादिति" वृक्ष–शब्देन शरीरं प्रस्तुत्य "स एष जीवेनानुभूत इति प्रविष्टत्वं चोक्त्वाऽस्य "अस्य यदेकां शाखां जीवो जहाति सा शुष्यति द्वितीयां जहाति सा शुष्यति सर्वं जहाति सर्वं शुष्यती"ति पा- णिपादादिषु जीवावस्थानं तत्प्रहाणेन तस्य शोषश्चोक्तः । न च वेष्टितस्व- रूपविकासेनैवाङ्गुष्ठपरिमाणत्वं कृत्स्नशरीरावस्थानं चेति वाच्यम् अणु- त्वोपाधेरनपगमादेव, न हि देहान्तस्थितिदशायामणुत्वोपाध्यपगमो भवतामिष्टः, अतोऽङ्गुष्ठपरिमाणत्वं हृदयद्वारकमभ्युपेत्यम् आपादमस्त- कावस्थानं धर्मभूतज्ञानेनेत्यभ्युपगन्तव्यम्, एवमणुत्वव्यतिरिक्तपरिमाणस्य सद्वारकत्वं धर्मभूतज्ञानेनान्यत्रावस्थानं न श्रुत्यन्तरबलेन क्लृप्तमिति क्लृप्त- प्रकारेणानन्त्यश्रुतिनिर्वाहे सम्भवति कल्पकान्यथासिद्धेर्वेष्टनकल्पनमयुक्तं सङ्कोचकान्यथासिद्धेरेव प्रथमावगताणुत्वसङ्कोचश्चानुपपन्नः, अतस्तदवि- रोधाय क्लृप्तप्रकारेणानन्त्यं प्रभाभूतज्ञानद्वारा वर्णनीयमित्यानन्त्यश्रुत्या- ऽपि नाणुत्वस्यौपाधिकत्वसिद्धिः यतोऽणुत्वं न पूर्वपक्षीकार्य्यमत एव व्यतिरेको गन्धवदिति सूत्रमपि न पूर्वपक्षविषयं गुणस्य ज्ञानस्य स्वाश्र- यातिरिक्तप्रदेशवृत्तित्वसमर्थनपरं तस्य युक्तिशून्यत्वात्, तच्च दृष्टान्तस्य पुष्पगन्धस्य साध्यविकलत्वात्, न हि परागाद्याश्रयं विना गन्धः प्रस- रति । तद्गुणेति अन्तःकरणगुणा इच्छाद्वेषादयः तत्सारोऽयम् अतोऽणुत्व- व्यपदेश उपाधिकृत इत्युक्तम् । तदयुक्तम् अन्तःकरणस्याप्रकृतस्य तच्छब्देन परामर्शायोग्यत्वात् प्राज्ञवदिति दृष्टान्तः साधनविकलः तस्यान्तःकर- णावच्छेदकत्वाभावात् दहराद्युपासनेष्वणुत्वस्यौपाधिकत्वमात्रं साम्य- मिति चेन्न प्रयुक्तहेत्वतिरिक्तस्य हेतोर्दृष्टान्ते कल्पनस्य क्लिष्टत्वात्, अक्लिष्टत्वे सम्भवति तदयोगाच्च, दार्ष्टान्तिकस्यैव दृष्टान्तत्वं प्रसज्ये-

त्परमात्मनो जीवत्वेनाणुत्वे जीवस्यैव दृष्टान्तत्वाज्जीवभावेनाणुत्वस्योपासनार्थतयाऽणुत्वं दृष्टान्त इति चेन्न अहिकुण्डलवदितिवदवस्थाविशेषवाचिशब्दाभावात्, अतो दृष्टान्तदार्ष्टान्तिकभावस्वारस्यसिद्धधर्मिभेदोऽवतिष्ठत एव, स चास्मत्पक्ष एव सिध्यति, संसृष्टयोर्वियोगनियमात् जीवान्तःकरणयोर्वियोगे सति जीवस्यासत्त्वमसंसारित्वं वा स्यादिति शङ्कायां यावदात्मनः संसारस्तावद्भावित्वात् अन्तःकरणस्य नोक्तदोष इत्यनन्तरसूत्रं व्याख्यातं, तदप्ययुक्तम् आत्म–शब्दस्य संसारविशिष्टवाचित्वाभावाच्च हि देवदत्तशब्द एव दण्डिनमुपस्थापयति सुषुप्तिप्रलययोरप्रबोधेनान्तःकरणाभावान्न यावदात्मभावित्वमिति शङ्कापरिहारार्थत्वमनन्तरसूत्रस्याप्ययुक्तं महानव्यक्ते लीयत इति बुद्धिलक्षणस्य महच्छब्दवाच्यान्तःकरणस्य लयश्रवणात् शक्तिरूपेण तदानीमप्यवतिष्ठत इति चेत् शक्ति–शब्देन किमविद्यामात्रं विवक्षितम्? उतान्तःकरणोत्पादनार्हमचिद्द्रव्यम्? उतावस्थाविशेषापन्नमचित्तत्त्वं? प्रथमे अविद्यायाअणुत्वाभावादणुपरिमितत्वं जीवस्यामोक्षस्थायि न भवेत्, द्वितीये घटस्येवान्तःकरणस्य न यावदात्मभावित्वसम्भवः, न हि मृन्मात्रं घटोत्पादनार्हमिति घटोऽवस्थितो भवति, तृतीये लयश्रुतिविरोधः, न हि मृन्मात्रदशायां घटाद्यवस्थासम्भवः एतावद्दूषणमपरेषामपि तुल्यं प्रतिजीवमणवो ऽनाद्यविद्या बह्वः सन्तीति तासां स्थूलतापत्तिः सृष्टिः, सूक्ष्मतापत्तिर्लय इति चेन्न तस्य अणुत्वाप्रहाणे सर्षपादेरिव स्वपरिमाणावस्थायां न प्रलयः, द्वितीयेऽणुत्वप्रहाणे जीवस्यामोक्षस्थायित्वाभावः । ननु स्वपरिमाणाप्रहाणेऽपि इच्छाद्वेषादिकार्य्यजननानर्हत्वादेव प्रलीनत्वमिति चेत् प्राणाकाशादिप्रलयस्यापि तथात्वप्रसङ्गात्, एतस्माज्जायते प्राणो मन इति प्राणादीनामविशेषेण ह्युत्पत्त्यादिकं श्रूयते। नित्योपलब्धीति अन्तःकरणानभ्युपगमे आत्मेन्द्रियसन्निधानान्नित्यमुपलब्धिर्न चेदनुपलब्धिर्वा प्रसजेत् आत्मनीन्द्रियेऽपि वा शक्तिप्रतिबन्धः कल्पनीय आत्मनो निर्विकारत्वात्सोऽनुपपन्नः अकस्मादिन्द्रियेषु च सोऽनुपपन्न इति व्याख्यातं तदप्ययुक्तम् अन्तःकरणाभ्युपगमेऽपि नित्यानुपलम्भादिप्रसङ्गस्य शक्तिप्रतिबन्धकल्पनानुपपत्तेश्च तुल्यत्वात्, अन्तः-

करणस्यावधानानवधानाभ्यां नित्योपलम्भाद्यप्रसङ्ग इति चेन्न लाघवन्यायेनात्मन एवावधानानवधानाभ्यां तदप्रसङ्ग इति कल्पनस्य युक्तत्वात् आत्मनो निर्विकारत्वेऽपि इच्छाद्वेषादिवत् प्रतिबन्धशक्तिमत्त्वमपि युज्यते। इच्छाद्वेषादिकमपरमार्थ इति चेत् शक्तिप्रतिबन्धोऽपि तादृश एवात्मनि कल्प्यताम् इन्द्रियेषु तत्कल्पनमपि नाकस्माद् भवति अदृष्टदेशकालादिसापेक्षत्वात्, अन्यत्र मना अभूवमिति श्रुतिवशादन्तःकरणाभ्युपगमः, तर्ह्यन्यथासिद्ध्युपहतदुर्बलतर्कं विहाय श्रुतिबलमेव सूत्रयितव्यम् अतः सूत्रवैयर्थ्यमेव भवति, अन्येषां तु पक्षो न विरुद्धो व्यतिरेकोगन्धवदिति सूत्रस्य ज्ञातृत्वे प्रमाणोपस्थापकत्वमेव युक्तं न तु गुणस्य स्वाश्रयानतिवृत्तित्वशङ्कापरिहारार्थत्वं गन्धदृष्टान्तेन तस्या दुष्परिहरत्वात्, गन्धाश्रयद्रव्यसूक्ष्मावयविशरणाद्धि दूरे गन्धोपलब्धिः । न च प्रविरलमेव द्रव्यं गुण इत्युच्यत इति च युक्तं तूलस्य गुणत्वाप्रसिद्धेः, न च विशीर्णविरलद्रव्यं गुणःअयश्चूर्णस्यायोगुणत्वाप्रसिद्धेः, स्वाभ्युपगतं गुणगुणिनोरभेदमाश्रित्य गुणत्वव्यवहार इति चेन्न बहुलद्रव्यस्याप्यभिन्नत्वाविशेषेण गुणव्यवहारप्रसङ्गात् । विरलत्वं नाम किं सान्तरत्वं ? तदा ज्ञानस्य गुणत्वं न स्यात् प्रसृप्रज्ञानस्य जालस्येव सच्छिद्रत्वादर्शनात् । यदि सूक्ष्मत्वं विरलत्वं तर्ह्यात्मस्वरूपस्यापि गुणत्वं स्यात् अङ्गारे सत्यर्चिषां नाशे पुनरपि प्रभोत्थानं युक्तं परिणामित्वात् पुनर्ज्ञातप्रभोत्थानमयुक्तमिति शङ्कानिरासार्थे मणिप्रभादृष्टान्तविषयं "यावदात्मभावित्वादि"ति, सूत्रमित्ययुक्तं गुणाद्वाऽऽलोकवदित्यत्रैव प्रभाप्रभावद्दृष्टान्तस्याभिहितत्वाच्च रत्नप्रभान्यायेन धर्मधर्मिभावे सम्भवति प्रभाऽनुत्थानशङ्काऽनुपपत्तेः, तत्र प्रदीपप्रभादृष्टान्त एवाभिप्रेतः न तु मणिप्रभादृष्टान्त इति चेत् आलोक–शब्दस्य साधारणस्य सङ्कोचकाभावाद्विज्ञानव्यपदेशामुख्यत्वदोषपरिहारस्यापेक्षितत्वेन तदकरणानुपपत्तेश्च ॥ ज्ञाधिकरणं समाप्तम् ॥

कर्त्रधिकरणम् । **सू० कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

**सू०** आत्मैव कर्त्ता न गुणाः कस्मात् शास्त्रार्थवत्त्वात् शास्त्राणि

हि "यजेत स्वर्गकामः" "मुमुक्षुर्ब्रह्मोपासीत" इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते, न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते शासनाच्च शास्त्रं, शासनं च प्रवर्तनं शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण, अचेतनं च प्रधानं न बोधयितुं शक्यम्, अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत्तदुक्तं "शास्त्रफलं प्रयोक्तरी"ति ॥

टी० सू० कर्ता शास्त्रार्थवत्त्वात्, अवान्तरसङ्गतिमाह "अयमात्मे"ति, ज्ञातृत्वाद्धि कर्तृत्वमतः कर्तृत्वोपयुक्तज्ञातृत्वनिरूपणानन्तरं कर्तृत्वनिरूपणादिह सङ्गतिरिति भावः । किमात्मैव कर्ता? उत प्रधान?मिति किमात्मनः कर्तृत्वे एव ज्योतिष्टोमादिशास्त्राणाम् अर्थवत्त्व? मुत प्रधानस्य कर्तृत्व? इति, कर्तृत्वनिषेधः किमात्मनः कर्तृत्वे सम्भवति ने? ति च यदा प्रधानस्य कर्तृत्वे शास्त्राणामर्थवत्त्वं यदा चात्मनः कर्तृत्वे कर्तृत्वनिषेधश्च न न सम्भवति तदा प्रधानं कर्तृ स्यात्, यदाऽऽत्मन एव कर्तृत्वे शास्त्राणामर्थवत्त्वं कर्तृत्वनिषेधश्च विषयवान्स्यात् तदानीमात्मैव कर्ता स्यात्, हन्ता चेन्मन्यते हन्तुमित्यत्र हन्तुमिति पदमुदन्तद्वितीयान्तं सेतुं जन्तुमितिवत् हन्तारमित्यर्थः । आत्मानमित्यध्याहर्तव्यमित्याह हन्तारमिति अस्मिन्वाक्ये हननक्रियायामेव कर्तृत्वनिषेधः प्रतीयते नान्यक्रियायामित्यत्राह "तथा चे"ति, उपबृंहणवाक्ये सर्वक्रियाकर्तृत्वनिषेधादुक्ता चेदित्यत्रोक्तं हननमुपलक्षणार्थमित्यर्थः । एवं प्राप्त इत्यादि शास्त्रार्थवत्त्वात् शास्त्राणामर्थवत्त्वायेत्यर्थः प्रयोजनतया हेतुत्वं शास्त्रशब्दस्यावयवार्थेनात्मन एव कर्तृत्वमुपपादयति "शासनाच्चे"ति, भोक्तुरेव कर्तृत्वाच्चेतनस्यैव भोक्तृत्वाच्छास्त्रस्य बोधजननद्वारा प्रवर्तकत्वादचेतने बोधजननायोगाच्च चेतनः कर्तेत्यर्थः । तदुक्तमिति कर्मविचार इत्यर्थः । परोक्तश्रुतिवाक्यार्थमाह–

भा० यदुक्तं हन्ता चेन्मन्यते इत्यादिना, हननक्रियायामकर्तृ-त्वमात्मनः श्रूयते इति तदात्मनो नित्यत्वेन हन्तव्यत्वा-भावादुच्यते, यच्च प्रकृतेः क्रियमाणानीत्यादिना गुणाना-मेव कर्तृत्वं स्मर्य्यते इति तत्सांसारिकप्रवृत्तिविषयस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति प्राप्ता-प्राप्तविवेकेन गुणानामेव कर्तृत्वमित्युच्यते, तथा च तत्रैवोच्यते "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्म"स्विति तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते "तत्रैवं सति कर्त्ता-रमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिरि"ति, "अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चम"-मित्यधिष्ठानादिदैवपर्य्यन्तसापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवलङ्कर्त्तारं मन्यते न स पश्यतीत्यर्थः,

**सू० उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥**

स यथा महाराज इति प्रकृत्य एवमेवैष एतान्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत इति प्राणाना-मुपादाने विहारे च कर्तृत्वमुपदिश्यते ॥

टी० "यदुक्त"मिति, आत्मनो हन्तव्यत्वाभावादस्य हन्तृत्वं नास्तीत्यर्थः । स्मृतिवचनस्यार्थमाह "यच्चे"ति, प्रकृतेरित्यादिना चोद्या-नुवादः । तस्याभिप्रेतार्थमाह "तत्सांसारिके"त्यादि, गुणानामेव कर्तृतेति तस्मिन्वचने प्रतीयमानार्थानुवादः, प्राप्ताप्राप्तविवेकेन—अन्वयव्यतिरेकनि-रूपणेनेत्यर्थः । गुणानामेव कर्तृतेति वचनस्येदं तात्पर्यं सांसारिकप्रवृत्तित्वस्य कर्तृत्वमन्वयव्यतिरेकवशात्सत्त्वरजस्तमःसंसर्गकृतमिति संसारदशायां

प्रवृत्तिः सांसारिकप्रवृत्तिः । गुणसङ्गकृतत्वं स्पष्टयति तथा चे''ति, तथेति केवलम्—अधिष्ठानादिरहितमित्यर्थः तत्रैवमित्यादिवचनस्याप्यात्मनः कर्तृत्वनिषेधपरत्वभ्रमव्यावृत्त्यर्थम् एवं सति केवलमिति, पदार्थवैशद्यार्थमाह "अधिष्ठान"मिति, अधिष्ठानं शरीरं, चेष्टा—शब्देन पञ्चवृत्तिप्राणो लक्ष्यते सापेक्षे सतीत्यन्तेन एवं सतीत्यस्य व्याख्यानं, "शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः" ॥ इत्यस्य वचनस्यानन्तरं हि तत्रैवं सतीत्यादि इति वचनम् सू· उपादानाद्विहारोपदेशाच्च, गृहीत्वेत्युपादानमुक्तं परिवर्त्तक इति विहार उक्तः, इन्द्रियप्रेरणे शरीरप्रेरणे च कर्तृत्वमुक्तमित्यर्थः ॥

## सू० व्यपदेशाच्च क्रियायां न चेन्निर्देश-विपर्ययः ॥ ३५ ॥

भू० "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्त्ता । विज्ञान—शब्देन नात्मनो व्यपदेशः अपि त्वन्तःकरणस्य बुद्धेरिति चेत् एवं सति निर्देशविपर्ययः स्याद्बुद्धेः करणत्वाद्विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥

## सू० उपलब्धिवदनियमः ॥ ३६ ॥

आत्मनोऽकर्तृत्वे दोष उच्यते, यथाऽऽत्मनो विभुत्वे नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्यादिनोपलब्धेरनियमः उक्तः तद्वदात्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात्सर्वाणि कर्माणि सर्वेषां भोगाय स्युः, नैव वा कस्यचिदात्मनो विभुत्वाभ्युपगमात्सन्निधानमपि सर्वेषामविशिष्टम्, अत एव चान्तःकरणादीनामपि नियमो नोपपद्यते यदायत्ता व्यवस्था स्यात् ॥

**सू० शक्तिविपर्ययात् ॥ ३७ ॥**

बुद्धेः कर्तृत्वे कर्त्तुरन्यस्य भोक्तृत्वानुपपत्तेः भोक्तृत्वशक्तिरपि तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत भोक्तृत्वं च बुद्धेरेव संपद्यत इत्यात्मसद्भावे प्रमाणाभावश्च स्या"त्पुरुषोऽस्ति भोक्तृभावा"दिति हि तेषामभ्युपगमः,

**सू० समाध्यभावाच्च ॥ ३८ ॥**

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात्स च समाधिः प्रकृतेरन्योऽस्मीत्येवंरूपः न च प्रकृतेरन्योऽस्मीति प्रकृतिः समाधातुमलम्, अतोऽप्यात्मैव कर्त्ता ॥ नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वं नोपरमेतेत्यत्राह–

**सू० यथा च तक्षोभयथा ॥ ३९ ॥**

वागादिकरणसंपन्नोऽप्यात्मा यदेच्छति तदा करोति यदा तु नेच्छति तदा न करोति, यथा तक्षा वास्यादिकरणसन्निधानेऽपीच्छानुगुण्येन करोति न करोति च ॥

टी० सू० व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः, यज्ञं तनुते कर्माणि तनुते इति लौकिकवैदिकक्रियाकर्तृत्वमुक्तं, विज्ञानेनेति तत्राप्युपचरितत्वे सति स एव दोष इति भावः । सू० उपलब्धिवदनियमः, यो यदन्तःकरणो यत्कर्म चक्रे तदन्तःकरणेनैव तेनानुभाव्यमित्यत्राह "अत एव"वेति, । सू० शक्तिविपर्ययात्, ततः किमित्यत्राह "भोक्तृत्वं चे"ति, कथं प्रमाणाभाव इत्यत्राह "पुरुषोऽस्ती"ति, सू० समाध्यभावाच्च, अचेतनत्वादपि प्रकृतेः समाधिर्नोपपद्यते प्रकृतेरन्योऽस्मीत्येवंरूपत्वाच्च नोपपद्यत इत्यर्थः । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, सू० यथा च तक्षोभयथा च, उक्तदूषणं त्वत्पत एव प्रसजतीत्याह–

सू० बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्याः भोगवाञ्छादिनियमकारणाभावात्सर्वदा कर्तृत्वमेव स्यात्॥ कर्त्रधिकरणं समाप्तम्॥

टी० "बुद्धेस्त्वि"ति, परे चापरे च समाध्यभावादित्यन्तं सत्त्रजातमात्मनः कर्तृत्वसमर्थनपरमधिकरणं वर्णयित्वा तथा च तक्षोभयथेति सूत्रं कर्तृत्वस्यौपाधिकत्वप्रतिपादकमधिकरणान्तरं वर्णयन्ति, तत्रोच्यते कर्त्ता शास्त्रेत्यत्र कर्तृत्वस्य स्वाभाविकतया पारमार्थ्यं किं प्रतिपिपादयिषितम्? उतौपाधित्वेनापारमार्थ्यम्? उत कर्तृत्वमात्रं? प्रथमेऽनन्तराधिकरणविरोधः, द्वितीयेऽनन्तरेण पुनरुक्तिः, तत्र ह्यौपाधिकत्वं समर्थनीयं मतं, तृतीये संशयाभावादनारम्भणीयता देहस्य वा तदतिरिक्तस्य वा कस्यचिदात्मतयाऽभिमतस्य कर्तृत्वं हि सर्वजनसंमतम्, अहमिदं करोमीति हि सर्वेषां प्रतिपत्तिः। ननु प्रकृतिरेव कर्त्रीति सांख्यपक्षनिरासार्थ आरम्भ इति चेन्न प्रकृतिगतस्य वान्तःकरणगतस्य वा कर्तृत्वस्यात्मन्यध्यस्तत्वाभ्युपगमस्य युवयोरविशिष्टत्वात्। ननु प्रकृतिरेव कर्त्रीति तत्पक्षः अतस्तन्निरासेन बुद्ध्युपहित आत्मा कर्तेति समर्थनार्थमधिकरणमिति चेत् किं बुद्ध्युपधानेन कर्तृत्वं परमात्मन उच्यते? उत जीवात्मनो? नाद्यः अन्तःकरणसृष्टौ बुद्ध्युपधानेन विना कर्तृत्वस्याभ्युपगन्तव्यत्वात्, अन्यथा बुद्ध्युपधानात्कर्तृत्वं कर्तृत्वाद् बुद्ध्युपधानमित्यन्योन्याश्रयप्रसङ्गात्, प्रलयावस्थायामन्तःकरणान्तराभ्युपगमे एकत्वावधारणविरोधाच्च। नापि द्वितीयः त्वन्मते बुद्ध्युपधानात् पूर्वं जीवपरमात्मविभागाभावेन जीवगतकर्तृत्वं बुद्ध्युपधाननिबन्धनमिति वक्तुमशक्यत्वात्, जीवत्वं कर्तृत्वं च बुद्ध्युपहितस्य ब्रह्मण इति चेन्न बुद्धेरनादित्वे महतो लयश्रुतिविरोधात्, आदिमत्त्वे जीवानामादिमत्त्वप्रसङ्गात्, बुद्धिसृष्टावन्योन्याश्रयस्य पूर्वोक्तस्य दुस्तरत्वाच्च। विज्ञानं यज्ञमित्यादिवाक्यविषयस्य व्यपदेशाच्च क्रियायामिति सूत्रस्य विज्ञानशब्दवाच्यजीवस्य कर्तृत्वप्रतिपादकत्वात्, तथा भवद्भिर्व्याख्यातत्वाच्च, विज्ञान-शब्दस्य बुद्धिमात्रविषयत्वनिर्बन्धश्चानुपपन्नः, न हीदं सूत्रं पूर्वपक्षविषयं व्याख्यातं तथा सति यथा च तक्षेति सिद्धान्तसूत्रं स्यात्, ततश्च तस्य पृथगधिकरणत्वानुपपत्तिः विज्ञान-शब्द-

विषये वक्तव्यं सर्वमानन्दमयाधिकरणे उक्तं जीवानां ब्रह्मात्मकत्वोपदेशश्च न कर्तृत्वौपाधिकत्वमाधकः अन्तःकरणसृष्टौ तदुपधानेन विना ब्रह्मणः कर्तृत्वस्यावश्याभ्युपेयत्वात्, आत्मा कर्त्ता चेद्धितमेव नियतं कुर्यादिति शङ्कायामिष्टानिष्टोपलब्धिवद्देशकालादृष्टादिवशादनियमेन हिताहितकारित्वोपपत्तिरिति एतदर्थपरमुपलब्धिवदनियम इति सूत्रं व्याख्यातं तदयुक्तं शङ्काऽनुत्थानेन परिहर्तव्याभावात्, हितबुद्ध्यैव हि सर्वं चेतनः करोति वस्तुतस्त्वहितमिति चेत्तर्हि तत्र कर्तृत्वे चोद्यं किन्तु सार्वज्ञ्यदूषणम् अहिते हितबुद्धित्वं, न चात्र संसरतो जीवस्य सार्वज्ञ्यं केनापि विवक्षितम्, अतो ऽकर्तृत्वे दूषणान्तरपरत्वमेव सूत्रस्य युक्तम् ॥ शक्तिविपर्यादिति बुद्धेः कर्तृत्वे करणशक्तिर्हीयेत कर्तृशक्तिश्च स्यात्, अतः-करणान्तरं कल्प्यं करणव्यतिरिक्तकर्तृसद्भावात् ना[1]स्ति विवाद इत्युक्तं तदप्ययुक्तम् बुद्धेः कर्तृत्वेऽपि मनसः । करणत्वसम्भवात् जीवस्य कर्तृत्वासिद्धेः, मन एव वृत्तिविशेषात् बुद्धि-शब्दवाच्यमिति चेन्न बुद्धि-शब्दवाच्यमहत्कार्य्याहङ्कारकार्य्यत्वात् मनसः । पराशरादयो हि तथा स्मरन्ति वृत्तिविशेषमात्रं चेत् बुद्धिस्तदा चित्तमनसोरिव प्रकृतिविकृतिभावोपदेशो न स्यात् । "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधे"ति भूम्यबादीनामिव मनोबुद्ध्योरपि पृथक्त्वं प्रतिपाद्यते । समाध्यभावाच्चेति सूत्रमिति "ओमित्यात्मानं ध्यायथ आत्मा अरे द्रष्टव्य इति समाधिविधिरपि समाधौ कर्तृत्वमात्मनोऽवगमयतीति व्याख्यातं तत्तु कर्त्ता शास्त्रार्थवत्त्वादित्यस्माद्विशिष्टार्थम् अतः प्रकृतेरन्यत्वेन समाधिविधानमेव विवक्षितं, सू॰ यथा च तक्षेति, तत्र कर्तृत्वस्यौपाधिकत्वं नाम किं संसारदशायां देहेन्द्रियादिसापेक्षत्वम् उत मुक्तावननुगतत्वं? प्रथमेऽधिकरणानुत्थानं देहादिसापेक्षत्वस्य लोकसिद्धतया निरपेक्षत्वशङ्काऽनुदयात्, द्वितीये श्रुतिविरोधः परं ज्योतिरुपसम्पन्नस्य "जक्षत् क्रीडन् रममाण" इति जक्षणादिव्यापारदर्शना"त्सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति स एकधा भवति त्रिधा भवती"त्यमात्रेणा-

[1] नास्ति विवाद इति पा॰ ।

भिलषितनिष्पादकत्वश्रवणाच्च कर्तृत्वस्य दुःखरूपत्वात् तस्य स्वाभाविकत्वे च दुःखादनिर्मोक्ष इति चायुक्तं स्रक्चन्दनाद्युपयोगे कर्तृत्वस्य दुःखरूपत्वाभावात् । ननु न दुःखरूपत्वं विवक्षितं किन्तु दुःखानुषङ्ग्याप्तत्वमिति चेत् तर्ह्यकर्तृत्वमपि दुःखानुषक्तमिति दुःखादनिर्मोक्षः स्यात् तस्य निष्पन्दत्वं हि दुःखहेतुर्दृश्यते शास्त्रीयकर्मस्वकर्तृत्वं च नरकादिहेतुः श्रूयते । किं चात्मावभासस्य दुःखव्याप्तिर्दृष्टेति मुक्तावात्मानवभासदुःखानुभवयोरन्यतरप्रसङ्गः । आगमविरोधाद् व्याप्तिभङ्गश्चेत् कर्तृत्वेऽपि दुःखव्याप्तिर्भज्यतां विज्ञानं यज्ञमिति वाक्यस्य बुद्धिविषयत्वं व्यपदेशाच्चेति सूत्रस्य पूर्वपक्षविषयत्वाभावादयुक्तमिति उक्तं, ब्रह्मात्मकत्वोपदेशस्य चाकर्तृत्वसाधकत्वं व्युदस्तम् । अन्ये तु यथा चेति सूत्रं पूर्वसूत्रैरेकाधिकरणमेव अवर्णयन्, ते चास्य सूत्रस्य कर्तृत्वाकर्तृत्ववचनानां विषयव्यवस्थापनार्थत्वमाहुः ततोऽपि कर्तृत्वानुपरतिप्रसङ्गपरिहारार्थत्वं युक्तं तस्य परिहरणीयत्वात् कर्तृत्वनिषेधवचनानां विषयविभागस्याद्यसूत्रेऽभिप्रेतत्वादन्यथा शास्त्रफलं प्रयोक्तरीति सिद्धे कर्तृभावे कर्ता शास्त्रार्थवत्त्वादिति सूत्रवैयर्थ्यप्रसङ्गात् तद्दृष्टान्तेन प्रकृतेः क्रियमाणानीत्यादिवचनस्य दुष्परिहरतया तत्परिहारस्याभिप्रायिकत्वस्याभ्युपेत्यत्वात् अनुपरतिप्रसङ्गपरिहारपरत्वेऽप्यस्मिन्सूत्रे विषयविभागस्यार्थसिद्धत्ववर्णनोपपत्तेश्च ॥ कर्त्रधिकरणं समाप्तम् ॥

परायत्ताधिकरणम् । **सू० परात्तु तच्छ्रुतेः ॥ ४० ॥**

भा० इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येण? उतपरमात्मायत्तम्? इति, किं प्राप्तं स्वातन्त्र्येणेति परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येत, यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भशक्तः स एव नियोज्यो भवति, अतः स्वातन्त्र्येणास्य कर्तृत्वमिति प्राप्तेऽभिधीयते ।

भू० तु-शब्दः पक्षं व्यावर्तयति तत्कर्तृत्वमस्य परात् परमात्मन एव हेतोर्भवति, कुतः श्रुतेः "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा य आत्मनि तिष्ठन्नात्मनो ऽन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत" इति, स्मृतिरपि "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेʼʼति,

नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तं, तत्राह—

**सू० कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥**

सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नमुद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यत इत्यर्थः, कुत एतद्विहितप्रतिषिद्धावैयर्थ्यादिभ्यः, आदि-शब्देनानुग्रहनिग्रहादयो गृह्यन्ते ॥

टी० सू० परात्तु तच्छ्रुतेः, जीवस्य कर्तृत्वं किं परमात्मायत्तम्? उत स्वायत्त? मिति किं परमात्मायत्तत्वे विधिनिषेधशास्त्रानर्थक्यं स्यात्? ने? ति यदा स्यात्तदा स्वायत्तं, यदा न परमात्मायत्तमिति सिध्यति, तदिति व्याख्येयं पदं कर्तृत्वमिति व्याख्यानम् । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, सू० कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः, उद्योगमपेक्ष्येति अनेन प्रथमप्रवृत्तिदशायां परस्योदासीनत्वं दर्शितं प्रवृत्तस्य प्रवर्तनं ह्यनुमतिः

जीवः स्वयमेवोद्युक्तश्चेत् किमनुमतिदानेनेत्यत्राह "परमात्मानुमतिमि"ति उत्तरप्रवृत्तिरेतदनुमतिदानेनैवोपपद्यत इत्यर्थः। विहितप्रतिषिद्ध-शब्देन विधिनिषेधावुच्येते। आदि-शब्दं व्याचष्टे "आदि-शब्देने"ति निग्रहानुग्रहौ कोपप्रसादौ भाष्यस्यादि-शब्देन तत्तत्फलदानमभिप्रेतं परानुमतिसापेक्षत्वे विधिनिषेधविषयत्वानुपपत्तिरिति शङ्कायां परानुमतिदानेनैव प्रवृत्त्युपपत्तौ तत्रापि प्रथमप्रवृत्तस्यैव फलभाक्त्वे च दृष्टान्तमाह—

भा० यथा द्वयोः साधारणे धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोपपद्यते, तथाऽपीतरानुमितिः स्वेनैव कृतेति तत्फलं [1]स्वस्यैव भवति पापकर्मसु निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहतीति साङ्ख्यसमयनिरूपणे प्रतिपादितं, नन्वेवम्, "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषती"त्युन्निनीषयाऽधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयत्येतन्नोपपद्यते उच्यते एतन्न सर्वसाधारणं यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यव[2]सितः प्रवर्तते तमनुगृह्णन् भगवान्स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेष्वेव कर्मस्वेव रुचिं जनयति, यश्चातिमात्रप्रातिकूल्ये व्यवस्थितः प्रवर्तते तं निगृह्णन्स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु कर्मसु रुचिं जनयति।

टी० "यथे"ति, साधारणे द्रव्ये परानुमत्या स्वांशमादाय राज्ञ उपायने दत्ते तत्प्रसादहेतुकः फलान्वयः प्रथमप्रवृत्तस्यैव दृश्यते न त्वनुमन्तुः तथेदमित्यर्थः। अंशे पारतन्त्र्याद्विधिनिषेधागोचरत्वमिति शङ्का, अंशे स्वातन्त्र्याद्विधिनिषेधगोचरत्वोपपत्तिरिति परिहारः, अन्यसापेक्षत्वेऽपि

---

१. स्वस्यैवेति पा०। २ अवस्थित इति पा०।

रथाकर्षणादिषु विधिनिषेधगोचरत्वं दृष्टं, पापकर्मस्वित्यादि, अन्यत्र दयायाः सविषयत्वादित्यर्थः । एतदुक्तं भवति, यथा द्वयोः पुत्रयोः पित्रादिविभक्तदत्तवित्तक्षेत्रादिमत्त्वेन तत्सापेक्षत्वेऽपि कस्यचिदपथप्रवृत्तिः कस्यचित्सुपथप्रवृत्तिश्च तयोरेव फलाय भवति, तद्वदिहापि सर्वजीवानां सामान्येन चिच्छक्तिप्रवृत्तिशक्त्योः करणकलेवररूपपरिकरलाभस्य च परमात्माधीनत्वात् कर्तृत्वमात्रं परायत्तं विशेषकर्तृत्वं च परानुमतिसापेक्षत्वात् परायत्तम्, अंशे स्वातन्त्र्याज्जीवस्य विधिनिषेधविषयत्वं स्वातन्त्र्यं च स्वेच्छानुगुणप्रवृत्तिसामर्थ्यं मत्यनिवार्य्यत्वम् । इतरसापेक्षत्वेऽपि विधिनिषेधविषयत्वं फलभाक्त्वं च रथाकर्षणादिषु दृष्टम्, इतरसापेक्षत्वे च प्रथमप्रवृत्तस्यैव फलान्वये च दृष्टान्तो दर्शितः । अनुमन्तुः परस्य नियन्तृत्वादूर्मिग्राहकबाधाच्च न फलान्वयः किन्तु जीवस्यैव, लोकेऽप्यनुमन्तुः फलान्वयो नानुमन्तृत्वप्रयुक्तः अपि तु शास्त्रवश्यत्वप्रयुक्तः निवर्तनक्षमस्याप्यनुमन्तृत्वे न दोषः प्रथमप्रवृत्तिफलदानरूपत्वात्तस्य अल्पानुकूल्येन विपुलापराधसहत्वाद्दयादिगुणानां सविषयत्वमिति । अत्र चोदयति "नन्वि"ति, कथमनुमन्तृत्वम् अप्रवृत्तप्रवर्तनरूपं प्रयोजयितृत्वं ह्यस्य दृश्यते अनुमन्तृत्वे सति कथमिदमुपपद्यत इत्यर्थः । विषयव्यवस्थया परिहरति "उच्यत" इति, न्यायकृतं विषयविभागं संवादकोपबृंहणवचनेन द्रढयति—

सू० यथोक्तं भगवता स्वयमेव "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः" इत्यारभ्य "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते"ति, तथा "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् इत्यादि, "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" इत्यन्त-

मुक्त्वा "तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनि"ष्वित्युक्तम् ॥ परायत्ताधिकरणं समाप्तम् ॥

टी० "यथोक्तमि"ति, प्रथमप्रवृत्तस्यानुमन्तृत्ववदत्यन्तानुकूलप्रतिकूलयोः प्रयोजयितृत्वमपि फलदानकल्पं तत्र च हेतुः स्वातन्त्र्यम्, एवं प्रथममुपेक्षकत्वं पश्चादनुमन्तृत्वं क्वचिद्विषये प्रयोजकत्वं च प्रतिपादितम् एषां त्रयाणां दोषरूपत्वसाधनमाश्रयासिद्धिधर्मिग्राहकबाधाभ्यां पूर्वमेव निरस्तम्, । ननु चेतनस्य प्राथमिकेच्छाप्रयत्नयोरुत्पत्तौ परमात्मनः कारणत्वमस्ति वा न वा? न चेत्सर्वकारणत्वभङ्गप्रसङ्गः, किञ्च पुण्यपापप्रवृत्त्यनुगुणेच्छादीनामपि पूर्वकर्मफलरूपत्वात्तदिच्छादिषु कारणत्वाभावे परस्य सर्वकर्मफलप्रदत्वं च भग्नं स्यात्, अतः अतः प्राथमिकेच्छाप्रयत्नयोरपि कारणत्वमीश्वरस्याभ्युपगन्तव्यम्, ततश्च तयोरीश्वरः स्वसङ्कल्पतः कारणं स्यात्, अयमिच्छेदयं प्रयतेतेत्यमोघसङ्कल्पस्य तस्य सङ्कल्पपरतन्त्रतया जीवस्य स्वातन्त्र्याभावात् कर्मसु कर्तृत्वं तन्निबन्धनं भोक्तृत्वं च न स्यात्परमात्मन औदासीन्यानुमन्तृत्वप्रयोजयितृत्वावस्थानां वैषम्यं च न स्यात्, प्रवृत्तस्य प्रवर्तको ह्यनुमन्ता, अप्रवृत्तस्य प्रवर्तकस्तु प्रयोजयिता परमात्मनः प्रवर्तकत्वं च न वायूदकादिवत् प्रेरणेन, अपि त्विच्छाजननद्वारेण प्रथमप्रवृत्तिष्विच्छाजनकत्वमस्ति चेदुपेक्षकत्वं न स्यात् प्रयोजयितृत्वावस्थायां वैषम्याभावात्, उच्यते नैते दोषाः प्रसज्येरन्साधारणोपकारविशेषोपकारवैषम्येण सर्वेषामनुपपत्तीनां परिहृतत्वात्, आदावेव करणकलेबरसर्गतत्प्रदानरूपोपकारश्चेतनानां सर्वकार्यसाधारणः पश्चादपि करणकलेबरव्याप्तिनद्वारणतत्सामर्थ्यापादानरूप उपकारः सर्वदा भवतीति तन्मुखेन प्राथमिकेच्छादावपि कारणत्वान्न परमात्मनः सर्वकारणत्वहानिः । तत एव न सर्वफलप्रदत्वहानिश्च तत्तद्देहारम्भकादृष्टवशादेध गुणत्रयोद्भवाभिभवरूपविशेषोवासनाविशेषोऽन्वयश्च जन्मकाल एव सिद्धौ विषयविशेषसन्निधिश्च भोगादृष्टप्रवाहकारितः कर्मफलानुभवस्य तत्सा-

पेक्षत्वात्, तथा हि गुणविशेषस्य रुचिविशेषहेतुत्वम् "आहाराः सात्त्विकप्रियाः । आहारा राजसस्येष्टाः इत्यादिभिरवगम्यते । मनुष्यपशुकृमिकीटादीनामोदनशष्पपूयादिषु रुचिविशेषदृष्टिपतद्भावानां वासनाविशेषाधीनत्वमन्वयव्यतिरेकसिद्धम् । एवं गुणत्रयतारतम्यवासनाविशेषाद्याधवस्तुस्वभावविशेषरूपासाधारणकारणसचिवैः साधारणकारणैः प्राथमिकेच्छानिष्पत्तिस्तत एव प्रयत्नश्चेति तयोर्विशेषोपकाराभावादीश्वरस्यौदासीन्यं युक्तम् । ननु तत्तद्भागादृष्टस्यापीश्वर एव फलप्रद इति विषयसंनिधानादेरपीश्वरकारितत्वात् कथं तस्य तत्रौदासीन्यम् अभिसन्धिविशेषाभावादिति ब्रूमः, ईश्वरः प्राचीनादृष्टफलभूतसुखदुःखप्रदानेच्छया विषयसंनिधानादिकं प्रथममापादयति न तु साधनान्तरानुष्ठापनेच्छया अन्याभिप्रायेण संपादितस्य वस्तुनः पुरुषान्तराभिमतकार्यान्तरोपयोगे सत्यपि पूर्वं तत्संपादकपुरुषस्यौदासीन्यं हि दृश्यते घटनिरीक्षणाय प्रदीपमारोपयन् हि पुरुषः पटार्थिपुरुषान्तरप्रवृत्तावुदासीन एव तत्र तस्य प्रवर्तकत्वनिवर्तकत्वयोरुभयोरप्यभावात्, एवमीश्वरस्य प्रथमत औदासीन्यमुपपन्नम् । अत एव जीवस्य स्वातन्त्र्यमपि युक्तम् । इच्छाशक्तिमत्त्वे सत्यनिवार्यत्वं हि स्वातन्त्र्यम् । ननु पूर्ववासनातदधीनेच्छापरवशत्वाद्वा यदृक्षादिप्रेरितस्येव न जीवस्य स्वातन्त्र्यम् नैवम् इच्छोत्पत्तेः प्रवृत्तिसामर्थ्यविनाशकत्वाभावात्त्वात् ओदनेच्छायां सत्यामपि तस्य विषसंपृक्तत्वविज्ञाने सति तद्विषयेच्छानिवारणसामर्थ्यं हि चेतनस्य दृश्यते काष्ठविचायको महानिधिलाभोपायज्ञाने सति काष्ठसम्पादनेच्छां निवारयितुं प्रभवति, एवं प्रत्यवायस्य वातिशयितफलान्तरस्य वा ज्ञाने सतीच्छान्तरनिवारणसामर्थ्यदर्शनेन पुरुषस्य स्वातन्त्र्योपपत्तेः कर्तृत्वं युज्यते । इष्टतमेषु प्रवर्तकवासनावत् अनिष्टेषु निवर्तकवासनाऽपि हि तस्य विद्यते, अतः कृत्याकरणाकृत्यकरणेष्विच्छानिवारणक्षमोऽपि प्रत्यवायनादरेण स्वेच्छां न निवारयतीत्येष एवापराधो जीवस्य दण्ड्यत्वे हेतुः, शास्त्रीयप्रत्ययवायादिज्ञानसामर्थ्याभावात्तिरश्चामशास्त्रवश्यत्वम् । एवं प्रथमेच्छाप्रयत्नयोरप्यभग्नस्वातन्त्र्यो जीवः, परमात्मा च तयोरुदासीनः तत्राभिसन्धिर-

हितत्वात्, द्वितीयेच्छाप्रयत्नादिषु परमात्माऽभिसन्धिमानेव हेत्वन्तरासन्निधापितमपि विषयं बुद्धौ सन्निधापयति तत्सन्निधापनमेव विशेषोपकारः, स च प्रथमप्रवृत्तिफलदानरूपः तदानीमपि परो जीवस्य स्वेच्छानिवारणादिसामर्थ्यं न नाशयति, अतस्तस्य स्वातन्त्र्यम्, ईदृशं विशेषोपकारं प्रथमत एव केषुचिदीश्वरः करोति तत्र प्रयोजयितृत्वमित्यवस्थात्रयवैषम्यम् । नन्वेवं साधारणकारणैरेव वासनाविशेषादिसहकृतैरिच्छाद्युत्पत्तौ सम्भवन्त्यां किमर्थमीश्वरस्यानुमन्तृत्वादिकमभ्युपगम्यते ? उच्यते यदि वयमनुमन्तृत्वादिकं कल्पयामः तदानीमेवं चोदनीयं न तु कल्प्यते किं चान्तः प्रविष्टः शास्ता जनानामध्यक्षश्चानुमन्ता च एष एव साधु कर्म कारयतीत्यादिश्रुतिबलादभ्युपगम्यते । अतो न कश्चिद्दोषः, तत्र यदुक्तं नियमनश्रुतिसङ्कोचः प्रसजेत् प्रथममुपेक्षकत्वादिति न तदनिष्टप्रसञ्जनं नियन्तृत्वश्रुतेस्तावान् सङ्कोचो हि अभिमतः यावता विधिनिषेधशास्त्रानर्थक्यं परिह्रियेत । ततः परं सङ्कोच एव त्वनिष्टः । न च सोऽभ्युपगतः किञ्च चिच्छक्तिं प्रवृत्तिशक्तिं च दत्त्वा शक्तिमत्त्वे सत्यनिवार्यत्वलक्षणं स्वातन्त्र्यं जीवस्यापाद्य प्रथमप्रवृत्तौ तूष्णीं भावः ईश्वरस्य न स्वातन्त्र्यवैकल्यावहः किन्तु तदतिशयावह एव, यथाऽमात्यादीनां परिकरवत्त्वं स्वातन्त्र्यं च दत्त्वा स्वयमव्यापृतस्य राज्ञस्तद्वत् । न च स्वातन्त्र्यं पराधीनत्वं चेति व्याघातः अमात्यस्वातन्त्र्ये तदभावात्, तदभावश्च राज्ञा तत्प्रवृत्तेरनिवारणात् अत्रायं संग्रहः । "वैयर्थ्यं यावता न स्याद्विधानप्रतिषेधयोः नियन्तृत्वश्रुतेस्तावान्सङ्कोचो न त्वतः परः ॥ वाह्यान्तःकरणव्याप्तितच्छक्त्याधानधारणैः । साधारणोपकारैः स्यादिच्छादेः कारणं परः ॥ भोगादृष्टोपनीतार्थस्वभावाद्वासनान्वितात् । इच्छादेर्मनसोत्पत्तौ युक्तोदासीनता विभोः ॥ अभिसन्ध्यन्तरप्राप्ते वस्त्वन्यन्यत्र केनचित् । उपयुक्तेऽप्युदास्ते हि तस्य प्रापयिता पुमान् ॥ सामर्थ्ये सत्यवार्यत्वात्स्वतन्त्रो जीव उच्यते । स ह्योदने विषज्ञानात्स्वेच्छामपि नियच्छति ॥ सन्निधायकवैभुर्य्येऽप्यर्थं बुद्धिस्थतां नयन् । प्रयोजकोऽनुमन्ता च भवतीशस्तदा तदा ॥ पूर्वप्रवृत्तेश्च फलमनुमत्यादिकं भवेत् । दयादीनां गुणानां च सुलभं विषयान्तरम् ॥ अमा-

हारः पञ्चनदं, नदीभिश्चेत्यव्ययीभावः, गोदावर्याश्च नद्याश्चेत्यच् समासान्तः, पञ्चनदे भवः पाञ्चनदः । अथ वा ऽभिधाने हि सति समाहारद्विगोरपि भवत्येव तद्धितः, तथा षण्णामादिपुरुषाणां कुलानि तत्र भवः षाट्कुलः, अव्यविकन्यायाच्च तिस्रो विद्या अधीते पञ्चसु नदीषु भवः षट्सु कुलेषु भव इति विग्रह एव न द्विगुर्नापि तद्धितः ॥

"गोत्रे ऽलुगचि" ॥ पूर्वत्रोत्तरत्र च लुग्विधानादिह नञ् प्रश्लिष्यते । 'यस्कादिभ्यो गोत्रइत्यादिनेति' । प्राग्दीव्यतइत्युपजीवनाय तु प्रकरणोत्कर्षः, प्रसज्यप्रतिषेधश्चायम् । 'अचीति' । यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयं प्राप्नोति, गार्गीया वात्सीया इतिच्छे परतो ऽलुका भवितव्यमलुकि च सति वृद्धत्वाच्छेन भवितव्यमिति । ननु नच्छे परतो ऽलुग्विधीयते किं तर्ह्यजादिमात्रे, तत्र य एवाजादिः सम्भवति तत्रैवालुग्भविष्यति, तद्यथा गर्गाणां छात्राः, प्राग्दीव्यतोण्, तत्र परतो यञञोश्चेति प्राप्तस्य लुकः प्रतिषेधे गार्गा इति भवति, यद्यप्यत्र सत्यसति वा लुकि नास्ति विशेषः, आपत्यस्य च तद्धितइति यलोपविधानात् । इह त्वत्रेरपत्यानि बहूनि. इतश्चानिञ इति ढको ऽत्रिभृग्विति लुकि कृते ऽत्रीणां छात्रा इत्यणि परतः प्रतिषेधे सति आत्रेया इति भवति, असति तु प्रतिषेधे आत्रा इति स्यात् । स्यादेतदेवं यदि लुप्तस्य प्रत्ययस्य पुनः प्रादुर्भावो विधीयेत, इह त्वलुगिति वचनाल्लुकः प्रतिषेधो विधेयः, प्राप्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्यते कर्त्तुं, ततश्च यद्यत्राणजादिरभिप्रेतः स्यात् प्रागेव लुकः प्रवृत्तिरभ्युपगन्तव्या ऽन्यथा वृद्धत्वाच्छ एव स्यात्, लुक् चेत्प्रवृत्तः प्रतिषेधः किं करिष्यति, यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात्, तदिहाजादौ प्रवृत्ते ऽलुक्का भवितव्यमलुकि च प्रवृत्ते ऽजादिना भवितव्यमिति व्यक्तमितरेतराश्रयं, विप्रतिषेधात्सिद्धं, लुकोवकाशो यत्र प्राग्दीव्यतीयार्थो न विवक्ष्यते गर्गा वत्सा इति, छस्यावकाशः शालीय[1]

१ मालीय इत्यधिकं २ पुस्तके ।

इति, गार्गीय इत्यत्रोभयप्रसङ्गे परत्वाच्छो भविष्यति, तत्र परतो लुकः प्रतिषेधः, अन्तरङ्गो लुग् अपत्यबहुत्वमात्रापेक्षत्वात्, बहिरङ्गश्छः प्राग्दीव्यतीयार्थापेक्षित्वात्, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः, एवं तर्ह्युच्यते चेदमजादौ परतो लुग्भवतीति, यदि च तावत्येव निमित्तमस्तीति बहुत्वमात्रापेक्षो लुक् प्रवर्त्तेत प्रतिषेधविधानमनर्थकं स्यादिति यावत्प्राग्दीव्यतीयोऽजादिर्नोत्पद्यते तावल्लुङ् प्रवर्त्तत इति कल्प्यते, ततश्च वृद्धत्वाच्छे सति लुकि प्रतिषिद्धे गार्गीय इति सिद्धमिष्टं, विषयसप्तम्यां तु न किंचिदत्रसाध्यं, गर्गाणां छात्रा इत्यर्थविवक्षायामजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्नएव लुकि प्रतिषिद्धे वृद्धत्वाच्छो भवतीति, तस्माद्विषयसप्तमीमाश्रित्याह । "प्राग्दीव्यतीये प्रत्यये विषयभूतइति'। 'खारपायणीया इति'। खरपस्यापत्यानि बहूनि नडादिभ्यः फक्, तस्य यस्कादिभ्यो गोत्रइति प्राप्तस्य लुकः प्रतिषेधः। 'कौवलं बादरमिति'। कुवलीबदरीशब्दौ गौरादिङीषन्तावन्तोदात्तौ, ताभ्यां फले विकारे ऽनुदात्तादेश्चेत्यञ्, तस्य फले लुगिति प्राप्तस्य लुकः तस्येदमित्यर्थविवक्षायां प्रतिषेधो न भवति, तेनावृद्धत्वादणेव भवति। 'गर्गरूप्यमिति'। यद्यत्रालुक् स्याद् गार्ग्यरूप्यमिति स्यात्। 'गर्गीयमिति'। तस्मैहितमिति प्राक्क्रीताच्छः, विषयसप्तम्या एव फलं दर्शयति। 'गोत्रस्येत्यादिः'। 'गोत्रस्येति'। गोत्रप्रत्ययस्येत्यर्थः। 'बहुषु लोपिन इति'। बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः। 'बहुवचनान्तस्य प्रवृत्ताविति'। प्रवृत्तिरर्थान्तरसङ्क्रान्तिः, बहुवचनान्तस्य सतोऽर्थान्तरसङ्क्रान्तौ सत्यामित्यर्थः। 'द्व्येकयोरिति'। यत्रार्थान्तरे सङ्क्रान्तस्य द्वित्वैकत्वयोः सतोरित्यर्थः, सा चार्थान्तरसङ्क्रान्तिस्तदन्ताद्यदा यूनि प्रत्यय उत्पद्यते तस्य च लुक् क्रियते तदा भवति, लुप्ते हि युवप्रत्यये प्रकृतिरेव तदर्थमाहेति भवति सङ्क्रान्तिः। 'बिदानामिति'। बिदस्यापत्यानि बहूनि,अनृष्यानन्तर्ये बिदादिभ्योऽञ्, बिदास्तेषां बिदानामपत्यं युवा युवानौ वेति विवक्षायामत इति इञि विवक्षिते गोत्रप्रत्ययस्याञो लुकः प्राप्तस्यानेन प्रतिषेधः, इञो ण्यक्षत्रिया-र्षेति लुकि बैदः बैदाविति भवति, परसप्तमीपक्षे त्वलुङ् प्राप्नोति

अजादेरभावात् । इदमिह सम्प्रधार्यम् इञो लुक् क्रियतामयं वा ऽलु-गिति, परत्वादलुग्भवति, इञो लुङ्नित्यः, कृतेप्यस्मिन्नलुकि प्राप्नोति अकृतेपि, अयं पुनरलुगनित्यः, नहीञो लुकि कृते प्राप्नोति अजादेरभावात्, प्रत्ययलक्षणेन भविष्यति, वर्णाश्रये नास्ति प्रत्ययलक्षणं, नात्र वर्णो निमित्तं किं तर्हि प्रत्ययस्तस्यैव तु विशेषणमचीति, तत्र यथा, हलादौ पिति सार्वधातुके विधीयमानस्तृणह इम् अतृ-णेडित्यत्रापि भवति प्रत्ययलक्षणेन तद्वदिहापि भविष्यति, सत्यम्, विषयसप्तमीपक्षे नैवं क्लेशोनुभवनीयो भवति, ननूभयोरपि पक्षयोरिहापि न प्राप्नोति बिदानामपत्यं बहवो माणवका बिदा इति, नैष दोषः । द्वे अत्र बहुत्वे युवबहुत्वं गोत्रबहुत्वं च, तत्र गोत्रबहुत्वाश्रयस्य लुकः प्रतिषेधोस्तु पुनर्युवबहुत्वाश्रयो लुग्भविष्यति, लुग्विधौ हि लौकिकस्य गोत्रस्य ग्रहणं युवापि च लोके गोत्रमित्युपचर्यते गार्ग्यायणोस्मि गोत्रेणेति । अथ युवब-हुत्वाश्रयस्यापि लुकः पुनः प्रतिषेधः कस्मान्न भवति, विषयसप्तम्यां तावद् यस्यामवस्थायां लुक् प्राप्तः तस्यामवस्थायां यदि कश्चिदजादि-र्विषयभूतस्ततो ऽलुका भवितव्यमिह चाजादिर्विषयभूत उत्पन्नो लुप्तश्च, पश्चाद्युवसु बहुषु सङ्क्रान्तौ सत्यां लुक् प्राप्तः, न चास्यामवस्थायां कश्चिदजादिर्विषयभूत इति पुनर्लुङ् भविष्यति, परसप्तम्यामपि गोत्रे वर्त्तमानस्यालुग्भवत्यजादौ परतः, कस्मिन्नजादौ, प्राग्दीव्यतो येर्थास्तेषु योजादिस्तस्मिन्नित्युच्यमाने यस्मिन् गोत्रे वर्त्तमानस्य लुक् प्राप्तस्तद्व्यति-रिक्ते प्राग्दीव्यतीयेर्थे योजादिस्तत्रेति गम्यते, इह चेत्रैवाजादिस्तदर्थ एव च गोत्रे लुगिति प्रतिषेधो न भविष्यति, यद्वा समर्थानां प्रथमादित्यतः प्रथमादिति वर्त्तते, तच्च षष्ठ्यन्तं विपरिणम्यते, प्रथमार्थवृत्तित्वाच्च प्राथम्य-माश्रीयते, तदयमर्थो भवति, प्रथमस्य गोत्रप्रत्ययस्य लुङ् भवति, यस्मिन्नर्थे प्रत्यय उत्पन्नस्तत्रैवार्थे वर्त्तमानस्य यो लुक् प्राप्तः स न भवति, इह तु द्वितीयमर्थमुपसङ्क्रान्तस्य लुक् प्राप्त इति न प्रतिषिध्यते, अवश्यं चैतदेवं विज्ञेयं प्रथमस्य लुक् प्रतिषिध्यत इति, अन्यथा अत्रेरपत्यमितश्चानिञ इति ढक्, तस्यापत्यं बहवो युवानः, अत इञो ण्यक्षत्रियार्षेति लुक्,

ठकोत्त्रिभृग्विति लुक्, अत्रयः, भरद्वाजशब्दाद्विदाद्यञ्, तदन्ताद्युववहुत्वे इञो लुक्, अञो यञञोश्चेति लुक्, अत्रयश्च भरद्वाजाश्च अत्रिभरद्वाजास्तेषां मैथुनिकाद् द्वन्द्वाद्वुन्, अत्रिभरद्वाजिकाः, तत्रालुक् प्राप्नोति, कुत्साद्युष्यणोत्त्रिभृग्विति लुक्, कुशिकाददन्तादिञो लुकि कुशिकाः, कुत्सकुशिकिका वसिष्ठकश्यपिका भृग्वङ्गिरसिकाः, अथ वा गोपवनादिषु गर्गभार्गविकाशब्दः पठ्यते, भार्गवशब्दस्य युववहुत्वे प्राप्तस्य लुकः प्रतिषेधार्थं तन्नियमार्थं भविष्यति, एतस्यैव द्वितीयमर्थमुपसङ्क्रान्तस्यालुग्भवतीति, नैव वा पुनरत्र युववहुत्वे वर्त्तमानस्यालुक् प्राप्नोति, किङ्कारणं, गोत्रइत्युच्यते, यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते, इह तु पारिभाषिकस्य ग्रहणं युवशब्दसाहचर्यात्, अन्यथा गोत्रयुवसंज्ञयोः समावेशे यो ऽयं दोषो वक्ष्यते शालङ्कुरपत्यं यञिञोश्चेति फक्, तस्य पैलादिभ्यश्चेति लुक्, शालङ्कयैनश्छात्रा इत्यर्थविवक्षायां गोत्रे ऽलुगचीत्यलुक् प्राप्नोति, ततश्च यूनि लुगित्यस्य फक्फिञोरन्यतरस्यामिति विकल्पितत्वात्यद्दे फकः श्रवणं प्राप्नोतीति स तदवस्थ एव स्यात्, असमावेशेपि यूनो लौकिकगोत्रत्वादेवालुक् प्रसङ्गात्, तदेवं गोत्रस्य वहुषु लोपिन इत्यादि न वक्तव्यमिति स्थितम् । 'एकवचनद्विवचनान्तस्येत्यादि' । एकवचनान्तस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य वा बहुष्वर्थेषु युवसंज्ञकेषु प्रवृत्तौ सङ्क्रान्तौ सत्यामित्यर्थः । 'लोप इति' । लुगित्यर्थः । लोपे हि प्रत्ययलक्षणेन वृद्धिस्वरप्रसङ्गः । ननु च युववहुत्वाश्रयो यञञोश्चेत्येवात्र लुक् सिद्धस्तत्राह । 'नह्यत्राञ् वहुप्रत्यय इति' अञो वहुषु यञ्ञो बहुष्विति विज्ञायमाने लुङ् सिध्यतीत्यर्थः । यदा त्वञन्तं यद्वहुषु यञन्तं यद्वहुष्विति विज्ञायते तदाञन्तस्य वहुषु युवसु वृत्तेर्लौकिकस्य च गोत्रस्यापत्यमात्रस्य तत्र ग्रहणात्सिद्ध एव लुक्, तथा च गार्ग्यश्च वात्स्यश्च वाज्यश्च गर्गवत्सवाजाः, बैदश्च और्वश्च भारद्वाजाश्च बिदौर्वभारद्वाजा इति यञञोरुत्पत्तिवेलायामबहुत्वेपि द्वन्द्वे युगपदधिकरणवचनतया यञन्तस्याञन्तस्य च बहुत्वोपजननाल्लुग्भवति, न चैवं काश्यपस्यैकस्य बह्व्यः प्रतिकृतयः काश्यपा इति इवे प्रतिकृताविति विहितस्य कनो जीविकार्थे चापण्य इति

लुप्, हरीतक्यादिषु व्यक्तिरिति वचनाद् युक्तवद्वचनाभावे ऽञन्तस्य बहुषु वृत्तेर्लुक् प्रसङ्गः, गोत्रबहुत्वे लुग्विधानात् ॥

"यूनि लुक्" ॥ अत्रापि यद्यचीति परसप्तमी स्यात् प्रत्ययस्य यथेष्टप्रसङ्गः, युवप्रत्यये श्रूयमाणे यः प्राप्नोति स तावत्कर्त्तव्यस्तत्र कृते युवप्रत्ययस्य लुकि तस्य श्रवणं प्राप्नोति, विषयसप्तम्यां त्वजादौ विषयभूतएव युवप्रत्यये लुप्ते यो यतः प्राप्नोति ततः स भवतीति सिद्धमिष्टम्, । एतच्चोदाहरणेषु व्यक्तीकरिष्यते, तदेतदाह । 'अजादौ प्रत्यये विवक्षितइत्यादि' । 'इञश्चेत्यण् भवतीति' । परसप्तम्यां तु वृद्धाच्छ एव स्यात् । 'फेश्छ चेति' । 'यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृता' इति परिगणनं भाष्यकारेण नाश्रितं तेन तैकायनेरपिच्छो भवति । 'तैकायनीया इति' । अत्र परसप्तम्यामप्यदोषः, एषतर्त्रियार्थोऽत इत्यत्र तु वृत्तिकारेणाणो लुगुदाहृतस्तैकायनिः पिता तैकायनिः पुत्र इति, स परिगणनाश्रयेण द्रष्टव्यः, तदा च तैकायनीया इत्यनुदाहरणम् 'कापिञ्जलादा इति' । अत्रापि परसप्तम्यां वृद्धाच्छः स्यात्, एवं ग्लौचुकायना इत्यत्रापि द्रष्टव्यम्, इह तु औपगवेर्यूनश्छात्रा इञो लुकि वृद्धाच्छो भवति, परसप्तम्यामिञश्चेत्यण् स्यात्, नैतदस्य योगस्योदाहरणं, कथम्, इञश्चेत्यत्र गोत्रइति वर्तते, तेनेञं विशेषयिष्यामः, गोत्रे य इञ् विहित इति, पारिभाषिकं च गोत्रं गृह्यते, कथं, कण्वादिभ्यो गोत्रइत्यत्र तावद्गोत्रे कुञ्जादिभ्य इत्यस्य गोत्रस्यानुवादः कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तादण् भवतीति, तत्र च पारिभाषिकं गृह्यते तस्यैव चानुवादः, तदेव चेञश्चेत्यत्राप्यनुवर्तते तत्कृतो युवप्रत्ययान्तादणः प्रसङ्गः, अवश्यं चैतदेवं विज्ञेयम्, अन्यथा लुप्तेपीञि प्रत्ययलक्षणेनाण् स्यादेव, इमानि तर्ह्यत्रोदाहरणानि यत्वच्छान्ताः,यत्, राजश्वशुराद्यत् श्वशुरस्यापत्यं श्वशुर्यः, तस्यापत्यं श्वाशुरिस्तस्य छात्रा इति लुकि प्राग्दीव्यतोण् भवति श्वाशुरः, अन्यथा वृद्धाच्छः स्यात्, कुलात्खः कुलीनः, तस्यापत्यं कौलीनिः, तस्य छात्रा, इञो लुकि कौलीनः, स्वसुश्छः, स्वस्रीयः, तस्यापत्यं

स्वास्रीयिः, तस्य छात्रा इञो लुकि स्वस्रीयाः, नैतान्युदाहरणानि। अत्रास्मणाद् गोत्रमात्रात्युवप्रत्ययस्योपसङ्ख्यानमितीञो लुकि कृते श्वशुर्यः पिता श्वशुर्यः पुत्रः, कुलीनः पिता कुलीनः पुत्रः, स्वस्रीयः पिता स्वस्रीयः पुत्र इति भवितव्यं, न च ब्राह्मणगोत्रे कश्चिदवृद्धिनिमित्तः प्रत्ययः सम्भवति यत इञि कृते छः प्राप्नोति, वृद्धिनिमित्ते तु गोत्रप्रत्यये नास्ति विशेषः, यतः श्रूयमाणेपीञिच्छेन भवितव्यं लुप्तेपि तस्मिन् गोत्रप्रत्ययान्तस्यापि वृद्धत्वाच्छेन भवितव्यं, तद्यथा औपगवीया इति, तदेवमिञ उदाहरणं न सम्भवतीति स्थितं, यदि तु पूर्वसूत्रे लौकिकस्य गोत्रस्य ग्रहणं तदा स्यादेवेञ उदाहरणम्, तथाहि। श्वशुर्यादिभ्य उत्पन्नस्येञः सत्यप्यौपसङ्ख्यानिके लुकि तस्य प्राग्दीव्यतीयविवक्षायां गोत्रे ऽलुगचीति प्रतिषेधेन पुनः प्रादुर्भावादिञाश्रयो वृद्धाच्छः स्यात्, यदि तस्य यूनि लुगिति लुङ् क्रियेत, अतोस्मादिञ उदाहरणात्स्वप्रतिषेधादध्यवसीयते' परिभाषिकं गोत्रं पूर्वसूत्रे भाष्यकारस्याभिमतमिति। किमर्थं पुनरिदमुच्यते यावता यूनोपि गोत्ररूपे विवक्षिते गोत्रप्रत्ययेनाभिधानात्तन्निबन्धन एव प्रत्ययो भविष्यति, अर्थप्रकरणादिना च युवविशेषसिद्धिः, अवश्यं चार्थप्रकरणादिनैव विशेषोवसातव्यः, आरभ्येप्यस्मिन्सूत्रे शब्दस्य साधारणत्वात्, नहि ज्ञायते किं भागवित्तश्छात्रा भागवित्ता आहो स्विद्भागवित्तिकस्येति, यदा तर्हि विशेषविवक्षा तदापि भागवित्ता इत्येव यथा स्याद्भागवित्तिकीया इति जातु चिन्मा भूदित्येवमर्थमिदम्॥

"फक्फिञोरन्यतरस्याम्"॥ किमर्थमिदं यावता युवरूपविवक्षायां गार्ग्यायणीया इति गोत्ररूपविवक्षायां च गार्गीया इति, अर्थप्रकरणादिना च विशेषावसायः, आरभ्येप्यस्मिन्सूत्रेयमाश्रयणीयो गार्गीया इति शब्दस्य साधारणत्वादित्यत आह। 'पूर्वसूत्रेणेति'। यूनि लुगित्येतदारम्भणीयमित्युक्तं तस्मिंश्चारभ्यमाणे यदीदं नोच्येत फक्फिञोरपि नित्यमेव लुक् स्यात्ततश्च गार्ग्यायणीया इति न स्यात्तस्मादिदमप्यारम्भणीयमित्यर्थः॥

"तस्यापत्यम्" ॥ 'अर्थनिर्देशोऽयमिति' प्रकृत्यर्थविशिष्टः षष्ठ्यर्थोऽपत्यरूपः प्रत्ययार्थोऽनेन निर्दिश्यत इत्यर्थः । तेन समर्थविभक्तेरपि षष्ठ्या निर्देशो दर्शित एव । 'पूर्ववत्तरैश्चेति' । पूर्वैस्तावदणादिभिः सम्बध्यते ऽसंयुक्तविधानात्, अन्यथा तस्यापत्यमत इञित्येकं योगमेव कुर्यात्, यतस्त्वसंयुक्तं करोति ततो ज्ञायते पूर्वैःसम्बध्यत इति । उत्तरैरपि सम्बध्यते स्वरितत्वात्साकाङ्क्षत्वाच्च तेषाम् । 'तस्येति षष्ठीसमर्थादिति' । तस्येति सामान्यं षष्ठ्यन्तविशेषोपलक्षणार्थं, समर्थानामिति च निर्द्धारणे षष्ठी, तत्र तुल्यजातीयस्य निर्द्धारणादयमर्थः सम्पद्यते षष्ठ्यन्तात्समर्थादिति । 'अपत्यमित्येतस्मिन्नर्थ इति' । प्रथमान्तस्यापत्यशब्दस्यान्यथासम्बन्धानुपपत्तेरयमध्याहारो लभ्यः । 'यथाविहितमिति' । यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः । प्राग् दीव्यतोऽणित्यादिभिर्यो यतो विहितः स तस्मादित्यर्थः । इह तस्येति पुंनपुंसकयोरन्यतरेणायं निर्देशः क्रियते एकवचनान्तेन च, तेन लिङ्गान्तराद्वचनान्तराच्च न स्यात् सुमातुरपत्यं सौमात्रः, ततस्यापत्यं तात्रिः, उपगोरपत्यमौपगव इति । अपत्यमिति चैकवचनेन नपुंसकेन च निर्देशः क्रियते तेनैकस्मिन्नेवापत्ये स्यान्न द्वयोर्नापि बहुषु, नपुंसकएव स्यान्न स्त्रीपुंसयोरित्याशङ्क्याह ।॰ 'प्रकृत्यर्थेत्यादि' । प्रकृत्यर्थ उपग्वादिर्विशेषस्तस्येत्यस्य विशेषोपलक्षणार्थत्वात् । 'अपत्यमात्रं चेति' । मात्रशब्दोयं लिङ्गवचनयोर्व्यवच्छेदाय । 'लिङ्गवचनादिकमिति' । आदिशब्देन कालस्य ग्रहणमत्र हि वर्तमानकालेन निर्देशोऽस्तीति प्रतीतिः, यथोक्तं 'यत्रान्यत्क्रियापदं नास्ति तत्रास्तिर्भवतिपरःप्रथमपुरुषो ऽप्रयुज्यमानोऽप्यस्तीति गम्यत इति, ततश्च तस्य कालस्य विवक्षायां कालान्तरे न स्यात् । 'सर्वमविवक्षितमिति' । नान्तरीयकत्वादुपादानस्यावश्यं हि केन चिल्लिङ्गादिना निर्देशः कर्त्तव्यः । 'तस्येदमित्यपत्येपीति' । अणादीनां विधानं सिद्धमिति शेषः । तस्येदंविशेषा ह्यपत्यसमूहविकारादयः सम्बन्धसामान्येपि सर्वविशेषान्तर्भावात्, ततश्च तस्येदमित्यनेनैवापत्येप्यणादीनां विधानं सिद्धं तत्किं योगविभागेनापत्येऽणा

दयो विधीयन्ते न तस्यापत्यमत इञित्यपवादैः संयुक्त एवापत्यार्थो निर्दिश्यतइति चोद्यार्थं परिहरति । 'बाधनार्थं कृतं भवेदिति' । तस्येदमित्यनेन विधीयमानानामणादीनां यो बाधकश्छस्तस्य बाधनार्थमपत्येऽणादीनां विधानं कृतं भवेदित्यर्थः । ननु शैषिकश्छः, अपत्यादिचतुर्थ्यपर्यन्तेभ्यो योन्योर्थः स शेषः, तत्कथमपत्ये छस्य प्रसङ्गो येन तद्बाधनार्थमिदमित्याह । 'उत्सर्गः शेष एवासाविति' । यदि योगविभागमकृत्वा तस्यापत्यमत इञित्युच्येत तदा प्रकृतिविशेषसंबद्धस्यैवापत्यार्थस्योपयोगोऽतोन्योपत्यार्थः शेष एव स्यादिति स्यादेव वृद्धादपत्ये छः, योगविभागे त्वपत्यार्थस्याणादिविधावुपयोगाच्छेषत्वाभावाच्छस्याप्राप्तिरेव, सैवात्राप्राप्तिर्बाधेत्युच्यते. । उत्सर्ग इति प्रकृतिसामान्यसम्बद्धः सामान्यभूतोपत्यार्थ उक्तः, बाधनार्थस्योदाहरणमाह. । 'वृद्धान्यस्य प्रयोजनमिति' । 'श्यामगव इति' । श्यामा गावोस्य श्यामगुरिति ॥

"एको गोत्रे" ॥ एकशब्दोयमन्यप्रधानासहायसङ्ख्याप्रथमसमानसाधारणवाची, अन्यार्थे तावद् एकान्याभ्यां समर्थाभ्यां, प्रजामेका रक्षत्यूर्जमेका, एकान् बन्धुरपराविरासुः, इत्येके मन्यन्ते, यजुष्येकेषामिति, केचित्त्वनयोः प्रयोगयोः केचिच्छब्दपर्याय एकशब्द इत्याहुः । एकः पार्थो धनुष्मतामिति प्रधानार्थे । आञ्जनवदेकस्मिन्, एकहलादौ, एकहलमध्यइत्यसहायार्थे । एको द्वौ बहव इति सङ्ख्यार्थे । एकेल्पप्राणा इति प्रथमार्थे । तेनैकदिगिति समानार्थे, देवदत्तयज्ञदत्तावेकधनाविति साधारणार्थे, तत्र सङ्ख्यावचनः साधारणवचनः प्रथमवचनो वा गृह्यते, अर्थान्तराणामसम्भवात्, गोत्रं पारिभाषिकं, कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्, अपत्याधिकारे गोत्रग्रहणाच्च । किमर्थमिदमुच्यते, पौत्रप्रभृतावपत्ये विवक्षिते मूलप्रकृतेरुपगवादेरेव प्रत्ययो यथा स्यात् औपगवादेः प्रत्ययान्तान्मा भूदिति । नैतदस्ति प्रयोजनं सन्विधिवदेतद्भविष्यति, तद्यथा धातोर्विधीयमानः सन् सनन्तान्न भवति, तत् कस्य हेतोः, आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते, न च सनि विधीयमाने सनन्तो धातुः सम्भवति, तद्वदिहाप्यपत्यप्रत्यये विधीयमा-

नापत्यप्रत्ययान्ता प्रकृतिः सम्भवतीति ततः प्रत्ययो न भविष्यति, विषम उपन्यासः। एकः सन् प्रत्ययः विधायकं च लक्षणमेकमेव, तत्र युक्तं न तस्मिन्विधीयमाने तदन्ता प्रकृतिः सम्भवतीति, इह पुनस्त-स्यापत्यमत इञ् यञिञोश्चेति बहूनि लक्षणानि प्रत्ययाश्च बहवस्तत्र कस्मिंश्चित्प्रत्यये विधीयमाने प्रत्ययान्तरेण तदन्ता प्रकृतिः संभवत्येव, तथा च गुपादीनां सनः सन् भवति जुगुप्सिषतइति, किं पुनः स्याद्यद्येतन्नारभ्येत, उच्यते। इह केचिन्मन्यन्ते, पुत्रशब्दपर्यायो-पत्यशब्दो निघण्टुषु तथा पाठाल्लोके च दृष्टत्वात्, तद्यथा पितामह-स्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित्पृच्छति कस्य पुत्रोऽयमिति कस्या-पत्यमिति, स देवदत्तस्य यज्ञदत्तस्य वेत्युत्पादयितारं व्यपदिशति नात्मानं, ततश्च यथा पितामहं प्रति पुत्रो न भवति तथापत्यमिति, उत्पादयितैवैकोपत्येन युज्यते न तु पितामहादयोऽपीति। अन्ये तु क्रियानिमित्तकोपत्यशब्दः, न पतन्त्यनेनेत्यपत्यमिति औणादिको यत्प्र-त्ययः, यस्य च येनापतनं तत्तस्यापत्यं, व्यवहितजनितोपि पौत्रादिः पितामहादेरपतनहेतुर्भवति, श्रूयते हि 'जायमानो वै ब्राह्मणस्त्रि-भिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री'ति, एतेन पुत्रमुत्पाद्य पितृणामनृणो भवतीति प्रतिपादनात् पुत्रोत्पादितया प्रजया पितृणामुपकारो दृश्यते, स्मर्यते च।

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।

अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥

इति। इतिहासेषु च जारत्कारवादिषु महती वार्त्ता व्यवहि-तजनितोप्युपकारक इति, सूत्रकारश्च शब्दविदां मूर्द्धाभिषिक्तः सूत्र-यत्यपत्यं पौत्रप्रभृति गोत्रमिति, ततो विज्ञायते क्रियानिमित्तकोप्यपत्य-शब्द इति, अन्यथा यथा पौत्रप्रभृतिः पुत्र इत्यनुपपन्नं तादृगेव तत्स्यादेवं सति साक्षात्परम्परया वा यस्य य उत्पाद्यः स तं प्रत्यपत्य-मिति सर्वेपि पितामहादयोऽपत्येन युज्यन्ते न तूत्पादयितैवेति, तत्राद्ये पक्षे यद्येतन्नारभ्येत ततस्तत्रतत्रापत्ये तत्तत्पितृवचनात्सस प्रत्ययः स्यात्-

द्यथा उपगोरौपगवस्तस्यौपगविस्तस्यौपगवायनः, एवं शततमेपत्ये एकोनशतमपत्यप्रत्यया इत्यनिष्टं प्राप्नोति, इष्टं च न सिद्ध्यति औपगव इति, तृतीयादेरूपगुं प्रत्यनपत्यत्वात् । द्वितीये तूपगोः पञ्चमः पूर्वेषां चतुर्णामपत्यं ततो यदोपगोः प्रत्ययस्तदौपगव इतीष्टं तावत्सिद्ध्यति, अनिष्टमपि च प्राप्नोति, तच्चानिष्टमनियतमौपगविस्तत औपगवायनस्तत औपगवायनिरिति, पञ्चमे त्रीण्यनिष्टानि षष्ठे चत्वारीत्येवं यावतिथमपत्यमभिधित्सितं तावन्ति द्व्यूनान्यनिष्टानि प्राप्नुवन्ति, तद्यथा शततमे ऽष्टौ नवतिश्चेति, एवं स्थिते इदमारभ्यते, आरभ्यमाणेप्येतस्मिन्यदि प्रथमः पक्ष आश्रीयते ततो विध्यर्थमेतस्याद् नियमार्थं वा, कथं चेदं विध्यर्थं कथं वा नियमार्थं, यदि गोत्रशब्देन पौत्रप्रभृत्यपत्यसमुदाय एकैकमपत्यमभिधीयते ततो विध्यर्थं, तर्हि तथा नियमार्थः सम्भवति, एकस्मिन्नपत्ये ऽनेकप्रत्ययप्रसङ्गस्याभावाद्, न तावदेकस्मिन्प्रयोगे एकस्याः प्रकृतेरनेकप्रत्ययप्रसङ्गः, एकेनैवोक्तत्वात्तस्यार्थस्य, नापि प्रयोगभेदेन नानाप्रकृतिभ्यो नानाप्रत्ययप्रसङ्गः, सर्वदा स्वपितृवचनादेव प्रसङ्गादिति परमप्रकृतेस्तृतीयादावपत्ये ऽप्राप्तः प्रत्ययो विधीयते, कथं पुनरेको गोत्र इत्येतावति वचने परमप्रकृतेः प्रत्ययो विधीयतइति शक्यं विज्ञातुं यावता यथा परमप्रकृतेर्योगादप्राप्त एवमौपगवाच्चतुर्थादाविति ततः किं न विधीयते वचनव्यक्तिभेदात्, एवं ह्यत्र वचनं व्यज्यते गोत्रएकः प्रत्ययो भवति, यत एक एव प्रत्ययः कर्तुं शक्यते तत एव प्रत्ययो भवतीत्यर्थः, एकग्रहणसामर्थ्याच्चायमर्थो लभ्यते । ननु विधीयमानेपि प्रत्यये प्रकृतिप्रत्ययावसम्बन्धौ स्यातां, वचनसामर्थ्यादपत्यापत्यस्यापत्यत्वोपचारात् प्रत्ययो भविष्यतीत्यदोषः, मुख्येपत्ये चरितार्थः प्रत्ययो न स्यादिति विधानमपि, अस्मिन्पक्षे सर्वत्रौपगव इतीष्टं सिद्ध्यति प्रत्ययमालाप्रसङ्गस्तदवस्थ एव, नह्यनेन तत्तत्पितृवचनात्प्राप्तः प्रत्ययः प्रतिषिद्ध्यते, तथा पञ्चमेपत्ये उपगुशब्दादनेन प्रत्यये विहिते तस्यापत्यमिति षष्ठ औपगविः स्यात्, यदा त्वपत्यं पौत्रप्रभृतिगोत्रमित्यपत्य-

शब्देन पौत्रप्रभृत्यपत्यसमुदायं लक्षयित्वा तस्यैव गोत्रसंज्ञा विधीयते, एकैकस्मिन्नपत्ये गोत्रशब्दप्रयोगः समुदायेषु वृत्ताः शब्दा अवयवेष्वपीति न्यायात्, अन्त्येन वा गोत्रशब्देनावयवधर्मेण समुदायव्यपदेशात्पौत्रप्रभृत्यपत्यसमुदायोऽभिधीयते तदा नियमार्थं गोत्रसमुदाये एक एव प्रत्ययो भवतीति, यद्यप्येकैकस्मिन्नपत्ये एकैकः प्रत्ययः प्राप्नोति तथापि पौत्र एकस्तदपत्ये चापर इति सकलनिरूपणे समुदाये बहवः प्रत्ययाः कृताः स्युरिति नियम उपपद्यते, अस्मिन्पक्षे दोषः, अनन्तरापत्यप्रत्ययान्तात्तृतीये प्रत्ययः प्राप्नोति गोत्रशब्दोपादानेन हि नियमः क्रियते गोत्र एक एवेति, ततश्च गोत्रेऽनेकः प्रत्ययो मा भूत्, अनन्तर एकस्तृतीये चापर इत्येवमनेकः कस्मान्न स्यात्, एवमपि गोत्रे एक एव हि कृतो भवति, अथ वा गोत्रसमुदाये एक एवेत्यनेन किं क्रियते, तृतीयादेश्चतुर्थादेः प्राप्तः प्रतिषिध्यते, यदि तृतीयादेः स्यात्समुदायेऽनेकः प्रत्ययः कृतः स्यादिति, यस्त्वनन्तरात्तृतीये प्राप्तः सोऽप्यनुज्ञायते एक एवेतीतरव्यावृत्तौ नियमेषु तात्पर्यं, ततश्च यतः प्रत्यये क्रियमाणे समुदायेऽनेकः प्रत्ययः कृतो भवति ततो न भवतीत्येव वचनार्थो भवति, एवं चतुर्थस्यापत्यप्रत्ययेनाभिधानं न प्राप्नोति, द्वितीयादुत्पन्नस्तृतीयमेवाचष्टे न तृतीयादुत्पद्यतइति किं तु औपगवेरपत्यमिति वाक्यमेव, पञ्चमादेस्तु वाक्येनाप्यभिधानं न प्राप्नोति, नहि तत्त्पितृवचनः कश्चिदपत्यप्रत्ययान्तः शब्दोऽस्ति येन विगृह्येत, परमप्रकृतेश्च तृतीयादौ न कुत्रचित्प्रत्ययः प्राप्नोत्ययोगात्, तदेवमस्मिन्पक्षे परमप्रकृतेश्चोत्पत्तिर्वक्तव्या, ऽनन्तराच्च तृतीये प्राप्तस्य प्रतिषेधो वक्तव्यः । स्यादेतत् । न परमप्रकृतेरुत्पत्तिर्वक्तव्या, ऽभेदोपचारेणैव सिद्धेः, अभेदोपचारश्चोपगवौपगवयोरौपगवतदपत्ययोर्वा, तदेवं शततमेऽप्यपत्ये ऽभेदोपचारपरम्परया औपगव इत्यभिधानं सिध्यति, न चैवमभेदोपचारेणैवेष्टस्य सिद्धेः सूत्रस्य वैयर्थ्यं, भेदविवक्षायां प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थत्वादिति, एवमप्यनन्तरस्य तृतीयस्य च भेदविवक्षायां तृतीयऔपगविः स्यात्, तथाऽनन्तरे तृतीयादौ च यत्र प्रत्ययो भिद्यते यथा गर्गादौ तत्राप्यनिष्टप्रसङ्गः,

यदि तावद्गार्ग्ये गर्गोपचारस्तदा तदपत्यमपि गार्गिः स्याद्गार्ग्यश्चेष्यते। अथापि गार्गिस्तदपत्यस्य चाभेदोपचार एवमपि गार्गिः स्यादित्तीत्यादौ विषये दोषवानेवाभेदोपचारः। तदेवं प्रथमपक्षे विधौ नियमे च दोषप्रसङ्गाद् द्वितीयः पक्ष आश्रीयते, तत्रापि नियमः, यद्यप्येकैकस्मिन्प्रयोगे एकस्याः प्रकृतेरेक एव प्रत्ययः प्राप्नोति तथाऽप्युपगोः पञ्चमे पूर्वाभ्यश्चतसृभ्यः प्रकृतिभ्यः प्रयोगभेदेन नानाप्रत्ययप्रसङ्गे नियमः क्रियते एक एवेति, तदिदमुक्तं भेदेन प्रत्ययप्रसङ्गे नियमः क्रियते। ननु न ज्ञायते क एको भवतीति, यो वा परमप्रकृतेर्यो वा प्रत्ययान्तादिति, नन्वेक इत्युच्यते यदि च प्रत्ययान्तात्प्राप्तः प्रत्ययः स्यादनेकः कृतः स्यात्, क्व, न तावत्पञ्चमे पूर्वेषां प्रत्ययानामस्मिन्प्रयोगे प्रसङ्गोऽपत्यान्तरविषयत्वात्। अथ गोत्रसमुदाये केनासौ निवार्यत, न तावदनेनैव, नहि गोत्रसमुदायो गोत्रग्रहणेन गृह्यते, ऽथापि गृह्येत एवमपि न ज्ञायते यो वा परमप्रकृतेर्यो वा ऽनन्तरादिति, यदि पुनर्गोत्रग्रहणं न क्रियते क्रियमाणं वा ऽपत्यमात्रपरं विज्ञायते न स्यादेष दोषः, अपत्ये समुदाये एक एवेति नियमात्, अपत्याधिकारे गोत्रग्रहणात्त्वेष दोषो जायते, नैष दोषः। अपत्यमिति वर्त्तते, गोत्रेऽपत्ये एक एवापत्यप्रत्ययो भवतीति वचनव्यक्तिः, यदि च प्रत्ययान्तात्प्रत्ययः स्यादपत्यप्रत्ययो ऽनेको गोत्रे कृतः स्यात्, सामर्थ्येन वा प्रत्ययो विशेष्यते, गोत्राभिधाने समर्थानां मध्ये एक एवेति, यदि च प्रत्ययान्तात्प्रत्ययः स्याद्गोत्राभिधानसमर्थो ऽनेकः कृतः स्यात्प्रथमस्यापि समर्थत्वात्, यद्यप्यस्मिन्प्रयोगे ऽपत्यान्तरे वर्त्तते पञ्चमं प्रत्यपि सामर्थ्यं तावदस्ति, यदि वा तस्यापत्यमित्यादिलक्षणैरेक एव प्रत्ययः कर्त्तव्यः, क्व, गोत्रे, यस्मिन्प्रत्यये गोत्रमभिधित्सितं तत्रेत्यर्थः, प्रत्ययान्ताच्च प्रत्यये तस्मिन्नेव प्रयोगे प्रकृतिरूपसम्पादनायापि तावदनेकः कृतः स्यात्, यदि वा प्रथमवचन एकशब्दः कश्च प्रथमः यमकृत्वा प्रत्ययान्तरं कर्त्तुं न शक्यते, साधारणवचनो वा ऽपत्याधिकाराच्च यः सर्वापत्यसाधारणः स एव गोत्रे भवतीति, गर्गशब्दाद्यञेव भवतीति, गर्गशब्दाद्यो यञ् प्राप्तः स एव भवति न

प्रकृत्यन्तरेभ्यः प्राप्ताः प्रत्यया इत्यर्थस्तदाह । 'प्रत्ययो नियम्यत-इति' । प्रत्ययान्तरं वार्यतइत्यर्थः । एतेन प्रकृतिर्नियम्यतइत्यपि व्याख्यातम् । 'अथ वेत्यादि' । अस्मिन्पक्षे प्रथमवचन एकशब्द इति दर्शितम् । 'प्रथमा प्रकृतिरिति' । सूत्रे तु शब्दापेक्षया पुल्लिङ्गनिर्देश इति दर्शितम् । 'एक एव शब्द इति' । अथ वास्मिन्पक्षे साधारणवचन एकशब्दः परमप्रकृतिश्च सर्वप्रत्ययसाधारणी, सङ्ख्यावचनो वा प्रथमातिक्रमे कारणाभावात्परमप्रकृतिरेकशब्देन गृह्यते । 'अनयोः पक्षयोः प्रथमा प्रकृति रिति' । एकशब्दस्यार्थतो विवरणं द्रष्टव्यम् ॥

"गोत्राद्यून्यस्त्रियाम्" ॥ अत्राप्यनारभ्यमाणेस्मिन्योगे उत्पादयितर्यपत्ययुक्ते गोत्रसञ्ज्ञाया युवसञ्ज्ञया बाधितत्वादसति पूर्वसूत्रव्यापारे चतुर्थे तृतीयात्पञ्चमे चतुर्थात्षष्ठे पञ्चमादित्येवं प्रत्ययान्तादेव प्रत्ययप्रसङ्ग इत्यनिष्टमेव प्राप्नोति, व्यवहिते च पञ्चमादौ यूनि तृतीयादुत्पत्तिर्न प्राप्नोति तं प्रत्यनपत्यत्वादितीष्टं न सिध्यति, सर्वेषु त्वपत्ययुक्तेषु पञ्चमे यूनि पूर्वेभ्यश्चतुर्भ्यः प्रत्ययः प्राप्नोति, तत्र यदा तृतीयात्तदा गार्ग्यायण इतीष्टं तावत्सिध्यति, अनिष्टमपि प्राप्नोति प्रकृत्यन्तरेभ्योपि प्रत्ययप्रसङ्गादित्यत इदमारभ्यते । अत्रापि यदि पूर्वः पक्ष आश्रीयते ततो विध्यर्थमेतत्स्यान्नियमार्थं वा, यदि युवशब्देनैकमपत्यमुच्यते तत एकस्मिन्यूनि गोत्रादगोत्राच्च प्राप्त्यभावात् चतुर्थेन व्यवहिते पञ्चमादौ यूनि गोत्राद्विध्यर्थं भवति । अथ चतुर्थप्रभृत्यपत्यसमुदायो युवशब्देनोच्यते ततो गोत्राच्चतुर्थे चतुर्थादगोत्रात्पञ्चम इति गोत्रादगोत्राच्च युवसमुदाये प्रत्ययप्रसङ्गे गोत्रादेवेति नियमार्थं भवति, तत्र विधौ गार्ग्यायण इतीष्टं सिध्यति प्रत्ययमालाप्रसङ्गदोषः स्यादेव, तत्पितृवचनात्प्राप्तस्य प्रत्ययस्यानिषिद्धत्वात्, नियमे चतुर्थादेः प्राप्तस्य प्रत्ययस्य प्रतिषेधो ऽयं सम्पद्यते, यदि चतुर्थादेः स्याद् युवसमुदाये गोत्रादपि प्रत्ययः कृतः स्यादिति, ततश्च नानिष्टप्रसङ्गः किं तु पञ्चमादौ यूनि गोत्रादुत्पत्तिर्न प्राप्नोति तं प्रत्यनपत्यत्वादिति पञ्चमस्य वाक्येनाभिधानं स्याद्गार्ग्यायणस्यापत्यमिति, षष्ठस्य तु वाक्येनापि न

सिद्धयति, नहि तत्पितृवचनोपत्यप्रत्ययान्तः शब्दोऽस्ति येन विगृह्येत, तदेवमत्रापि द्वितीयः पक्ष आश्रीयते नियमश्च तदाह । 'अयमपि नियम इति' । 'गोत्राद्येवेति' । यून्येवेत्येव विपरीतं नियमो न भवति एको गोत्रइति नियमाद्यूनोन्यत्र गोत्रप्रत्ययस्य प्रसङ्गाभावात् । 'न परमप्रकृत्यनन्तरयुवभ्य इति' । अन्यथा प्रयोगभेदेन तेभ्योपि स्यात् । 'किं पुनरत्र प्रतिषिध्यतइति' । सर्वस्मिन्नपि प्रतिषिध्यमाने दोषदर्शनात्प्रश्नः । तमेव दोषमाविष्करोति । 'यदि नियम इति' । तदेकवाक्यत्वात्प्रतिषेधस्येति भावः । 'स्त्रियामनियमः प्राप्नोतीति' । परमप्रकृत्यनन्तरयुवलक्षणाः प्रत्ययाः प्रयोगभेदेन पर्यायेण स्युरित्यर्थः । 'अथ युवप्रत्ययः प्रतिषिध्यतइति' । अस्त्रियामिति योगविभागेन प्रसज्यप्रतिषेधाश्रयेण चेति भावः । 'गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीति' । तद्यथा गर्गादिभ्यो यञ् गार्गी गार्ग्यायणी, अपत्यसामान्यलक्षण एव तु प्रत्ययः स्यात्किं कारणमनभिधानं प्राप्नोतीत्यत आह । 'गोत्रसञ्ज्ञाया युवसञ्ज्ञया बाधितत्वादिति' । यथा च बाधस्तथा तत्रैव वक्ष्यते । स्यादेतत् । युवप्रत्ययस्य स्त्रियां लुक्करिष्यते, कथं, यूनि लुगित्यस्यानन्तरं स्त्रियां चेति वक्ष्यामि यूनि लुगित्येव प्राग्दीव्यतइत्येतन्निवृत्तं, यद्वा वतण्डाच्च, लुक् स्त्रियां, यूनि चेति वक्ष्यामि, लुक् स्त्रियामित्येव, ततश्च गार्ग्यशब्दादुत्पन्नस्य फको लुकि कृते लुप्तस्याप्ययं प्रकृतिरेवाहेति यञन्तात्स्त्रियां वर्तमानान्ङीष्फौ भविष्यत इति, एवमप्यौपगवशब्दादुत इञो लुकि कृते ऽनुपसर्जनाधिकारादण्योनुपसर्जनमित्युच्यमान ईकारो न प्राप्नोति अणर्थस्याप्रधानत्वात्, यूनि संक्रान्तत्वात्, माभूदेवमण्योनुपसर्जनमिति अणन्तादनुपसर्जनादित्येवं भविष्यति, नैवं शक्यम्, इह हि दोषः स्यादापिशलिना प्रोक्तं व्याकरणम्, इञश्चेत्यण्, तदधीते आपिशला ब्राह्मणी, तदधीतइत्यणः प्रोक्ताल्लुकि अणन्तस्याध्येत्र्यां प्रधानस्त्रियां संक्रान्तत्वान्ङीप्प्राप्नोति, तस्मादण्योनुपसर्जनमित्येवाश्रयणीयं स्त्रियां योणिवहित इति वा, तयाच सत्यौपगवीतीकारो न प्राप्नोति, यद्यप्यत्र प्रत्ययलक्षणेन इञ उपसंख्यानमितीकारः स्यात्, इह तु ग्लुचुकायनेरपत्यमौत्सर्गिकस्याणो लुकि ङीच

प्राप्नोति, इतो मनुष्यजातेरिति ङीष् भविष्यति, इह तर्हि यस्कस्यापत्यं शिवाद्यण् यास्कः, तस्यापत्यं स्त्री, अणो द्व्यच इति फिञ् स्त्रियां लुकि ईकारो न प्राप्नोति, नह्यत्र लुप्तः प्रत्यय ईकारस्य निमित्तं, यश्च श्रूयते न स स्त्रियां विहित उपसर्जनं च, तर्हि का गतिरित्यत आह । 'तस्मादिति'। 'युवसञ्ज्ञैव प्रतिषिध्यतइति'। ननु यूनि यदुक्तं तत्स्त्रियां न भवतीत्युक्तं, न च युवसञ्ज्ञा यून्युक्ता, नहि युवसञ्ज्ञायाः प्राग्युवसञ्ज्ञास्ति, चतुर्थादेर्जीवद्वंश्यस्यापत्यस्योपलक्षणं युवशब्द इत्यदोषः । अपर आह । स्वरूपपरो युवशब्दः, परिभाषा चेयं, यत्र युवशब्दः श्रूयते तत्रास्त्रियामित्युपतिष्ठते, जीवति तु वंश्ये युवा, अस्त्रियामिति वा व्यक्तमेव पठितव्यमिति ॥

"अत इञ्" ॥ 'अकारान्तात्प्रातिपदिकादिति'। अत सातत्यगमनइत्यस्य वा ऽच्छब्दान्तानां वा कुर्वेद्वादीनां ग्रहणं न भवति, यदि स्यात्छिवादिषु येषामस्येञो बाधनार्थः पाठः शिवप्रोष्ठप्रोष्ठिकप्रभृतीनां तेषां पाठोऽनर्थकः स्यात्, व्यपदेशिवद्भावादिहापि भवति अस्यापत्यमिरिति, यस्येति लोपे प्रत्ययमात्रस्य श्रवणम्, इह तु इरपत्यमस्य युवेति यञिञोश्चेति फकि यस्येतिलोपं बाधित्वा परत्वादादिवृद्धौ कृतायामायायन इति भवति ॥

"बाह्वादिभ्यश्च" ॥ 'क्व चिदिति'। अजीगर्तादिषूदङ्कुपर्यन्तेष्वदन्तत्वात्पूर्वेणेञ् प्राप्तस्तस्य ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् बाधकः प्राप्तः, अन्ये सर्वे ऽनकारान्तास्तेषु च बाहुप्रभृतिषूवर्णान्तेषु पुष्करसदादिषु हलन्तेषु चाण् प्राप्तः, चूडाशब्दाद्व्यच इति ढक्, वृकलादिभ्यस्तत्रामिकाण् प्राप्तः, शिरस्लोमश्चेति तदन्तयोर्ग्रहणं, सम्भूयोम्भोमितौजसां स लोपश्चेत्येव वक्तव्ये पृथक् सलोपश्चेति वचनं वैचित्र्यार्थम् । उदञ्चु इति पठ्यते, तत्र नायमुकारान्तात्प्रत्ययः किं तु क्विबन्तात्प्रत्ययः, नलोपाभावस्तु निपात्यते, उदीचोपत्यमौदञ्चिः, एतत्सर्वं पैलादिष्वौदञ्चिशब्दपाठाद्विज्ञायते। 'बाह्वादिप्रभृतिष्विति'। प्रभृतिग्रहणेन वक्ष्यमाणानां कुञ्जादीनां ग्रहणं,

लोके विदितो लौकिको गोत्रभावः, संज्ञाकारित्वम् आदिपुरुषत्वमित्यर्थः। एतच्च न्यायसिद्धं, कथम्, अर्थवद्ग्रहणे नानर्थकस्येति, अर्थवतां बाह्वादीनां ग्रहणं, स चार्थः प्रसिद्धः, झटिति प्रतीतेः, स्मृतिशास्त्रस्य चार्थतोनादित्वादनाद्यर्थाभिधायिनामेव ग्रहणं न्याय्यम्। 'बाहुर्नाम कश्चिदिति' एवं कुब्जो नाम नडो वा, तस्मादिञेव भवति। 'कौब्जि- नाडिरिति'। यत्तु कार्यं न स्वरूपोपादानेन विधीयते किं तु प्रकारा- न्तरेण तदिदानींतनार्थाभिधायिनामपि भवति, अत इञ्, दैवदत्ति- रिति। 'सम्बन्धिशब्दानां चेति'। कार्यापेक्षया षष्ठी, सम्बन्धिशब्दानां श्वशुरादीनां यत्कार्यमुच्यते तस्य तत्सदृशे प्रतिषेधो भवति। 'संज्ञाश्व- सुरस्येति'। संज्ञया यः श्वसुरो न संबन्धेन। 'श्वासुरिरिति'। उणादिषु नावश्यं व्युत्पत्तिकार्यं भवति, तेन सावसे राप्ताविति व्युत्पन्नस्य श्वशुरश- ब्दस्य नप्ताभ्यामित्येष विधिर्न भवति, तथा मातृपितृभ्यां स्वसेति षत्वं धान्यमातरि न भवति, इदमपि न्यायसिद्धं संज्ञाश्वशुरस्यादिमत्त्वात्सम्ब- न्धिशब्दस्यानादित्वात्, मातृपितृभ्यामित्यत्रापि प्रसिद्धतरत्वाज्जननी- वाचिनो ग्रहणम्। उक्तं च॥

अभिव्यक्तपदार्था ये स्वतन्त्राः लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु॥

इति। 'चकारोनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयतीति'। पठितशब्दापेक्षः समुच्चय इति भावः॥

"सुधातुरकङ् च"॥ 'व्यासवरुडेत्यादि'। वेदं व्यस्यतीति वेद- व्यासः, कर्मण्यण्, तस्यैकदेशप्रयोगो व्यास इति भीमसेनो भीम इति- वत्, वरुडादयो जातिविशेषाः, तत्तर्हि वक्तव्यं न वक्तव्यं, प्रकृत्यन्तराण्ये- वैतानि स्वार्थिककन्प्रत्ययन्तानि, अव्यविकन्यायेन च कर्बाह तेषांक्यमेव भवति, व्यासशब्दादृषिवाचिनोपि बाह्वादेराकृतिगणत्वादिञ् भवति॥

"गोत्रे कुञ्जादिभ्यश्च्फञ्"॥ 'चकारो विशेषणार्थ इति'। यद्यत्र चकारो न क्रियेत ततो व्रातफञोरस्त्रियामिति वक्तव्यं, ततो ऽश्वादिभ्यः

किं च निवर्तकज्ञानस्याप्यविद्यारूपत्वात्तन्निवर्तनं केनेति वक्तव्यं, निवर्तकज्ञानं स्वेतरसमस्तभेदं निवर्त्य क्षणिकत्वादेव स्वयमेव विनश्यति दावानल—विषनाशनविषान्तरवदिति चेन्न निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन तत्स्वरूपतदुत्पत्तिविनाशानां मिथ्यारूपत्वात् तद्विनाशरूपाऽविद्या तिष्ठत्येवेति—

निवृत्तौ सत्यां निवर्त्यस्थित्यनुपपत्तेर्ब्रह्मस्वरूपमेव निवृत्तिश्चेत्यन्त्यमकोटित्वं च न स्यात् स्वरूपस्य सत्त्वात् । एवं निवृत्तिदूषणेनैव निवर्तकेऽपि दूषिते सति मुखान्तरेणापि दूषणमस्तीत्यभिप्रायेणाह किञ्चेति, किं-शब्दः क्षेपार्थः । तदभ्युपगमप्रकारं शङ्कते निवर्त्तकेति, दूषयति नेति, वस्तुत उत्पन्नस्यैव हि वस्तुतो विनाशः उत्पत्त्यादेः काल्पनिकत्वेन विनाशोऽपि काल्पनिक इति तद्विनाश—तद्विषयभ्रम-भ्रान्तभ्रमहेतुरू*पाऽविद्यादौ स्थिते* सति तन्निवर्तकं वक्तव्यमित्यर्थः । स्वरूपतदुत्पत्तीत्यत्र स्वरूपशब्दः स्थितिवाची । तद्विनाशरूपेति, विनाशानुबन्धिनां भ्रमतदाश्रयतद्धेतूनामपि विनाशशब्देन विवक्षा तद्विनाशदर्शनस्येत्यत्रापि तदाश्रयतत्कल्पकाऽविद्या-तत्कल्पनीयानां च प्रदर्शनं कृतम् । मुखान्तरेण दूषयति दावाग्न्यादीनामपीति, दावाग्न्यादीनां विनाशो नाम पूर्वावस्थाविरोध्यवस्थान्तरप्राप्तिर्न तु द्रव्याभावः । एवमविद्याया अवस्थान्तरप्राप्तौ सा न निवृत्ता स्यादित्यर्थः । ज्ञात्रनुपपत्तिं दर्शयति अपि चेति, निषेध्यतया—निवर्त्यतया । किमध्यासरूपो ज्ञाता उत ब्रह्मैव ज्ञात्रिति विकल्पोऽभिप्रेतः

तद्विनाशदर्शनस्य निवर्त्तकं मन्त†व्यमेव । दावाग्न्यादीनामपि पूर्व्वावस्थाविरोधिपरिणामपरम्पराऽवर्ज्जनीयैव ।

* भ्रान्तभ्रमरूपाऽविद्या स्थितेति पा० ।

† वक्तव्यमेवेति पा०

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता अध्यासरूप इति चेन्न तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमेवेति चेन्न ब्रह्मणो निवर्त्तकज्ञानं प्रति ज्ञातृत्वम्—

ब्रह्मैवेति पक्षे ज्ञातृत्वधर्म्मे विकल्पः । ज्ञातृत्वं किं स्वरूपम् उताध्यस्तमिति, तस्यापि त्रिरूपतयेति, निवर्त्तकज्ञानस्य त्रिरूपत्वं ज्ञातृज्ञेयानुबन्धित्वकृतं निवर्तकज्ञानस्य त्रिरूपत्वाभावे दूषणमाह सर्वस्येति, ज्ञानस्य—प्रमाणजन्यज्ञानस्य, न तु स्वरूपभूतज्ञानस्येत्यर्थः । कथं ज्ञानत्वं हीयते इत्यपेक्षायामन्वयव्याप्तिं दर्शयति कस्यचिदिति, सिद्धिरूपत्वात्प्रकाशरूपत्वात् । दूषणान्तरमाह । यद्वा व्यतिरेकव्याप्तिं दर्शयति त्रिरूपत्वविरहइति, ज्ञातृत्वमध्यस्तमिति पक्षो दूषितः । अथ स्वरूपमिति पक्षाङ्गीकारेऽपसिद्धान्तप्रसङ्ग इत्याह ब्रह्मेति, निवर्त्तकज्ञानस्य निवर्त्तकान्तरापेक्षत्वे हि अनवस्था । न चान्यापेक्षा स्वयं च ज्ञातृत्वं विषयश्च सर्वं स्वनिवर्त्यमिति चेत्तत्राह निवर्तकेति, ज्ञातृत्वादिकं सर्वं स्वयं च स्वनिवर्त्यान्तर्गतमिति वचनमङ्गुल्यग्रादिवाक्यवद्योग्यार्थत्वान्न प्रमितिजनकमिति भावः ॥

किं स्वरूपम्? उताध्यस्तम्,? अध्यस्तं चेत् अयमध्यासस्तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव तन्निवर्तकान्तराभ्युपगमे तस्यापि त्रिरूपत्वादनवस्थैव, सर्वस्य हि ज्ञानस्य त्रिरूपकत्वविरहे ज्ञानत्वमेव हीयते, कस्यचित्कंचनार्थविशेषं प्रति सिद्धिरूपत्वात्, ज्ञानस्य त्रिरूपत्वविरहे

अथ सामग्र्यनुपपत्तिमाह अपि चेति, केन जातं—न केनापीति भावः । श्रुतेस्सामग्रीत्वमाशङ्क्य दूषयति श्रुत्यैवेति, अविद्याकल्पितवाक्यजन्यं

ज्ञानं न भ्रमनिवर्तकमित्यर्थः । निवर्त्यं दुष्टकारणजन्यत्वाद् दुष्टकारणजन्येनापि ज्ञानेन बाध्यत इति चेत्तत्राह तथा हीति, तदेव विवृणोति रज्जुसर्पेति, बाधकस्य दुष्टकारणजन्यत्वे ज्ञाते सति हि तदनिवर्त्तकम् । अत्र तु न दुष्टकारणजन्यत्वं ज्ञातमिति चेत्तत्राह प्रयोजकेति, प्रयोजकज्ञानवतः—ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति मिथ्यात्वे प्रयोजकं ब्रह्मव्यतिरिक्तत्वमिति ज्ञानवत इत्यर्थः । निदिध्यासनेन निरस्तसमस्तभेदवासनस्य निवर्तकज्ञानोत्पत्तिरित्यभ्युपगमात् श्रवणवेलायामेव श्रुतेर्भ्रान्तिमूलत्वज्ञानाच्च न सा बाधकज्ञानहेतुरित्यर्थः ।

भवतां स्वरूपभूतज्ञानवन्निवर्तकज्ञानमप्यनिवर्तकं स्यात्, ब्रह्मस्वरूपस्यैव ज्ञातृत्वाभ्युपगमे अस्मदीय एव पक्षः परिगृहीतः स्यात् । निवर्तकज्ञानस्वरूपज्ञातृत्वं च स्वनिवर्त्यान्तर्गतमिति वचनं भूतलव्यतिरिक्तं कृत्स्नं छिन्नं देवदत्तेनेत्यस्यामेव छेदनक्रियायामस्याश्छेदनक्रियायाश्छेत्तृत्वस्य च छेद्यान्तर्भाववचनवदुपहास्यम् ।

अपि च निखिलभेदनिवर्तकमिदमैक्यज्ञानं केन जातमिति विवेचनीयं, श्रुत्यैवेति चेन्न तस्या ब्रह्मव्यतिरिक्ताया अविद्यापरिकल्पितत्वात् प्रपञ्चबाधकज्ञानस्योत्पादकत्वं न सम्भवति, तथा हि दुष्टकारणजन्यमपि रज्जुसर्पज्ञानं न दुष्टकारणजन्येन रज्जुरियं न सर्प्प इति ज्ञानेन बाध्यते, रज्जुसर्प्पज्ञानभये वर्तमाने केनचिद् भ्रान्तेन पुरुषेण रज्जुरियन्न सर्प्प इत्युक्तेऽप्ययं भ्रान्त इति ज्ञाते सति तद्वचनं रज्जुसर्प्प-

ज्ञानस्य बाधकं न भवति भयं च न निवर्तते, प्रयोजकज्ञानवतः श्रवणवेलायामेव हि ब्रह्मव्यतिरिक्तत्वेन

भ्रान्तिमूलत्वं ज्ञातमिति बाधकज्ञानोत्पादकत्वं न सम्भवतीति पूर्व्वेणान्वयः । सामग्रीदूषणप्रसङ्गात् ज्ञानज्ञातृत्वमिथ्यात्वेऽप्यनुगतदूषणमाह निवर्तकेति, न हि विरुद्धद्वयस्य मिथ्यात्वं सम्भवति, अपि त्वन्यतरस्यैव मिथ्यात्वं, तच्चाभ्युपगतं परेण सर्वशून्यवादिनोक्तस्याधिष्ठानमिथ्यात्वस्य बाधितत्वेऽधिष्ठानं सत्यं भवति, न ह्यधिष्ठानभूतासंवित्तिर्मिथ्यात्वम् उभयं च मिथ्या संभवतीति। तस्माद्ब्रह्मव्यतिरिक्तत्वोपाधिर्निवृत्तेरप्यविशिष्ट इति निवृत्तिर्मिथ्या भवतीति तन्निवृत्तेर्निवर्त्यस्य चोभयस्य मिथ्यात्वं मातृत्ववन्ध्यात्वयोरिवानुपपन्नमित्यर्थः ।

श्रुतेरपि भ्रान्तिमूलत्वं ज्ञातमिति। किञ्च निवर्तकज्ञानस्य ज्ञातुस्तत्सामग्रीभूतशास्त्रस्य च ब्रह्मव्यतिरिक्ततया यदि बाध्यत्वमुच्यते हन्त तर्हि प्रपञ्चनिवृत्तेर्मिथ्यात्वमापततीति प्रपञ्चस्य सत्यता स्यात् स्वप्नदृष्टपुरुषवाक्यावगतपित्रादिमरणस्य मिथ्यात्वेन पित्रादिसत्यतावत्। किं च तत्त्वमस्यादिवाक्यं न प्रपञ्चस्य बाधकं भ्रान्तिमूलत्वाद् भ्रान्तप्रयुक्तरज्जुसर्प्पबाधकवाक्यवत् ।

ननु च स्वप्ने कस्मिंश्चिद्भये वर्तमाने स्वप्नदशायामेवायं स्वप्न इति ज्ञाते सति पूर्व्वभयनिवृत्तिर्दृष्टा तद्वदत्रापि सम्भवतीति। नैवं स्वप्नवेलायामेव सोऽपि स्वप्न इति ज्ञाते सति पुनर्भयानिवृत्तिरेव दृष्टेति न कश्चिद्विशेषः । श्रवणवेलायामेव सोऽपि स्वप्न इति

तत्र दृष्टान्तमाह स्वप्नेति, निवृत्तेर्मिथ्यात्वे निवर्त्यस्थितिरेव न तु निवर्त्यसत्यत्वमिति चेत् न निवर्त्यस्थितेर्यावत्कालं बाधानुदयात्सत्यत्वसिद्धेः अबाधिततया हि स्थितिः सत्यत्वं, तत्त्वमस्यादीति, अयमनिष्टप्रसङ्गो न त्वनुमानं व्याप्तिप्रदर्शनार्थं प्रतिज्ञाहेतुरूपेणोक्तम् । भ्रान्तिमूलस्य ज्ञानस्यापि निवर्तकत्वे दृष्टान्तमुखेन चोदयति ननु चेति, परिहरति नैवमिति, सोऽपि स्वप्न इति ज्ञाते सतीति, प्रथमस्वप्नबाधके द्वितीयस्वप्नेऽपि स्वप्न इति ज्ञाते भयानिवृत्तिदर्शनादित्यर्थः । द्वितीयस्वप्नस्य स्वप्नत्वं न स्वप्नेन ज्ञातमिति चेत् तर्हि तस्य प्रथमस्वप्नभयनिवर्तकत्वं दुष्टमूलत्वाज्ञानकृतं स्यात् एतत्परिहाराय द्वितीयस्वप्नज्ञानस्य स्वप्नता ज्ञायत इति चेत्तदा तस्य भयानिवर्तकत्वमपि दृष्टमित्यभिप्रायः । न कश्चिद्विशेष इति–बाध्यबाधकयोर्न कश्चिद्विशेष इत्यर्थः । प्रस्तुतार्थे स्वप्नत्वं किमवगतमित्यत्राह अवगेति, स्वप्नशब्दो गौणवृत्त्या मिथ्यात्वपरः मिथ्यारूपस्यापि शास्त्रस्य निर्विशेषवस्तुबोधकत्वं पश्चात्तनबाधादर्शनेन सम्भवतीति शङ्कते यदपीति, परिहरति तदयुक्तमिति, पुनः शङ्कते इदमिति, दूषयति, सदिति, वेदस्यापौरुषेयस्तद्वाक्यं पौरुषेयमिति

**ज्ञातमेवेत्युक्तम् । यदपि चेदमुक्तं भ्रान्तिपरिकल्पितत्वेन मिथ्यारूपमपि शास्त्रं सदद्वितीयं ब्रह्मेति बोधयति तस्य सतो ब्रह्मणो विषयस्य पश्चात्तनबाधादर्शनाद् ब्रह्म सुस्थितमेवेति । तदयुक्तं शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधितत्वात् । इदं भ्रान्तिमूलवाक्यमिति चेत्सदद्वितीयं ब्रह्मेति**

चेत् ततः किं पौरुषेयत्वापौरुषेयत्ववैषम्यस्यापि भ्रान्तिसिद्धत्वेन द्वयोस्तुल्यत्वात् । किञ्च तद्वाक्यस्य पौरुषेयत्वं वदता भ्रान्तिमूलत्वादिति हेतोः किं दूषणमुक्तं स्यात् । हेतोस्सोपाधिकत्वमिति चेत् न वाक्याप्रामाण्ये पौरुषेयत्वस्योपाधित्वाभावात् आप्तवाक्ये व्यभिचरितस्य हि न

साध्यसमव्याप्तिः स्वाभिमतार्थसिद्धिः प्रमाणमिथ्यात्ववादिनो नास्तीत्याह सर्वेति, अभियुक्तैरिति—भट्टा*चार्यैरित्यर्थः । यथा सर्वदा सदुपायानां वादमार्गः प्रवर्तत इति पूर्वार्द्धम् । अधिकारोऽनुपायत्वाच्च वादे शून्यवादिन इत्यत्र सर्वशून्यवादिन इत्युक्तेऽपि ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनोऽपि ग्रहणं तुल्यन्यायत्वात् । न्यायश्च स्वपक्षसाधनप्रमाणपारमार्थ्यानभ्युपगमः, अनेन सदुपायानामिति पदं व्याख्यातं, सदुपायानां—परमार्थभूतप्रमाणादीनामित्यर्थः । शून्यवादिनं प्रति अनुपायत्वाद्वादानधिकार इत्युक्ते वादः प्रवृत्त एवेति व्याहतमिदं वादानधिकारवचनमिति चेन्न ग्रन्थाभिप्रायाज्ञानकृतमिदं चोद्यं, वादो नाम स्वाभिमतार्थसाधकत्वमनुपायस्य स्वाभिमतार्थसिद्धिर्नास्ति साधकाभावात् अतो निष्प्रयोजनत्वमुक्तं, न त्वनुपायस्य वादानधिकार इति—

**वाक्यमपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पश्चात्तनबाधादर्शनं तु सर्वशून्यवाक्यस्यैवेति विशेषः । सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च स्वपक्षसाधनप्रमाणपारमार्थ्यानभ्युपगमेन अभियुक्तैर्वादानधिकार एव प्रतिपादितः । सर्वदा सदुपायानां वादमार्गः प्रवर्त्तते । अधिकारोऽनुपायत्वान्न वादे शून्यवादिन ॥ इति,**

वाक्यप्रयोगस्याप्ययोग्यत्वम् । यद्वा अनेन ग्रन्थेन शून्यवादिनो व्याहतिरापाद्यते कथाप्रवृत्तेन त्वया कथाप्रवृत्तिविरुद्धमङ्गीकृतमिति तस्मात्वात्र चोद्यम् । शास्त्रप्रत्यक्षयोर्बाधकत्वबाध्यत्वे निरस्यति अपि चेत्यादिना, प्रत्यक्षेत्यादि स्पष्टं, काचतिमिरादिदोषत्वं कैश्चिदुक्तमिति तस्य सर्वभेदानुगतत्वाभावात् अयुक्तमित्यभिप्रायेणानन्तभेदविषयमित्युक्तं काचतिमिराद्यभावेऽपि क्वचिद्दर्शनादन्यत्र कल्प्यते चेत् वाक्यत्वाद्वेदस्य पौरुषेयत्वादिकं कल्प्यतामित्यभिप्रायः । उपालम्भसूचको हन्त—शब्दः,

* वरावरभट्टाचार्याः श्रीसंप्रदाये सुप्रसिद्धाचार्यास्तैरिति ।

एवं बाध्यबाधकयोस्तुल्यदोषत्वेन प्राबल्यदौर्बल्याभाव उक्तः, प्राबल्यं दौर्बल्यं चास्तां, तथाऽपि विरोधाभावान्न बाध्यबाधकभावसिद्धिरिति वक्तुं शास्त्रप्रत्यक्षयोर्विषयभेदमाह आकाशेति, तदुपासनादीत्यादि-शब्देन यागदानादयो विवक्षिताः, तत्प्राप्तिर्मोक्षः तद्रादिकफलविशेषस्त्रिवर्गः, तदनिष्टकरणं पापम् । एवं तुल्यदोषत्वं विरोधाभावश्चोक्तः । पूर्वमेव स्वमूलोच्छेदित्वं चोक्तं, वक्ष्यते चानादीति, प्रमाणान्तरेण सदोषत्वानवगतिश्चार्थसिद्धेति ज्वालाभेदानुमानवैषम्यचतुष्टयमनुसन्धेयम् ॥

अपि च प्रत्यक्षदृष्टप्रपञ्चस्य मिथ्यात्वं केन प्रमाणेन साध्यते । प्रत्यक्षस्य दोषमूलत्वेनान्यथासिद्धिसम्भवान्निर्दोषं शास्त्रमनन्यथासिद्धं प्रत्यक्षस्य बाधकमिति चेत् । केन दोषेण जातं प्रत्यक्षमनन्तभेदविषयमिति वक्तव्यम्, अनादिभेदवासनाख्यदोषजातं प्रत्यक्षमिति चेत् । हन्त तर्ह्यनेनैव दोषेण जातं शास्त्रमपीत्येकदोषमूलत्वात् प्रत्यक्षशास्त्रयोर्न बाध्यबाधकभावसिद्धिः । आकाशवाय्वादिभूत—तदारब्धशब्दस्पर्शादियुक्तमनुष्यत्वादिसंस्थानसंस्थितपदार्थग्राहिप्रत्यक्षं, शास्त्रं तु प्रत्यक्षाद्यपरिच्छेद्यसर्वान्तरात्मत्वसत्यत्वाद्यनन्तविशेषणविशिष्टब्रह्मस्वरूप-तदुपासनाद्याराधनप्रकार—तत्प्राप्तिपूर्वक—तत्प्रसादलभ्य—फलविशेष—तदनिष्टकरणमूलनिग्रहविशेषविषयमिति शास्त्रप्रत्यक्षयोर्न विरोधः । अनादिनिधनाविच्छिन्नपाठसम्प्रदाय-

* अत्र मूलोच्छेदित्वप्रसङ्गाय प्रत्यक्षपारमार्थ्यं वक्तव्यमित्याह अनादीति, शब्दस्वरूपग्रहणव्युत्पत्तितात्पर्यलिङ्गग्रहणादेरपौरुषेयत्वानुमानलिङ्गस्य च प्रत्यक्षमूलत्वात् तत्पारमार्थ्यमवश्यमभ्युपेतव्यम् अन्यथा धर्मिस्वरूप-

तद्बलीयस्त्वहेतुभूतगुणासिद्धिरित्यर्थः । इति-शब्देनान्येषामपि कुतर्कजालानां दूषणमुक्तप्रयोजकान्तर्भूतमित्यभिप्रेतं, श्रुतिशतेति, शत-शब्दः शाखाभेदपरः, विततिशब्दः प्रतिशाखं वाक्यपरम्परापरः, वातवेगशब्देन प्राबल्यमभिप्रेतं, तूलशब्देन परमतस्य दौर्बल्यमभिप्रेतं, न हि वचनविरुद्धस्तर्कः प्रबलः स्पष्टम् । एवं ब्रह्माज्ञानपक्षः प्रतिक्षिप्तः ॥

अथ द्वितीयश्लोकोक्तक्रमेण भास्करमतं निराकरोति द्वितीये त्वित्यादिना, मिथ्यात्वप्रयुक्तानुपपत्त्यप्रसङ्गेऽपि जीवब्रह्मस्वरूपैक्यनिबन्धनदोषा भवन्त्येवेति तु-शब्दाभिप्रायः । ब्रह्मण्येवोपाधिसंसर्गस्य हेतुरुपाधिब्रह्म-

तात्यनेकगुणविशिष्टस्य शास्त्रस्य बलीयस्त्वं वदता प्रत्यक्षपारमार्थ्यमवश्यमभ्युपगन्तव्यमित्यलमनेन श्रुतिशतविततिवातवेगपराहतकुदृष्टिदुष्टयुक्तिजालतूलनिरसनेनेत्युपरम्यते ॥

द्वितीये तु पक्षे उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरानभ्युपगमाद्ब्रह्मण्येवोपाधिसंसर्गादौपाधिकाः सर्वे दोषा ब्रह्मण्येव भवेयुः । ततश्चापहतपाप्मत्वादिनिर्दोषत्वश्रुतयः सर्वा विहन्यन्ते । यथा घटाकाशादेः परिच्छिन्नतया महाकाशाद्वैलक्षण्यं परस्परभेदश्च दृश्यते तत्रस्था गुणा वा दोषा वाऽनवच्छिन्ने महाकाशे न सम्बध्यन्ते,

व्यतिरिक्तवस्त्वन्तरानभ्युपगमः । व्यतिरिक्तशब्द ईश्वरत्वाकाराज्जीवत्वाकारविशेषणभेदानुवादपरः । वस्त्वन्तरशब्दो धर्म्यन्तरवाची आकारभेदाभ्युपगमेऽपि धर्म्येकत्वाभ्युपमाद्ब्रह्मण्येवोपाधिरिति तत्कृतदोषास्तत्रैव स्युरित्यर्थः । किमित्यत्राह ततश्चेति, निर्दोषत्वश्रुतिबाधं परिहर्तुं श्चोदयति यथेति, तत्रस्था दोषा वा गुणा वेति, अल्पत्वमभिमतविनियोगवि-

शेषानर्हत्वं च घटाकाशस्य दोषः । अभिमतविनियोगविशेषार्हत्वं महत्त्वं च गुणः, तदुभयं महाकाशे न प्रसजेत् घटकरकाद्यवच्छिन्नाकारः परस्परभेदश्च दृश्यते, न हि घटावच्छिन्नाकाशकार्यं करकावच्छिन्नाकाशे संभवति । एवमुपाधिभेदकृतपरस्परभेदेन गुणदोषव्यवस्थान्विता जीवास्तद्गतगुणदोषाश्च न परब्रह्मणि सम्बध्यन्त इति निर्दोषत्वश्रुतीनां सावकाशत्वात् न तत्र बाधप्रसङ्ग इत्यर्थः । परिहरति नैतदिति, उरगहताङ्गुलिवद् ब्रह्मखण्डनार्हं चेत् ब्रह्मणि जीवगतगुणदोषास्पर्श उपपद्यते

**एवमुपाधिकृतभेदव्यवस्थितजीवगता दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इति चेत् । नैतदुपपद्यते निरवयवस्याकाशस्यानवच्छेद्यस्य घटादिभिश्छेदासम्भवात्तेनैव आकाशेन घटादयः संयुक्ता इति ब्रह्मणोऽप्यच्छेद्यत्वाद्ब्रह्मैवोपाधिसंयुक्तं स्यात्, घटसंयुक्ताकाशप्रदेशोऽन्यस्मादाकाशप्रदेशाद् भिद्यत इति चेत् आकाशस्यैकस्यैव प्रदेशभेदेन घटादिसंयोगाद् घटादौ गच्छति तस्य च प्रदेशस्यानियम इति तद्वद्ब्रह्मण्येव प्रदेशभेदानियमेनोपाधिसंसर्गादुपाधौ**

ब्रह्मणोर्निरवयवत्वेनाच्छेद्यत्वाद्ब्रह्मण्येवोपाधिसंसर्गः स्यादिति–निर्दोषत्वश्रुतिबाध एवेत्यर्थः । प्रदेशभेदेन व्यवस्थां शङ्कते घटसंयुक्तेति, स्वदुक्तदृष्टान्तेनैवानियम इत्याह आकाशस्येति, एकस्यैवेति, आकाशव्यक्तयोऽनन्ताः सन्ति चेत् उपाधीनां गमनेऽप्याकाशव्यक्त्यन्तरासम्बन्धेन गुणदोषव्यवस्था स्यात् । न च तथाऽऽकाशव्यक्तिभेदोऽस्तीति भावः । प्रदेशभेदेनेत्यादि; एको घट एकत्रैव तिष्ठति चेत् प्रदेशभेदेन व्यवस्था स्यात् । न च तथाऽस्तीति भावः इति दृष्टान्ते ऽनियमो दर्शितः । तं

दार्ष्टान्तिके निर्दिशति तद्वदिति, ब्रह्मण्येव प्रदेशभेदानियमेनोपाधिसंसर्गादुपाधौ गच्छति संयुक्तवियुक्तब्रह्मप्रदेशभेदाच्चेति हेतुद्वयस्य साध्यद्वयं क्रमादुच्यते ब्रह्मण्येवोपाधिसंसर्गः तत्रो तत्रो बन्धो मोक्षश्च भवतीति निरवयवत्वेनाच्छेद्यत्वात् व्यक्तिबहुत्वाभावादुपाधीनामेकत्रैव स्थित्यभावाच्च व्यवस्थाऽनुपपत्तिरित्यर्थः । पुनर्दृष्टान्तविशेषमुखेन व्यवस्थां शङ्कते निरवयवस्येति, यथा निरवयवस्याकाशस्यैव श्रोत्रेन्द्रियत्वेऽपि श्रोत्रेन्द्रियाणां परस्परव्यवस्था इन्द्रियानिन्द्रियव्यवस्था चोपपद्यते तथा जीवानामन्योन्यव्यवस्था जीवब्रह्मव्यवस्था चोपपद्येत्यर्थः ।

**गच्छति संयुक्तवियुक्तब्रह्मप्रदेशभेदाच्च ब्रह्मण्येवोपाधिसंसर्गः, तत्रो तत्रो बन्धमोक्षौ च स्यातामिति सन्तः परिहसन्ति । निरवयवस्यैवाकाशस्य श्रोत्रेन्द्रियत्वेऽपि इन्द्रियव्यवस्थावद् ब्रह्मण्यपि व्यवस्थोपपद्यत इति चेन्न वायुविशेषसंस्कृतकर्णप्रदेशसंयुक्तस्यैवाकाशप्रदेशस्येन्द्रियत्वात्तस्य च प्रदेशान्तराद्भेदानियमेऽपि इन्द्रियव्यवस्थोपपद्यते, आकाशस्य तु सर्वेषां शरीरेषु गच्छत्सु अनियमेन सर्वप्रदेशसंयोग इति**

तत्राप्यनियमापादनेन दूषयति नेति, दार्ष्टान्तिकं दूषयितुं दृष्टान्तव्यवस्थाप्रकारं दर्शयति वाय्विति, उच्चारणप्रयत्नजनितवायुविशेषसंयोगसंस्कृतकर्णशष्कुलीसंयुक्तस्याकाशस्यैव शब्दोपलम्भहेतुत्वमेव श्रोत्रेन्द्रियमिति प्रदेशभेदानियमेऽप्युपलम्भकार्यकरत्वोपपत्तेरुपलम्भहेतोः प्रदेशस्येन्द्रियत्वात्तदहेतोरनिन्द्रियत्वाच्चेन्द्रियानिन्द्रियव्यवस्थोपपत्तिः प्रदेशभेदेनाप्येकं पुरुषं प्रति वायुविशेषसंस्कृतकर्णसंयुक्तस्य प्रदेशविशेषस्य शब्दोपलम्भकार्यकरत्वात्तं प्रति वायुविशेषसंस्कृतकर्णसंयुक्तस्यापि नभःप्रदेशान्तरस्याकार्यकरत्वेनेन्द्रियाणां परस्परव्यवस्थासिद्धिश्च । एवं प्रदेशभेदेनापि कदाचित्कार्यकरत्वादिन्द्रियव्यवस्थासिद्धिरित्यर्थः । दा-

ष्टान्तिकदूषणासिद्ध्यर्थमनियमेऽपीत्युक्तमर्थमुपपादयति आकाशस्य त्विति, आकाशप्रदेशव्यवस्थित्यभावरूपवैषम्यपरस्तु-शब्दः, आकाशस्य तु सर्वशरीराणां गमनात् तत्करणप्रदेशभेदेन संयोगो विद्यत इत्यनियम इत्यर्थः। ततः किमित्यत्राह इति ब्रह्मण्यपीति, इतिहेतौ । उपाधिसंयोगप्रदेशानियमः—उपाधिसंयोगस्य प्रदेशानियमः । एवं ब्रह्मण्यपि प्रदेशभेदानियमेनोपाधिसंयोग इत्यर्थः ।

**ब्रह्मण्यप्युपाधिसंयोगप्रदेशानियम एव, आकाशस्य स्वरूपेणैव श्रोत्रेन्द्रियत्वमभ्युपगम्यापीन्द्रियव्यवस्थो-**

आकाशप्रदेशानियमेऽपि कदाचित्कार्यकरत्वरूपं श्रोत्रेन्द्रियत्वमितीन्द्रियव्यवस्थोपपद्यते। एवं ब्रह्मण्यपि प्रदेशभेदानियमेनोपाधिसंयोगाज्जीवत्वमपि कादाचित्कं स्यात् तदजत्वनित्यत्वश्रुतिविरुद्धम् । अतो जीवब्रह्मव्यवस्था नोपपद्यते इत्यभिप्रायः । परस्परव्यवस्था चानुपपन्ना उपाधीनां गमनेन सर्वजीवगतसुखादिप्रतिसन्धानप्रसङ्गात् प्रदेशभेदादप्रतिसन्धाने चैकोपाधौ गच्छति सति प्रतिसन्धानाभावप्रसङ्गाच्चेत्यनुसन्धेयं नभस इन्द्रियत्वाभ्युपगमेनायं परिहार उक्तः । नेयमर्थस्थितिरित्याह आकाशस्येति, स्वरूपेणैवेति पदेन भूतैरिन्द्रियाणामाप्यायनव्यावृत्तिः, तद्धप्रामाणिकं, कथमर्थतस्त्वमित्यत्राह वैकारिकादिति, अत्र प्रमाणमाह यथोक्तमिति, वैकारिकादिपदव्याख्यानार्थं पौनरुक्त्यव्याघातशङ्कापरिहारार्थं च तं श्लोकं व्याचष्टे अयमर्थ इत्यादिना, सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् । वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ त्रिविधोऽयमहङ्कारो महतस्त्वादजायत इत्यादिप्रकरणपर्यालोचनया तदनुगुणं व्याख्यातम् । अहङ्कारकार्यप्रतिपादकश्लोके तामसाहङ्कारप्रस्तावः कथं तैजसानीन्द्रियाण्याहुर्देवा वैकारिकाः स्मृता इत्येतत्कथं घटत इत्यत्राह तत्रेति, तामसाहङ्कारकार्यस्य पूर्वमेवोक्तत्वात्

**क्ता, परमार्थतस्त्वाकाशो न श्रोत्रेन्द्रियं वैकारिकादहङ्कारादेकादशेन्द्रियाणि जायन्त इति हि वैदिकाः,**

यथोक्तं भगवता पराशरेण तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥ इति, अयमर्थः वैकारिकस्तैजसोभूतादिरिति त्रिविधोऽहङ्कारः स च क्रमात्सात्त्विकोराजसस्तामसश्च तत्र तामसाद्भूतादेराकाशादीनि भूतानि जायन्त इति सृष्टिक्रममुक्त्वा तैजसाद्राजसादहङ्कारादेकादशेन्द्रियाणि जायन्त इति—

तदत्रानुक्तम् । आहुरिति परमतोपन्यासः । वैकारिकाः स्मृता इति सिद्धान्त इत्यर्थः । इन्द्रियवाचिपदं किमित्यत्राह देवा इति, न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैर्मनसा तु विशुद्धेन सहैव सन्तं न विजानन्ति देवा इत्यादिषु प्रयोगानुसारेण देव—शब्दः इन्द्रियवाचीत्यर्थः । क्वचिदिन्द्रियाणां भौतिकत्वमुच्यत इत्यत्राह एवमिति, वैकारिकादुत्पत्तिवाचिवचनादविरोधायापातप्रतीतार्थपरित्यागेन तदाप्यायनमेवार्थ इति मन्तव्यमित्यर्थः । आपातप्रतीतार्थपरत्वाभ्युपगमेन दूषयति भौतिकत्वेऽपीति, पूर्वं भूतानामेवेन्द्रियत्वाभ्युपगमेन परिहार उक्तः । अत्र भूतपरिणामत्वाभ्युपगमेनोच्यते इति भिदा । भूतपरिणामत्वाविशेषादनिन्द्रियत्वमपि स्यात् घटवदिति शङ्कापरिहारार्थं भूतविकारत्वादेवेत्युक्तम्, आकाशादिभूतपरिणामविशेषा आकाशादिभूतविकारत्वादेव शरीरवद्व्यवस्थिता एव पुरुषाणामिन्द्रियाणि भवन्तीत्यन्वयः । न हि शरीरस्य भूतपरिणामविशेषत्वादशरीरत्वम् । एवं भूतपरिणामत्वेनेन्द्रियाण्यपि व्यवस्थितानि भवन्तीति जीवस्य ब्रह्मपरिणामत्वाभावाद् व्यवस्थाऽनुपपन्नेत्यर्थः ।

परमतमुपन्यस्य सात्त्विकाहङ्काराद्वैकारिकाणीन्द्रियाणि जायन्त इति स्वमतं*सूच्यते देवा वैकारि-

* स्वमतमुच्यते इति पा० ।

काः स्मृता इति, देवाः—इन्द्रियाणि एवमिन्द्रियाणामाहङ्कारिकाणां भूतैश्चाप्यायनं महाभारत उच्यते भौतिकत्वेऽपीन्द्रियाणामाकाशादिभूतविकारत्वादेवाकाशादिभूतपरिणामविशेषा व्यवस्थिता एव, शरीरवत्पुरुषाणामिन्द्रियाणि भवन्तीति ब्रह्मण्यच्छेद्ये निरवयवे निर्विकारे त्वनियमेनानन्तहेयोपाधिसंसर्गदोषो दुष्परिहर एवेति श्रद्दधानानामेवायं पक्ष इति—

ब्रह्मपरिणामत्वेऽपि जीवस्याजत्वनित्यत्वश्रुतिबाधः अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च ब्रह्मणो निर्विकारत्वश्रुतिबाधप्रसङ्गश्चेत्यभिप्रायः । निरवयवत्वं निर्विकारत्वं चाच्छेद्यत्वे हेतुः । श्रद्दधानानां—न्यायनिर्णयाक्षमाणाम् उपदेशमात्रतृप्तानामित्यर्थः । एवं जीवब्रह्मैक्याभ्युपगमे निर्दोषत्वश्रुतिबाध उक्तः । अचिद्रूपेण ब्रह्मणः परिणामाभ्युपगमे दूषणमाह स्वरूपेति, अविकारत्वश्रुतिर्निर्मलत्वश्रुतिश्रुतिश्च बाध्येते इत्यर्थः । न स्वरूपेण परिणामोऽपि तु शक्तिरेव परिणमते देवात्मशक्तिमित्यादिवचनादिति शङ्कते ब्रह्मण इति, दूषयति केयमिति, ब्रह्मणोऽनन्या कापीति, ब्रह्मस्वरूपमेवेत्यर्थः । विकल्पशिरस्त्वेनात्यन्तभेदो न शङ्कितस्तदनभ्युपगमात् । शिरोद्वयेऽपि दूषणमाह उभयेति, एवं भास्करमतम्प्रतिक्षिप्तम् ॥

शास्त्रविदो न बहु मन्यन्ते । स्वरूपपरिणामाभ्युपगमादविकारत्वश्रुतिर्बाध्यते निरवद्यता च ब्रह्मणः शक्तिपरिणाम इति चेत् केयं शक्तिरुच्यते किं ब्रह्मपरिणामरूपा.? उत ब्रह्मणोऽनन्या काऽपीति, उभयपक्षेऽपि स्वरूपपरिणामोऽवर्जनीय एव ॥

तृतीयेऽपि पक्षे जीवब्रह्मणोर्भेदवदभेदस्य चाभ्युपगमात् तस्य च तद्भावात् सौभरिभेदवच्च स्वावतारभेदवच्च सर्वस्येश्वरभेदत्वात् ।

अथ यादवप्रकाशमतं निरस्यति तृतीयेऽपीत्यादिना, भास्कर—यादवप्रकाशाभ्यां स्वाभिमतार्थसाधकप्रमाणसिद्ध्यर्थं बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं च प्रपञ्चस्य पारमार्थ्यमभ्युपेतं तत्र मुक्तावभेदश्रुतेर्भेदस्यौपाधिकत्वमभेदस्य स्वाभाविकत्वं च जीवब्रह्मणोरभ्युपेतम् । अचिद्ब्रह्मणोस्तु सर्वस्य ब्रह्मात्मकत्वश्रुतेर्निर्मलत्वादिश्रुतेरुपाध्यन्तराभ्युपगमेऽनवस्थानाच्च भेदाभेदौ स्वाभाविकावभ्युपगतौ भास्करमते ॥ यादवप्रकाशमते तु मुक्तावपि भेदनिर्देशश्रुतेर्जीवब्रह्मणोश्च भेदाभेदौ स्वाभाविकावभिमताविति भिदा । तत्र भास्करमतप्रतिक्षेपानन्तरं यादवप्रकाशमतं निरस्यते तृतीयेऽपीति, तस्य च तद्भावात्—ब्रह्मणो जीवभावात्, एकजीवभेदस्य सौभरिदृष्टान्तः, ईश्वरभेदस्य स्वावतारदृष्टान्तः, न हि सौभरिशरीरभेदात् जीवभेदः, न च नृसिंहवामनादीनामनीश्वरत्वं यथा त्वन्मते भेदश्रुतिमुख्यार्थापरित्यागेन स्वाभाविकभेदाभ्युपगमात् ब्रह्मणि जीवगतदोषाद्यस्पर्शः तथाऽस्माभिरपि स्वाभाविकोभेदोऽभ्युपगतः । न त्वाविद्यक औपाधिको वेत्यस्मत्पक्षेऽपि न कश्चिद्दोषः । अभेदश्रुतेरपि मुख्यार्थस्वीकारे यो दोषः त्वयाऽऽपाद्यते स त्वत्पक्षेऽपि तुल्यः अभेदश्रुतिमुख्यार्थस्य

सर्वे जीवगता दोषास्तस्यैव स्युः । एतदुक्तं भवति ईश्वरः स्वरूपेणैव सुरनरतिर्यक्स्थावरादिभेदेनावस्थित इति—

त्वत्पक्षेऽपि स्वीकृतत्वात् । तस्मादस्मान्प्रति अयं दोष आपादयितुं न युज्यते । किञ्च चिदचिदीश्वरा ब्रह्मांशभूताः ब्रह्म तु तदंशि तस्माद्यथा मृदंशभूतघटशरावादीनामन्योन्यगुणदोषासङ्करः । एवं ब्रह्मांशभूतयोर्जीवेश्वरयोरपि गुणदोषासङ्कर इति शङ्कायामाह एवदुक्तमिति,

ईश्वरः स्वरूपेणैवेत्यनेन ईश्वरस्य ब्रह्मांशत्वं निरस्तं भवति, जगत्कारणत्वं ब्रह्मलक्षणं कारणवाक्यानि च सदेव सोम्येदमग्र आसीत् ब्रह्म वा इदमेकमेवाग्र आसीत् आत्मा वा इदमेक एवाग्र आसीत्, एको ह वै नारायण आसीत् विष्णुस्तदासीद्धरिरेव निष्कलः, तमीश्वराणां परमं महेश्वरम् इत्यारभ्य स कारणं करणाधिपाधिप इत्यादीनि ऐककण्ठ्येनेश्वरस्य जगत्कारणत्वं वदन्ति । ईश्वरस्य च न तत्समश्चाभ्यधिकश्च दृश्यते इति समाभ्यधिकराहित्यं च श्रूयते । तच्चेश्वरस्य ब्रह्मांशत्वे तु न घटते, अशार्द्रंशिनोऽधिकत्वेनेश्वरादप्यधिकस्य सम्भवात्, तस्मात् समाभ्यधिकराहित्यात् जगत्कारणत्वाच्चेश्वर एव ब्रह्मेतीश्वरस्य ब्रह्मांशत्वमनुपपन्नमित्यभिप्रायेण ईश्वरः स्वरूपेणेत्युक्तं, न हि त्वयाऽस्मन्मत इवात्मशरीरभावेन तादात्म्यं वर्ण्यते अपि त्वीश्वरः स्वरूपेणैव सुरनरादिरूपेण स्थित इति हि तादात्म्यं वर्ण्यते

**हि तदात्मकत्ववर्णनं क्रियते, तथा सत्येकमृत्पिण्डारब्धघटशरावादिगतान्युदकाहरणादीनि सर्वकार्य्याणि यथा तस्यैव भवन्ति, एवं सर्वजीवगतसुखदुःखादिसर्वमीश्वरगतमेव स्यादिति घटशरावादिसंस्थानानुपयुक्तमृद्द्रव्यं यथा कार्य्यान्तरानन्वितम् एवमेव सुरपशुमनुजादिजीवत्वानुपयुक्तेश्वरः**

तथा सति मृत्पिण्डारब्धघटादिगतोदकाहरणादिकार्य्याणि यथा मृत्पिण्डस्यैव भवन्ति, एवं सर्वजीवगतसर्वसुखदुःखभागीश्वरः स्यादित्यर्थः । पुनः परमतं शङ्कते घटशरावादीति, यद्यपि कार्यत्वेनोपयुक्तमृदंशस्पर्शि घटादिगतोदकाहरणादि भवति तथाऽपि कार्यत्वेनानुपयुक्तमृदंशान्तरस्पर्शि न भवति तथा जीवत्वानुपयुक्तेश्वरांशे जीवगतदोषा न प्रसजन्तीत्यर्थः । परिहरति सत्यमिति, तथाऽप्यंशिन एकत्वादीश्वरस्यैव दोषः प्रसजतीत्यर्थः । जीवेश्वरांशयोर्व्यवस्थितत्वाज्जीवगतदोषो नेश्वरस्पृगिति शङ्कते द्वावंशाविति, दूषयति क इति, ईश्वरस्य चेतनत्वेन

स्वांशजीवगतमर्वदुःखप्रतिसंधातृत्वादंशान्तरेण सुखित्वं नेश्वरत्वाय भवतीत्यर्थः । तत्र दृष्टान्तमाह यथेति, ऐहिकाल्पसुखस्य मोक्षसुखस्य च स्थाने चन्दनानुलेपः केयूराद्यलङ्कारश्च, ऐहिकाल्पदुःखनारकानन्तदुःखस्थाने मुद्गराभिहतिकालाग्निप्रवेशौ । भेदाभेदपक्षस्य पापीयस्त्वमुपपादयति

**सर्वज्ञस्सत्यसङ्कल्पत्वादिकल्याणगुणाकर इति चेत् सत्यं, स एवेश्वर एकेनांशेन कल्याणगुणाकरः स एवान्येनांशेन हेयगुणाकर इत्युक्तं द्वयोरंशयोरीश्वरत्वाविशेषात् । द्वावंशौ व्यवस्थिताविति चेत् कस्तेन लाभः, एकस्यैवैकेनांशेन नित्यदुःखित्वादंशान्तरेण सुखित्वमपि नेश्वरत्वाय कल्पते, यथा देवदत्तस्यैकस्मिन् हस्ते चन्दनपङ्कानुलेपः केयूरकटकाङ्गुलीयालङ्कारस्तस्यैवान्यस्मिन् हस्ते मुद्गराभिघातः कालानलज्वालानुप्रवेशश्च तद्वदेवेश्वरस्य स्यादिति ब्रह्माज्ञानपक्षादपि पापीयानयं भेदाभेदपक्षः, अपरिमितदुःखस्य पारमार्थिकत्वात् ।**

अपरिमितेति, औपाधिकभेदाभेदवादिनोऽपि तुल्यमिदं पापीयस्त्वं ततोऽप्याधिक्यबुद्ध्या पश्चात्तनत्वादत्रेदं दूषणमुक्तम् । अगत्या परेण विलक्षणत्वाभ्युपगमं शङ्कते तस्मादिति, । अभ्युपगमेन प्रतिपत्तिं दूषयति अगतोऽसीति, अपसिद्धान्तप्रसङ्ग इत्यर्थः । भवत्पक्षे त्वभेदश्रुतेरमुख्यार्थः स्यात् मुख्यार्थस्वीकारे उक्तदोषापातः स्यादिति शङ्कायां तत्परिहर्तुं स्वरूपेण तादात्म्यवर्णनेन तं दोषमनुमन्यते ईश्वरस्येति, । तर्हि कथं भवता तादात्म्यं वर्ण्यत इत्यत्राह आत्मेति, न केवलं दोषाभावो मङ्गलगुणसिद्धिरित्याह प्रत्युतेति, आदि-शब्देन धारकत्वशेषित्वाद्युच्यते तर्हि मुख्यत्वं स्यादित्यत्राह सामानाधिकरण्यं चेति, एवं श्रुतेर्जीवब्रह्मणोर्भेदाभेदपरत्वं दूषितम् ॥

त्यस्य स्वतन्त्रत्वे राज्ञस्तचापहीयते । एवमेव परस्यापि जीवस्वातन्त्र्य-दायिनः । न स्वातन्त्र्यं पराधीनस्वरूपात्प्रच्युतं भवेत्स्वातन्त्र्यदायिना पुंसा तत्प्रवृत्त्यनिवारणात्" ॥ अतो जीवानां स्वातन्त्र्यं, विधिनिषेधशास्त्र-साफल्यं, परमात्मनः सर्वकारणत्वं, सर्वफलप्रदत्वं, निरङ्कुशस्वातन्त्र्यवत्त्वम्, अवस्थात्रयवैषम्यं, दयादिगुणानां, विषयवत्त्वं, वैषम्यनैर्घृण्यपरिहारश्चेति सर्वमुपपन्नम्.॥ जीवेन स्वरूपैक्यमभ्युपगच्छतां सर्वेषां सर्वज्ञतया स्वानन्य-त्वेन जीवान् जानत ईश्वरस्य सर्वप्रवृत्तिष्वनुमन्तृत्वे हिताकरणाहित-करणदोषप्रसक्तिरनिवार्या । अत इदमधिकरणं विरुद्धम् । ननु जगत ईश्वरश-रीरत्वपक्षेऽपि हिताकरणादिदोषः प्रसजेत् न शरीरगतदोषाणां शरीरिण्य-प्रसङ्गेन जीवगतदुःखानां परमात्मन्यप्रसङ्गात् ॥ परायत्ताधिकरणं समाप्तम् ॥

अंशाधिकरणम् । **सू० अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥**

मू० जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम्, इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः ? उत परमेव ब्रह्म भ्रान्तम् ? उत ब्रह्मैवोपाध्यवच्छिन्नम् ? अथ ब्रह्मांश ? इति संशय्यते, श्रुतिविप्रतिपत्तेः संशयः । ननु तदनन्यत्वमारम्भण–शब्दादिभ्यः । अधिकं तु भेदनिर्देशादित्यत्रैवायमर्थो निर्णीतः सत्यं, स एव नानात्वैकत्वश्रुतिविप्रतिपत्त्याऽऽक्षिप्य जीवस्य ब्रह्मांशत्वोपपादनेन विशेषतो निर्णीयते, यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतं तावज्जीवस्य ब्रह्मणोऽनन्यत्वं ब्रह्मणस्तस्मादधिकत्वं च न प्रतितिष्ठति, किं तावत्प्राप्तम् अत्यन्तभिन्न इति, कुतः, ज्ञाज्ञौ द्वावजावीशनीशावित्यादिना भेदनिर्देशात्, ज्ञाज्ञयोरभेद-

अनयत्वग्निना स्विन्नेदितिवत् विरुद्धार्थप्रतिपादनादौपचारिकः । ब्रह्मणोऽंशो जीव इत्यपि न साधीयः, एकवस्त्वेकदेशवाची ह्यंश-शब्दः, जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः । न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः खण्डनानर्हत्वात् ब्रह्मणः प्रागुक्तप्रदोषप्रसङ्गाच्च । तस्मादत्यन्तभिन्नस्य च तदंशत्वं दुरुपपादम् ॥

टी० सू० अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके, अवान्तरसङ्गतिमाह "जीवस्ये"ति, स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भतमो जीवः कृतप्रयत्नापेक्षया परेणानुमतिदानेन प्रवर्त्यत इत्युक्तं, तर्हि राजभृत्यादिवत्यन्तभेदो जीवपरयोः स्यात्, तस्माद्भेदश्रुतयो नरपतिरेव सर्वलोक इतिवदौपचारिक्य इति शङ्कया सङ्गतिः ॥ अथ ब्रह्मांश इति किं विशेष्यैकदेशरूपांशः? किं विशिष्टैकदेशरूपविशेषणांश? इति विकल्पो गर्भितः, स तु वक्ष्यते। जीवः किं परमात्मनोऽत्यन्तभिन्नः? उतान्यः परमात्मैव उतोपाधिकभेदभिन्नः? उत स्वतो भिन्नाभिन्नः? उत परमात्मनो विशेषणतयांऽश? इति, तदर्थं कस्मिन् पक्षे भिन्नत्वाभिन्नत्वादिविषयसर्वश्रुतिमुख्यत्वमुपपद्यते कस्मिन्चेति, यदा पक्षान्तरेषु तदुपपत्तिस्तदा तेष्वन्यतमः परिग्राह्यः, यदा विशेषणतयांऽशत्वे तदुपपत्तिस्तदा तदेव परिग्राह्यमिति। कः संशयहेतुरित्यत्राह 'श्रुती"ति, वादिविप्रतिपत्तेरपि श्रुतिविप्रतिपत्तिमूलत्वाच्छ्रुतिविप्रतिपत्तिरेवात्र हेतुतयोक्ता । अधिकरणस्य पौनरुक्त्यं शङ्कते "नन्वि"ति, परिहरति "सत्यमि"ति, पूर्वं हि शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वसिद्धवत् कारेण जगद्ब्रह्मणोः शरीरशरीरिभावेनोभयव्यपदेशमुख्यमुपपादितं, तत्र शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधानमयुक्तमाकृत्यधिकरणन्यायाविषयत्वादित्याक्षिप्यांशत्वोपपादनमुखेन शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधानमुपपाद्य तत उभयव्यपदेशमुख्यत्वमिह निर्णीयत इत्यर्थः । किमुभयमुपदेशमुख्यत्वमनन्यत्वविलक्षणत्वनिश्चयश्चांशत्व·

निर्णयसापेक्ष? इत्यत्राह "यावद्वी" ति, अपृथक्सिद्धप्रकारत्वनिर्णयेनोभयव्य-पदेशमुख्यत्वं प्रभाप्रभावतोरिवापृथक्सिद्धांशांशित्वनिर्णयेन जगद्ब्रह्मणोर-नन्यत्वसिद्धिः ॥ विशेषणतयांऽशत्वनिर्णयेन विलक्षणत्वसिद्धिरिति भावः। किं तावदित्यादि, अंशवादिनमत्यन्तभेदवादी दूषयति "ब्रह्मणोंऽश" इति, विशेष्यैकदेशरूपांशपक्षे दूषणमिदम् ॥

सू० यद्वा भ्रान्तं ब्रह्मैव जीवः, कुतः तत्त्वमस्ययमात्मा ब्रह्मेत्यादिब्रह्मात्मभावोपदेशात् । नानात्ववादिन्यस्तु प्रत्यक्षादिसिद्धार्थानुवादित्वादनन्यथासिद्धाऽद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादय इवाविद्यान्तर्गताः ख्याप्यन्ते । अथवा ब्रह्मैवानाद्युपाध्यवच्छिन्नं जीवः, कुतः तत एव ब्रह्मात्मभावोपदेशान्न चायमुपाधिर्भ्रान्तिपरिकल्पित इति वक्तुं शक्यं बन्धमोक्षादिव्यवस्थाऽनुपपत्तेरित्येवं प्राप्तेऽभिधीयते ब्रह्मांश इति, कुतः नानाव्यपदेशादन्यथा च-एकत्वेन व्यपदेशात्, उभयथा हि व्यपदेशो दृश्यते-नानात्वव्यपदेशस्तावत्स्रष्टृत्वसृज्यत्वनियन्तृत्वनियाम्यत्वसर्वज्ञत्वाज्ञत्वस्वाधीनत्वपराधीनत्वशुद्धत्वाशुद्धत्वकल्याणगुणाकरत्वतद्विपरीतत्वपतित्वशेषत्वादिभिर्दृश्यते, अन्यथा चाभेदेन व्यपदेशोऽपि तत्त्वमस्ययमात्मा ब्रह्मेत्यादिभिर्दृश्यते, अपि दाशकितवादित्वमधीयत एके "ब्रह्म दाशा ब्रह्मदासा ब्रह्मेमे कितवाः" इत्याथर्वणिका ब्रह्मणो दाशकितवादित्वमप्यधीयते, ततश्च सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः । एवमुभयव्यपदेशमुख्यत्वसिद्धये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपगन्तव्यः । न च भेदव्यपदेशानां

प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथासिद्धत्वं ब्रह्मसृज्यत्वतन्नियाम्यत्वतच्छरीरत्वतच्छेषत्वतदाधारत्वतत्पाल्यत्वतत्संहार्यत्वतदुपासकत्वतत्प्रसादलभ्यधर्मार्थकाममोक्षरूपपुरुषार्थभोक्तृ[1]त्वादयः तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्यक्षाद्यगोचरत्वेनानन्यथासिद्धः, अतो न जगत्सृष्ट्यादिवादिनीनां प्रमाणान्तरसिद्धभेदानुवादेन मिथ्यार्थोपदेशपरत्वम् ॥

टी० यद्वेति अद्वैते बहुविधतात्पर्यलिङ्गसम्भवात् द्वैतान्यथासिद्धेश्च ब्रह्मैव जीव इत्यर्थः ॥ अथवेति प्रमाणप्रमेयव्यवस्थानुपपत्तिश्च गर्भिता राद्धान्तमाह "एव"मिति, सैत्रोऽपि–शब्दो भेदतात्पर्यं द्योतयति "तत्त्वश्चे"ति, उत्कृष्टेः सामानाधिकरण्ये अभेदस्यौपचारिकत्वशङ्का स्यात् इह तु दाशकितवादिनिकृष्टसामानाधिकरण्यमभेदस्य तात्त्विकत्वं द्योतयतीत्यर्थः । परोक्तान्यथासिद्धिमनूद्य दूषयति "न चे"ति प्रमाणान्तरासिद्धं भ्रममुपदिशतीति चेत्तत्राह–

मू० न चाखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणाऽऽत्मनोऽतद्भावानुसन्धानं बहुभवनसङ्कल्पपूर्वकवियदादिसृष्टिं जीवभावेन तत्प्रवेशं विचित्रनामरूपव्याकरणं तत्कृतानन्तविषयानुभवनिमित्तसुखदुःखभागित्वमभोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्तर्यामित्वं जीवभूतस्य स्वस्य कारणब्रह्मात्मभावानुसन्धानं संसारमोक्षं तदुपदेशशास्त्रं च कुर्वाणेन भ्रमितव्यमित्युपदिश्यते, तथा सति उन्मत्तप्रलपितत्वापातात् । उपाध्यवच्छिन्नं ब्रह्म जीव इत्यपि न साधीयः पूर्वनिर्दिष्टनियन्तृनियाम्यत्वादिव्यपदेशबाधादेव, न हि दे-

१ भाक्त्वादय इति पा० ।

वदत्तादेरेकस्यैव मृद्वाद्युपाधिभेदान्नियन्तृनियाम्यभावादिसिद्धि', उत उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपेत्यम् ॥

टी० "न चाखण्डैकरसे"ति, ब्रह्मणा भ्रमितव्यमित्यन्वयार्थः । प्रमाणान्तरागोचरार्थोपदेशो हि परस्य बोधनार्थः, अतः प्रमाणान्तरगोचरं वदन् हि वेदस्त्वमेवं विद्धीति बोधयति । तस्मादपरमार्थभ्रममुपदिशता वेदेन ब्रह्मणा भ्रमितव्यमित्युक्तं भवति । न च तद्युक्तमित्यर्थः । कुत इत्यत्राह "तथा सती"ति, भ्रमनिवृत्त्या लोकोज्जीवनप्रवृत्तेन वेदेनाधिकभ्रमान्तरापादनं व्याहतमित्यर्थः, अभेदस्याप्यन्यथासिद्धिस्तुल्या सोऽयं देवदत्त इत्यादिषु तस्य सिद्धत्वात्, न जीवब्रह्मणोरभेदः प्रत्यक्षसिद्ध इति चेत्तर्हि जीवब्रह्मणोर्नियाम्यत्वनियन्तृत्वादिलक्षणभेदोऽपि प्रत्यक्षागोचर इत्यनन्यथासिद्धिः, तथाऽप्यभेदश्रुतिविरोधात् भेदश्रुतिर्बाध्यत इति चेत् भेदश्रुतिविरोधादभेदश्रुतिर्बाध्येत अपच्छेदनयात् भेदश्रुतिबाधश्चेत्र अनियतविरोधपौर्वापर्य्यविषयोऽपच्छेदन्यायोनियतविरोधपौर्वापर्येषु न हि प्रवर्तते, विरोधाधिकरणन्यायात्पूर्वमेव प्रबलमिति पुरस्तादेवोक्तमिति भावः । सत्योपाध्यवच्छिन्नब्रह्मजीवपक्षं दूषयति 'उपाधिवच्छिन्नमित्यादिना,

## सू० मन्त्रवर्णात् ॥ ४३ ॥

भा० "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी"ति मन्त्रवर्णाच्च ब्रह्मांशो जीवः, अंशवाची हि पाद–शब्दः विश्वाभूतानीति जीवानां बहुत्वाद् बहुवचनं मन्त्रे, सूत्रेऽप्यंश इत्येकवचनं जात्यभिप्रायं नात्मा श्रुतेरित्यत्राप्येकवचनं जात्यभिप्रायं "नित्योनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामा"नित्यादिश्रुतिभ्यः ईश्वराद्भेदस्या-

त्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात्, एवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपि भेदकाकार आत्मायथात्म्यवेदनक्षमैरवगम्यते, असन्ततेश्चाव्यतिकर इत्यनन्तरमेव च आत्मबहुत्वं वक्ष्यति ॥

## सू० अपि स्मर्य्यते ॥ ४४ ॥

"ममैवांशो जीवलोके जीवभूतः सनातन" इति जीवस्य पुरुषोत्तमांशत्वं स्मर्यते, अतश्चायमंशः ।

अंशत्वेऽपि जीवस्य ब्रह्मैकदेशत्वेन जीवगता दोषा ब्रह्मण एवेत्याशङ्क्याह—

## सू० प्रकाशादिवत्तु नैवं परः ४५ ॥

तु-शब्दश्चोद्यं व्यावर्तयति प्रकाशादिवज्जीवः परमात्मनोंऽशः यथा ऽग्न्यादित्यादेर्भास्वतो भारूपः प्रकाशोंऽशो भवति यथा गवाश्वशुक्लकृष्णादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादीनि विशेषणान्यंशाः ।

टी० सू· मन्त्रवर्णात्, उभयव्यपदेशमुख्यत्वसिद्धिरूपश्रुत्यर्थापत्त्यांशत्वं कल्पितं पूर्वसूत्रे अंशत्वं कण्ठोक्तमित्यत्रोच्यते अंशवाचीत्यादि, नित्यो नित्यानामित्यादिश्रुतिर्यद्वाऽऽग्नेयोऽष्टाकपाल इतिवद्विशिष्टविधिपरा "तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थेन चेदन्येन शिष्टा" इति न्यायात्, जीवानां परस्परभेदस्य लोकसिद्धत्वान्न तत्तच्छास्त्रप्रतिपाद्यमिति चेत् भेदस्य स्वाभाविकत्वमलौकिकं तस्मान्नित्यानामेव बहुत्वं शास्त्रैकसमधिगम्यमिति जीवानां स्वाभाविकभेदः शास्त्रप्रतिपाद्य एवेति । नित्यो नित्यानामिति वाक्यस्यार्थं हेतुतयाऽऽह "ईश्वरा"विति, एवं भेदनि·

त्यत्वे मुक्तौ देवादिभेदकाकाराभावात् कथं भेदो ज्ञायत इत्यत्राह "एवं नित्याना"मिति, ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपित्यनेन जीवाद्वैतपरवाक्यानामाकारैक्यपरत्वं दर्शितं, प्रत्यक्त्वेन पराक्त्वेन च भेदो गृह्यत इत्यर्थः ॥ अयमर्थः सोऽत्र इत्याह "असन्तते"रिति, सू० अपि स्मर्यते, तत्रैवानन्तरोक्तं पुरुषोत्तमशब्दनिर्वचनं, तेन तरातरवैलक्षण्यमंशशब्दार्थस्य तदनुरोधेन वक्तव्यत्वं चाभिप्रेत्य पुरुषोत्तमांशत्वमित्युक्तम् । अनन्तरसूत्रशङ्कामाह "अंशत्वेऽपी"ति, सू० प्रकाशादिवत्तु नैवं परः, आदिशब्दोपात्तमाह "गवाश्वे"ति, द्रव्ययोरपृथक्सिद्धविशेषणविशेष्यभूतयोरंशांशित्वं वदता द्रव्ययोः शरीरात्मनोरप्यंशांशित्वमुक्तं भवतीत्यभिप्रायेणाह—

भू० यथा वा देहिनो देवमनुष्यादेर्देहोऽयमस्त्वदेव वस्त्वेकदेशत्वं ह्यंशत्वं विशिष्टस्यैकस्य वस्तुनो विशेषणमंश एव, तथा च विवेचका विशिष्टवस्तुनि विशेषणांशोऽयं विशेष्यांशोऽयमिति व्यपदिशन्ति विशेषणविशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते, एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यते, तदिदमुच्यते नैवं पर इति, यथाभूतो जीवस्तथा भूतो न परः, यथैव हि प्रभायाः प्रभावानन्यथाभूतः तथा प्रभास्थानियात्स्वांशाज्जीवादंशी परोऽप्यर्थान्तरभूत इत्यर्थः । एवं जीवपरयोर्विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्त्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वे नोपपद्यन्ते तत्त्वमस्ययमात्मा ब्रह्मेत्यादिषु तच्छब्दब्रह्मशब्दवत्त्वमयमा-

त्मेति शब्दा अपि जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायित्वादित्ययमर्थः प्रागेव प्रपञ्चितः ॥

टी० "यथा वा देहिन" इति प्रकाशादीनामंशत्वं कथमिति शङ्कायामंशस्वरूपं शिक्षयति "एकवस्त्व"ति, तादृशांशत्वं विशेषणविशेष्ययोरपि विशेषणस्यास्तीत्याह "विशिष्टस्यैकस्ये"ति, तदेव वृद्धव्यवहारेण दृढयति "तथा चे"ति, । ततः किं प्रस्तुतदोषस्य शङ्काऽपनुत्तये इत्यत्राह "विशेषणविशेष्ययो"रिति, बहुलत्वसङ्कुचितत्वविरलत्वविस्तृत्वादिस्वभाववैलक्षण्यं दृश्यत इत्यर्थः । दृष्टान्ते शिक्षितं वैलक्षण्यं दार्ष्टान्तिके दर्शयति "एवमि"ति, उक्तार्थपरत्वेन सूत्रखण्डमवतारयति "तदिद"मिति, वाचकत्वप्रकारमाह "यथाभूत" इति, । तदेव विवृण्वन् सूत्रस्य वाक्यार्थमाह "यथैवेही"ति, तेनोभयव्यपदेशमुख्यत्वसिद्धिमाह "एवमि"ति, प्रकाशादिष्वपि विशेषण्यन्ताभिधानं दृश्यते यथा भानुर्भानुमान् ज्योतिर्ज्योतिष्मान् तेजस्तेजस्वीत्यादि । तदेव पते दर्शयति "तत्त्वमसी"ति, तत्त्वमसीत्यारभ्य त्वमयमात्मेति शब्दा अपीत्यन्तं प्रतिज्ञावाक्यं, त्वम् अयमात्मेति शब्दा अपि तच्छब्दब्रह्मशब्दतुल्यार्था इत्यर्थः । जीवशरीरकेत्यादिना हेतुरुच्यते । प्रागेव प्रपञ्चित इति अत्रैव वक्तव्यं सूत्राभिप्रेतं एवं पूर्वमुक्तमित्यर्थः । सू· स्मरन्ति च, अपि स्मर्य्यते सूत्रेऽशत्वमात्रे स्मृतिवचनमुक्तम् । अस्मिन्सूत्रे विशिष्टैकदेशविशेषणरूपांशत्वेऽपि स्मृतिवचनमुच्यत इति भिदा । तदेतदभिप्रेत्याह–

## सू० स्मरन्ति ॥ च ४६ ॥

भू० एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन चांशांशिभावं जगद्ब्रह्मणोः पराशरादयः स्मरन्ति "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज ! तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनु."

इत्यादिना, चकाराच्छ्रुतयोऽपि यस्यात्मा शरीरमित्यादिनाऽऽत्मशरीरभावेनांशांशित्वं वदन्तीत्युच्यते, एवं ब्रह्मणोंऽशत्वे ब्रह्मप्रवर्त्त्यत्वे ज्ञत्वे च सर्वेषां समाने केषाञ्चिद्वेदाध्ययनतदर्थानुष्ठानाद्यनुज्ञा केषाञ्चित्तत्परिहारः केषाञ्चिद्दर्शनस्पर्शनाद्यनुज्ञा केषाञ्चित्तत्परिहारश्च शास्त्रेषु कथमुपपद्यते इत्याशङ्काह—

**सू० अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४७ ॥**

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे सत्यपि ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपशुच्यशुचिदेहसम्बन्धनिबन्धनावनुज्ञापरिहारावुपपद्येते ज्योतिरादिवद्यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि श्रोत्रियागारादग्निराह्रियते श्मशानादेस्तु परिह्रियते, यथा चान्नादि श्रोत्रियादेरनुज्ञायते अभिशस्तादेस्तु परिह्रियते ॥

**सू० असन्ततेश्चाव्यतिकरः ॥ ४८ ॥**

ब्रह्मांशत्वादिनैकरूपत्व सत्यपि जीवानामन्योन्यभेदादणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगव्यतिकरोऽपि न सम्भवति ।"

टी० "एव"मिति, । चार्थमाह "चकारा"दिति, श्रुतिस्मृतिवचनयोर्द्वयोरपि वक्तव्यत्वे सति दृष्टान्तोपादानमुखेन विशदीकारातिशयात्स्मृतिवचनं सूत्रे कण्ठोक्तम् । अनन्तरसूत्रशङ्कामाह "एव"मिति, अंशत्व इत्येतदधिकरणार्थः । ब्रह्म प्रवर्त्यत्व इति पूर्वाधिकरणार्थः । ज्ञत्व इति तत्पूर्वाधिकरणार्थश्चोक्तः । सू० अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादि-

वत्, आदि-शब्दार्थमाह "तथा चे"ति, सू० असन्ततेश्चाव्यतिकरः, समन्तात्ततिस्संततिः विभुत्वं तदभावेऽसन्ततिः अणुत्वम्, अन्योन्यभेदादिति च-शब्दसमुच्चितो हेतुर्दर्शितः । सूत्राभिप्रायमाह—

सू० भ्रान्तब्रह्मजीववादे चोपाधिकब्रह्मजीववादे च जीवपरयोर्जीवानां च भोगव्यतिकरादयः सर्वे दोषास्सन्तीत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः ॥

ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदाद्भोगव्यवस्थादय उपपद्यन्ते तत्राह—

## सू० आभास एव च ॥ ४९ ॥

अखण्डैकरसप्रकाशमात्रस्वरूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव, प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोपपादितम् । आभासा एवेति वा पाठः तथा सति हेतव आभासाः चकारात्पृथगात्मानं प्रेरितारं च मत्वा ज्ञाज्ञौ द्वावजावीशानीशौ तयोरन्यः पिप्पलं स्वाद्वत्तीत्यादिश्रुतिविरोधश्च । अविद्यापरिकल्पितोपाधिभेदे हि सर्वोपाधिभिरुपहितस्वरूपस्यैकत्वाभ्युपगमाद्भोगव्यतिकरस्तदवस्थ एव, पारमार्थिकोपाध्युपहितब्रह्मजीववादे उपाधिभेदहेतुभूतानाद्यदृष्टव्यवस्था भविष्यतीत्याशङ्क्याह—

## सू० अदृष्टानियमात् च ॥ ५० ॥

उपाधिपरम्पराहेतुभूतस्याद्दृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्थैव, उपाधिभिरदृष्टैश्च सम्बन्धेन ब्रह्मस्वरूपच्छेदासम्भवात् ॥

## सू० अभिसन्ध्यादिष्वपि चैवम् ॥ ५१ ॥

अदृष्टहेतुभूताभिसन्ध्यादिष्वपि उक्तादेव हेतोरनियम एव ॥

टी० भ्रान्तरूपे"ति, परपदे भोगव्यवस्थाऽनुपपत्तिरभिप्रेतेत्यर्थः अविद्यादेराश्रयभेदाभावात्तदनुपपत्तिः "नानाऽऽत्मानो व्यवस्थात" इति न्यायसूत्रं किं सुखादीनां स्वरूपभेदो व्यवस्था? उताश्रयभेदः,? न प्रथमः, आश्रयभेदानापादकत्वात्, न द्वितीयः, हेतोः साध्याविशिष्टत्वादिति केश्चिदुच्यते, तत्र प्रतिसन्धानाभावरूपाऽव्यवस्थेत्यभिप्रेतत्वात्, तिरस्कारकाभावे सति प्रतिसन्धानमात्मैक्यव्यापकम्, तिरस्कारकाभावेऽप्यप्रतिसन्धानादात्मैक्यनिवृत्तिरित्यर्थः । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, सू० आभास एव च, उपाधिभेदाद्व्यवस्थेत्यत्राह "अविद्ये"ति, तिरोधानाद्येव नोपपद्यते, उपपन्नेऽपि व्यवस्था नोपपद्यत इत्यर्थः । अनन्तरसूत्रशङ्कामाह "पारमार्थिके"ति, इदमप्याशङ्क्याहेत्यपि-शब्दार्थः सू० अदृष्टानियमात्, प्रदेशभेदोऽस्तीत्यत्राह "उपाधिभि"रिति, उपाध्याश्रयस्यैकत्वात्तस्य चाच्छेद्यत्वाद्व्यवस्थाऽनुपपत्तिरित्यर्थः । सू० अभिसन्ध्यादिष्वपि चैवम्, च-शब्दोऽवधारणे एवमेवेत्यर्थः । अभिसन्धिः-सङ्कल्पः आदि-शब्दाद्योगानुष्ठानादिकं विवक्षितम् । उक्तादेवेति अच्छेद्यत्वात् सर्वप्रदेशानां ब्रह्मस्वरूपभूतप्रदेशत्वादेवेत्यर्थः ॥

## सू० प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ५२ ॥

भू० यद्यप्येकमेव ब्रह्मस्वरूपं तच्छेदानर्हं नानाविधोपाधिभिः सम्बध्यते तथाऽप्युपाधिसम्बन्धिब्रह्मप्रदेशभेदादुपपद्यत एव भोगव्यवस्थेति चेत्तन्न उपाधीनां तत्र तत्र गमनात्सर्वप्रदेशानां सर्वोपाध्यन्तर्भावाद्व्यतिकरस्तदवस्थ एव, प्रदेशभेदेन सम्बन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात्तत्प्रदेशसम्बन्धिदुःखं ब्रह्मण एव स्यात्पूर्वं च नित्योपलब्ध्यनु-

पलब्धिप्रसङ्गोऽन्यतरानियमो वाऽन्यथा" "उपलब्धिवदनियम इति द्वाभ्यां सूत्राभ्यां वेदबाह्यानां सर्वगतजीववादिनां दोष उक्तः । अत्र त्वाभास एव चेत्यादिभिः सूत्रैर्वेदावलम्बिनामात्मैकत्ववादिनां दोष उच्यते ॥ अंशाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

टी० सू॰ प्रदेशादिति चेन्नान्तर्भावात् जीवानामन्योन्यभेदव्यतिकरमाह "उपाधीना"मिति,। एतेषां भोगादयो ब्रह्मणि स्युरित्याह "प्रदेशभेदेने"ति, जीवेश्वरव्यतिकर उक्तो भवति, असन्ततेश्चेत्यादिसूत्राणां सांख्यादिव्युदासपरत्वं परोक्तं पौनरुक्त्येन दूषयति "पूर्वत्रेत्यादिना, परे तु पूर्वाधिकरणे कारयितृत्वश्रुत्यादिभिर्जीवस्य परायत्तप्रवृत्तित्वे सिद्धे जीवेश्वरसम्बन्धनिरूपणपरमधिकरणं वर्णयन्ति, तन्मतेंऽशांशिभावोऽनुपपन्नः, जीवेश्वरयोरुभयोरपि सन्मात्रब्रह्मण्यविद्याकल्पितत्वात्, रज्जुकल्पितयोः सर्पभूदलनयोरिव मिथोंऽशांशिभावानुपपत्तेः, तयोर्निहीनोत्कृष्टोपाधिपरिकल्पितत्वेऽपि वृहदल्पघटयोरिवाशांशिभावो न घटते, अत एव पादोऽस्येति श्रुतिः, ममैवांश इति स्मृतिश्च न सङ्गच्छते, तयोः सहस्रशीर्षत्वादिगुणकमहापुरुषविषयत्वात्, अस्य ममेति पदयोर्निर्विशेषपरत्वे लक्षणा, निर्विशेषचिन्मात्रस्यापि न जीवं प्रत्यंशित्वं युक्तं स्थाणावध्यस्तं पुरुषं प्रति स्थाणोरंशित्वप्रसिद्ध्यभावाद्, ग्रन्थविरोधश्च जीवेश्वरसम्बन्धनिरूपणपरत्वाभ्युपगमात्, श्रुतिस्मृतिसूत्रस्वारस्यविरोधश्च अंशइवांश इति अंश-शब्दोऽप्यमुख्य इति चेन् मुख्ये सम्भवत्यमुख्यत्वमेव दोषः, नानात्वैकत्वव्यपदेशाभ्यां समर्थनीयमंशत्वं च कस्य, न तावदुपाधेस्तस्यापारमार्थिकस्यैक्यायोगात्, न चोपाध्युपलक्षितब्रह्मणः, तस्याभिन्नतया नानात्वाभावात्, नाप्युपाधिविशिष्टस्य, तस्य स्वात्मानं प्रत्यंशत्वानुपपत्तेः, नाप्यनुपहितस्व-

रूपं प्रत्युपहितस्वरूपस्यांशत्वंवस्तुनिस्वतोऽशभेदाभावेन उपहितानुपहित-विभागानुपपत्तेः, कृत्स्नमुपहितमनुपहितं वा स्यात्, न चाधिष्ठानं प्रत्यध्यस्त-स्यांशत्वम् अधिष्ठानमात्रस्यांशित्वं स्थाणोरिवानुपपन्नमिति ह्युक्तं जीवेश्व-रयोर्वस्तुतोभेदाभावेन जीवगतदुःखेनेश्वरस्य दुःखित्वमाशङ्क्य प्रकाशादिव-दिति सूत्रमालोकाकाशरविमण्डलेष्वङ्गुलि–घट–करक–तरङ्गादिगतैर्ह्रस्व-त्व–महत्त्व–गमना–गमन–कम्पादिभिरस्पृष्टत्ववज्जीवदुःखैरीश्वरस्यास्पर्श इति परिहारपरं व्याख्यातं, तच्चायुक्तम् ईश्वरस्य सर्वज्ञत्वाभ्युपगमात्, सर्वान् जीवानात्मनोऽनन्यत्वेन जानतस्तस्य जीवगतदुःखाकारेण दुःखिताया दुर्नि-वारत्वात्, स्वगतत्वेन दुःखसाक्षात्कर्तृत्वं हि दुःखित्वं, दुःखं मिथ्याभूत-मिति चेत् जीवस्यापि तन्मिथ्येति जीवतुल्यत्वं स्यात्, ईश्वरो मिथ्यात्वेन जानातीति चेत् श्रुतवेदान्तस्य मुमुक्षोर्बाधितानुवृत्त्याविद्यांस्य शिरस्तोदा-दिवदीश्वरस्य दुःखमवर्जनीयं स्यात्, अनुज्ञापरिहारावहं ममेत्यविद्याकृ-ताभिमानप्रयुक्तौ, एकत्वदर्शिनोऽभिमानरहितस्य न शास्त्रनियोज्यत्वमिति चानुपपन्नमिति विप्राकृतिविचेष्टितं सतां मार्गमदूषयन्नित्यादिभिरादिभरत-पराशरवसिष्ठादीनां शास्त्रानुसारित्वदर्शनात् "स खल्वेवं वर्त्तयन् याव-दायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते" इति ब्रह्मविद एव याव-च्छरीरावसानं शास्त्रवश्यत्वाभ्युपगमाच्च, अयुक्तावस्थायां तुद्रादिपरिहा-र.र्थमोदनादौ व्याप्रियमाणस्य शास्त्रीयानुष्ठानावसरेऽभिमानविरहादन-न्वयस्य वक्तुमशक्यत्वाच्च। सू· असन्ततेश्चाव्यतिकर इति, उपाधीनां सर्वत्र सन्ततत्वाभावात् न तत्तत्सुखादिव्यतिकर इत्युक्तं, तच्चायुक्तं सौभरिप्रभृ-तीनामिवात्मैकत्वे सुखादिव्यतिकरप्रसङ्गात्, सौभरिशरीरेषु नान्तःकरणभेद इति चेत् अणोरन्तःकरणस्य युगपद्बहुशरीरसंसर्गानुपपत्तेः, । ननु परिच्छि-न्नत्वे सत्यनुपलभ्यमानत्वमणुत्वं तच्चैकदा एकशरीरस्यैवानेकशरीरसम्बन्धिन एकस्योपपन्नमिति चेत् न तथा सति जीवगतस्याराग्रमात्रपरिमाणरूपस्याणु-त्वस्यान्तःकरणोपाधिकत्वानुपपत्तेः. सू· आभास इति, परमात्मन आभासः प्रतिविम्बभूतो जीव इत्युक्तं तदप्यचाक्षुषाणां प्रतिविम्बाभावादारम्भणाधि-करणदर्शितैर्दूषणान्तरैश्चानुपपन्नम्। अपरेषां पक्षेऽपि प्रकाशादिवदसन्तते.

श्चेति सूत्रद्वयस्य जीवेश्वरव्यतिकरभोगव्यतिकरपरिहारत्वं न घटते ईश्वरस्य सार्वज्ञ्याभ्युपगमादन्तःकरणभेदेऽपि सौभरिशरीरेष्वात्मैक्ये भोगव्यतिकरदर्शनाच्च, प्रदेशभेदादिति चेदिति एकशरीरावच्छिन्नात्मप्रदेशेऽदृष्टसमवायात् सुखादिसमवायात् व्यवस्था चायुक्ता, एकशरीरे सर्वात्मनां विभूनामन्तर्भावादिति परेषां स्वोक्तदूषणं स्वस्यापि प्राप्नोति उपाधीनां गत्वरतयैकैकोपाधिषु सर्वात्मप्रदेशान्तर्भावात्, अदृष्टस्याप्यनियतत्वेन सुखादिव्यवस्थाऽनुपपत्तेः, ब्रह्मप्रदेशानामुपाधिनाऽवच्छिन्नत्वे तदभावे च समन्वयाधिकरणोक्ता दोषा अनुसन्धेयाः । इहैव हि ते सूत्रकारैर्विवक्षिताः भाष्यकारैस्तु प्रसङ्गात् तत्र दर्शिताः, अत इह तेषामनुपन्यासः असन्ततेश्चेत्यादिसूत्राणि साङ्ख्यादिव्युदासपरत्वेन परैरपरैश्च व्याख्यातानि तदयुक्तं, नित्योपलब्धीत्यादिना पुनरुक्तिप्रसङ्गादित्युक्तं, नित्योपलब्धीत्यादिसूत्रद्वयस्यान्यथाऽर्थवर्णनाऽनुपपत्तिः प्रागेव दर्शिता । अतस्तयोर्यथोक्तार्थपरत्वमवर्जनीयं तथा सति पुनरुक्तिपरिहारायासन्ततेश्चेत्यादिसूत्राणां कुदृष्टिव्युदासकत्वमास्थेयम् । अन्येषामपीदम् अधिकरणं न घटते, नानात्वैकत्वव्यपदेशसाध्यत्वादंशांशिभावस्य, किं सन्मात्रस्य ब्रह्मणोंऽशो जीवः? उत ईश्वरस्य,?, प्रथमे भेदव्यपदेशहेतुर्न सिध्यति सन्मात्रेण जीवस्य भेदव्यपदेशाभावात्, ईश्वरादेव हि भेदं व्यपदिशन्ति श्रुतयः सन्मात्रादन्यत्वे जीवानामसत्त्वं च प्रसजेत् श्रुतिस्मृतिस्वारस्यभङ्गश्च सहस्रशीर्षा पुरुषः उतामृतत्वस्येशानः पादोऽस्य विश्वभूतानि ममैवांशो जीवलोके जीवभूतः सनातन इतीश्वरांशत्वं हि स्वरसतः प्रतीयते । द्वितीये कल्पे भवदभ्युपगमविरोधः, ब्रह्मणोंऽशित्वं भोक्तृभोग्यनियन्तृणामंशत्वमपि हि भवदभिमतं न तु तेषां परस्परांशांशिभावः, नत्वीश्वरांशस्य बृहत्त्वादंशित्वव्यवहारोपपत्तिः बृहति मृत्तिकांशेंऽशित्वव्यवहारदर्शनादिति चेन्न बृहति घटे क्षुद्रघटं प्रत्यंशित्वव्यवहारादर्शनात् तत्सदृशि तच्छब्दस्य गौणतया बृहत्त्वसाधर्म्यंणांशित्व स्यामुख्यत्वाच्च गौणोऽप्यंशित्वव्यवहारो बृहत्युपादानद्रव्येऽवस्थान्तरानापन्न एव भवति न त्ववस्थान्तरप्राप्ते बृहति मृत्पिण्डांशे घटत्वाद्यनापन्न एव ह्यंशित्वव्यवहारः न तु घटत्वेनोपयुक्तोऽपि । एवं बृहतोऽप्यंशः

सन्मात्ररूपत्वेंऽशित्वव्यवहारो घटते। स तु नियन्तृत्वरूपावस्थापन्न इति न तत्र गौणोऽप्यंशित्वव्यवहारो घटते। प्रकाशादिवदिति, सौरचान्द्रादिप्रकाशमणिमन्त्रौषधादीनां दाहकत्वशक्तिमद्भावासद्भावादिस्वभावव्यवस्थावद्दुःखित्वनिर्दुःखित्वादिव्यवस्थोपपत्तिर्जीवेश्वरयोरिति व्याख्यातं तथा सति स्वभावमात्रे दृष्टान्त उपन्यस्तः स्यात्, न त्वंशांशिनोः स्वभावव्यवस्थायां दृष्टान्त उक्तः स्यात्, ततोऽरमंशांशिभावे स्थित एव स्वभावव्यवस्थायां दृष्टान्तोपन्यासः, अंशांशिभावनिबन्धनशङ्कापरिहारपरत्वात्सूत्रस्य समुदायैकदेशत्वमेवांशशब्दनिमित्तम्, अत एव हि दायविभागे गोमहिषभूहिरण्यादिष्वयं ममांशोऽयमस्यांश इति व्यवहारः विशेष्यांश इति व्यवहारादर्शनादीश्वरस्याप्यंशत्वं त्वन्मते प्रसज्यत इति चेन्न, विशिष्टापेक्षया विशेष्येऽप्यंशशब्दव्यवहारेऽपि विशेषणं प्रति प्रधानतयांशिव्यवहारानुपपत्तेः, अप्रधानं विशेषणं प्रति प्रधानतयांऽशित्वव्यवहाराऽनुपपत्तेः तथा व्यवहाराभावश्च प्राधान्यादेव, अत एव गोमहिषाद्यपेक्षयांशित्वव्यवहारः यदा समुदाये प्राधान्यविवक्षा तदा तस्यांशत्वं यदा तदेकदेशान्तरे प्राधान्यविवक्षा तदा तदेकदेशान्तरस्यांशित्वव्यवहारः समुदायस्य प्राधान्यं पौष्कल्यलक्षणं देवदत्तादेः शेषिलक्षणं विशेषस्य त्वाधारत्वादिलक्षणं संयोगलक्षणसम्बन्धे सत्यपि प्राधान्याविवक्षया हि भूतलस्य गोमहिषहेमाद्यंशित्वव्यवहाराभावः, अतः सर्वजीवैरभिन्नत्वं स्वस्य जानत ईश्वरस्यांशभेदे सत्यपि दुःखित्वं भवेद्यथा सौभरेः, सर्वान् जीवान् शरीरत्वेन जानत ईश्वरस्य त्वन्मतेऽपि दुःखित्वं स्यादिति चेन्न रूपत्वाभावात् शरीरगतदुःखं शरीरिणो देवदत्तादेर्दृश्यत इति चेन्न दुःखस्य शरीरगतत्वाभावात्। किं व्रणादिममेव दुःखम्? उत तज्ज्ञानं? प्रथमे व्रणस्यात्मन्यभावाच्च शरीरगतस्य शरीरिगतत्वं द्वितीये शरीरस्य व्रणज्ञानाभावाच्च तद्दुःखस्यात्मगतत्वमित्युभयथापि दृष्टान्तस्य साध्यविकलता, अतो नेश्वरस्यास्मन्मते दुःखित्वादिप्रसङ्गः ॥ अंशाधिकरणं समाप्तम् ॥

इति श्रुतप्रकाशिकायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ द्वितीयाध्याये चतुर्थः पाद आरभ्यते ॥

प्राणोत्पत्त्यधिकरणम् ।

### सू० तथा प्राणाः ॥ १ ॥

भा० ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्य्यत्वेनोत्पत्ता- वुक्तायां जीवस्य कार्य्यत्वेऽपि स्वरूपान्यथाभावलक्षणोत्पत्तिरपोदिता, तत्प्रसङ्गेन जीवस्वरूपं विशोधितं, संप्रति जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते, तत्र किमिन्द्रियाणां कार्य्यत्वं जीववत्? उत वियदादिवदि? ति चिन्त्यते किं युक्तं जीववदेवेत्याह पूर्वपक्षी तथा प्राणा इति, प्राणा इन्द्रियाणि यथा जीवो नोत्पद्यते तथेन्द्रियाण्यपि नोत्पद्यन्ते कुतः श्रुतेः, यथा जीवस्यानुत्पत्तिः श्रुतेरवगम्यते तथा प्राणानामप्यनुत्पत्तिः श्रुतेरेवावगम्यते तथा प्राणा इति प्रमाणमप्यतिदिश्यते ॥

टी० सू० तथा प्राणाः ॥ १ ॥ पादसङ्गतिमाह "ब्रह्मव्यतिरिक्तस्ये"ति, ज्ञातृत्वादिकं निरूपयदधिकरणं प्रसङ्गात्सङ्गतं तस्मात्तत्पूर्वाधिकरणेन पादसङ्गतिरित्यर्थः, जीवोत्पत्तिनिरूपणानन्तरं जीवो[१]करणानामुत्पत्तिप्रकारोऽत्र विशोध्यत इति सङ्गतिः । नन्ववधारणप्रतिज्ञानादिभिः सिद्धान्तश्चेद्वियदादिन्यायेन कृतत्वादनारम्भणीयता नैवं "प्राणा वावर्ष्य" इति श्रुतेरकृतनिर्वाहत्वात्, अत एव हि सिद्धान्तन्यायं प्रागुक्तमभिप्रेत्य तस्य पृथक्सूत्रमनिबध्नन् प्राणविषयश्रुतिनिर्वाहमेव सूत्रकारोऽन्वबध्नात्, किमिन्द्रियाणि जीववन्नोत्पद्यन्ते? उत वियदादिवदुत्पद्यन्त? इति, किमेतस्माज्जायत इति वाक्यं तेषामुत्पत्तिं प्रतिपादयति ने? ति असद्वा इदमित्यादि-

१ जीवोपकरणानामिति पा० ।

वाक्यं सृष्टेः प्रागिन्द्रियसद्भावमवगमयति ने? ति किं प्राण-शब्द इन्द्रियपर? उत परमात्मपरः? प्राणा वावर्षयः इति ऋषि-शब्दः प्राणशब्दस्य परमात्मपरतामवगमयति ने? ति यदा नावगमयति तदा प्राण-शब्दस्येन्द्रियपरत्वेनासद्वा इदमित्यादिवाक्यस्य प्रागिन्द्रियसद्भावावगमकत्वादेतस्मादिति वाक्यस्य तदुत्पत्तिप्रतिपादनासामर्थ्यादिन्द्रियाणि जीववच्चोत्पद्यन्त इति पूर्वः पक्षः, यदाऽवगमयति तदा प्राण-शब्दस्य परमात्मपरत्वेन असद्वा इदमित्यादिवाक्यस्य सृष्टेः प्रागिन्द्रियसद्भावानवगमकत्वादेतस्मादिति वाक्यस्य तदुत्पत्तिप्रतिपादनसामर्थ्येन वियदादिवदिन्द्रियाण्युत्पद्यन्त इति सिद्धान्तः, श्रुत्यवगतत्व कथं सूचितं न हि श्रुतेरिति सूत्र पठ्यते तत् कथमेवमुच्यत? इत्याह "तथा प्राणा" इति, प्रमाणमपीति विवक्षितश्रुतेरस्पष्टत्वादाह-

सू॰ का पुनरत्र श्रुतिः "असद्वा इदमग्र आसीत् तदाहुः किं तदासीदिति ऋषयो वाव तेऽग्रे सदासीत्तदाहुः के ते ऋषय" इति, "प्राणा वाव ऋषय"इति, जगदुत्पत्तेः प्रागिन्द्रियाणां सद्भावः श्रूयते, प्राण-शब्दे बहुवचनादिन्द्रियाण्येवेति निर्णीयते, न चेयं श्रुति"र्वायुश्चान्तरिक्षं चैतदमृतं सैषाऽनस्तमिता देवता यद्वा"युरितिवच्चिरकालावस्थायित्वेन परिणेतुं शक्या, असद्वा इदमग्र आसीदिति कृत्स्नप्रपञ्चप्रलयवेलायामप्यवस्थितत्वश्रवणात् । उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इव नेतव्या इत्येवं प्राप्तेऽभिधीयते वियदादिवदेव प्राणाश्चोत्पद्यन्ते, कुतः सदेव सोम्येदमग्र आसीत् आत्मा वा इदमेक एवाग्रआसीदित्यादिषु प्राक्सृष्टेरेकत्वावधारणात् "एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च"ति इन्द्रियाणाम् उत्पत्तिश्रवणाच्च

प्रागवस्थानासम्भवात् । न चात्मोत्पत्तिवादवदिन्द्रियोत्पत्तिवादाः परिणेतुं शक्याः, आत्मवदुत्पत्तिप्रतिषेधश्रुतीनां नित्यत्वबोधकश्रुतीनां चादर्शनात्, "असद्वा इदमग्र आसीदित्यादिवाक्येऽपि प्राण-शब्देन परमात्मैव निर्दिश्यते "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति प्राण-शब्दस्य परमात्मन्यपि प्रसिद्धेः "प्राणा वाव ऋषय"इति ऋषि-शब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते न त्वचेतनेष्विन्द्रियेषु ॥

ऋषयः प्राणा इति च बहुवचनश्रुतिः कथमुपपद्यत इति चेत्तत्राह—

## सू० गौण्यसम्भवात्तत्प्राक् श्रुतेश्च ॥ २ ॥

बहुवचनश्रुतिर्गौणी बह्वर्थासम्भवात्तस्यैव परमात्मनः सृष्टेः प्रागवस्थानश्रुतेरेव ॥

टी० "का पुनरि"ति, अत एव प्राण इत्यादिषु प्राण-शब्दः परमात्मवाचको दृष्ट इत्यत्राह "प्राण-शब्दे बहुवचना"दिति, एवं प्राप्त इति, अनेककारणवाक्यगतैकत्वावधारणस्वारस्याद् ऋषि-शब्दस्य द्रष्टरि स्वारस्येन दर्शनकरणे स्वारस्याभावात् च एतस्माज्जायत इति वाक्ये खादीनां मुख्यार्थेन जनिधातुना प्राणस्योत्पत्तिवचनस्वारस्यादुत्पत्त्यादिनिषेधनित्यत्ववचनाभावात् प्राण-शब्दस्य परमात्मनि प्रयोगसद्भावाच्च परमात्मैवोच्यत इत्यर्थः। अनन्तरसूत्रस्य बहुवचनमात्रनिर्वाहपरत्वेनान्यत्सिद्धान्तयुक्तिजातमर्थसिद्धमिति सूत्रकाराभिप्राय इति तदभिप्रेतं सर्वं स्वयमेवोक्तवान् वियदादीत्यादिना, ॥ अनन्तरसूत्रशङ्कामाह "ऋषय"इति, सू॰ गौण्यसम्भवात् तत्प्राक् श्रुतेश्च, ॥ २ ॥ बह्वर्थासम्भवमुपपादयति "तस्यैवे"ति, एवकारेण सूत्रस्थश्च-शब्दो व्याख्यातः ॥

## सू० तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

मू० इतश्च प्राण–शब्दः परमात्मवचनः वाचः परमात्मव्यतिरिक्तविषयस्य नामधेयस्य वाग्विषयभूतवियदादिसृष्टिपूर्वकत्वात् "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इति नामरूपभाजामभावात् तदानीं वागादीन्द्रियकार्य्याभावाच्च तानि न सन्तीत्यर्थः ॥ प्राणोत्पत्त्यधिकरणं समाप्तम् ॥

टी० सू० तत्पूर्वकत्वाद्वाचः, ॥ ३ ॥ आत्मा ह्यदृष्टसंस्कारस्थितिकार्य्यदर्शनात्तदानीं कल्प्यते, एवमिन्द्रियकार्य्यं तदा दृश्यते चेन्द्रियाण्यपि कल्प्येरन्, न च तदित्याह इतश्चेत्यादि, उक्तार्थे श्रुतिवाक्यं दर्शयन् फलितमर्थमाह "तद्धेद"मिति, वाक्कार्य्यमुच्चारणं श्रोत्रकार्यं श्रवणम्, एवं तत्तत्कर्मज्ञानेन्द्रियविषयाभावात् तत्तदिन्द्रियकार्य्यं नोपपद्यत इति न तदानीं कार्य्यकल्प्यानीन्द्रियाणीत्यर्थः ॥ परैस्तु पूर्वाधिकरणोक्तस्य सर्वगतबह्वात्मवाददोषस्य जीवं प्रत्यनियमस्य तथा - शब्देनातिदेशे देहानियमेन प्राणानियमस्यापि सिद्धत्वेन कृतकरत्वाज्जीवदनुत्पत्त्यतिदेशे सिद्धान्तस्य विरोधादस्य पूर्वपक्षसूत्रत्वे तद्व्यवच्छेदेन सिद्धान्तद्योतकसूत्रान्तराभावाच्च व्यवहितस्यापि वियदधिकरणोक्तस्य सम्भवस्यातिदेशः, अस्मादात्मनः सर्वे प्राणाः सर्वे लोका इति पूर्वाधिकरणविषयवाक्यस्थलोकादिदृष्टान्तीकरणेन प्राणेषु तथा शब्देन तद्धर्मातिदेश इति च व्याख्यातं ततोऽप्यव्यवहितजीवानुत्पत्त्यतिदेशेन पूर्वपक्षसूत्रत्वं स्वारसिकं प्रासङ्गिकाधिकरणान्तरव्यवधिस्तु न दोषः, । न च सिद्धान्तसूत्रान्तराभावादाद्यस्यैव सिद्धान्तसूत्रत्वमाश्रयणीयं बाधकपरिहारसूत्रस्य सिद्धान्तसाधकत्वात् सिद्धान्तसाधकयुक्तेरसूत्रितत्वं तु पूर्वोक्तादेव सूत्रप्रणयननैरपेक्ष्यात् बाधकपरिहारस्य त्वनुक्तत्वात् तस्यैव सूत्रितत्वं युक्तमित्युक्तं, तु–शब्दार्थेन च–शब्देन सिद्धान्तद्योतनमित्युक्तं दीपे, गौण्यसम्भवात्तत् प्राक्श्रुते-

श्चेत्येकसूत्रत्वं चात एव युक्तं, न चासौ च-शब्दः समुच्चयार्थः साधक-साधकत्वेन समुच्चयवाचिनैरपेक्ष्यात्, गौण्या जन्मश्रुतेरसम्भवादिति योजना च क्लिष्टा गौण्यसम्भवाच्छब्दाच्चेति पूर्वपादावगतसूत्रशैली विरुद्धा च. अक्लिष्टरीत्यविरुद्धनिर्वाहे सम्भवति तद्विपरीतनिर्वाहश्चायुक्तः तस्मात्क्श्रुतेरिति चादिष्वनुषक्तस्य जन्म-शब्दस्य ततः प्राक्श्रुतेः खादिषु च तस्य मुख्यतायाः स्थापितत्वात् प्राणोत्पत्तिर्मुख्येति व्याख्यातं तच्चेयार्थं ततोऽप्यनेयार्थव्याख्यानं वरं, तच्छब्दस्य खादिष्वनुक्तजन्मशब्दवाचित्वादपि परमात्मपरत्वं स्वारसिकं च प्राण-शब्दस्य बहुवचननिर्वाहश्चापेक्षितः, जन्मशब्दानुषङ्गरूपयुक्तिरप्यपेक्षितेति चेत्सत्यं, सा त्वेकत्वावधारणप्रतिज्ञानादिरूद्वियदधिकरणोक्तयाऽभिप्रायतः सिद्धेति प्राणशब्दनिर्वाह एव कण्ठोक्त्या ज्ञाप्यः क्वचिदुक्त्याभिप्रायिकत्वं क्वचिदप्यनुक्तस्य कण्ठोक्तत्वमपि हि युक्तं न क्वचिदुक्तस्य पुनश्चोक्तत्वं क्वचिदप्यनुक्तस्याभिप्रायिकत्वं च तत्पूर्वकत्वाद्वाच इति अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागिति वाक्प्राणमनसां तेजोऽबन्न पूर्वकत्वाच्च प्राणस्य कार्यत्वमित्युक्तम् । तदयुक्तम् आहङ्कारिकस्य मनसो वागिन्द्रियस्य च पृथिवीतेजःकार्यत्वायोगाद्वायुविशेषस्य प्राणस्याम्बुकार्यत्वाभावाच्च अत आप्यायनमात्रमत्र विवक्षितं तावता च नोत्पत्तिः सिध्यति । अन्ये त्विन्द्रियसमष्ट्युत्पत्तेः पूर्वमेव सिद्धतां मत्वा व्यष्टीन्द्रियाणां जीवस्य स्वापप्रबोधयोरुत्क्रान्तिजन्मनोश्च विलयोत्पत्ती भवतः? उत न भवतः? इति विचारयन्ति तदयुक्तं समष्टीन्द्रियोत्पत्तिप्रलययोरप्यनिरूपितत्वादष्टौ प्रकृतयः षोडश विकारा इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्त इत्यादिभिस्तत्र तत्रोदाहृतश्रुतिभिस्तत्सिद्धेरिति चेत्तर्हि तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति अग्नौ देवाः अग्नौ जुह्वतीति पूर्वापरपादयोरुदाहृततत्तद्वाक्यैर्व्यष्टीन्द्रियाणामवस्थानसिद्धेर्विचारो निर्विषयः स्याद्वाक्यान्तरेषूत्पत्तिप्रलयावगमात् संशय इति चेत् तत्समष्टीन्द्रियाणामपि तुल्यम् असद्वा इत्यादिवाक्यानां श्रूयमाणत्वात् पुनरुक्तिश्च भवेत्, वाङ्मनसि

दर्शनादित्यधिकरणे उत्क्रान्तौ प्राणानां लये श्रुतेऽपि तेषां सद्भावो निश्चितः । उक्तं हि भवद्भिरेव "इह लयो न साक्षाद्विवक्ष्यते किन्तु प्रवृत्तिविलोपाय मनसि संश्लेषमात्र"मिति उत्क्रान्तौ लयाभावात् जन्मन्युत्पत्तिश्च नास्ति सुषुप्तिप्रबोधयोर्लयोत्पत्त्यभावश्च किं पुनर्न्यायसिद्धः अतस्तथा प्राणा इत्यादिसूत्राणां समष्टिविषयत्वमेव युक्तं, तथा-शब्देन सु प्युत्क्रान्तिबोधजन्मसु वियदादिवत्प्राणा उत्पद्यन्त इत्यपि व्यवहिताधिकरणन्यायातिदेशोऽस्वरसः असद्वा इदमित्यादिश्रुतिश्च सदेवेत्यादिवाक्यवत् कृत्स्नप्रलयदशाविषयतया प्रतीयते, अतोऽवान्तरप्रलये वा जन्मनः पूर्वकाले वा इन्द्रियसद्भावविषयत्वाश्रयणेन तस्य वाक्यस्य तत्प्राक्श्रुतेरित्यस्य विषयतयोदाहरणमयुक्तं तत्पूर्वकत्वादिति भोक्तारं पुरस्कृत्य वाङ्मनसादिप्रवृत्तिरतः सुषुप्तौ वागादिव्यापारोपरमादस्तमयव्यपदेश इत्युक्तं, तदप्ययुक्तं पुनरुक्तेर्दर्शितत्वात् ॥ प्राणोत्पत्त्यधिकरणं समाप्तम् ॥

सप्तगत्यधिकरणम् । **सू० सप्तगतेर्विशेषितत्वाच्च ॥ ४ ॥**

कौ० तानीन्द्रियाणि किं सप्तैव स्युः, अथवैकादशे ? ति चिन्त्यते, श्रुतिविप्रतिपत्तेः संशय , किं प्राप्तं सप्तेति, कुतः गतेर्विशेषितत्वाच्च गतिस्तावज्जायमानेन म्रियमाणेन च जीवेन सह लोकेषु सञ्चरणरूपा सप्तानामेव श्रूयते "सप्त इमे लोका येषु सञ्चरन्ति प्राणा गुहाशया निहिताः सप्त सप्ते"ति वीप्सा पुरुषभेदाभिप्राया विशेषितास्च ते गतिमन्तः प्राणाः स्वरूपतः यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टेत तामाहुः परमां गति"मिति शरीरान्तः सञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः, एवं जीवेन सह जन्ममरणयोः सप्तानामेव गतिश्रवणात् योगदशायां ज्ञानानीति विशेषित-

त्वाच्च जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसि सप्तैवेति गम्यते, यानि त्वितराणि विषयाणां ग्राहकत्वेन "अष्टौ ग्रहाः सप्त वैशीर्षण्याः प्राणा द्वाववाञ्चा"वित्यादिषु चतुर्दश पर्य्यन्तानि प्राणप्रतिपादकवाक्येषु वाक्पाणिपादपायूपस्थाहङ्कारचित्ताख्यानीन्द्रियाणि प्रतीयन्ते तेषां जीवेन सह गतिश्रवणाभावाज्जीवस्याल्पाल्पोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेशः इति प्राप्ते प्रचक्ष्महे—

**सू० हस्तादयस्तु स्थिते ऽतो नैवम् ॥ ५ ॥**

न सप्तैवेन्द्रियाणि, अपि त्वेकादश हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात्कार्य्यभेदाच्च, दृश्यते हि श्रोत्रादीनामिव हस्तादीनामपि कार्य्यभेद आदानादिः, अतस्तेऽपि सन्त्येव, अतो नैवम्—अतो हस्तादयो न सन्तीत्येवं न मन्तव्यमित्यर्थः। अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इति एकादशेन्द्रियाणि, अतो "दशेमे पुरुषे प्राणा आत्मैकादश इत्यात्म—शब्देन मनोऽभिधीयते।

टी० सू० सप्तगतेर्विशेषितत्वाच्च, ॥ ४ ॥ किमिन्द्रियाणि सप्तैव? किमेकादश, किं सप्तानां गतिश्रवणमिन्द्रियाणां सप्तसंख्यत्वमवगमयति नेति तदर्थं गतिश्रवणाभावेऽपि हस्तादीनामिन्द्रियत्वमुपपद्यते नेति दशेमे पुरुषा इत्यादिश्रुतिः किमिन्द्रियाणामेकादशत्वे प्रमाणं नेति च यदा न प्रमाणं तदा हस्तादीनामिन्द्रियत्वानुपपत्तिः तदा गतिश्रुतेः सप्तसंख्याव्यवस्थापकत्वात्सप्तेति स्यात्, यदा सा श्रुतिरेकादशत्वे

प्रमाणं यदा हस्तादीनामिन्द्रियत्वोपपत्तिस्तदा गतिश्रवणस्य सप्तसंख्याव्यवस्थापकत्वाभावादेकादशेति सिध्यति श्रुतिविप्रतिपत्तेरिति न वादिविप्रतिपत्तेरित्यर्थः, वीप्सा पुरुषभेदाभिप्रायेति सप्त प्राणाः प्रभवन्तीति पूर्वं सप्तानामुत्पत्तिश्रवणादिति भावः । स्वरूपतो विशेषिताः न तु कार्यादिभिरित्यर्थः । परमा गतिः मे(ज्ञा)र्थगमनरूपत्वात्परमा गतिर्योग इत्यर्थः ज्ञानानीति विशेषितत्वाच्चेति ज्ञायते ऽनेनेति व्युत्पत्त्या ज्ञानानीत्यर्थः । अधिकसंख्याश्रवणस्य निर्वाहमाह "यानि त्वि"ति, चतुर्दशपर्यन्तानि पूर्वैस्सप्तभिस्सह चतुर्दशपर्य्यन्तानि वाक्पाणिपादपायूपस्थाहङ्कारचित्ताख्यानि यानि त्वितराणि प्रतीयन्त इत्यर्थः सू· हस्तादयस्तु स्थितेऽतोनैवम् ॥ ५ ॥ अधिकरणविशेष्ययोरध्याहारेण स्थित इति पदं व्याचष्टे "शरीर" इति, अतः-शब्दार्थमाह "भोगोपकारणत्वा"दिति, उपकरणान्तरापेक्षा नास्ति चतुरादिभिरेव भोगसिद्धेरिति शङ्काव्यावृत्त्यर्थमाह "कार्य्यभेदाच्चे"ति, अतो नैवमिति व्याख्येयोपादानम्, अत्रातः काकाक्षिन्यायेनान्वितः तद्व्याचष्टे "अत"इति, चतुर्दशसंख्यानिर्वाहमाह "अध्यवसायेति, महदनुगृहीतं मनोऽध्यवसायमहङ्कारानुगृहीतं मनोऽभिमानं पूर्वसंस्कारविशेषानुगृहीतं मनश्चिन्तां करोति तत्तदानीं बुध्यादिशब्दैर्व्यपदिश्यते इत्यर्थः हस्तादयस्त्वित्येतावता साध्ये सिद्धेऽतो नैवमिति सूत्रखण्डः किमर्थमिति शङ्कायां प्रमाणदार्ढ्यसूचनार्थमित्यभिप्रायेणाह "अत"इति, अत इन्द्रियसंख्या व्यवस्थितेत्युत्तरमात्रान्वयः । उदाहृतवाक्यस्थमात्म-शब्दं व्याचष्टे "आत्मशब्दने"ति, ॥

सू० इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः । तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्रेत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसंख्या स्थिता । अधिकसंख्यावादा मनोवृत्तिभेदाभिप्रायाः । न्यूनव्यपदेशास्तु तत्र तत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः ॥ सप्तगत्यधिकरणं समाप्तम् ॥

परे तु गतेः सप्त प्राणाः प्रभवन्तीति श्रुतिवाक्यादवगतेः सप्त वै शीर्षण्याः प्राणा इति विशेषितत्वाच्चेति व्याचक्षते तदयुक्तं व्यभिचारिणो हेतुत्वाभावात्, अष्टौ ग्रहा दशेमे पुरुषा इत्यादिभिः संख्यान्तराण्यपि हि श्रुतेरवगम्यन्ते सप्त वै शीर्षण्या इति विशेषितत्वमप्ययुक्तं सप्तत्वसाधकत्वाभावात्, द्वाववाञ्चाविति नव संख्या हि प्रतीयते हस्तादय इति हस्तादयश्च श्रूयन्ते अतःसप्तत्वातिरेके स्थिते अतो अधिकसंख्याग्रहणे न्यूनसंख्याया अन्तर्भावोपपत्तेश्च नैवं यथापूर्वपक्षं न मन्तव्यमित्युक्तं तत्र सप्तत्वातिरेक इति स्थित-शब्दविशेष्यं नाध्याहर्त्तव्यम् अनुवादे प्रयोजनाभावात्, अधिकश्रवणादेव हि सप्तत्वातिरेकोऽवगतो भवति जीवे स्थित इत्याध्याहृते युक्तिर्दर्शिता भवति जीवं प्रति हस्तादीनां चक्षुरादिवदुपकारणत्वसाम्यावगतेः, एवं न्यूनव्यवच्छेदस्य हेतूक्तौ मनोवृत्तिभेदैरधिकप्रतीत्यन्यथासिद्धिरतः-शब्देन वक्तुं युज्यते अधिकसंख्याग्रहणे न्यूनसंख्यान्तर्भावपरत्वमतः-शब्दस्य न युज्यते, तथा सत्येकादशभ्योऽतिरिक्तस्यापि ग्राह्यत्वप्रसङ्गात् नैवमिति भूयोवचनं चोक्तयुक्त्यनुग्राहकश्रुत्यभिप्रायं भवितुमर्हति अन्यथा हस्तादय इत्येतावता पर्य्याप्तत्वात्, न हि सर्वाधिकरणेषु यथापूर्वपक्षं न मन्तव्यमित्युच्यते। अन्ये तु बुद्ध्या सह द्वादशेन्द्रियाणि उत्क्रान्तौ सर्वे प्राणा अभिसमायन्तीति श्रवणेन सर्वेषां प्राणानामुत्क्रान्तिः अतस्तेषां नात्यन्तिकनाश इति पूर्वपक्षं कृत्वा गतिश्रवणादिना सप्तानामेव गतिः तेषामेव नात्यन्तिकनाश इतरेषां त्वात्यन्तिकनाशस्तत्र तत्र च भोगाय जन्मवेलायां स्वकारणादुत्पत्तिरिति सिद्धान्तयन्ति तदयुक्तं सर्वे प्राणा अभिसमायन्ति सर्वे प्राणा अनूत्क्रामन्तीति सर्वप्राणानामुत्क्रान्तिश्रवणात्सर्व-शब्दसङ्कोचाभावात् सप्तानां गतिश्रवणस्य छान्दोग्ये भूतत्रयसृष्टिश्रवणस्येवायोगव्यवच्छेदपरत्वेनाप्युपपत्तेश्च, सप्तानामिति श्रवणवैयर्थ्यपरिहाराय सप्तानामेवेत्यवधारणकल्पनादपि सर्वशब्दवैयर्थ्यपरिहाराय सप्तश्रवणस्य प्रदर्शनार्थत्वकल्पनैवोपपन्ना अन्यथा ह्यश्रुतावधारणकल्पनं हस्तादीनां प्रलयकल्पनमुत्पत्तिकल्पनं चेति गौरवं स्यात्, "यदा वै पुरुषः स्वपिति प्राणं

फञिन्तस्यापि ग्रहणं स्यात् । 'कौञ्जायन्य इति' । स्वार्थे ञ्यः, बह्वषु तु ञ्यादयस्तद्राजा इति तद्राजत्वात्तद्राजस्य बहुष्वित्यादिना लुक्, किं पुनरत्र ञित्स्वरो भवति उत चित्स्वर इत्यत्राह । 'एकवचनद्विवचनयोरिति' । तत्र हि ञ्यप्रत्ययः श्रूयते, स च पश्चाद्भावीति तन्निबन्धनो ञित्स्वरः सति शिष्टः, बहुवचने तु ञ्ये निवृत्ते सम्प्रधारणा ञित्स्वरो वा चित्स्वरो वेति, तत्र परत्वाद् ञित्स्वरः प्राप्नोति, चित्करणसामर्थ्याच्चित्स्वरो भविष्यति, ञित्करणसामर्थ्याद् ञित्स्वरः प्राप्नोति, अस्त्यन्यत् ञित्करणस्य प्रयोजनं, किं, वृद्ध्यर्थो ञकारः, चित्करणेपि तर्ह्यस्त्यन्यत्प्रयोजनं, किं, विशेषणं, शक्योत्र विशेषणार्थोन्योनुबन्ध आसङ्क्तुं, तत्र चकारानुरोधाच्चित्स्वरो भविष्यति, वृद्ध्यर्थोपि तर्ह्यन्योनुबन्धः शक्य आसङ्क्तुं तत्र ञकारानुरोधाद् ञित्स्वरः प्राप्नोति, एवं स्थितइदमुच्यते । 'परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यतइति' । एवं मन्यते । स्वरे योगविभागः कर्त्तव्य, इदमस्ति चितः चितोन्त उदात्तो भवति, ततस्तद्धितस्य चित इत्येव, तद्धितस्य चितोन्त उदात्तो भवति, किमर्थमिदं, परत्वात्प्राप्तस्य ञित्स्वरस्य बाधनार्थं, ततः कितः, कितश्च तद्धितस्यान्त उदात्तो भवतीति, यदि तु कफप्रत्ययः क्रियते तद्धितस्येति योगविभागः शक्योऽकर्तुम्, अथेत्रं कस्माच्च क्रियते गोत्रे कुञ्जादिभ्यश्च्फञ्. बह्वषु फक्, नडादिभ्यश्चेति, नैवं शक्यम्, इह हि दोषः स्यात्, कौञ्जायनानामपत्यमाणवकः कौञ्जायन्यः कौञ्जायन्यौ, केन यशब्दः श्रूयते द्व्येकयोर्हि इफ्यञ्विधीयते, यदा तु इफञन्तात् ञ्यो विधीयते तदा यून्युत्पन्नस्येञो ण्यक्षत्रियार्षञित इति लुकि कृते तद्राजस्येति ञ्यस्य लुकि प्राप्ते गोत्रेऽलुगचीति प्रतिषेधाद्यशब्दस्य श्रवणं भवति, तथा कौञ्जायन्यस्यापत्यानि बहूनि, अत इञो लुकि तद्राजस्येव बह्वषु वर्त्तमानत्वाद् ञ्यस्य लुकि कौञ्जायना इति भवति ॥

"नडादिभ्यः फक्" ॥ 'शलङ्कु शलङ्कं चेति' । द्वे अपि प्रथमान्ते, शब्दरूपापेक्षया नपुंसकनिर्देशः, शलङ्कु इत्येतच्छब्दरूपं शलङ्कं

भवति, तद्रूपेण परिणमतइत्यर्थः । 'इञेवान्यत्रेति' । बाह्वादेराकृतिगणत्वादिति भावः । अभ्युपेत्यापि गोत्रमात्रे फको विधानं परिहारमाह । 'अथ वेति' । 'इञो भावस्येति' । शलङ्कभावापत्तेरप्युपलक्षणमेतत्, पूर्वत्र परिहारे तस्याः स एव पाठो ज्ञापको वेदितव्यः । 'अग्निशर्मन्वृषगणइति' । अग्निशर्मन्शब्दः फकमुत्पादयति वृषगणे गोत्रे, आग्निशर्मायणो भवति वार्षगण्यश्चेद् आग्निशर्मिरन्यः, अमुष्येति पठ्यते, तत्रादःशब्दे प्रातिपदिकमात्रे पठितव्ये विभक्त्यन्तस्य पाठादुत्पन्नेऽपि फकि लुङ् भवति, आमुष्यायणामुष्यपुत्रिकेत्यलुग्विधावस्य ग्रहणं न कर्तव्यं भवति । 'कृष्णरणौ ब्राह्मणवसिष्ठयोरिति' । कार्ष्णायनो भवति ब्राह्मणश्चेत् कार्ष्णिरन्यः, राणायनो भवति वासिष्ठश्चेद् राणिरन्यः । 'क्रोष्टु क्रोष्टं चेति' । क्रौष्टायनः ॥

"हरितादिभ्यो ऽञः" ॥ हरितादिभ्यो ऽञ इति व्यधिकरणे पञ्चम्यौ, हरितादिभ्यः परो योऽञ् तदन्तात्प्रातिपदिकादित्यर्थः । वृत्तिकारोऽप्येतदेव वस्तुतो व्याचष्टे । 'हरितादिभ्यो ऽञन्तेभ्य इति' । हरितादिभ्यो गोत्रापत्ये ऽञ् प्रत्ययो भवतीत्ययं स्वर्गो न भवति, बिदादिषु पाठात् । 'सामर्थ्यादिति' । गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो न भवतीत्येतत्सामर्थ्यं, तस्माद्गोत्राधिकारेऽपि यूनि प्रत्ययो विज्ञायते, न चैवं गोत्राधिकारस्य विच्छेद इत्याह । 'गोत्राधिकार इति' । उत्तरार्थं गोत्रग्रहणमनुवर्त्तत एवेत्यर्थः ॥

"यञिञोश्च" ॥ 'गोत्रग्रहणेन यञिञौ विशेष्येते इति' । गोत्रे यो यञिञौ विहितावित्येवं, न चैवं प्रत्ययार्थस्यापत्यस्याविशेषितत्वादपत्यमात्रे प्रत्ययप्रसङ्ग इत्याह । 'तदन्ताद्यून्येवायं प्रत्यय इति' । एवकारः पौनर्वचनिकः, न केवलं पूर्व एव प्रत्ययो यूनि भवति अयमपि यून्येवेति, कस्मादित्याह । 'गोत्राद्यूनीति वचनादिति' ॥

"शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु" ॥ शरद्वदादीनां भृग्वादिवंशप्रभावनां कृत्रिमा अपि पुत्राः सन्ति, स्ववंशप्रभवा अपि, तत्रापत्यविशेषणं क्रियते, तत्र भृगुः शरद्वतोऽपत्यं न भवति पूर्वभावित्वात्, एवं शुनकस्य

वत्सः, तस्माद्भार्गवश्च वात्स्यश्च आग्रायणश्चेति द्वन्द्वे युगपदधिकरणवचन-तया वर्त्तिपदस्य बहुषु वृत्तेरत्रिभृग्विति यञञोश्चेति च गोत्रप्रत्ययस्य लुक्, तदाह । 'भार्गवश्चेद्वात्स्यश्चेदिति' । 'दार्भिरिति' । दर्भशब्द ऋषि-वचनो न भवति, बाह्वादिषु वा पाठः ॥

"द्रोणपर्वतजीवन्तादन्यतरस्याम्" ॥ पूर्वमुक्तं गोत्राधिकारश्च शिवादिभ्योऽणिति यावदिति, इहाप्युक्तं गोत्रइत्येवेति, तत्र नोदयति । 'कथमिति' । 'नैवात्रेति' । यस्य ग्रहणमङ्गीकृत्य भवाना-नन्तर्ये दोषमाह स नैव गृह्यतइत्येवशब्दस्यार्थः । महाभारते द्रोणो महाभारतद्रोणः । 'अनादिरिति' इदानीमेव ह्युक्तं बह्वा-दिप्रभृतिष्वित्यादि । नन्वेवं प्रयोगस्यात्यन्तमनुपपत्तिरित्यत आह । 'इदानीं त्विति' । अर्वाचीनादित्यर्थः, न पुनर्महाभारतद्रोणो वृत्ति-कारेण समानकालः, अनादेरिदानींतनस्य च द्रोण इति श्रुतिः समाना, तत्रानादिद्रोणस्य ये वंश्या अश्वत्थाम्ना समानकालास्ते द्रौणायना इत्युच्यन्ते, तत्र यद् दृष्टं गोत्रत्वं तदश्वत्थाम्न्यपि द्रोण-शब्दवाच्यापत्यत्वात् स्खलितबुद्धयः प्रतिपत्तारोऽध्यारोपयन्ति, तेना-ध्यारोपेणाश्वत्थामनि तथा द्रौणायन इत्येतद्गोत्रप्रत्ययेनाभिधानं भवति ॥

"अनृष्यानन्तर्ये बिदादिभ्योऽञ्" ॥ 'गोत्रइत्येवेति' । एतेन येऽत्र ऋषिशब्दा बिदोर्वप्रभृतयस्तेभ्यो गोत्रएवान्यथा स्यादिति गोत्रइत्येतदि-हानुवर्त्तनीयमिति दर्शयति । 'ये पुनरित्यादि' । कथं पुनर्गोत्राधिकारे सत्य-यमर्थो लभ्यतइत्यत्राह । 'अनृष्यानन्तर्यइत्यस्यायमर्थ इति' । अनृषीति पञ्चम्या लुक्रा निर्देशः, आनन्तर्यइति स्वार्थे ष्यञ्, एवं च पौत्रा इत्यादावन-न्तरस्यैवाभिधानं न गोत्रस्य नापत्यसामान्यस्य च । 'यद्ययमर्थ इति' । अस्मिन् ह्यर्थेऽनृषिभ्योऽनन्तरापत्ये विध्यर्थमिदं भवति, ततश्च ऋष्यपत्यनै-रन्तर्ये, ऋषयश्च तेऽपत्यानि च ऋष्यपत्यानि तेषां नैरन्तर्ये ऋषिरूपाण्यप-त्यानि निरन्तराणि यत्र तस्मिन्विषये प्रतिषेधो न कृतः स्यात्तत्र को दोष इत्यत्राह । 'तत्रेदमिति' । कश्यपऋषिस्तस्यापत्यमप्यृषिरेवं सप्तनैरन्त-र्येण ऋषयस्तेषां सप्तम इन्द्रहूर्नाम तत्र काश्यपानामिति प्रयोगो नोपपद्यते,

ऽञि सति यञञोश्चेति लुक् प्रसङ्गात्, तस्माद्दनृष्यानन्तर्यं इत्यस्य ऋषीणामानन्तर्ये ऽव्यवधाने प्रत्ययो न भवतीत्ययमर्थो व्याख्येय इति भावः। प्रयोगं तावदुपपादयति। 'अनन्तरापत्यरूपेणेति'। अपत्यसामान्यरूपेणेत्यर्थः। न पुनर्ऋष्यणनन्तरापत्ये विधीयते, तत्र यथाभूतप इत्यादौ वस्तुतो भूतविशेषेपि सामान्यविवक्षया लुङ् भवति तद्वदिहापि वस्तुतो गोत्रेपि तद्रूपतिरस्कारेणापत्यसामान्यरूपविवक्षया ऋष्यण् भवतीत्यर्थः। किं पुनःकारणमियं क्लिष्टकल्पनाश्रीयतइत्याह। 'अवश्यं चैतदेवं विज्ञेयमिति'। ऋषीणामपत्यानां नैरन्तर्यं विषयो यस्य प्रतिषेधस्य स तथोक्तः। 'कौशिको विश्वामित्र इति दुष्यतीति'। किं कारणं, विश्वामित्रस्तपस्तेपे नानृषिः स्यामपि तु 'ऋषिरेव स्यामिति, तत्र भवानृषिः सम्पन्नः, स पुनस्तपस्तेपे नानृषेः पुत्रःस्यामिति, तत्र भवान् गाधिरप्यृषिः सम्पन्नः, स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति, तत्र भवान्कुशिकोपि ऋषिः सम्पन्नस्तदेतद्दृष्यानन्तर्यं सम्भवति। 'परस्त्री परशुं चेति'। द्वितीयानिर्देशादापद्यतइति शेषः। परस्त्रीशब्दः प्रत्ययमुत्पादयति परशुं चादेशमापद्यते, परस्त्रिया अपत्यं पारशवः, ब्राह्मणस्य शूद्रायामूढायामुत्पन्नः, सा च जातितः परस्त्री भवति, यस्तु परभार्यायामुत्पन्नः पारस्त्रैणेयः स भवति कल्याण्यादिः, अनुशतिकादिश्च। पारशव इत्यत्र पूर्वोत्तरपदसम्प्रमोहादनुशतिकादिकार्याभावः॥

"गर्गादिभ्यो यञ्"॥ 'अपत्यसामान्ये भविष्यतीति'। अन्ये तु मनुतन्तुशब्दः समुदाय एको न तु द्वौ शब्दौ पठिताविति वदन्ति, तथा च ब्राह्मणो मानुतन्तव्यमुवाचेति प्रयोगः। कालधमनुतन्तुकुशिकानामिति च प्रवरे, 'कथं मानवीति'। लोहितादिपाठान्नित्येन ष्फेण भाव्यमिति भावः। 'अनन्तरापत्यविवक्षायां त्विति'। गोत्रस्यापीति बोद्धव्यं, तथा च जामदग्ना वात्सा इति प्रवरे प्रयोगः। 'वाजासइति'। वाजशब्दो यञमुत्पादयति असे असमासे समासे तु सौवाजिः, बहुणा वता प्रातिपदिकेनेत्यस्यानित्यत्वज्ञापनार्थो ऽसइति प्रतिषेधः॥

"मधुबभ्रोर्ब्राह्मणकौशिकयोः" ॥ गणएव बभ्रुकौशिकइति वक्तव्यम्, एवं हि द्विर्बभ्रुग्रहणं न कर्त्तव्यं भवति, तथा तु न कृतमित्येव ॥

"कपिबोधादाङ्गिरसे" ॥ 'कापेय इति' । इतश्चानिञ इति ठक् । 'बौधिरिति' । अनृषित्वादिञ्, बाह्वादिर्वा ॥

"वतण्डाच्च" ॥ 'किमर्थमिति' । वतण्डाल्लुक् स्त्रियामित्येव कस्मान्नोक्तं, किमर्थो योगविभाग इति प्रश्नः । परिहरति । 'शिवादिष्वपीति' । वतण्डो नाम ऋषिस्तत ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः, तत्र यथानाङ्गिरसे समावेशो भवति एवमाङ्गिरसेपि स्यादिति तन्निवृत्त्यर्थो योगविभाग इत्यर्थः ॥

"लुक् स्त्रियाम्" ॥ 'वातण्ड्यायनीति' । लोहितादिलक्षणः ष्फः । 'वातण्डीति' । ऋषित्वात् ष्यङ् भविष्यति ॥

"अश्वादिभ्यः फञ्" ॥ 'ये त्वत्र गोत्रप्रत्ययान्ताः पठ्यन्तइति' । बैल्य आनडुह्य आत्रेय इत्येते, तत्र बैल्यशब्दो वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङन्तः, विलिर्नाम राजर्षिः आनडुह्यशब्दो गर्गादियञन्तः, आत्रेय इतश्चानिञ इति ठगन्तः, । 'शप आत्रेयइति' । शपशब्दात्फञ् भवति आत्रेयश्चेत्, शापायनः । आत्रेयादन्यत्र शापिः, अनृषित्वादिञ् बाह्वादिर्वा । अन्ये त्वणमेव प्रत्युदाहरन्ति । 'पुंसि जातइति' । पुंसीति प्रकृतिविशेषणं, जातस्यापत्यं जातायनः, स्त्रियां तु जाताया अपत्यं जातेय इति ठगेव भवति, अन्यथा लिङ्गविशिष्टपरिभाषया फञेव स्यात्, । 'आत्रेयभरद्वाजइति' । आत्रेयायणो भवति भारद्वाजश्चेत्, अन्यत्रात इञो ण्यत्त्रियेति लुक्, । 'भारद्वाजात्रेयइति' । अत्रिगोत्रजो यदा भारद्वाजगोत्रजेन पुत्रत्वेन स्वीक्रियते तदा प्रत्ययः स ह्यात्रेयश्च भवति भारद्वाजस्य च गोत्रं भवति, भारद्वाजायन आत्रेयश्चेद् भारद्वाजोन्यः, विदाद्यञेव भवति ॥

"शिवादिभ्योण्" ॥ 'यथायथमित्यादि' । तत्रावन्तेभ्यिञोपवादः, मुनिसन्धिभूमिप्रभृतिभ्यितश्चानिञ इति ठकः, स्त्रीप्रत्ययान्तेषु स्त्रीभ्यो ठक् द्व्यच इति प्राप्तस्य ठकः, गङ्गाविपाट्शब्दयोस्तु यस्मि-

न्प्राप्ते स वृत्तिकारेणैवोक्तः, जरत्कारुशब्दस्य तु पाठे प्रयोजनं चिन्त्यम् । केचिदाहुः । शुभ्रादिष्वयं पठनीयः, जारत्कारेय इति यथा स्यात्; तत्र तु ठका समावेशार्थोऽस्य पाठ इति । 'यप्रत्ययस्य तु बाधो नेष्यतइति' । अत्र हेतुमुदीचामित्यत्र वक्ष्यति । 'शुभ्रादिठका चेति' । शुभ्रादिभ्यश्चेत्यत्र वक्ष्यति चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः पाण्डेय इत्यादिसिद्धं भवतीति तदभिप्रायेणेदमुक्तम् । रवणविश्रवणशब्दौ पठ्येते, तौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे वा, वृत्तिविषये तत्सामानार्थे, विश्रवसोऽपत्यं वैश्रवणो रावणः । 'द्व्यचो नद्या इति' । नदीवाचिनो ये द्व्यचः कुल्याप्रभृतयस्तेभ्यस्तचामिकाणोपवादे द्व्यच इति ठकि प्राप्ते ऽण् भवति । 'त्रिवेणी त्रिवणं चेति' । त्रिवेण्या अपत्यं त्रैवणः, तचमिकाणि सिद्धे आदेशार्थं वचनम् । अथाण्ग्रहणं किमर्थं, न यथाविहितमित्येवोच्येत, एव मुच्यमाने इञादय एव स्युस्ते विहिताः पुनरारम्भसामर्थ्यादणो विहितो न च प्राप्नोति स एवाण् भविष्यति, इदं तर्हि प्रयोजनम्, ऋष्टिषेणशब्दोऽत्र पठ्यते तत्र यथाविहितमित्युच्यमाने ऽत इञ् प्राप्तस्तस्य सेनान्तलक्षणो ण्यो बाधकः प्राप्तस्तत्रारम्भसामर्थ्यादिञ् प्रसज्येत पुनरण्ग्रहणादणेव भवति ॥

"अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः" ॥ अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे यत्परिभाषितं तस्यापि ग्रहणं दृष्टं वृद्धस्य च पूजायां वृद्धो यूनेति, इह तु प्रत्यासत्तेरेतच्छास्त्रसिद्धस्यैव वृद्धस्य ग्रहणमित्याह । वृद्धिर्यस्येति' । 'अवृद्धाभ्य इति शब्दधर्म इति' । वृद्धपर्युदासे सति नञिवयुक्तन्यायेन तत्सदृशस्यैव शब्दस्य सम्प्रत्ययात्, स्त्रीलिङ्गनिर्देशस्तु नदीमानुषीभ्य इत्यनेन सामानाधिकरण्यात्, कथं पुनरर्थवृत्तेः शब्दवृत्तिना सामानाधिकरण्यमभेदोपचारात्, अवृद्धशब्दवाच्यत्वान्नदीमानुष्य एवावृद्धा उक्ताः । 'नदीमानुषीभ्य इत्यर्थधर्म इति' । स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात्, वृद्धपर्युदासाच्च सञ्ज्ञानद्या अपि ग्रहणं न भवति लौकिकार्थवृत्तिना मानुषीशब्देन साहचर्यात्, तन्नामिकाभ्य इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्श इति ता अवृद्धाः प्रकृतयो नामानि यासां नदीमानुषी-

णामिति बहुव्रीहिः, तदेवं त्रिभिरपि पदैरर्थ एव निर्दिश्यते, तत्रार्थात्प्रत्ययविधानानुपपत्तेस्तद्वाचिनीभ्यः प्रकृतिभ्यः प्रत्ययो विज्ञायते, तदिदमुक्तम् । 'तेनाभेदात्प्रकृतयो निर्दिश्यन्त इति' । तेनार्थेनाभेदात् । एतदुक्तं भवति, अवृद्धशब्दवाच्यास्तत्स्वामिका या नदीमानुष्यस्ताभ्योण् प्रत्ययो भवति, कोऽर्थस्तद्वाचिनीभ्यः प्रत्ययो भवतीति, तदेतदाह । 'अवृद्धानि यानीत्यादि' । एवं च कृत्वाऽवृद्धेभ्यो नदीमनुषीनामभ्य इति वक्तव्यं, तथा तु न कृतमित्येव । 'ठकोपवाद इति' । स्त्रीलिङ्गनिर्देशात् भिक्षोद्र-शोणादिष्वयं विधिर्न भवतीति भावः ॥

"ऋष्यन्धकवृष्णिकुरुभ्यश्च" ॥ 'ऋषयः प्रसिद्धा वसिष्ठादय इति' । ऋषयो मन्त्रदर्शिनस्ते च प्रसिद्धा वसिष्ठादयो यथा इन्द्रादयो देवतास्तेन तेन परिभाषणीया इति भावः । 'वंशाख्या इति' । केषां चिद्वंशानामेता आख्या इत्यर्थः । एव के चिद्वंशा आख्यायन्त इति यावत् । मध्येपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानित्यभिप्रायेणाह । 'इञोपवाद इति' । 'अत्र्यादिभ्य इति' । तत्र ऋष्यणोवकाशो वासिष्ठः, इतश्चानिञ इति ठकोवकाशो डुलेरपत्यं डौलेय, आत्रेय इत्युभयप्रसङ्गे परत्वाड्ढग् भवति, सेनान्तलक्षणस्य ण्यस्यावकाशो हारिषेण्यः, अत्र हि एति सञ्ज्ञायामगादिति षत्वस्यासिद्धत्वात्सेनान्तमेतद्भवति, ऋष्यणः स एव, जातसेनो नाम ऋषिस्तस्मादुभयप्रसङ्गे परत्वाद् ण्यो भवति जातसेन्यः, एवमुदीचामिञ्, जातसेनिः, अन्धकाणोवकाशः श्वाफल्कः, ण्यस्य स एव, उग्रसेनादन्धकादुभयप्रसङ्गे परत्वाण्ण्यो भवति औग्रसेन्यः, वृष्ण्यणो ऽवकाशः वासुदेवः, ण्यस्य स एव, विष्वक्सेनाद्वृष्णेर्वैष्वक्सेन्यः, कुर्वणो ऽवकाशः नाकुलः, ण्यस्य स एव, भीमसेनात्कुरोर्भैमसेन्यः । 'काकतालीयन्यायेनेति' । यदृच्छया । 'असङ्करेणेति' । शब्दान्तरैरसङ्कीर्णा इत्यर्थः । संकुलिताः संहताः । 'सुबहव इति' । व्युत्पिपादयिषिताः सर्व इत्यर्थः । अनित्योपाश्रयेणापि नित्यस्यान्वाख्यानं दृष्टं यथा शकाश्रयेण कालस्य । 'अथ वेत्यादि' । त्रिपुरुषानूकं नाम कुर्यादित्यनेन न्यायेनान्धकादिवंशा-

अपि नित्या एव । 'तेषु ये शब्दा इति' । अन्धकादिष्वेवाप्रत्वेपि ये शब्दाः प्रयुज्यन्ते तेभ्य इत्यर्थः ।

"मातुरुत्संख्यासंभद्रपूर्वायाः" ॥ 'द्वैमातुर इति' । तद्धितार्थे द्विगुः, पश्चात्तद्धितः, एकस्या औरसः सुतो ऽपरस्याः कृत्रिम इति द्वैमातुरत्वम् । 'साम्मातुर इति' । प्रादिसमासात्तद्धितः । 'भाद्रमातुर इति' । विशेषणसमासादयो, तेनेत्यादिना ऽर्थापेक्षस्य स्त्रीलिङ्गनिर्देशस्य फलं दर्शयति । 'धान्यमातुरिति' । धान्यं यो मिमीते स धान्यमाता याजकादित्वात्षष्ठीसमासः, धान्यमातरि यो मातृशब्दस्तस्य ग्रहणं न भवतीत्यर्थः, तेन सम्मिमीते तस्यापत्यं साम्मात्र इत्युत्वं न भवति, न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः, सम्बन्धिशब्दस्य हि प्रसिद्धतरत्वात्तस्यैव ग्रहणं न्याय्यम् । 'सङ्ख्यासम्भद्रपूर्वाया इति किमिति' । न तावत्केवलात्प्रसङ्गः, नहि मातुरपत्यमिति विशेषणं सम्भवति, अपत्ये मातृसम्बन्धस्याव्यभिचारात्, तेन तदन्तस्य ग्रहणात् सङ्ख्यादिपूर्वस्य तावत्सिद्धमिति प्रश्नः, अन्यपूर्वस्यापि स्यादित्युत्तरम् । 'सौमात्र इति' । क्वचिदस्यानन्तरं ग्रन्थः, 'शुभ्रादिपाठाद्वैमा॰य इति, तेन विपूर्वो मातृशब्दो न प्रत्युदाहर्तव्य इति भावः' । वयं ब्रूमः । स्त्रीभ्यो ढगित्यत्र स्त्रीप्रत्ययविज्ञानादसत्यर्थग्रहणे इह न भवति, ऐडविडो दारद इत्यस्यानन्तरमयं ग्रन्थः, इह तु लेखकैः प्रमादाल्लिखित इति ॥

"कन्यायाः कनीन च" ॥ 'ढकोपवाद इति' । स्त्रीभ्यो ढगिति प्राप्तस्य । 'कन्याया अपत्यं कानीन इति' । शास्त्रोक्तविवाहसंस्कारपूर्वस्य पुरुषसंप्रयोगस्याभावः कन्याशब्दनिमित्तं नाक्षतयोनित्वं, या तु विवाहसंस्कारेण विना पुरुषेण सम्प्रयुज्यते साकन्यात्वं न जहाति, तेनैतच्च नोदनीयं यदि कन्या नापत्यमथापत्यं न सा कन्या कन्या चापत्यं चेति विप्रतिषिद्धमिति, अपर आह । मुनिदैवतामाहात्म्यात्सा पुंयोगेपि न कन्यात्वं जहाति यथा कुन्ती यथा सत्यवती साक्षोदाहरणमिति तदाह । 'कानीनः कर्णः कानीनो व्यास इति' ॥

"विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु" ॥ अत्र वत्सादीनां

मूलप्रकृतीनां विकर्णादीनामन्यपत्यत्वायोगादपत्यप्रत्ययान्तानां वात्स्यादीनां शब्दानां द्वन्द्वे युगपदधिकरणवचनतया प्रत्येकं बहुत्वोपजननात्तस्य बहुत्वस्य लोपिभिरेव कृतत्वादपत्यप्रत्ययस्य लुका निर्देशस्तदाह । 'वैकर्णो भवति वात्स्यश्चेदित्यादि' ॥

"स्त्रीभ्यो ढक्" ॥ 'स्त्रीग्रहणेनेत्यादि' । स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात्, स्त्र्यर्थस्यापि ग्रहणं न भवति विमातृशब्दस्यार्थस्य शुभ्रादिषु पाठात्, तस्य तु स्त्र्यर्थत्वं विधवाशब्दसाहचर्याद्विज्ञेयं, किं च स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते, स्वरितेन चाधिकारावगतिर्भवति, तेन टाबादिस्त्रीप्रत्ययान्तानामेव ग्रहणं युक्तं, क्तिन्नादयस्तु व्यवधानाच गृह्यन्ते । 'ऐडविडो दारद इति' । इडविट्शब्दाज्जनपदशब्दात्क्षत्रियादञ्, दरच्छब्दाद्वृद्धेत्सकोसलाजादञ्यड्भगर्धेत्यण्, तयोः स्त्रियामतश्चेति लुक्, ततस्तदपत्ये ऽणेव भवति । 'वृषे वाच्य इति' । वृषो बीजाश्वः, तेन चार्थेन विशेषविहितेनापत्यलक्षणोर्थे ढको बाध्यते, तेनापत्ये ऽणेव भवति । 'वाडव इति' । चतुष्पाल्लक्षणो ढञपि न भवति, अचतुष्पाद्वाचित्वात् । 'अण् क्रुञ्चेति' । वृषइति नापेक्ष्यते, ऽपत्यएवायं विधिः, ढकोपवादः, क्रुञ्चा च कोकिला च समाहारद्वन्द्वे नपुंसकह्रस्वत्वम् ॥

"द्व्यचः" ॥ 'तत्रामिकाणोपवाद इति' । अन्यत्र पूर्वेणैव सिद्धत्वात् ॥

"शुभ्रादिभ्यश्च" ॥ 'यथायोगमित्यादि' । तत्रादन्तेष्विञोपवादः, शलाकादिषु तत्रामिकाणः, विधवाशब्दात्तु क्षुद्रालक्षणस्य द्रकः, चतुष्पाद्वाचिषु चतुष्पाल्लक्षणस्य ढञो, गोधाशब्दाद्गोधाया द्रकः, वचनात्सोपि भवति, क्व विशेषोत्सर्गिकस्याणः । 'पाण्डवेय इति' । ढे लोपोकद्र्वा इति लोपो न भवति, कद्रूपर्युदासेन स्त्रीलिङ्गस्य ग्रहणात्, पाण्डवशब्दाड्डी प्रत्ययः । 'लाक्षणश्यामयोर्वासिष्ठइति' । लाक्षणेयो भवति वासिष्ठश्चेत् लाक्षणिरन्यः, श्यामेयो वासिष्ठः श्यामायनोऽन्यः, अश्वादित्वात्फञ् ॥

"कुलटाया वा" 'कुलान्यटतीति कुलटेति'। मूलविभुजादिषु दर्शनात्कः प्रत्ययः, पचाद्यच् तु न लभ्यते, अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेत्यण् प्रसङ्गात्। 'या तु कुलान्यटन्ती शीलं भिनत्तीति'। एकत्र कुले प्रविष्टा स्वैरिणी या कुलान्तरमटति सा दुःशीला कुलटेत्यर्थः। 'क्षुद्राभ्यो वेति परत्वादिति'। क्षुद्रा अङ्गहीनाः शीलहीनाश्च, या पुनर्भिक्षालिप्सया सुशीलापि कुलान्यटति तस्या इह ग्रहणम्॥

"चटकाया ऐरक्" ॥ स्त्रीलिङ्गनिर्देशात्पुल्लिङ्गाच्च प्रसज्यतइत्याह। 'चटकाच्चेति वक्तव्यमिति'। एवं च पुल्लिङ्गनिर्देश एव कर्तव्यः, लिङ्गविशिष्टपरिभाषया, स्त्रीलिङ्गादपि भविष्यति, तथा तु न कृतमित्येव। 'स्त्रियामपत्ये लुग्वक्तव्य इति'। 'चटकाया अपत्यमिति'। चटकस्यापीति द्रष्टव्यम्। 'चटकेति'। लुक्तद्धितलुकीति टापो लुकि कृते पुनरजादिलक्षणष्टाप् कर्तव्यः॥

"आरगुदीचाम्" ॥ 'रका सिद्धत्वादिति'। न लक्षणेन पदकारा अनुवर्त्या इत्यवग्रहेपि नास्ति विशेषः। 'ज्ञापकार्थं त्विति'। भावप्रधानो ज्ञापकशब्दः, ज्ञापनार्थमिति वा पाठम्। 'जाहारः पाण्डार इति'। ह्रस्वान्तादयं प्रत्यय इति रका नास्ति सिद्धिः॥

"क्षुद्राभ्यो वा" ॥ 'अङ्गहीना इति' 'काणादयः शीलहीना इति'। अनियतपुंस्का दासीप्रभृतयः॥

"ढकि लोपः" ॥ 'कथं पुनरित्यादि'। ढग्विधौ टाबादिस्त्रीप्रत्ययान्तानां ग्रहणाच्छुभ्रादिष्वस्यापाठात् प्रश्नः। 'एतदेवेत्यादि'। नह्यसतो निमित्तभावः सम्भवति॥

"मातृष्वसुश्च" ॥ 'पितृष्वसुरित्येतदपेक्ष्यतइति'। चकारेणानुकृष्यतइत्यर्थः। तदनुकृष्टो योर्थः सम्पद्यते तं दर्शयति। 'पितृष्वसुर्यदुक्तमिति'। किं पुनस्तदित्याह। 'छण् प्रत्ययो ढकि लोपश्चेति'। तेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ढकि लोप एव प्राप्नोति न तु छणिति न चोदनीयमिति भावः॥

"चतुष्पाद्भ्यो ढञ्" ॥ कमण्डलुशब्दश्चतुष्पाद्वचनोऽस्ति, दृश्यते हि'कमण्डलुपद आदधीतेति । जम्बुः शृगालः ॥

"गृष्ट्यादिभ्यश्च" ॥ 'अणादीनामिति' । आदिशब्देन ठकः, बहुवचनं तु प्रकृतिभेदेन तयोरेव बहुत्वात् तत्राजवस्तिमित्रयुशब्दयोरणोऽपवादः, शेषाणामितश्चानिञ इति ठकः । 'गृष्टिशब्दो य इति' । सकृत्प्रसूता स्त्री सर्वत्र गृष्टिर्न धेन्वादिश्चतुष्पादेवेति भावः । अपर आह । सकृत्प्रसूतत्वसाधर्म्याच्चतुष्पादीष्वपि गौणो गृष्टिशब्द इति ॥

"राजश्वशुराद्यत्" ॥ 'क्षत्रियजातिश्चेदिति' : प्रकृतिप्रत्ययसमुदायेन क्षत्रियजातिश्चेद्गम्यतेत्यर्थः । 'राजन्य इति' । ये चाभावकर्मणोरिति प्रकृतिभावः । 'राजनोऽन्य इति' । स पुनर्वैश्याशूद्रयोरन्त्यजः, अन्निति प्रकृति भावः ॥

"क्षत्राद्घः" ॥ 'घप्रत्ययो भवतीति' । घशब्द एव न तरप्तमपौ, अन्यथा सर्वत्रैव प्रत्ययविधौ घ इति तरप्तमपोर्ग्रहणात्प्रत्ययादेर्घकारस्येयादेशवचनमनुपपन्नं स्यात्, न च तुयाद्धन्, घच्छौ चेति घन्घचावधकाशौ, तत्रापि सञ्ज्ञाशब्दः सानुबन्ध उपात्तः । अनुबन्धस्तु संज्ञ्यर्थ इति सम्भवात्, इग्मुणिनत्यमितिवत् । किमिदभ्यां वो घ इत्यत्रापि तरप्तमपोरेवादेशत्व विज्ञायेत । 'अयमपि जातिशब्द एवेति' । राजन्यजात्यभिधाने घो भवति, वैश्याशुद्रयोरन्त्यादिति तु इजेवेत्यर्थः ॥

"कुलात्खः" ॥ 'उत्तरसूत्रइत्यादि' । पूर्वपदप्रतिषेधस्यैतत्प्रयोजनमाढ्यकुलादेर्मा भूदिति, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेवाढ्यकुलादेर्न भविष्यति, पश्यति त्वाचार्यो नायं प्रतिषेधः कुलशब्दे प्रवर्त्ततइति, तेनात्र तावत्तदन्तस्य ग्रहणं येन विधिस्तदन्तस्येत्यत्र स्वरूपमित्यनुवृत्तेः केवलस्यापि ग्रहणं सामान्यापेक्षं च ज्ञापकं प्रातिपदिकग्रहतिमती परिभाषा कुशलशब्दे न प्रवर्तते इति तेन व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्या अप्यप्रवृत्तिः 'कुलीन इति, उत्तरसूत्रे ऽन्यतरस्यांग्रहणात्केवलादप्यनेन खो भवति, प्रशस्तो वंशः कुलं, तस्यापत्यं तत्प्रभवस्यापत्यमित्यर्थः ॥

"अपूर्वपदादन्यतरस्यां यड्ढकञौ" ॥ ननु च पूर्वपदशब्दः समासावयवे रूढो न तस्य कुलशब्दे प्रसङ्ग इत्यत आह । 'समाससम्बन्धिन इत्यादि' । समाससम्बन्धिपूर्वपदं कुलशब्दस्यापि कथं चित्सम्बन्धि भवति द्वयोरप्येकसमासावयवत्वात्, व्यवस्थावचनस्तु[1] नैवात्र शङ्कनीयः, पूर्वपदशब्दस्य समासावयवे रूढत्वात्, तेन देवदत्तः कुलीन इत्यादौ वाक्ये प्रतिषेधशङ्का न कार्या । 'बहुच्पूर्वादपीति' । अपूर्वादित्युच्यमाने बहुकुलशब्दो बहुचा सपूर्व इति ततः प्रत्ययो न स्यात् । किं च देवदत्तः कुलीन इत्यादावपि प्रतिषेधः स्यात्तस्माद्रूढिपरिग्रहार्थमपि पदग्रहणं कर्त्तव्यम् ॥

"व्यन्सपत्ने ४" ॥ ननु च नित्यं सपत्न्यादिष्विति सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितस्तत्कथं पुल्लिङ्गस्य प्रयोगस्तत्राह । 'सपत्नशब्द इत्यादि' । 'इवार्थ इति' । सादृश्ये, यथा पत्नी दुःखहेतुस्तथा शत्रुरपीत्येतत्सादृश्यम् । 'समुदायेन चेदिति' । एतेन समुदायार्थः सपत्नो न प्रकृत्यर्थो नापि प्रत्ययार्थविशेषणम्, अनर्थकावेवात्र प्रकृतिप्रत्ययाविति दर्शयति, अथानुवृत्तस्यापत्यस्य विशेषणमेव सपत्नः कस्मान्न भवति, तत्राह । 'अपत्यार्थोऽत्र नास्त्येवेति' । एतदेवोदाहरणेन स्पष्टयति । 'पाप्मना भ्रातृव्येणेति' । नहि पाप्मा भ्रातुष्पुत्रो भवति, अतः सपत्नमात्रे भ्रातृव्यशब्दस्य दर्शनादपत्यार्थोऽत्र नास्ति, किं च योऽपि सपत्नो भ्रातुरपत्यं सम्भवति सोऽप्याद्युदात्ताद्भ्रातृव्यशब्दात्सपत्नरूपेणैव प्रतीयते नापत्यरूपेण, तथा च भ्रातृव्यो भ्रातृव्य इति सह प्रयोगोऽपि व्यन्व्यदन्तयोर्भवति, अतः सुष्ठूक्तमपत्यार्थो नास्त्येवेति ॥

"रेवत्यादिभ्यष्ठक्" ॥ 'ठगादीनामपवाद इति' । तत्र रेवतीशब्दो ङीबन्तः, अश्वमणिद्वारशब्दोपपदात्पालयतेः कर्मण्यणि ङीप्, तेषु[2] ठक् प्राप्तः, वञ्चु प्रलम्भने, अस्मात्कोपपदात्कर्त्तर्युपमाने इति णिनिः, अस्मादण् प्राप्तः वृककर्णदण्डोपपदाद्ग्रहेः कर्मण्यण्, कुक्कुटस्येवाक्षिणी यस्य स कुक्कुटाक्षः, एभ्यश्च प्राप्तः ॥

१ पूर्वशब्द इति २ पु॰ पाठः । २ चतुर्ष्वित्यधिकं २ पुस्तके ।

"गोत्रस्त्रियाः कुत्सने ण च" ॥ पारिभाषिकस्य गोत्रस्य ग्रहणमित्याह । 'अपत्यं पौत्रेति' । लौकिकस्य त्वपत्यमात्रस्य ग्रहणं न भवति, यदि स्यात्तत् स्त्रिया इत्येव ब्रूयात्तच्छब्देन प्रकृतस्यापत्यस्य परामर्शादेव तदर्थलाभात्। 'गार्ग इति' । गार्गीशब्दो यञश्चेति ङीबन्तः, तस्य भस्याढे तद्धितइति पुंवद्भावेन पुंशब्दस्यातिदेशात् गार्ग्यशब्दाद्गोत्रस्याभिधायिनः प्रत्ययः, यस्येति च आपत्यस्य च तद्धितेनातीत्यल्लोपयलोपौ । 'ग्लौचुकायन इति' । ग्लुचुकस्यापत्यं प्राचामवृद्धात्फिन्बहुलमिति फिन्, इतो मनुष्यजातेरिति ङीष्, तस्य पुंवद्भावेन निवृत्तिः, ततः प्रत्ययः, णस्य णित्करणमत्र वृद्ध्यर्थं, गार्ग्यादौ प्रकृतेरेव वृद्धत्वात्, इह तु वतण्डस्यापत्यं गोत्रं स्त्री, वतण्डाच्च लुक्, स्त्रियां वतण्डी, तस्या अपत्यं वातण्डो जाल्म इति पुंवद्भावेन ङीनि निवृत्ते लुक् स्त्रियामित्यस्य गोत्रे लुगचीति प्रतिषेधाद्वातण्ड्यशब्दादेव प्रत्ययः, इह च गार्ग्या अपत्यं स्त्री गार्गी सा भार्या यस्य गार्गीभार्य इति जातेश्चेत्येव पुंवद्भावप्रतिषेधसिद्धिः, गोत्रं च चरणैः सहेत्यपत्यमात्रं गृह्यते, तेन वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधो न प्रयोजनं, किं च गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः, अस्त्रियामिति युवसञ्ज्ञाया निषेधाद्गोत्रपञ्चैवावतिष्ठते, तत्रैको गोत्रइति नियमादेव गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययः सम्भवति, तेन नास्ति गार्गी नतरां गार्गीभार्यः । अपर आह । अस्ति गार्गी, कथं गार्ग्या अपत्यं या स्त्री न सा युवतिर्नापि गोत्रं, नहि सा गर्गस्यापत्यं पौत्रप्रभृतेश्चापत्यस्य गोत्रसञ्ज्ञा विधीयते तदभावादेको गोत्रइति नियमाभावः, ततश्च णस्य भावादस्ति गार्गीति, ये तु नास्ति गार्गीत्याहुस्ते मन्यन्ते मातृवंशः पितृवंशश्च द्वावपि वंशौ प्रतीयमपत्यं भवति अपातहेतुत्वात्, ततश्च गार्ग्या अपत्यं या स्त्री सा गर्गस्यापत्यं भवत्येव, पौत्रप्रभृति[1]ग्रहणं च व्यवहितापत्योपलक्षणं, तेन गर्गापेक्षया तस्या गोत्रत्वादेको गोत्रइति नियमात्प्रत्ययान्तराभाव इति, वृत्तौ तु क्व चित्पठ्यते गोत्राद्यूनीति यूनि प्रत्ययो भवतीति, तदप्यस्मिन्नेव पक्षे घटते तदाह । 'गार्ग्या अपत्यं

१ अपत्येत्यधिकं च पु॰ ।

पुमान्पुत्रा भवति गार्ग्यो माणवक इति'। मातामहादेरुपलक्षणार्थोयं प्रयोग इति नास्ति कुत्सा ॥

"वृद्धाट्ठक् सौवीरेषु बहुलम्" ॥ अत्र वृद्धिर्यस्याचामादिस्तद्वृद्धमिति वृद्धं गृह्यते न त्वपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरपरिभाषितमुत्तरसूत्रे हि वक्ष्यति फिञो ग्रहणं न फिनः, वृद्धाधिकारादिति। 'सौवीरेष्विति प्रकृतिविशेषणमिति'। गोत्रस्त्रियां इत्यतो गोत्रग्रहणानुवृत्तेर्गोत्रप्रत्ययान्ता या प्रकृतिस्तस्या विशेषणमित्यर्थः। 'वृद्धात्सौवीरगोत्रादिति'। इदमपि पारिभाषिकस्यैव वृद्धस्य ग्रहणे घटते ऽन्यथा सौवीरेषु यद्वृद्धं तस्मादिति वक्तव्यम्। 'भागवित्तायन इति'। यञिञोश्चेति फक् तृणबिन्दोरपत्यमिति औत्सर्गिकोण् तार्णबिन्दवः, ततष्ठक्, पूर्वठक्ग्रहणं गोन संबद्धमतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह ग्रहणम्। 'भागपूर्वपदोर्वित्तिरिति'। वित्त्यन्त इत्यर्थः। भागवित्तिशब्दइति यावत्। 'गोत्राट्ठग्बहुलं तत इति'। गोत्रस्त्रियां इत्यतो गोत्रग्रहणानुवृत्त्या गोत्रवचनात्प्रातिपदिकाद्बहुलं यष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्य एव भवति नान्येभ्य इति परिगणनश्लोकार्थः। ननु गोत्रग्रहणमनुवर्त्तते यच्च सौवीरगोत्रवृत्तिप्रातिपदिकं तद्वृद्धमेव तत्किमर्थं वृद्धग्रहणमत आह। 'वृद्धग्रहणं स्त्रीनिवृत्त्यर्थमिति'। तद्धि गोत्रग्रहणं स्त्रियां विशेषणमतस्तदनुवृत्तौ स्त्रीग्रहणमप्यनुवर्त्तेत, वृद्धग्रहणसामर्थ्यात्तु गोत्रग्रहणमेवानुवर्त्तते न स्त्रीग्रहणमिति व्याचक्षते, अपत्यमन्तर्हितं वृद्धमित्यस्य तु वृद्धस्य ग्रहणे ऽसमञ्जसोयं ग्रन्थः स्यात्। 'औपगविरिति'। ननु च परिगणनादेवात्र न भविष्यति, तच्च। नहि सूत्रकारोर्वाचीनपरिगणनाश्रयेणातिप्रसङ्गनिवारणं मन्यते, वाग्रहणएव कर्त्तव्ये यद्बहुलग्रहणं कृतं तस्य प्रयोजनमाह। 'बहुलग्रहणमित्यादि'। वैचित्र्यमेव दर्शयति। 'गोत्रस्त्रियां इत्यारभ्येति'। तत्रान्त्यः सौवीरगोत्रएवेत्ययमेवार्थो ग्रन्थसाध्यः ॥

"फेश्छ च" ॥ 'यमुन्दश्चेत्यादि'। अत्र वार्ष्यायणीति शब्दरूपापेक्षाया नपुंसकनिर्देशः। 'फिञ इति'। फिञन्ता इत्यर्थः। 'स्मृतादिति',

एते त्रयः फिञन्ताः प्रकृतयः स्मृता इत्यर्थः । 'सौवीरेषु च कुत्सायामिति'। पुनश्चकारो वृत्तभङ्गभयाच पठितः । बहुलग्रहणात्सिद्धोयमर्थः एवं वृत्तिकृता दर्शित इदानीं तु श्लोकवार्त्तिककारेणेत्यपौनरुक्त्यं, सुयामशब्दोपि तिकादिः, वृषस्यापत्यं वार्ष्यायणिः, अयमपि तिकादिरेव, दूगुकोसलमीरच्छागवृषाणां युड्डादिष्टस्येति वचनाद् आयनादेशे कृते युडागमः ॥

"फाण्टाहृतिमिमताभ्यां णफिञौ" ॥ 'तेन यथासंख्यमिह न भवतीति'। एवं च कृत्वा णस्य णित्करणमर्थवद्भवति, तद्धि मिमतशब्दे वृद्ध्यर्थं, यथासंख्ये तु फाण्टाहृतेर्वृद्धत्वाण्णित्करणमनर्थकं स्यात्, इह तु फाण्टाहृताभार्य इति गार्गाभार्य इतिवत्पुंवद्भावप्रतिषेधादिकं द्रष्टव्यं, यथा तु वार्त्तिकं तथा यथासंख्यमत्रेष्यते यथाह, फाण्टाहृतेर्णस्य णित्करणानर्थक्यं वृद्धत्वात्, प्रातिपदिकस्य पुंवद्भावप्रतिषेधार्थं तु, उक्तं वेति ॥

"कुर्वादिभ्यो ण्यः" ॥ ननु च कुर्वादिभ्यो ण्य इत्येव कुरुशब्दाण्ण्यः सिद्धः किमर्थमिह पठ्यते ऽत आह । 'कुरुशब्दादपरोपीति'। सत्यमपरोपि ण्यप्रत्ययो भविष्यति, स तु तत्रियादित्यनेनार्थभेदमाह. तद्राजसञ्ज्ञक इत्यनेन रूपभेदमाह । 'तिकादिषु पाठादिति'। कुरुकौरव्यशब्दौ द्वावपि पठ्येते। 'कारिणस्तु रथका[1]रादिति'। कारिणः शिल्पिनः, रथकारजातिस्तु शिल्पिवृत्तिर्न भवतीति मन्यते । 'तस्य पुंवद्भावो न भवतीति'। अस्याठे तद्धितइति विधीयमानः, यदि हि स्यात्तर्हि तद्धितइति टिलोपः स्यात्, कस्माच्च भवतीत्याह । 'स्त्रीप्रत्ययनिर्देशसामर्थ्यादिति'। पुल्लिङ्गस्यापि पाठे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि सिद्धः प्रत्ययः पुल्लिङ्गात्त्वनभिधानाच्च भविष्यतीति भावः । वामरथस्य कण्वादिवत्स्वरवर्जमिति गणवाक्यं व्याचष्टे । 'वामरथशब्द इत्यादि'। तस्येति प्रकरणाण्ण्यप्रत्ययान्तस्येति विज्ञेयम् । 'कण्वादिवदिति'। केवलानां तेषां कस्य चित्कार्यस्याविधानाद्यञन्तानां कण्वादीनां यत्कार्यं तस्यातिदेशः । 'लुगादिकमिति'। कण्वादिषु यञन्तेषु दृष्टमत्रस्य कार्यस्यातिदेशो न तु कण्वादित्वप्रयुक्तस्य, अत एव स्वरवर्जमित्याह,

१ शब्दादित्यधिकं मुद्रितमूलपुस्तके ।

तेन लुगादिकमप्यतिदिश्यते न तु कण्वादिभ्यो गोत्रइत्येव प्रत्ययविधिः। 'वामरथ इति' यञञोश्चेति बहुषु लुक्, यञश्च प्राचां ष्फ तद्धितः, यूनि यञिञोश्चेति फक्, शैषिकेष्वर्थेषु छे प्राप्ते कण्वादिभ्यो गोत्रे सङ्घाङ्कलक्षणेष्विति चाण् भवति। 'सम्राजः क्षत्रियइति'। सम्राजोपत्यं साम्राज्यो भवति, क्षत्रियश्चेत्, साम्राजोन्यः॥

"सेनान्तलक्षणकारिभ्यश्च"॥ लक्षणेति स्वरूपग्रहणमित्याह। 'लक्षणशब्दादिति'। कारीत्यर्थग्रहणमित्याह। 'कारिवचनेभ्यश्चेति'। साधु कुर्वन्तीति कारिणः शिल्पिनः। 'नापित्य इति'। प्राचां मते ण्य उदाहृतः, उदीचां तु मते परत्वादुदीचां वृद्धादिति फिञेव भवति नापितायनिरिति॥

"उदीचामिञ्"॥ 'तात्त्व इति'। बपूर्वहन्धृतराज्ञामणीत्यल्लोपः। 'ताक्षण्य इति'। ये चाभावकर्मणोरिति प्रकृतिभावः। इह सेनान्तलक्षणकारिभ्यो वेति वक्तव्यं, नार्थोनेनेञ्वचनेन,नापि शिवादिषु तक्षन्शब्दस्य पाठेन ण्ये हि विकल्पिते यो यतः प्राप्नोति स ततो भवतीति ततः प्राग्दीव्यतोण् अन्येभ्यश्चात इञ् भविष्यति, नैवं शक्यम्। एवं हि जातसेनादिभ्य ऋष्यादिलक्षणोण् प्राप्नोति॥

"तिकादिभ्यः फिञ्"॥ 'क्षत्रियवचन इति'। यः कुरुनादिभ्यो ण्य इति व्युत्पादितः। 'औरसशब्देनेति'। उरसा शेते उरशः क्षत्रियः, पृषोदरादित्वाद्रूपं, तस्यापत्यं जनपदशब्दात्क्षत्रियादित्यञ्, किं पुनरेवं प्रयत्नेन क्षत्रियवचनस्य ग्रहणं व्याख्यायतइत्यत्राह। 'तथा चेति'। 'उदाहृतमिति'। पूर्वैरपि वृत्तिकारैरित्यर्थः। तिक्नोतेरिगुपधात्कः, तिकः, किं तवास्तीति प्रवर्त्तते कितवः पृषोदरादिः, सम्पूर्वोज्ज्ञानातेरातश्चोपसर्ग इति कः, स्त्रियां टाप्, सञ्ज्ञा, बालैर्बद्धा शिखास्य स बालशिखः, द्वौ शब्दावित्यन्ये, बलतेर्णिजन्तादच् बालः, तस्य बालायनिः शिखाशब्देन तद्वान् लक्ष्यते, शैखायनिः, उरशशब्दो व्युत्पादितः, शट कुत्सायां पचाद्यच् ततो गर्गादित्वाद्यञ् शाट्यः, ततो यूनि फिञ्, सिन्धुशब्दाद्गुञ्मगधेत्यण्, सैन्धवः, अत्रापि यूनि फिञ् यममुनक्तीति यमुन्दः, शकन्ध्वादिः, प्रशस्तं

संसारिणामनन्तत्वेन दुस्तरत्वाच्च, तस्माद्विलक्षणोऽयं जीवांश इति चेत्, आगतोऽसि तर्हि मदीयं पन्थानम्, ईश्वरस्य स्वरूपेण तादात्म्यवर्णने स्यादयं दोषः आत्मशरीरभावेन तु तादात्म्यप्रतिपादने न कश्चिद्दोषः । प्रत्युत निखिलचेत*ननियमनादिर्महानयं गुणगणः प्रतिपादितो भवति, सामानाधिकरण्यं च मुख्यवृत्तम् ।

अपि च एकस्य वस्तुनो हि भिन्नाभिन्नत्वं विरुद्धत्वान्न सम्भवतीत्युक्तं घटस्य पटाद्भिन्नत्वे सति तस्य तस्मिन्नभावः ।

इदानीं सामान्येन सर्वस्य वस्तुनो भिन्नाभिन्नत्वं निरस्यति अपि चेति, उक्तमिति-निर्विशेषवस्तुनिरासे प्रसङ्गादुक्तमित्यर्थः । तत्र विरुद्धत्वहेतोः सिद्धवत्कारेणासम्भव उक्तः । अत्र तु तत्रैव विरुद्धत्वं कथमिति शङ्कायां तदुपपाद्यते घटस्येति, घटस्य पटाद्भिन्नत्वं नाम तस्य तत्राभावः । अभिन्नत्वं नाम तत्र तस्य भाव इत्यर्थः । ततः किमित्यत्राह एकस्मिन्निति, आकारभेदादविरोधं शङ्कते जात्येति, जातिमभ्युपगच्छद्भिरभिमतभेदाभेददूषणेन तामनभ्युपगच्छद्भिरभिमतभेदाभेदोऽपि प्रतिक्षिप्तः स्यादित्यभिप्रायेण जात्यात्मनेत्याद्युच्यते । अत्र जातिव्यक्त्योः किमभिन्नत्वमुत भिन्नत्वमुत भिन्नाभिन्नत्वमिति विकल्पमभिप्रेत्याभिन्नत्वपक्षे दूषणमाह जातेरिति, जातिव्यक्त्योरभेदश्चेत् खण्डमुण्डव्यक्तिद्वयेन जातेरभेदात् खण्डस्य मुण्डत्वप्रसङ्ग इत्यर्थः । तत्र भिन्नत्वपक्षे व्यक्तिगतो भेदो जातिगतश्चाभेद इति नैकस्य द्व्यात्मकतेति दूषणस्य स्पष्टत्वात्तदनुक्तम् । भिन्ना-

* निखिलभुवननियमनादिरिति पा० ।

भिन्नत्वपक्षे दूषणमाह खण्डेन चेत्यादिना, जातेर्मुण्डस्य चाभेदात् खण्डस्य *मुण्डत्वप्रसङ्गः ।

अभिन्नत्वे सति तस्य च भाव इति एकस्मिन्काले चैकस्मिन्देशे चैकस्य हि पदार्थस्य युगपत्सद्भावोऽसद्भावश्च विरुद्धः । जात्यात्मना भावो व्यक्त्यात्मना चाभाव इति चेत्, जातेर्मुण्डेन व्यक्त्या चाभेदे सति खण्डे मुण्डस्यापि सद्भावप्रसङ्गः, खण्डेन च जातेरभिन्नत्वे सद्भावः, भिन्नत्वे असद्भावः, अश्वे महिषत्वस्येवेति विरोधो दुष्परिहर एव ।

जातेर्मुण्डस्य च भेदादश्वे †गजत्वाभाववत् खण्डस्य मुण्डत्वाभावप्रसङ्ग इति विरोधः । यद्वा जातिव्यक्त्योरभेदे खण्डस्य जातिरूपत्वप्रसङ्गः, भेदे खण्डस्य जातिरूपत्वाभावप्रसङ्ग इति, एवं युगपदेकत्रैकस्य भावाभावविरोधो दुष्परिहर इत्यर्थः । जातिरूपेणाभेदो व्यक्तिरूपेण भेद इत्येवं रूपभेदाभेददूषणेनावस्थात्मना भेदाद्द्रव्यरूपेणाभेद इत्येवंरूपभेदाभेदश्च यादवप्रकाशाभिमतो निरस्तो भवति तुल्यन्यायत्वात् । यद्वा जाति-शब्दो द्रव्यपरः, व्यक्तिशब्दोऽवस्थापर इति योजनीयं, न हि दृष्टेऽनुपपन्नं नाम, तस्माद् भेदाभेदयोः प्रतिपन्नत्वेन नोक्तदोषप्रसङ्ग इति शङ्कायां प्रतीतिर्न तथेत्याह जात्यादेरिति, प्रथमपिण्डग्रहणेऽभेदेन ग्रहणं भेदाभेदसाधकत्वेन हि परैरुच्यते तत्रत्युक्तं, प्रकारप्रकारिणोश्च पदार्थान्तरत्वमिति वस्तुसंस्थानतयेति संस्थानशब्दोऽपृथक्सिद्धधर्मवाची वस्तुसंस्थानतया–वस्तुनः प्रकारत्वादपृथक्सिद्धधर्मत्वेन

जात्यादेर्वस्तुसंस्थानतया वस्तुनः प्रकारत्वात् प्रकारप्रकारिणोश्च पदार्थान्तरत्वं प्रकारस्य पृथक्सि-

* तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन मुण्डस्यतदभिन्नजातेः खण्डाभेदवत्त्वेन खण्डस्य मुण्डत्वप्रसङ्ग इत्यर्थः ।

† अश्वस्य गजत्वाभाववदिति पा॰ ।

**द्ध्यनर्हत्वं पृथगनुपलम्भश्च, तस्य च संस्थानस्य चानेकवस्तुषु प्रकारतया ऽवस्थितिश्चेत्यादि पूर्वमेवोक्तं, सोऽमिति बुद्धिः प्रकारैक्यादयमपि दण्डीति बुद्धिवत्**

वस्तुनो विशेषणत्वादित्यर्थः । इदमित्थमिति प्रकारप्रकारिभावेन प्रतीतेर्नात्राभेद इति स्पष्टं, पृथक्स्थि*त्यनर्हत्वमित्यनेन सहोपलम्भनियमः प्रत्युक्तः, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमप्यपृथक्सिद्धधर्म्मवाचित्वादित्युक्तं भवति, एकशब्दानुविद्धप्रत्ययो धर्म्मैक्यान्न तु धर्मधर्म्मिणोरभेदादिति स्फुटतरं, संस्थानस्य चानेकवस्तुषु प्रकारतया स्थितिश्चेत्यनेन प्रथमपिण्डग्रहणेऽपि संस्थानस्य ग्रहणमस्तीत्युक्तं भवति । अन्यथा द्वितीयपिण्डग्रहणेऽनुवृत्तिर्न हि बोद्धुं शक्यते । निर्विकल्पकप्रत्यक्षेणाभेदेन गृहीतमिति चेत्तदपि प्रत्युक्तमित्यादि–शब्दाभिप्रायः । अनुवृत्ता जातिर्न व्यावृत्तं संस्थानं भवतीति शङ्कायां संस्थानमेव जातिरित्युपपादयति सोऽयमितीति, प्रकारैक्यात्--एकप्रकारत्वात् तुल्यप्रकारत्वादित्यर्थः । संस्थानातिरेकेण जातिर्नाम न काचिदुपलभ्यते । अनुवृत्तव्यवहारेण कल्प्यते चेत् तदयुक्तम् अनुवृत्तव्यवहारस्यान्यथासिद्धेः । अश्वगजमहिषगवादिष्वियं जातिरियं जातिरित्यनुवृत्तव्यवहारेऽपि न हि जातिषु जात्यन्तरं कल्प्यते इयं व्यक्तिरियं व्यक्तिरिति व्यवहारेण व्यक्तिषु न हि व्यक्तित्वजातिः कल्प्यते, स हि व्यवहारः सादृश्यात्तस्मात्कल्पकस्यान्यथासिद्धत्वात् संस्थानातिरिक्तस्यादर्शनात्संस्थानमेव जातिरित्यर्थः ।

**अयमेव च जात्यादिः प्रकारो वस्तुनोभेद इत्युच्यते. तद्योग एव वस्तुनोभिन्नमिति व्यवहारहेतुरित्यर्थः ।**

सोऽयमिति बुद्धिः–अनुवृत्तविषयव्यवहारान्विता बुद्धिः, तज्जातीयत्वबुद्धिः अयमपि गौरिति बुद्धिरित्यर्थः । दण्डीति बुद्धिवत्, अयं दण्डी अयमपि दण्डीति व्यवहारे दण्डित्वं नाम जातिर्न ह्यस्तीत्यर्थः । गुणक्रियात्मस्व.

* पृथक्सिद्ध्यनर्हत्वमिति पा· ।

नुवृत्तव्यवहारोऽपि प्राभाकराणां प्रतिवन्दीत्वेन वक्तव्यः प्रतियोगिबुद्धिनिरपेक्षो जात्यादिः प्रतियोगिसापेक्षोभेदो भवितुं नार्हतीति शङ्कायां जात्यादिरेव भेद इति साधयति अयमेव च जात्यादिरिति, जात्यादेर्भेद इति किं संज्ञाकरणं देवदत्तादिवदिति शङ्कायां तद्विवृणोति तद्योग एवेति, अभेदबुद्धिविरोधी हि भेदः, जात्यादिग्रहणे अभेदबुद्धिनिवृत्तेर्जात्यादिरेव भेद इत्यर्थः । जात्यादिविषयभेदव्यवहारे हेत्वन्तरापेक्षया अनवस्थाप्रसङ्ग इत्यत्राह स चेति, स्वपरनिर्वाहको जात्यादिरित्यर्थः । संवेदनवदिति संवेदनस्य स्वपरव्यवहारहेतुत्वं हि पराभ्युपगतम् । तदेव विवृणोति यथेति, उक्तार्थेनैव परोक्ताभेदस्य प्रमाणानुपपत्तिः प्रमेयानुपपत्तिश्च परिहृतेत्याह अत एवेति,.

**स च वस्तुनो भेदव्यवहारहेतुः स्वयं* च संवेदनवत् यथा संवेदनं वस्तुनो व्यवहारहेतुः स्वस्य व्यवहारहेतुश्च भवति, अत एव च सन्मात्रग्राहिप्रत्यक्षं न भेदग्राहीत्यादिवादा निरस्ताः । जात्यादिसंस्थानसंस्थितस्यैव वस्तुनः प्रत्यक्षेण गृहीतत्वात्,**

आदि–शब्देन प्रमेयानुपपत्तिर्विवक्षिता । अत एवेत्यभिप्रेतमर्थं विवृणोति जात्यादीति, प्रत्यक्षज्ञानमेकक्षणवर्त्यपि तस्मिन्नेव क्षणे जात्यादिविशिष्टमेव वस्तु गृह्णातीत्यनेन प्रमाणानुपपत्तिर्निरस्ता, स्वरूपधर्म्मविकल्पेन हि प्रमेयानुपपत्तिः, तत्र स्वरूपव्यवहारवद् भेदव्यवहारप्रसङ्गो गोत्वादिव्यवहारादेव प्रत्युक्तः, भिन्न इति शाब्दव्यवहारविशेषस्य प्रतियोऽपेक्षत्वं दाराः कलत्रं जलमाप इत्यादिषु स्त्रीत्वबहुत्वपुंस्त्वादिवच्छब्दस्वभावायत्तमिति नार्थः स्वरूपदोषः, ज्ञानादिव्यवहारे जात्यादिशब्दव्यवहारे च प्रतियोगिनिरपेक्षत्वादित्ययमर्थोऽतिस्पष्टत्वादभिप्रेतः स्वपरनिर्वाहकत्वाभ्युपगमेनानवस्था च परिहृता । जात्यादेरेव भेदत्वादन्योन्याश्रयश्च परिहृत इत्यर्थः । एवं जीवब्रह्मस्वरूपैक्ये निर्दोषत्वश्रुतिबाध

* स्वस्य च स वेदनवदिति पा० ।

उक्तः । अचिद्ब्रह्मैक्यप्रयुक्तदोषोऽपि भास्करमत इवात्राप्याप*तेदित्याह स्वरूपेति, दोषश्चाविकारत्वनिरवद्यत्वश्रुतिबाधः पूर्वमुक्तः । स एवात्र स्यादित्यर्थः । एवं द्वितीयश्लोकार्थो विवृतः ।

अथ प्रथमश्लोकार्थं पूर्वमीषद्विवृतं महाविस्तरेण वक्तुमारभते—

**तस्यैव संस्थानरूपजात्यादेः प्रतियोग्यपेक्षया भेदव्यवहारहेतुत्वाच्च । स्वरूपपरिणामदोषश्च पूर्वमेवोक्तः, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति**

तत्र तत्त्वमसीति सामानाधिकरण्यस्य भेदश्रुतिघटकश्रुत्यविरोधेनार्थं वक्ष्यंस्तदुपयोगिनीर्घटकश्रुतीरुदाहरति यः पृथिव्यामिति काण्वशाखावाक्यं, य आत्मनीति माध्यन्दिनशाखावाक्यम्, अनेन वाक्यद्वयेनाचिज्जीवान्तर्यामित्वं सिद्धम् । उभयेऽपि हि भेदेनैनमधीयत इति सूत्रानुसारादुभयवाक्योपादानं, तत्र कारणावस्थस्याप्यक्षरस्यान्तर्यामित्वं वक्तुं देवताविशेषं ज्ञापयितुं च सुबालोपनिषद्वाक्यमाह यः पृथिवीमिति, योऽक्षरमित्यारभ्योदाहर्तव्येऽपि यः पृथिव्यामित्याद्युपादानं प्रकरणज्ञापनार्थम् अन्तर्याम्यमृत इत्यत्रामृत-शब्दस्य एष सर्वभूतान्तरात्माऽपहतपाप्मा इत्यत्रापहतपाप्मशब्दस्य चार्थस्तद्गतदोषासंस्पृष्टत्वमिति तदुक्तेः प्रदर्शनपरत्वं दर्शयितुं च द्वा सुपर्णा इत्युदाहृतं न तु भेदश्रुतित्वात्, भेदश्रुतयो हि उत्तरत्र वक्ष्यन्ते, अन्तः प्रविष्ट इति, इदमपि घटकवाक्यं सर्वात्मत्वं तदन्तर्यामित्वाच्च स्वरूपैक्याविति ह्यस्यार्थः ।

**एष त आत्माऽन्तर्याम्यमृतः, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः**

* आपतीति पा० ।

यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेदेत्यादि, योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एकोनारायणः, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च

तत्तच्छब्दवाच्यत्वं तत्तदनुप्रवेशकृतं न तु स्वरूपैक्यकृतमिति स्पष्टार्थवाक्यमाह तत्सृष्ट्वेति, तत्तदनुप्रवेशेऽपि तद्गतदोषास्पृष्टत्वमाह सत्यं चानृतं च सत्यमभवदिति वाक्यं चिदचिदनुप्रवेशेन तत्तच्छब्दवाच्यमपि ब्रह्म सत्यमभवत् अप्रच्युतस्वस्वभावमभवदित्यर्थः । नामरूपव्याकरणश्रुतेरपि घटकत्वात्तामाह अनेनेति, जीवेनेति निर्देशस्यानुप्रवेशकृतत्वं पूर्वोदाहृतवाक्यैः स्पष्टम् । भेदश्रुतिमाह पृथगिति, तेन जुष्टः—ब्रह्मणाऽनुगृहीतस्ततः—पृथक्त्वज्ञानादमृतत्वमेतीत्यर्थः । भोक्तेति भोक्तारमित्यर्थः । भोक्तृभोग्यनियन्तॄन् यथावत् ज्ञात्वा त्रिविधमेतद्ब्रह्म सर्वं मया तव प्रोक्तमित्यर्थः । आत्मनां नित्यत्वं बहुत्वं च दर्शयति नित्य इति,

त्यच्चाभवदित्यादि सत्सत्यं चानृतं च सत्यमभवत्, अनेन जीवेनात्मनेत्यादि, पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति, भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत्, नित्यो नित्यानां

प्रधानेत्यादिस्पष्टं, स्थैर्यं ते वसुधातलमिति वसुधातलं तव स्थैर्यं भूम्याः स्थिरत्वस्वभावत्वं च त्वदधीनमित्यर्थः। सामानाधिकरण्यप्रयोगः कार्यकारणभावाल्लाक्षणिकः। अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षण इति प्रकरणस्यवाक्यानामयमेवार्थः। यस्य प्रसादजो ब्रह्मा रुद्रश्च कोपसम्भवः, यस्य प्रसादादहमच्युतस्य भूतप्रजासर्गकरोऽन्तकारी। क्रोधाच्च रुद्र इत्यत्र देवताविशेषेषु प्रसादक्रोधतुकत्वदर्शनात् कार्यकारणभावेऽपि सामानाधिकरण्यप्रयोगो दृष्टः, ब्राह्मणोऽस्य मुखमासीदित्यादिषु पद्भ्यां भूमिरिति वाक्यैकार्थ्यात्, तस्मात् स्थैर्यं ते वसुधातलमित्यादिवाक्येन सर्वस्योत्पत्तिस्थितिप्रवृत्तयो भगवदधीना इत्युक्तं भवति, यत्किञ्चिदिति कृत्स्नकार्यवर्गस्य कारणं तत्तत्कारणान्तर्यामितया तत्तच्छरीरकं ब्रह्मैवेत्यर्थः अहमात्मेत्यात्म-शब्देन सर्वमपि शरीरमित्यर्थात् सिद्धं, सर्वस्य चाहमित्यन्तर्यामिस्वपरं हृदि ह्ययमात्मेति जीवस्य हृत्स्थत्वात् तदन्तर्यामी च हृत्स्थ* एवेत्यर्थः। आत्मशरीरभावावगमोऽस्तु ततः किं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्येत्याह शरीरस्य चेति, अनेनाकृत्यधिकरणन्यायः स्मारितः। शरीरशरीरिणोश्च धर्मभेदेऽपि तयोरसङ्करादिति महापातकिनस्तत्संसर्गिणश्च धर्मभेदेऽपि संसर्गप्रयुक्तं पातकित्वमापतति काष्ठस्य रुमायाः† च धर्मभेदे सत्येव काष्ठस्य संसर्गप्रयुक्तलव‡णत्वं दृश्यते

**चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान् प्रधानक्षेत्रज्ञपतिर्गुणेशः, ज्ञाज्ञौ द्वावजावीशनीशावित्यादिश्रुतिशतैस्तदुपबृंहणैः—जगत्सर्वं शरीरं ते, स्थैर्यं ते वसुधातलं, यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज ! तस्य सृज्यस्य सम्भूतौ, तत्सर्वं वै हरेस्तनुः, अ-**

* हृदि स्थित एवेत्यर्थः इति पा०।

† रुमा स्याल्लवणाकर इति लवणोत्पत्तिस्थानं रुमोच्यते।

‡ संसर्गप्रयुक्तलवणत्वमिति पा०।

हमात्मा गुडाकेश ? सर्वभूताशयस्थितः । सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं चेत्यादि-

एवं धर्म्मभेदेऽपि संसर्गप्रयुक्तो यः सङ्करस्तस्य शरीरशरीरिणोरसंभवादित्यर्थः। धर्म्मभेदेन चेति पाठः । एवमुक्तहेतुभिः सर्वशरीरं ब्रह्म, आदि-शब्देन व्यधिकरणावाक्यविशेषाः शरीरतन्वङ्गादिशब्दवन्तो विवक्षिताः सर्वशरीरत्वात्सर्वचेतनाचेतनप्रकारं ब्रह्मैव सर्वशब्दानां मुख्याभिधेयमित्यर्थः । कथं मुख्यवृत्तत्वमित्यत्राह सामानाधिकरण्यमिति, ततः किमित्यत्राह तस्य चेति, कथं स्वपक्षे मुख्यतेत्यत्राह तथा हीति, कारणत्वशङ्कितदोषव्यावर्तकशोधकवाक्यार्थमाह निरवद्यमिति, त्वमिति चेति, तच्छब्देन सामानाधिकरण्यवृत्तेन त्वमिति पदेनेत्यर्थः । त्वं-शब्दस्य जीवान्तर्यामिपरत्वे लक्षणा स्यादित्यत्राह तच्छरीरं तदात्मतयाऽवस्थितमिति,

वेदविदग्रेसरवाल्मीकि-पराशर-द्वैपायनवचोभिश्च परस्य ब्रह्मणः सर्वस्यात्मत्वावगमाच्चिदचिदात्मकस्य वस्तुनस्तच्छरीरत्वावगमाच्च शरीरस्य शरीरिणं प्रति प्रकारतयैव तत्पदार्थत्वात्, शरीरशरीरिणोश्च धर्म्मभेदेऽपि तयोरसङ्करात्सर्वशरीरं ब्रह्मेति ब्रह्मणो वैभवं प्रतिपादयद्भिः सामानाधिकरण्यादिभिर्मुख्यवृत्तैः सर्वचेतनाचेतनप्रकारं ब्रह्मैवाभिधीयते, सामानाधिकरण्यं हि द्वयोः पदयोः प्रकारद्वयमुखेनैकार्थनिष्ठत्वं, तस्य चैतस्मिन्पक्षे मुख्यता। तथा हि तत्त्वमिति सामानाधिकरण्ये तदित्यनेन जगत्कारणं

शरीरतया तादात्म्यमस्तु ततः किमन्तर्यामिपर्यन्तत्वस्येत्यत्राह तत्प्रकारमिति, पक्षान्तरेष्वमुख्यार्थत्वमाह इतरेष्विति, ब्रह्माज्ञानपक्षे प्रवृत्तिनिमित्ताभावेन सामानाधिकरण्यलक्षणाहानिः अविद्याश्रयत्वदोषश्च

स्यात् । द्वितीयपक्षेऽपि ब्रह्मण एव तच्छब्दावगतकल्याणगुणविरुद्धाज्ञत्वादिप्रसङ्ग इति सर्वज्ञत्वादिव्याघातादेव त्वं-शब्दस्य जीवत्वप्रहाणेन वस्तुमात्रपरत्वे स्वाभिमुखचेतनत्वरूपप्रवृत्तिनिमित्तहानमापतति स्वाभिमुखचेतनो हि त्वं-शब्दवाच्यः । आभिमुख्यं च श्वेतकेतोर्जीवत्वविशिष्टस्यैव न तु वस्तुमात्रस्य, अतः सामानाधिकरण्यलक्षणाहानिः सदोषत्वं चेत्यर्थः । तृतीयेऽपि पक्षे सर्वज्ञत्वादिगुणकत्वात्तच्छब्दवाच्यतया प्रकृत ईश्वर इति ब्रह्मांशभूतजीवेश्वरवाचिपदयोर्घटशरावइतिवत्सामानाधिकरण्यमयुक्तं, तच्छब्दः सन्मात्रपर इति चेत्सर्वज्ञत्वादिगुणकस्यैव प्रकृतत्वाद् घटे प्रकृते मृन्मात्रस्येव सन्मात्रस्य प्रकृतत्वाभावात् तत्पदस्य प्रवृत्तिनिमित्तप्रहाणेन सामानाधिकरण्यलक्षणाहानिः, सन्मात्रं च प्रकृतमिति

**सर्वकल्याणगुणा*करं निरवद्यं ब्रह्मोच्यते, त्वमिति च चेतनसमानाधिकरणवृत्तेन जीवान्तर्यामिरूपि तच्छरीरं तदात्मतयाऽवस्थितम्—**

चेत् सत्प्रकृतं न तु सन्मात्रं मात्रजर्थस्य तदैक्षत बहु स्यामित्याद्युक्तसार्वज्ञ्यादिविरोधात् तच्छब्दस्येश्वरपरत्वे तद्विरोधपरिहाराय त्वं-पदस्य वस्तुमात्रपरत्वे स्वाभिमुखचेतनत्वरूपप्रवृत्तिनिमित्तप्रहाणात् सामानाधिकरण्यलक्षणाहानिः, दोषवत्त्वं च स्यादित्यर्थः । ननु सृष्टेः प्राक् एकत्वावधारणादतः प्रधानपुरुषाविति प्रधानपुरुषयोरप्युत्पत्तिमत्त्वदर्शनाच्च तदानीं न शरीरशरीरिभावः सिद्ध्यतीति द्रव्यैकत्वमेवाभ्युपगन्तव्यमित्यत्राह एतदुक्तं भवतीति, यद्यद्विशेषणं वेदान्तवाक्येषु श्रुतं तत्तद्वाक्तुल्यात्तदभिप्रेत्यैवं-शब्दोऽत्र प्रयुक्तः यथा निमित्तकारणत्वं निमित्तत्वोपयोगि सर्वज्ञत्वादिसापेक्षम् एवमुपादानत्वमपि निष्कृष्टस्वरूपस्यानुपपन्नत्वात् प्रकृतिपुरुषविशिष्टत्वसापेक्षमिति कारणविषयमेकत्वावधारणत्वं न कारणत्वोपयुक्तविशेषणविरोधीति ,तदानीमपि चिदचिद्विशिष्टमेव ब्रह्मेत्य-

* सर्वः कल्याणगुणाकरोयस्येति बहुव्रीहिसमाश्रयणेन सर्वकल्याणगुणाकरमिति नापुंसक्यमितरथा तु पुंस्त्वमेव आकरशब्दस्याजहत्पुंस्त्वकत्वात् ।

भिप्रायेणात्र परिहार उच्यते ब्रह्मैवेत्यादिना, एवमवस्थितमित्यत्र एवं-शब्दार्थभूतप्रकारतयेति सर्वं खल्विदं ब्रह्म व्यक्तं विष्णुस्तथाऽव्यक्तं ज्योतींषि विष्णुरित्यादिनिर्देशस्य प्रदर्शनार्थमेवं-शब्दः, व्यक्तं विष्णुरित्यादिनिर्देशेषु एवं-शब्दार्थभूतप्रकारतया-तत्तच्छब्दप्रवृत्तिनिमित्तभूतप्रकारतया सर्वावस्थास्वपि चेतनाचेतनप्रपञ्चसद्भाव इत्यर्थः स्थूलस्य सूक्ष्मस्य चेत्यनेनैकत्वावधारणं व्याख्यातं, नामरूपविभागानर्हसूक्ष्मदशा-

**तत्प्रकारं ब्रह्मोच्यते, इतरेषु पक्षेषु सामानाधिकरण्यहानिर्ब्रह्मणः सदोषता च स्यात् । एतदुक्तं भवति ब्रह्मैवेवमवस्थितमित्यत्रैवं-शब्दार्थभूतप्रकारतयैव विचित्रचेतनाचेतनात्मकप्रपञ्चस्य स्थूलस्य सूक्ष्मस्य**

पत्तिविवक्षयैकत्वावधारणं 'नामरूपविभागार्हस्थूलदशापत्त्या बहुत्वनिर्देश इति भावः । तदेवोपपादयति तथा चेति, न हि बहुभवनं ब्रह्मण्यद्वारकमुपपद्यते तथा सत्यविकारश्रुतिबाधः, अचिदचिद्विशिष्टस्यैव बहुत्वं तत्रामरूपप्रहाणरूपैकत्वं चाद्वारकं नोपपद्यते, अतो विशिष्टत्वमभ्युपेत्यम्, अन्यथा प्रकृतिपुरुषयोरजत्वनित्यत्वश्रुतिविरोधः, अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च । तस्माद्बहुत्वादिकं सद्वारकमिति यथोक्त एवार्थ इत्यभिप्रायः । तर्हि कार्यं कारणं च कथं ब्रह्मैव स्यादित्यत्राह तस्यैवेति, संस्थानतया-अपृथक्सिद्धधर्मतया, विशिष्टं वस्त्वेकमेवावस्थाद्वयान्वितमिति कार्यकारणयोरैकत्वसिद्धिरित्यर्थः । जातिगुणयोरेव द्रव्यात् पृथक्सिद्धिरिति तयोरन्यतरवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकं, द्रव्यस्य तु दण्डकुण्डलादेरपृथक्सिद्धभावात्तद्वाचिशब्दस्य मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यं नोपपद्यते इत्यभिप्रायेण चोदयति ननु चेति, संस्थानरूपेण प्रकारतया अपृथक्सिद्धविशेषणरूपेण प्रकारतया एवं-शब्दार्थत्वमिति धर्ममुखेन धर्मिवाचिशब्दानां प्रदर्शनार्थं एवं-शब्दः ।

च सद्भावः, तथा च बहु स्यां प्रजायेयेत्ययमर्थः सम्पन्नो भवति, तस्यैवेश्वरस्य कार्य्यतया कारणतया च नानासंस्थानसंस्थितस्य संस्थानतया चिदचिद्वस्तुजातमवस्थितमिति ॥

अपृथक्सिद्धविशेषणत्वेन तत्तच्छब्दाभिधेयत्वं जातिगुणयोरेव दृष्टं घटः पटः शुक्ल इत्यादिषु न द्रव्यस्येति अपृथक्सिद्धविशेषणत्वेन तत्तच्छब्दप्रवृत्तिनिमित्तार्थत्वं द्रव्यस्य न दृष्टमित्यर्थः । ततः किमित्यत्राह स्वतन्त्रेति, पृथक्सिद्ध्यर्हस्य चिदचित्पदार्थस्येश्वरपर्य्यन्तशब्दाभिधेयतया ईश्वरप्रकारत्वमयुक्तमित्यर्थः । परिहरति उच्यत इति, किं द्रव्यस्य द्रव्यान्तरं प्रति प्रकारत्वमयुक्तमित्युच्यते ? उत नियतप्रकारत्वमयुक्तमिति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति द्रव्यस्यापीति, द्रव्यान्तरप्रकारत्वं दृष्टमेवेति, दण्डकुण्डलादेः प्रकारत्वे दृष्टेऽपि तस्य पृथक्सिद्ध्यर्हत्वं प्रमाणान्तरसिद्धम्, अत्र तु चिदचितोर्ब्रह्मप्रकारत्वं दृष्टं, पृथक्सिद्ध्यर्हत्वे तु न प्रमाणमिति प्रकारत्वं स्थितमेवेति नियतप्रकारत्वं सिद्धमित्यभिप्रायः । एतमभिप्रायमजानन् दण्डकुण्डलादिशब्दानामिव सामानाधिकरण्यस्य मत्वर्थीयप्रत्ययसापेक्षत्वमापादयँश्चोदयति ननु चेति, द्रव्यस्य द्रव्यान्तरं प्रति प्रकारत्वे सत्यपि नियतप्रकारत्वायोगाच्च मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमित्यर्थः । परिहरति अत्रोच्यत इत्यादिना,

ननु च संस्थानरूपेण प्रकारतयैवं–शब्दार्थत्वं जातिगुणयोरेव दृष्टं न द्रव्यस्य, स्वतन्त्रसिद्धियोग्यस्य पदार्थस्यैवं–शब्दार्थतयेश्वरस्य प्रकारमात्रत्वमयुक्तमिति चेत् उच्यते–द्रव्यस्यापि दण्डकुण्डलादेर्द्रव्यान्तरप्रकारत्वं दृष्टमेव ।

द्रव्यस्य द्रव्यान्तरं प्रति नियतप्रकारत्वं प्रभा प्रभावत्सु दृष्टमिति हृदि निधाय द्रव्यस्य द्रव्यान्तरविशेषणत्वे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधि-

करणप्रयोगं दर्शयति गौरश्व इति, द्रव्यत्वहेतुतया भूतसंघातरूपाणामित्युक्तं देवमनुष्यादिशब्दस्य पिण्डमात्रपर्यन्तत्वशङ्काव्यावृत्त्यर्थं पुण्यविशेषेण पापेन कर्मणा पुण्यातिरेकेणेत्युक्तं, न हि पिण्डस्याचेतनस्य पुण्यपापवत्त्वं पूर्व्वं गौरश्वो मनुष्य इत्युक्त्वा पुनर्देवादिशरीराणामित्युक्तं, तत्र न पुनरुक्तिः शङ्कनीया शब्दपरत्वेनार्थपरत्वेन च प्रयुक्तत्वात् गौरश्वो मनुष्यो देव इति शब्दवाच्यानां देवत्वमनुष्यत्वादिसंस्थानविशिष्टानां शरीराणामित्यर्थः। चेतनप्रकारतया—चेतनस्य नियतप्रकारतया देवो, जात इत्यादिशब्दः प्रतिपादनविशेषणभूतः, गौरश्वोमनुष्योदेव इति शब्दवाच्यानां भूतसङ्घातरूपतया द्रव्याणां देवत्वमनुष्यत्वादिसंस्थानविशिष्टानां शरीराणां चेतनप्रकारतया लोकवेदयोर्देवस्तोमनुष्योजातः पुण्यविशेषेणेत्यादिकं सामानाधिकरण्येन प्रतिपादनं दृष्टमित्यन्वयः । शरीराणां सामानाधिकरण्येन प्रतिपादनमित्यनेन तद्वाचिशब्दानां सामानाधिकरण्यमित्युक्तं भवति ।

**ननु च दण्डादेः स्वतन्त्रस्य द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा दण्डी कुण्डलीति, अतो गोत्वादितुल्यतया चेतनाचेतनस्य द्रव्यभूतस्य वस्तुन ईश्वरप्रकारतया सामानाधिकरण्येन प्रतिपादनं न युज्यते । अत्रोच्यते गौरश्वो मनुष्यो देव इति**

अर्थसामानाधिकरण्यात्तु शब्दसामानाधिकरण्यं शरीरस्य चेतनसामानाधिकरण्यं नाम चैतन्यसमानाश्रयत्वं शरीरं चैतन्यं च चेतनविशेषणं तत्रौपाधिकत्वं स्वाभाविकत्वं चेति विशेषः । यद्वा शरीराणां सामानाधिकरण्येन प्रतिपादनमिति शरीराणां सामानाधिकरण्यप्रवृत्तशब्दैः प्रतिपादनमिति यावत् । नन्वद्रव्यत्वे सति विशेषणत्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकं, तस्मादत्र सामानाधिकरण्यं लाक्षणिकमित्यत्राह अयमर्थ इति, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकं

जातित्वं वा गुणत्वं अन्यद्वा तत्र सामानाधिकरण्यं मुख्यमिति नाभ्युपगतं प्रयोगाविशेषे सत्यप्यननुयायिप्रयोजककल्पनेन क्वचिदमुख्यत्वाश्रयणायोगादिति चेत्तर्हि द्रव्यविशेषवाचिशब्दानामपि तथा प्रयोगेऽविशिष्टे तत्राव्याप्तप्रयोजककल्पनेनामुख्यत्वाश्रयणमयुक्तमित्यर्थः। तर्हि सर्वप्रयोगानुगतं प्रयोजकं किमित्यत्राह कश्चनेति, तदपृथक्सिद्धेः तत्प्रकारतयेति तत्प्रकारकत्वेन तदपृथक्सिद्धेर्द्रव्यवाचिपदानामपि प्रकारिपर्यन्तत्वे दण्डकुण्डलादेरपि तथा प्रसज्जेदिति शङ्कायां तद्वैषम्यमाह यस्य पुनरिति,

**भूतसङ्घातरूपाणां द्रव्याणामेव देवदत्तो मनुष्यो जातः पुण्यविशेषेण, यज्ञदत्तो गौर्जातः पापेन कर्म्मणा, अन्यश्चेतनः पुण्यातिरेकेण देवो जात इत्यादिदेवादिशरीराणां चेतनप्रकारतया लोकवेदयोस्सामानाधिकरण्येन प्रतिपादनं दृष्टम्। अयमर्थः जातिर्वा गुणो वा द्रव्यं वा न तत्रादरः**

एवं जीवं प्रति शरीरस्य नियतप्रकारत्वेन तद्वाचिपदानां तत्पर्यन्तत्वं विवक्षितम्। ततः किं जगद्वाचिशब्दानामीश्वरपर्य्यन्तत्वस्येत्यत्राह एवमेवेति, जगद्वाचिशब्दानामीश्वरपर्यन्तत्वे प्रमाणे सति हि तदनुग्राहकन्यायापेक्षा, अतस्तत्र किं प्रमाणं व्युत्पत्तिभङ्गश्च भवेत् घटपटादेः स्वनिष्ठत्वविषयप्रत्यक्षविरोधश्चेत्यादिशङ्कायामाह तदेतदिति, एवं सद्विद्योपसंहारगतं तत्त्वमसीति सामानाधिकरण्य न द्रव्यैक्यपरम्, अपि त्वात्मशरीरभावपरमित्युक्तम्। एवमुपक्रमगतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यमपि विशिष्टैक्यपरमित्याह अत इति, अतः-तत्त्वमसीति वाक्यस्य विशिष्टैक्यपरत्वोपपादनादित्यर्थः। ब्रह्मणस्तेजोऽबन्नमात्रकारणत्वे कृत्स्नकारणत्वमनुपपन्नमिति तत्परिहाराय सद्विद्यायां तेजोऽबन्नसृष्टिकथन-

**कश्चन द्रव्यविशेषं प्रति विशेषणतयैव यस्य सद्भावस्तस्य**

तदपृथक्सिद्धेस्तत्प्रकारतया तत्सामानाधिकरण्येन प्रतिपादनं युक्तं, यस्य पुनर्द्रव्यस्य पृथक्सिद्धस्यैव कदाचित्क्वचिद् द्रव्यान्तरप्रकारत्वमिष्यते तत्र मत्वर्थीयप्रत्यय इति विशेषः, एवमेव स्थावरजङ्गमात्मकस्य सर्वस्य वस्तुन ईश्वरशरीरत्वेन तत्प्रकारतयैव स्वरूपसद्भाव इति तत्प्रकारी ईश्वर एव तत्तच्छब्देनाभिधीयते इति तत्सामानाधिकरण्येन प्रतिपादनं युक्तं, तदेत्सर्वं पूर्वमेव नामरूपव्याकरणश्रुतिविवरणे प्रपञ्चितम् । अतः प्रकृतिपुरुषमहदहङ्कार–तन्मात्र–भूतेन्द्रिय–तदारब्ध–चतुर्दशभुवनात्मकब्रह्माण्ड–तदन्तर्वर्त्तिदेवतिर्यङ्मनुष्यस्थावरादिसर्वप्रकारसंस्थानसंस्थितं कार्यमपि सर्वं ब्रह्मैवेति कारणभूतब्रह्मविज्ञानादेव सर्वं विज्ञातं

मन्येषामपि प्रदर्शनार्थमित्यभिप्रायेणाह प्रकृतिपुरुषेति, देवतिर्यङ्मनुष्यस्थावरादिसर्वप्रकारसंस्थानसंस्थितमिति आदि–शब्देन देवतिर्यङ्मनुष्याद्यवान्तरजातिभेदो विवक्षितः । देवतिर्यङ्मनुष्यस्थावरादीति कार्यविशेषणं सर्वप्रकारसंस्थानसंस्थितं नानाविधसंस्थानविशिष्टमित्यर्थः । यद्वा देवमनुष्यादिशब्दा भावप्रधानाः, देवत्वमनुष्यत्वादिस्सर्वः प्रकारो यस्य तद्देवतिर्यङ्मनुष्यस्थावरादिसर्वप्रकारं स एव संस्थानम् अपृथग्भूतधर्मः । तेनसंस्थितं विशिष्टमित्यर्थः । विशिष्टमेव कारणं तदेव कार्यमिति कार्य्यकारणयोरनन्यत्वात्तज्ज्ञानेन तज्ज्ञानमित्यर्थः । उपपन्नतरं–मुख्यतयोपपन्नमित्यर्थः । एवमुपक्रमोपसंहारवाक्ययोर्विशिष्टैक्यपरत्वमुक्तम् । अथ मध्यगतं सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वमिति वाक्यस्य तच्छरीरभावेन तादात्म्यपरत्वमित्याह तदेवमिति, कार्यकारणभावशब्देन सन्मूलाः सत्प्रतिष्ठा इत्यस्यार्थो विवक्षितः ।

भवतीत्येकविज्ञानेन सर्वविज्ञानमुपपन्नतरम् । तदेवं कार्य्यकारणभावादिमुखेन कृत्स्नस्य चिदचिद्वस्तुनः परब्रह्मप्रकारतया तदात्मकत्वमुक्तम् ॥

ननु च परस्य ब्रह्मणः स्वरूपेण परिणामास्पदत्वं निर्विकारत्वनिरवद्यत्वश्रुतिव्याकोपप्रसङ्गेन निवारितं, प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधादित्ये-

आदि-शब्देन सदायतनत्वं विवक्षितं, तच्च धार्यधारकभावः परब्रह्मप्रकारतया तदात्मकत्वमुक्तमिति न तु स्वरूपैक्येन तादात्म्यमित्यर्थः । कार्य्यकारणभावाच्च प्रकारप्रकारिभावाच्च तादात्म्यं द्विविधं, तत्र कार्य्यकारणभावादेव प्रकारप्रकारिभावोऽपि सिद्धः, विशिष्टस्यैव कारणत्वकार्यत्वयोगादन्तः प्रविश्य धारकत्वेन नियन्तृत्वेन स्थितिहेतुत्वाच्च, अतः सन्मूला इति वाक्ये उभयविधं तादात्म्यमभिप्रेतमिति ग्रन्थाभिप्रायः । सर्वं खल्विदं ब्रह्म तज्जलानित्यस्याप्ययमेवार्थः । जगदुपादानत्वे निर्विकारत्वव्याघातशङ्कया चोदयति ननु चेति, स्वरूपेण परिणामास्पदत्वं निवारितमस्तु ततः किमित्यत्राह प्रकृतिश्चेति, सूत्रार्थमाह एकविज्ञानेनेति, अनेन श्रुतिश्च स्मारिता । उपादानत्वं प्रतिपादितमस्तु ततः किमित्यत्राह उपादानेति, सद्वारकमुपादानत्वमित्यविरोधमभिप्रेत्य परिहरति अत्रोच्यत इत्यादिना, अविशेषेणेति, यतोऽत्र इमानि सन्मूलाः सोम्येमाः सर्वाः

कविज्ञानेन सर्वविज्ञानप्रतिज्ञानं मृत्तत्कार्यदृष्टान्ताभ्यां परमपुरुषस्य जगदुपादानकारणत्वं च प्रतिपादितम्, उपादानकारणत्वं च परिणामास्पदत्वमेव, कथमिदमुपपद्यते—अत्रोच्यते सजीवस्य प्रपञ्चस्याविशेषेण कारणत्वमुक्तं, तत्रेश्वरस्य जीवरूपपरिणामाभ्युपगमेन नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य इति विरुध्यते, वैषम्य-

नैर्घृण्यपरिहारश्च जीवानामनादित्वाभ्युपगमेन तत्तत्कर्म्मनिमित्ततया प्रतिपादितः—वैषम्यनैर्घृण्ये न सापेक्षत्वात्

प्रजाः इदं सर्वमसृजत यत् इदं किंच तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदिति । निःसरन्ति यथा लोहपिण्डात्तप्ताः स्फुलिङ्गकाः । सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ इत्यादि श्रुतिस्मृत्यभिप्रायेणैवमुक्तम् । जीवरूपेण परिणामाभ्युपगमे दूषणमाह तत्रेत्यादिना, अजत्वनित्यत्वश्रुतिविरोधो वैषम्यनैर्घृण्यपरिहारविरोधोऽकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च दूषणानीत्यर्थः । अकृताभ्यागमः—अहेतुकफलप्राप्तिः, कृतविप्रणाशः कृतस्य कर्म्मणो निष्फलत्वम्, नात्मा श्रुतेरित्यादिना श्रुतिविरोध उक्तः, श्रुत्यर्थापत्तिविरोध उक्तः—वैषम्येत्यादिना, एवं जीवरूपेण परिणामे दूषणमुक्तम् । अचिद्रूपेण परिणामे दूषणमाह तथेति, अजामेकामिति वाक्यस्यार्थमाह प्रकृतीति, ब्रह्मणः सद्वारके उपादानत्वे विवक्षिते द्वारभूतस्य परिणामित्वं द्वारभूतेन द्वारिणः सम्बन्धश्चापेक्षित इति

न कर्म्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चेति अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च अनित्यत्वेऽभिहितः, तथा प्रकृतेरप्यनादिता श्रुतिभिः प्रतिपादिता—अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ इति प्रकृतिपुरुषयोरजत्वं दर्शितम् । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति प्रकृतिरेव स्वरूपेण विकारास्पदमिति च दर्शयति गौरनाद्यन्त-

तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रमिति यदा प्रबुध्यते प्राणादेवाधिपुनर्जायन्त" इति वाचः चक्षुरादीनां चाविशेषेणाप्यये सम्भवे च श्रूयमाणे वाच आत्यन्तिकनाशः चक्षुरादीनां वृत्तिविलोपः वाचः स्वरूपोत्पत्तिश्चक्षुरादीनां वृत्तिलाभ इत्यप्यसम्भवश्रवणस्य वैरूप्यकल्पनं च प्रसजेत्सप्तानां श्रवण तु ज्ञानसाधनरूपप्राधान्यविवक्षयाऽप्युपपन्नम् आदिसर्गे कर्मेन्द्रियसमष्ट्युत्पत्तिर्नास्ति मनुना सप्तानामेव सृष्टिप्रतिपादनात् इति चायुक्तं पराशरादिभिर्वागादीनामपि "देवा वैकारिका दश एकादशं मनश्चात्र देवा वैकारिकाः स्मृता" इति प्रतिपादनात् क्वचिदुक्तस्य क्वचिदनुक्तेरभावसाधकत्वाभावाच्च श्रुतिविरोधश्च भवेत् "अष्टौ प्रकृतयः षोडश विकाराः चतुर्विंशतिसंख्यातं व्यक्तमव्यक्तमुच्यते" इति हि श्रूयते हस्तादीनां तत्त्वानां समष्टिसृष्टिदशायामभावे कथं षोडशविकारसिद्धिश्चतुर्विंशतितत्त्वसिद्धिश्च । यदि प्रतिमरणमुत्पद्यमानैर्विनश्यद्भिश्च तत्त्वैः षोडशविकारादिसिद्धिः तर्हि घटपटादिभिरधिकसंख्याव्यवहारः कुतो न स्यात् । किञ्च आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयत इत्यत्र इन्द्रियशब्दासङ्कोचात्सर्वेन्द्रियाणामविशेषेण महदादिप्रलयवेलायां प्रलयः श्रूयते. अतः सर्वेन्द्रियाणान्तुल्यकालत्वमवगम्यते, अतः कालभेदकल्पनमप्रमाणकं द्वादश प्राणा इति चायुक्तं दशेमे पुरुषे प्राणा आत्मैकादश इन्द्रियाणि दशैकं चेत्यादिश्रुतिस्मृतिभिः प्राणानामेकादशसंख्याश्रवणात् ॥ सप्तगत्यधिकरणं समाप्तम् ॥

प्राणाणुत्वाधिकरणम् । **सू० अणवश्च ॥ ६ ॥**

"ते एते सर्व एव समाः सर्वेऽनन्ता" इत्यात्मानन्त्यश्रवणाद्विभुत्वं प्राणानामिति प्राप्तेऽभिधीयते प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीत्युत्क्रान्त्यादिश्रवणात्परिमितत्वे सिद्धे सत्युत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणुत्व

प्राणः, आनन्त्यश्रुतिः "स्त्वथ यो चैतानन्तानुपास्ते" इत्युपासनश्रवणादुपास्यप्राणविशेषणभूतकार्य्यबाहुल्याभिप्राया ॥

## सू० श्रेष्ठश्च ॥ ७ ॥

प्राणसंवादे शरीरस्थितिहेतुत्वेन श्रेष्ठतया निर्णीतो मुख्यः प्राणः ।

सू· अणवश्च ॥ ६ ॥ किमिन्द्रियाणि सर्वगतानि? उताणुपरिमाणकानि? आनन्त्यश्रवणमुपासनार्थं? मुत नेति उत्क्रान्तिश्रवणं किमणुत्वमवगमयति नेति अणुत्वागमकत्वाभावे तदानन्त्यश्रवणस्य उपासनार्थत्वाभावात्सर्वगतानि, उत्क्रान्तिश्रवणस्याणुत्वगमकत्वे सति आनन्त्यश्रुतेरुपासनार्थत्वादणुरूपाणि प्राणमनूत्क्रामन्तमिति, अणुत्वं नाम परिच्छिन्नत्वे सत्युपलब्ध्यर्हस्थूलतारहित्यमत्र विवक्षितं न तु जीवात्मस्वरूपवत्त्यन्ताल्पत्वं तत्र बालाग्रशतभागस्येत्यादिवाक्येनात्यन्ताल्पत्वस्योक्तत्वात्तथाऽभ्युपगमः । अत्र तूक्तप्रकारमणुत्वं परिच्छिन्नत्वे सत्यस्वच्छत्वम् उत्क्रान्त्यादिः परिच्छिन्नत्वहेतुः पार्श्वस्थैरनुपलभ्यमानत्वं स्वच्छत्वे हेतुः, एवं विशिष्टमणुत्वमुपपादितं भवति, परिमाणावान्तरभेदे सत्यपि त्वगिन्द्रियस्य सूक्ष्मशरीरव्यापीदृशमणुत्वमस्त्येव "त एते सर्व एव समा" इति समत्वश्रुतिः कार्य्यकरत्वविषया। आनन्त्यश्रुतिनिर्वाहमाह "आनन्त्ये" ति, कार्य्यबाहुल्यमानन्त्यं कार्य्यबाहुल्यविशेषणविशिष्टतया उपासनार्थमानन्त्यकथनमित्यर्थः । आनन्त्यश्रवणं दैवप्राणविषयमित्यन्ये तदयुक्तं देवशरीरेष्वप्यमीषामेव प्राणानामिति उत्क्रान्तानां विद्यमानत्वात् तदतिरिक्तदैवप्राणविषयत्वतदभिमतश्रुतेरर्थान्तरपरत्वस्य पूर्वमेवोपपादितत्वात् दैवप्राणासिद्धेरनन्तानुपास्ते इति श्रुत्यनुरोधेन उपासनार्थतया निर्वाहस्योपपन्नत्वाच्च । सू· श्रेष्ठश्च ॥ ७ ॥ प्राणस्य श्रेष्ठ-शब्दवाच्यत्वे हेतुं वदत्सूत्रं व्याचष्टे "प्राणो" ति, प्राणसंवादो नाम छान्दोग्यप्रकरणविशेषः, अस्य शरीरस्थितिहेतु-

त्वेन श्रेष्ठम् उत्पत्तिनिषेधाभावादित्यनेन जीवजन्मतुल्यत्वं व्यावर्तितं तस्य ह्युत्पत्तिर्निषिद्धा ॥

भू० "आनीदवातं स्वधया तदेक"मिति महाप्रलयसमये स्वकार्य्यभूतप्राणनसद्भावश्रवणादेतस्माज्जायत इति जन्मश्रवणस्य जीवजन्मश्रवणवदुपपत्तेर्नोत्पद्यते इत्याशङ्क्य प्राक्सृष्टेरेकत्वावधारणादिविरोधादेतस्माज्जायते प्राण इति पृथिव्यादितुल्योत्पत्तिश्रवणादुत्पत्तिनिषेधाभावाच्च जायत एव श्रेष्ठश्च प्राण इत्युच्यते आनीदवातमिति तु नैवं श्रेष्ठं प्राणमभिप्रेत्योच्यते, अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते अवातमिति तच्चैव श्रवणात्पूर्वणैव तुल्यन्यायत्वेऽत्वेपि पृथग्योगकरणमुत्तरचिन्तार्थम् ॥

प्राणाणुत्वाधिकरणं समाप्तम् ॥

वायुक्रियाऽधिकरणम् । सू० न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥

सोऽयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रं तस्य वा स्पन्दरूपा क्रिया? अथवा वायुरेव कञ्चनविशेषमापन्न? इति विशये वायुरेवेति प्राप्तं "यः प्राणः स वायु"रिति व्यपदेशात् । यद्वा वायुमात्रे प्राणत्वप्रसिद्ध्यभावादुच्छ्वासनिःश्वासादिवायुक्रियायां प्राणशब्दप्रसिद्धेश्च तत्क्रियैवेति प्राप्ते न वायुमात्रं, न च तत्क्रिया इत्युच्यते कुतः पृथगुपदेशात् ॥

टी० आनीदवातमिति आनीत्–अन प्राणन इति धातोर्लुङ्, नैवं जीवसम्बन्धि, सिद्धान्ते स्वधयेत्यनेन स्वधात्वं लोकभाविनीत्युपबृंहणाल्लक्ष्मीविशिष्टत्वमुच्यते अधिकशङ्कापरिहाराभावादिदं सूत्रमधिकरणान्तरं, श्रुतिवाक्यं हि पूर्वपक्षावलम्बनं तत्तु पूर्वाधिकरणेऽस्मिन्सूत्रे च

समानं श्रेष्ठश्चेत्यधिकरणान्तरत्वं परैहक्तमयुक्तं प्रतिज्ञादृष्टान्तावधारणादिभिः श्रुत्या चोत्पत्तौ प्रतिपन्नायामनुत्पत्त्यवगमोऽन्यथानिर्वाह्य इत्यस्मादधिकशङ्कापरिहाराभावात् ॥ अन्ये तु मुख्यप्राण उत्क्रान्तावत्यन्तं लीयते देहान्तरेऽन्यो मुख्यप्राण उत्पद्यत इति पूर्वपक्षं कृत्वा उत्क्रान्तिश्रवणादुत्पत्तिवादस्य वृत्त्युत्पत्तिविषयतया नात्यन्तनाश इति सिद्धान्तयन्ति तदप्ययुक्तं तन्मतानुरोधेऽप्यधिकशङ्काया अभावात्, "उत्पत्तिमायतिं स्थानं विभुत्वं च वै पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुत" इत्युत्पत्तिश्रवणात् देहान्तारेऽन्यः प्राण उत्पत्स्यत इत्यधिकशङ्केति चेत् उत्क्रान्तिश्रवणानुरोधेनोत्पत्तिश्रुतिर्वृत्तिलाभाभिप्रायेत्यस्य न्यायस्येन्द्रियेष्वेव सिद्धत्वात् चतुर्थे लक्षणे तन्मनः प्राण उत्तरात्सोऽध्यक्षे तदुपगमादिभ्य इत्यत्र प्राणस्य जीवसंश्लेषमात्रस्य निरूपितत्वादिहात्यन्तनाशशङ्काप्रसङ्गाभावादेवोत्क्रान्तिविषयत्वमप्यधिकरणस्यायुक्तम् ॥ प्राणोत्पत्त्यधिकरणं समाप्तम् ॥ सू० न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥ मुख्यप्राणो वायुमात्रम् ? उत वायुक्रिया ? उतावस्थाविशेषापन्नो वायु ? रिति श्रुतिलोकप्रसिद्धिपृथगुपदेशतत्त्वसङ्ख्याप्रसिद्धीनां कस्मिन् पक्षे सामञ्जस्यमिति वायुमात्रत्वपक्षे वायुक्रियापक्षे वा सामञ्जस्यमस्ति चेत् तयोरन्यतरस्य सिद्धिः, अवस्थाविशेषापन्नवायुपक्षे सामञ्जस्यं चेत्स एव सिद्धान्तः पृथगुपदेशात् इति सूत्रखण्डे पृथगुपदेशं दर्शयति—

भा० एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुरिति तत एव पृथगुपदेशाद्वायुक्रियाऽपि न भवति प्राणः न हि तेजः प्रभृतीनां क्रिया तैः सह पृथग्द्रव्यतयोपदिश्यते यः प्राणः स वायुरिति तु वायुरेवावस्थान्तरमापन्नः प्राणो न तेजः प्रभृतिवत्तत्त्वान्तरमिति ज्ञापनार्थम् । उच्छ्वासनिःश्वासादावपि प्राणःस्पन्दत इति क्रियावति द्रव्य एव प्राणशब्दप्रसिद्धिर्न क्रियामात्रे ॥

किमयं प्राणो वायोर्विकारःसत्तगिनवद्भूतान्तरं नेत्याह—

सू० चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥

नायं भूतविशेषः अपि तु चक्षुरादिवज्जीवोपकरणविशेषः तच्चोपकरणत्वमुपकरणविशेषभूतैरिन्द्रियैः सह शिष्ट्यादिभ्योऽवगम्यते, चक्षुरादिभिस्सहायं प्राणः शिष्टतेप्राणसंवादादिषु, तत्सजातीयत्वे हि तैस्सह शासनं युज्यते प्राण-शब्दपरिगृहीतेषु करणेषस्य विशिष्याभिधानमादि-शब्देन गृह्यते । "अथ ह वा य एवायं मुख्यः प्राणः योऽयं मध्यमः प्राणः" इत्यादिषु विशिष्याभिधानाच्चक्षुरादिवदस्यापि करणत्वे तद्वदस्यापि जीवं प्रत्युपकारविशेषरूपक्रियया भवितव्यं, सा तु न दृश्यते, अतो नायं चक्षुरादिवद्भवितुमर्हतीति चेत्तत्राह-

टी० "एतस्मा"दिति, खं वायुरिति पृथगुपदेशाच्च वायुमात्रमित्यर्थः । तत एवेति क्रियात्वप्रक्षेपः ते सह पृथगद्रव्यतयोपदिश्यत इति द्रव्योत्पत्तिप्रकरणत्वात्तेजःप्रभृतीनां क्रियाः पृथगुपदिश्यन्ते चेत् द्रव्यतयोपदिश्येरन् न च तद्युक्तम् अतः क्रियाया अद्रव्यत्वेन पृथगुपदेशासम्भवात् पृथगुपदिष्टः प्राणो न वायुक्रियेत्यर्थः । उत्तरसूत्रमवतारयति "किमयमि"ति, अवस्थाविशेषापन्नो वायुः प्राण इत्युक्तम्, अवस्थान्तरापत्तिश्चाग्न्यादेरिव वायुत्वप्रहाणेनैव स्यादिति हि शङ्का स्यात् सू० चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥ अनेन बहुश्रुतिषु शिष्ट्यादि विवक्षितं, श्रुतिभेदेन सहशिष्टयो बह्व्यः विशिष्याभिधानानि च बहूनीति सूत्रबहुवचनतात्पर्य्यमित्यभिप्रायेणोक्तं प्राणसंवादादिष्विति मध्यमः प्राण इत्यादिष्विति च अनन्तरसूत्रविवरिष्यमाणकरणतुल्योपकारसूचनार्थं वा बहुवचनम् अस्याभिप्रायमभिप्रेत्याह "तत्सजातीयत्वे ही"ति, प्राणेति एष्वयं मुख्यइत्युक्ते मुख्यस्य सतस्तत्सजातीयत्वं हि प्रतीयते यथा भूतत्वाप्रहाणेनैव शरीरत्वावस्था भवति तथा वायुत्वाप्रहाणेऽप्यवस्थान्तरं जीवोपकरणत्व-

लक्षणं दर्शितं जीवोपकरणत्वावस्थाया वायुत्वाप्रहाणपूर्वकत्वं "यः प्राणः स वायुरि"ति श्रुत्याऽवगम्यते ॥

अनन्तरसूत्रशङ्कामाह "चक्षुरादिवदि"ति,—

**सू० अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥**

भू० अकरणत्वात्करणं क्रिया अक्रियत्वादस्य प्राणस्य जीवं प्रत्युपकारविशेषरूपक्रियारहितत्वाच्च यो दोष उद्भाव्यते स नास्ति, यत उपकारविशेषरूपां शरीरेन्द्रियधारणादिरूपां क्रियां दर्शयति श्रुतिः "यस्मिन्नुत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्यते" स एव श्रेष्ठ इत्युक्त्वा वागाद्युत्क्रमणेऽपि शरीरस्येन्द्रियान्तराणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानादतः प्राणापानव्यानोदानसमानाकारेण पञ्चधाऽवस्थितोऽयं प्राणः शरीरेन्द्रियधारणादिना जीवस्योपकरोतीति चक्षुरादिवत्करणत्वम् । नन्वेवं नामभेदात् कार्य्यभेदाच्च प्राणापानादयः तत्त्वान्तराणि स्युरत आह—

**सू० पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ ११ ॥**

यथा कामादिवृत्तिभेदे तत्कार्य्यभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरं "कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति वचनात्, एवं प्राणापानव्यानोदानसमान इत्येतत्सर्वं प्राण एवेति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषा न तत्त्वान्तरामित्यवगम्यते । वायुक्रियाऽधिकरणं समाप्तम् ।

टी० सू० अकरणत्वाच्च न दोषस्तथा हि दर्शयति. ॥ १० ॥ अकरणत्वादिति पूर्वपक्षे हेतुः, शैथिल्याभिधानाच्छ्रुतिः क्रियां दर्शयतीत्यन्वयः ॥ अनन्तरसूत्रशङ्कामाह "नन्वेव"मिति, ॥ सू० पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥ दृष्टान्तदार्ष्टान्तिकद्वयमपि वेदसिद्धं काम इत्यादि, काम इच्छा विचिकित्सा संदेहः श्रद्धा त्वरा धीश्चिन्ता कामादयो ज्ञानावस्थाविशेषाः तत्तदवस्थज्ञानहेतुर्मनः इति, इदं तैः शब्दैरुच्यते तत्तद्धेतुत्वं मनोऽवस्था । परे तु न वायुक्रिये इत्यत्र क्रिया–शब्देन सर्वकरणसामान्यवृत्तिः प्राण इति पक्ष उच्यत इत्याहुः तदयुक्तं करणव्यापारोपरतिकालेऽपि प्राणप्रवृत्तेर्दर्शनेन शङ्कानुदयाद्वागादीनां प्राणं प्रति गुणभावश्रवणाच्च प्राणस्यापि जीववत्स्वातन्त्र्यप्रसङ्गपरिहारपरं च चक्षुरादिवदिति सूत्रं वर्णयन्ति ततोऽप्यग्निवत् भूतान्तरत्वशङ्कापरिहारपरत्वमुचितं स्वातन्त्र्ये व्युदस्तेऽपि तस्याः शङ्कायाः स्थितत्वात्, करणत्वेन तस्यां परिहृतायां स्वातन्त्र्यशङ्काया दूरोत्सारितत्वादादि–शब्दस्य चाचेतनत्वादिग्राहकत्वादपि विशिष्याभिधानपरत्वमुचितं श्रुतिसिद्धहेतोः सहशिष्टतासाजात्येन झटिति धीस्थत्वादचेतनत्वादिकस्य हेतोर्भूतान्तरशङ्कानिवारणसामर्थ्याच्च प्राणस्य चक्षुरादिवत्करणत्वे रूपादिवत्प्रतीतिविषयान्तरप्रसङ्गपरिहारपरमकरणत्वादिति सूत्रमाहुः विषयान्तरप्रसङ्गदोषो नास्ति चक्षुरादिवत् विषयपरिच्छेदेन करणत्वाभावात् प्रमाणान्तरेष्वसम्भावितं कार्यं हि श्रुतयो[1] दर्शयन्तीति तदयुक्तं परिहरणीयाशङ्कोदयाभावात् परिच्छेद्यविषयान्तरप्रसङ्गो न शङ्क्यः करणत्वेऽपि वागादीनां तदभावात्, वागादीनां वक्तव्यदातव्यगन्तव्यादिवदवच्छेद्यविषयान्तरं शङ्क्यमिति चेन्न तस्य निरसनियत्वाभावात्, देहेन्द्रियादिकं हि धार्यत्वेन तदवच्छेद्यविषयः स तु वक्तव्य इति चेत्तदानीमुपकारविशेषाकाङ्क्षायां सूत्रावतरणमुक्तं भवतीति सिद्धं नः समीहितम् । अवच्छेद्यविषयाभावेनाकरणत्वादित्यध्याहारदोषश्च, पञ्चवृत्तिरितिसूत्रस्य कार्यविशेषसमर्पणमुखेनोपकारकत्वपरत्वादपि शङ्काविशेषपरिहारपरत्वं युक्तं तथा सत्युपकारविशेषस्यापेक्षितत्वात्तथा हि दर्शयतीति पूर्व-

१ श्रुतिर्दर्शयतीति तु पाठान्तरम् ।

त्रांशेनोपकारवर्गस्य संगृहीतत्वादेकस्य नानावृत्तित्वे मनोदृष्टान्तः, पञ्चवृत्तित्वे दृष्टान्त इति तु निर्बन्धोऽनुपपन्नः श्रोत्राद्यनुरोधमनपेक्ष्य भूतभविष्यदादिवृत्तिसम्भावनया वृत्तिपञ्चकातिरेकात्, प्रमाणविपर्ययविकल्पनिद्रास्मृतयो वृत्तय इति चायुक्तं संकल्पस्यातिरिक्तत्वात्, अत औचित्याच्छ्रोतेऽर्थे श्रौतदृष्टान्त एव संख्याऽनादरेण स्वीकर्त्तव्यः संख्याविशेषनिर्बन्धस्य साध्यानुपयोगाच्च । अन्ये तु प्रथमजस्य महत्तत्त्वस्य राजसो भागः प्राणः स वाय्वधिष्ठानक उच्छ्वासादिरूपेण तत्प्रेरक इति सिद्धान्तयन्ति तदयुक्तं महत्तत्त्वराजसांशस्य प्राणत्वे प्रमाणाभावात् "यः प्राणः स वायुरिति श्रुतिविरोधाच्चात्र यन्मुकुटं तत्सुवर्णमितिवद्वायुकार्यत्वं हि प्रतीयते प्राणस्य वाय्वधिष्ठानकत्वं तत्रोच्यते इति चेन्नाशब्दत्वान्मुख्यार्थस्य भञ्जकप्रमाणाभावाच्च, सुषुप्तौ प्राणवायुस्पन्दत्वहेतुत्वेन तत्कल्पनं ह्यन्यथासिद्धं परमात्मायत्तत्वश्रुतेः, क्वचिद्वाक्प्राणमनसां तेजोऽन्नाप्यापितत्वन्नत्प्राणस्य महत्तत्त्वाप्यायितत्वमुच्यत इत्यन्यथासिद्धत्वात्तद्वचनं न श्रुतिस्वारस्यभञ्जकम्, अतो वायुविकारभावस्य स्थितत्वादेव भूतान्तरत्वप्रतिक्षेपकमुत्तरसूत्रं न तु क्रियात्वप्रतिक्षेपपरं, न वायुक्रियेत्याद्यसूत्रेणैव क्रियात्वस्यापि प्रतिक्षिप्तत्वाच्चेतनवर्गे भूतवर्गे करणवर्गे चानन्तर्भावात् क्रियात्वशङ्केति चेन्न तेजःप्रभृतीनामिव चक्षुरादीनामपि क्रियायाः पृथगुत्पत्तिप्रतिपादनानुपपत्तेः, प्रतिक्षेपकयुक्त्यनादरेण शङ्कोदयो वायुमात्रत्वशङ्काया अप्यवस्थानात्तद्विषयेणापि सूत्रान्तरेण भवितव्यं, न च क्रियात्वप्रतिक्षेपकयुक्तेराद्यसूत्रेऽनभिधित्सितत्वं न वायुक्रिये इति प्रतिज्ञाया हेतोश्चानन्वितत्वप्रसङ्गात् पञ्चवृत्तिरिति सूत्रमपि वृत्यन्तरायोगेन करणवृत्तित्वप्रतिक्षेपपरमित्यप्ययुक्तं क्रियात्वस्य निरस्तत्वात्, अतः प्राणादीनां तत्त्वान्तरत्वशङ्कापरिहारपरत्वं युक्तम् ॥ वायुक्रियाऽधिकरणं समाप्तम् ॥

श्रेष्ठाणुत्वाधिकरणम् । **सू० अणुश्च ॥ १२ ॥**

**सू० अणुश्चायं पूर्ववदुत्क्रान्त्यादिश्रवणात्, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यादिषु, अधिकाशङ्का तु" सम "एभिस्त्रिभि-**

लौकैः समोऽनेन सर्वेण प्राणे सर्वं प्रतिष्ठितं सर्वं हीदं प्राणेनावृत"मित्यादिश्रवणात् महापरिमाण इति, परिहारस्तूत्क्रान्त्यादिश्रवणात्परिच्छिन्नत्वे निश्चिते सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपपत्तिरिति।

श्रेष्ठाणुत्वाधिकरणं समाप्तम् ।

ज्योतिराद्यधिष्ठानाधिकरणम् ।

सू० ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥

टी० सू० अणुश्च ॥ १२ ॥ किमयं प्राणः सर्वगतः? उताणुः? किं "समएभिस्त्रिभिर्लोकै"रित्यानन्त्योपदेशो विभुत्वं गमयति ने? ति उत्क्रान्तिश्रवणमानन्त्यस्य गौणतामवगमयति ने? ति यदा नावगमयति तदाऽऽनन्त्यव्यपदेशस्य विभुत्वगमकत्वात्सर्वगतः, यदा गौणत्वं गमयति तदाऽनन्त्योक्तेर्गौणत्वादणुरिति, समएभिस्त्रिभिरित्यादिवाक्यानि नैकत्र क्रमपठितानि श्रेष्ठश्चेति सूत्रे श्रुत्या पूर्वपक्षोत्थानेऽपि परिहारः पूर्वाधिकरणेन तुल्यः, एकत्वावधारणादिभिरुत्पत्तिमत्त्वे सिद्धे सृष्टेः प्रागवस्थानवादिवाक्यस्य ब्रह्मपरत्वोपपादनात्, अणवश्चेत्यत्रानन्त्यश्रुतेरुपासनार्थतया निर्वाहः कृतः न तथाऽस्य वाक्यस्य निर्वाह इतीदमधिकरणान्तरं परैरानन्त्यश्रुतेस्समष्टिविषयतया हिरण्यगर्भविषयतया वृत्तिविषयतया च निर्वाहः कृतः हिरण्यगर्भस्य तच्छरीरपरिच्छिन्नप्राणसमष्टेश्च वृत्तेश्च शरीरावच्छिन्नत्वादेव विभुत्वायोगात् प्रभावोत्कर्षपरत्वेन निर्वाहः उपपन्नः ॥ श्रेष्ठाणुत्वाधिकरणं समाप्तम् ॥ सू० ज्योतिराद्यधिष्ठानं तु तदाम्नानात्प्राणवतशब्दात् ॥ १३ ॥ अवान्तरसङ्गतिं वदन् विषयं शोधयति—

श्रु० स श्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिरियत्तपरिमाणं चोक्तं, तेषां प्राणानामग्न्यादिदेवताधिष्ठितत्वं च पूर्वं "मेवाभिमानिव्यपदेशस्तु विशेषानुगतिभ्या"मित्यनेन सूत्रेण प्र-

सङ्कल्पादुपपादितं, जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकसिद्धम्. एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तत" इत्यादिश्रुतिसिद्धं च, तदिदं जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तम ? उत परा[1]यत्त ? मिति विशये नैरपेक्ष्यात्स्वायत्तमिति प्राप्त उच्यते ज्योतिराद्यधिष्ठानमिति, प्राणवता जीवेन सह ज्योतिरादीनामग्न्यादिदेवतानां प्राणविषयमधिष्ठानं तदामननात्तस्य परात्मन आमननाद्भवति, आमननमाभिमुख्येन मननं, परमात्मनः सङ्कल्पादेव भवतीत्यर्थः। कुत एतत् शब्दादिन्द्रियाणां साभिमानिदेवतानां जीवात्मनश्च स्वकार्येषु परमपुरुषमननायत्तत्वशास्त्रात । यथाऽन्तर्यामिब्राह्मणादिषु "योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स त आत्मान्तर्याम्यमृतः यो वायौ तिष्ठन् य आदित्ये तिष्ठन् य आत्मनि तिष्ठन् यश्चक्षुषि तिष्ठन्नि"त्यादि, यथा च "भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः. भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः"। इति तथा "च एतस्याक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादि ।

## सू० तस्य च नित्यत्वात् ॥ १४ ॥

सर्वेषां परमात्माधिष्ठितत्वस्य नित्यत्वात्स्वरूपानुबन्धित्वेन नियतत्वाच्च तत्सङ्कल्पादेवैषामधिष्ठातृत्वमवर्जनीयं

१ उत परमात्म.यत्तम् इति पा० ।

"तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभव"-दित्यादिना परमपुरुषस्य नियन्तृत्वेन सर्वचिदचिद्वस्त्वनुप्रवेशः स्वरूपानुबन्धी श्रूयते। स्मर्यते च "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दिति॥ ज्योतिराद्यधिष्ठानाधिकरणं समाप्तम्॥

टी० "स श्रेष्ठाना"मिति, इयत्ता-संख्या, परिमाणं-संख्यातानां प्रत्येकं परिमितिः, जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तम्? उत परमात्मायत्तं? तेषां तत्र नैरपेक्ष्यप्रतीतिः समीचीना? उत भ्रान्तिमूले? ति समीचीनत्वे स्वायत्तता, भ्रान्तिमूलत्वे परमात्माधीनता, नैरपेक्ष्याज्जीवस्याप्याराध्यत्वात्तस्याभिमतफलप्रदत्वादिति भावः। परात्तु तच्छ्रुतेरित्यधिकरणे जीवस्य परायत्तकर्तृत्वे सिद्धेऽप्यत्र प्राणवच्छब्देन जीवस्योपादानं दृष्टान्ततयेति मन्तव्यम्, सू० तस्य च नित्यत्वात्॥ १४॥ आदि-शब्देन "स ईशोऽस्यजगतो नित्यमेवे"त्यादिविवक्षितम्,अग्न्यादीनां देवतानां स्वरूपे स्वतः सिद्धे इन्द्रियाद्यधिष्ठानमात्रमेव परायत्तमिति न कथ्यते अपि तु तेषां सत्ताऽपि परमात्मायत्ता किं पुनः इन्द्रियाद्यधिष्ठानस्य परायत्तत्वमित्यर्थः, विष्टभ्याहमिति अविशेषेण कृत्स्नं जगदवष्टभ्येति वचनाज्जगत्त्वप्रयुक्तं भगवदायत्तत्वमिति सिद्धं। सर्वेऽपि परे त्वेतदधिकरणमेवं वर्णयन्ति सर्वे प्राणा अग्न्यादिभिरनधिष्ठिताः कार्य्यकराः स्वशक्त्यैव कार्यकरत्वोपपत्तेः, अन्यथाऽग्न्यादीनामेव भोक्तृत्वप्रसङ्गादिति पूर्वपक्षं कृत्वा श्रुतिवशात्तदधिष्ठिताः कार्यकरा इति सिद्धान्तयन्ति प्राणवता शब्दादिति सूत्रान्तरम् अग्न्यादीनां भोक्तृत्वप्रसङ्ग इति परिहारपरं व्याचक्षते वागादीनां प्राणवता सम्बन्धः। "अथ यो वेदेदं जिघ्राणीत्यादिशब्दादिति तस्य जीवस्य शरीरेभोक्तृत्वेन नित्यत्वम् अग्न्यादीनां तु स्वापादावपक्रमणादिति चरमं सूत्रं वर्णयन्ति तदयुक्तम् अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामित्यत्राग्न्याधिष्ठानस्योक्तत्वात् तस्य तत्रानप्रकृतत्वाच्च सालक्षण्यनियम एव हि तत्र निरस्तः। जीवस्य तदधिष्ठातृत्वं चोपादाना-

द्विद्वारोपदेशोऽस्त्वित्युक्तम् । अग्न्यादीनां भोक्तृत्वप्रसङ्गः परिहर्तव्य इति चेन्न वागादीनामग्न्यादिदेहस्थत्वाभावेन तेषां तासां भोक्तृत्वाप्रसङ्गात् स्वदेहस्थेन्द्रियाणां हि भोगसाधनत्वम् इह तत्परिहाराश्रवणाच्च तत्परिहारो विवक्षित इति चेन्न इह तत्परिहारैकान्तत्वाभावात्सूत्राक्षराणाम् इह अभिप्रेततया वर्णितस्य परिहारस्याभिमानिव्यपदेशसूत्रेणैवाभिप्रेतत्वोपपत्तेः, परमात्माधीनत्वस्य श्रुतिसिद्धत्वस्य निरूपणीयत्वाच्च तद्विषयत्वमेव युक्तं, तथा च सति प्राणवता शब्दादित्यस्य पृथक्सूत्रत्वाभावोऽर्थवशादेव भवति ॥ ज्योतिराद्यधिष्ठानाधिकरणं समाप्तम् ॥

इन्द्रियाधिकरणम् ।

## सू० त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

न्यू० किं एवं प्राणशब्दनिर्दिष्टा इन्द्रियाणि? उत श्रेष्ठप्राणव्यतिरिक्ता एवे? ति विशये प्राणशब्दवाच्यत्वात्करणत्वाच्च सर्वे एवेन्द्रियाणीति प्राप्त उच्यते—श्रेष्ठव्यतिरिक्ता एव प्राणा इन्द्रियाणि, कुतः श्रेष्ठादन्येष्वेव प्राणेषु तद्व्यपदेशात् इन्द्रियव्यपदेशात् "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचरा" इत्यादिभिश्चक्षुरादिषु समनस्केष्वेवेन्द्रियशब्दो व्यपदिश्यते ॥

## सू० भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिष्विन्द्रियेभ्यः प्राणस्य पृथक् श्रवणात् प्राणव्यतिरिक्तानामेवेन्द्रियत्वमवगम्यते मनसः पृथक्श्रवणेऽपि तस्यान्यत्रेन्द्रियान्तर्भाव उक्तः मनःषष्ठानीन्द्रियाणीत्यादौ, वैलक्षण्यं चक्षुरादिभ्यः श्रेष्ठप्राणस्योपलभ्यते, सुषुप्तौ हि प्राणस्य वृत्तिरुपलभ्यते चक्षुरादीनां तु वृत्तिर्नोपलभ्यते कार्यं च चक्षु-

रादीनां समनस्कानां ज्ञानकर्मसाधनत्वं, प्राणस्य तु शरीरेन्द्रियधारणं प्राणाधीनधारणत्वादिन्द्रियेषु प्राण-शब्द-व्यपदेशः तथा च श्रुतिः "त एतस्यैव सर्वे रूपमभवन् तस्मादेते एतेनाख्यायन्त"इति रूपमभवन् शरीरमभवन् तदधीनप्रवृत्तयोऽभवन्नित्यर्थः ॥ इन्द्रियाधिकरणं समाप्तम् ॥

टी० सू० त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥ किं सर्वे प्राणा इन्द्रियाणि? उत मुख्यप्राणव्यतिरिक्ता? इति, किं श्रोत्रादिषु मुख्यप्राणे च प्राण-शब्द एकनिमित्तेन वर्त्तते? उत निमित्तभेदेने? ति, यद्येकनिमित्तेन तदा सर्वे प्राणा इन्द्रियाणि, यदा निमित्तभेदेन तथा मुख्यप्राणव्यतिरिक्ता इन्द्रियाणि ॥ भेदश्रुतेर्वैलक्षण्याच्च, सू ॥ १६ ॥ मनःषष्ठानीन्द्रियाणि इत्यादिशब्देन इन्द्रियाणि दर्शकं च पञ्चवेन्द्रियगोचरा इत्यादि विवक्षितं, सुषुप्तौ वृत्त्युपलम्भवैलक्षण्यं शरीरेन्द्रियधारणरूपकार्य्यवैलक्षण्यं प्राणशब्द-प्रवृत्तिनिवृत्तिवैलक्षण्यं चेत्यर्थः। चक्षुरादीनां प्राणशब्दबोध्यत्वं लाक्षणिकं मुख्यप्राणस्य तु मुख्यं भेदश्रुतेर्वैलक्षण्याच्चेत्येकं सूत्रमिति युक्तं वैलक्षण्यानुगृहीतश्रुतेरेव हेतुत्वात्, हेतुभेदे हि सूत्रभेदोपपत्तिः मनस इव गोबलीवर्दन्यायेन भेदनिर्देशसम्भवात् तद्व्यावर्तकाकारान्तरेण वैलक्षण्ये सिद्धे हि भेदश्रुतिः स्थेयसी स्यात्। परे तु श्रोत्रादीन्द्रियाणी किं मुख्यप्राणस्य वृत्तिभेदा? उत तत्त्वान्तराणी? ति विचारयन्ति एतस्यैव सर्वे रूपमभवन्निति श्रुत्या पूर्वपक्षं वदन्ति तत्रैव परस्परसंवादनिष्क्रमणादि-प्रतिपादकपूर्वापरवाक्यैर्वृत्तिभेदशङ्काव्युदासात् तदपर्यालोचनेनोच्यमानः पूर्वपक्षो मन्दः। अन्ये तु कतिपयेष्वपि नेन्द्रियत्वम् एकप्रवृत्तिनिमित्ताभावादिति पूर्वपक्ष एव शिरोऽन्तरं कल्पयन्ति, तच्चातिमन्दम् इन्द्रियशब्दस्य निर्विषयत्वप्रसङ्गात्, अतः केनापि निमित्तेन भवितव्यमिति कृत्वा तस्य सार्वत्रिकत्वासार्वत्रिकत्वाभ्यां पूर्वपक्षसिद्धान्तवर्णनं न्याय्यं पुरुषाधीनक-

ग्णत्वमिन्द्रियत्वं बुद्धिप्राणयोस्तदधीनत्वाभावात् कर्तर्यन्तर्भाव इति चाहुः तदप्ययुक्तम् उत्पत्तिस्थितिविनाशेषु चेत् पुरुषाधीनत्वाभावः स वागादिष्वपि तुल्यः, प्रवृत्तौ चेत्कतिपयप्रवृत्तिषु पुरुषाधीनत्वाभावो मनआदीनामप्यविशिष्टः भयाद्युत्पादने पुरुषाधीनत्वाभावात्, अतो मनआदीनामपि कर्तृकोटिनिवेशप्रसङ्गः, पुरुषाधीनकतिपयवृत्तित्वं तेषामस्तीति चेत्प्राणसंयमनादिप्रवृत्तिषु पुरुषाधीनत्वं बुद्धिप्राणयोश्चास्ति, अतो न कर्त्रन्तर्भावः । देहधारकत्वं प्राणत्वमित्यप्ययुक्तं चक्षुःश्रोत्रादीनां देहधारकत्वाभावाच्चक्षुरादीनामपि कदाचिच्छ्रमदर्शनात् तदुपरतौ देहानुत्थानाच्च देहधारकत्वमिति चेन्न स्वस्वविषयेषु व्यापारभूयस्त्वनिबन्धनस्य श्रमस्य देहधारणनिबन्धनत्वाभावात् निद्रारोगपरिश्रमादिभिरात्मनो देहोत्थापनशक्तेस्तन्निमित्तप्राणप्रेरणशक्तेर्वा प्रतिबद्धत्वाद्देहानुत्थानं न तु वागादीनां देहधारणश्रान्तत्वात् ॥ इन्द्रियाधिकरणं समाप्तम् ॥

संज्ञामूर्तिकॢप्त्यधिकरणम् ।

## सू० संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥

सू० भूतेन्द्रियादीनां समष्टिसृष्टिर्जीवानां कर्तृत्वं च परस्माद्ब्रह्मण इत्युक्तं पुरस्तात्, जीवानां स्वेन्द्रियाधिष्ठानं च परायत्तमिति चानन्तरं स्थिरीकरणाय स्मारितं, या त्वियं नामरूपव्याकरणात्मिका प्रपञ्चव्यष्टिसृष्टिस्सा किं समष्टिजीवरूपस्य हिरण्यगर्भस्यैव कर्म? उत तेजःप्रभृतिशरीरकस्य परस्य अबादिसृष्टिवद्धिरण्यगर्भशरीरकस्य परस्य ब्रह्मण इतीदानीं चिन्त्यते. किं युक्तं समष्टिजीवस्येति, कुतः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति जीवकर्तृकत्वश्रवणात्, न हि परा देवता स्वेन रूपेण नामरूपे व्याकरवाणीत्यैक्षत, अपि तु स्वांशभूतेन

जीवरूपेण अनेन जीवेनात्मनेति वचनात् ॥ नन्वेवं चारेणानुप्रविश्य परबलं संकलयानीतिवत् ।

टी० सू· संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥ पेटिकासङ्गतिमाह "भूतेन्द्रियादीना"मिति, पुरस्तात्तृतीये पादे अनन्तरमस्मिन् पादे पूर्वोस्मदपि पूर्वाधिकरणे स्थिरीकरणाय स्मारितं देवानामपि परायत्तप्रवृत्तित्वनिर्णयेन जीवानां परायत्तं कर्तृत्वं स्थिरं भवति, तदर्थं तदेव दृष्टान्ततया स्मारितमित्यर्थः। तृतीयपादारद्धाथ्येतः पूर्वमेका पेटिका, तत्र भूतेन्द्रियसमष्टिसृष्टिनिरूपणमथ व्यष्टिसृष्टिनिरूपणमिति पेटिकासङ्गतिः व्यष्टेश्च जीवोपकरणरूपत्वात्सृष्टिनिरूपणमिति पादसङ्गति पूर्वाधिकरणे भेदश्रुतेवलक्षणयःच्चेति सूत्रस्य विषयवाक्ये खं वायुर्ज्योतिरित्यादे। समष्टिसृष्टेः परमात्मकर्तृकत्वमुक्तमथ व्यष्टिसृष्टिर्जीवकर्तृकतया प्रतीयत इति शङ्कयाऽवान्तरसङ्गतिः, जीवोपकरणानामिन्द्रियप्राणानामुत्पत्त्यादिकं निरूपितं तैरिन्द्रियादिभिर्जीवस्य संयोगकरणं हि व्यष्टिसृष्टिरिति वा सङ्गतिरित्यभिप्रेतं, पूर्वपादोक्तसमष्टिनिरूपणेन व्यष्टिसृष्टिनिरूपणस्य सङ्गतिः अन्यान्यधिकरणानि तु प्रसक्तानुप्रसक्तिकया निरूपितानीत्येतत् कण्ठोक्तम्। ब्रह्मणः साक्षात्सर्वकारणत्व श्रुतमुपपद्यते? उत ने? ति संशयः तदर्थं व्यष्टिनामरूपव्याकरणं किं हिरण्यगर्भमात्र कर्तृक? मुत तदवस्थब्रह्मकर्तृकमिति, तदर्थमनेन जीवेनेति जीवसामान्यकर्तृकत्व श्रुतिः किं जीवसमष्ट्याश्रयकेवलहिरण्यगर्भकर्तृकत्वमवगमयति? उत जीवमात्रविशिष्टपरमात्मकर्तृकत्व?-मिति, तदर्थं केवलहिरण्यगर्भकर्तृकत्वे त्रिवृत्करणनामरूपव्याकरणयोः श्रूयमाणयोरेककर्तृकत्वं घटितं ने? ति, तदर्थं त्रिवृत्करणे हिरण्यगर्भस्य कर्तृत्वं सम्भवति ने? ति तदर्थं त्रिवृत्करणं हिरण्यगर्भोत्पत्तिस्थानभूताण्डसृष्टेरुत्तरकालीनं वा पूर्वकालीनं वे? ति, तदर्थं नामरूपे व्याकरोत् त्रिवृतं त्रिवृतमेकैकामकरोदिति पाठक्रमोऽण्डान्तर्वर्तित्रिवृत्करणप्रदर्शनमन्नादीनां त्रिवृत्करणतिश्रुतिश्च त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालीनतामवगमयति ने? ति, किमेते त्रयो हेतवः प्रबला? उत दुर्बला? इति, तेषां प्राबल्ये त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालीनावगमकतया तस्य हिरण्यगर्भकर्तृकत्वसम्भवेन त्रिवृ-

त्करणनामरूपव्याकरणयोः कर्त्रैक्यसुत्युपपत्तेरनेन जीवेनेति निर्देशस्य हिरण्यगर्भमात्रकर्तृत्वज्ञापकतया व्यष्टिनामरूपव्याकरणं हिरण्यगर्भमात्रकर्तृकमिति परब्रह्मणः साक्षात्सर्वकारणत्वं न स्यात्पाठक्रमादीनां दुर्बलत्वे त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालीनत्वासिद्धेः तत्र हिरण्यगर्भस्य कर्तृत्वासम्भवेन त्रिवृत्करणनामरूपव्याकरणयोः कर्त्रैक्यायोगात्तदुपपत्त्यर्थमनेन जीवेनेति निर्देशस्य जीवसमष्टिशरीरकपरमात्मकर्तृत्वावगमकतया व्यष्टिनामरूपव्याकरणं हिरण्यगर्भशरीरकपरमात्मकर्तृकमिति परब्रह्मणः साक्षात्सर्वकारणत्वमुपपन्नमिति सिद्ध्यति । नन्वितरैरिव जीवमात्रकर्तृकत्वविषयो विचारः किन्न कृतः हिरण्यगर्भमात्रकर्तृकत्वं पूर्वपक्षीकृत्य हिरण्यगर्भावस्थब्रह्मकर्तृकत्वं यदि सिद्धान्त्यते तर्हि जीव–शब्दस्य हिरण्यगर्भविषयत्वेन गवादिशब्दानां तत्तच्छरीरकजीवद्वारा परमात्मपर्यन्तत्वे नामरूपव्याकरणश्रुतिर्न प्रमाणं स्यात्सर्वशरीरेषु चतुर्मुखस्यैव जीवतयाऽवस्थाने एकजीववादश्च स्यात्, बहूनां जीवानां हिरण्यगर्भाख्यजीवव्याप्यत्वं वा स्यात्, नैवमनेन जीवेनेति जीव–शब्दस्य जीवसमष्टिविषयत्वाज्जीवसमष्टेः कृत्स्ननामरूपव्याकर्तृत्वशङ्काऽनुपपत्तेः संशयान्यथानुपपत्त्या योग्यतावशाज्जीवविशेषनिष्ठोविचारः सूत्राभिप्रेत इति तथा विचारो दर्शितः । न च तावता सर्वशरीरेषु हिरण्यगर्भस्यैव वा जीवत्वं तत्तज्जीवव्याप्तत्वं वा प्रसजेत्परमात्मनो जीवसमष्टिद्वारेणाचिदनुप्रवेशस्य प्रतिपाद्यत्वात् ॥

सू० व्याकरणवागीत्युत्तमपुरुषः कर्तृस्यक्रियश्च प्रविशतिलाक्षणिकः स्यान्नैवं तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम्, इह तु जीवस्यापि स्वांशत्वेन स्वरूपत्वात् तेन रूपेण प्रवेशो व्याकरणं चात्मन एवेति न लाक्षणिकत्वप्रसङ्गः । न च सहयोगलक्षणेयं तृतीया कारकविभक्तौ सम्भवन्त्यामुपपदविभक्तेरन्याय्यत्वात्, न च करणे तृतीया ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधक-

तमस्त्वाभावात् । न च जीवस्य कर्तृत्वं प्रवेशमात्रे पर्य्यवस्यति, नामरूपव्याकरणन्तु ब्रह्मण एवेति शक्यं वक्तुं क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतेः । जीवस्य स्वांशत्वेन स्वरूपत्वेऽपि परस्वरूपव्यावृत्त्यर्थोऽनेन जीवेनेति पराकृत्वेन परामर्शः, अतो हिरण्यगर्भकर्तृकेयं नामरूपव्याक्रिया, अत एव च स्मृतिषु चतुर्मुखकर्तृकसृष्टिकरणे नामरूपव्याकरणं संकीर्त्त्यते "नामरूपञ्च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार स" इत्यादि, एवंप्राप्तेऽभिधीयते संज्ञामूर्तिक्लृप्तिस्त्विति, तु-शब्दः पक्षं व्यावर्त्तयति संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं तच्चित्रिवृत्कुर्वतः परस्यैव ब्रह्मणः तस्यैव नामरूपव्याकरणोपदेशात्, त्रिवृत्करणं कुर्वत एव हि नामरूपव्याकरणमुपदिश्यते "सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति समानकर्तृकत्वप्रतीतेः, त्रित्करणं चतुर्मुखस्याण्डान्तर्वर्तिनो न सम्भवति त्रिवृत्कृतैस्तेजोऽबन्नैर्हि अण्डमुत्पद्यते, चतुर्मुखस्य चाण्डे सम्भवः स्मर्य्यते "तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामह" इति, अतस्त्रिवृत्करणं परस्यैव ब्रह्मणः तत्समानकर्तृकं नामरूपव्याकरणं च तस्यैवेति विज्ञायते । कथं तर्ह्यनेन जीवेनेति सङ्गच्छते आत्मनः जीवेनेति सामानाधिकरण्यात् जीवशरीरकं परं ब्रह्मैव जीव-शब्देनाभिधीयते यथा तत्तेज ऐक्षत तदपोऽसृजत ता आप

ऐक्षन्त ता अन्नमसृजन्तेति तेजः प्रभृतिशरीरकं परमेव ब्रह्माभिधीयते, अतो जीवसमष्टिभूतहिरण्यगर्भशरीरकस्य परस्यैव ब्रह्मणः कर्म नामरूपव्याकरणम्, एवं च प्रविश्य नामरूपे व्याकरवाणीति प्रविशतिवत्तमपुरुषश्चाविदृशौ मुख्यार्थावेव भवतः, प्रवेशव्याकरणयोः समानकर्तृकत्वमप्युपपद्यते चतुर्मुखशरीरकस्य परस्यैव ब्रह्मणः कर्म देवादिविचित्रसृष्टिरिति चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यते, अतः सेयं देवतेत्यादिवाक्यस्यायमर्थः इमास्तेजोऽबन्नरूपास्तिस्रो देवता अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनाऽनुप्रविश्य नामरूपेव्याकरवाणि देवादिविचित्रसृष्टिन्नामधेयानि च करवाणीति तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोऽबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणीति, अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम ॥ अथ स्यात् नामरूपव्याकरणस्य त्रिवृत्करणेनैककर्तृकत्वात्परमात्मकर्तृकत्वमिति न शक्यते वक्तुं त्रिवृत्करणस्यापि जीवकर्तृकत्वसम्भवात् अण्डसृष्ट्युत्तरकाले हि चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते यथा "खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति अन्नमशितं त्रेधा विधीयते तस्य यःस्थविष्ठो भागस्तत्पुरीषं भवति योमध्यमस्तन्मांसं योऽणिष्ठस्तन्मन" इत्यादिना, तथा पूर्वस्मिन्नपि वाक्ये "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं

तद्रूपं यत् कृष्णं तदन्नस्ये"त्यादिना चतुर्मुखसृष्टाग्न्यादि-त्यचन्द्रपिद्युत्सु त्रिवृत्करणं प्रदर्श्यते, नामरूपव्याकरणोत्तरकालं च त्रिवृत्करणं श्रूयते सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति, तथाह—

टी० व्याकरवाणीति ब्रह्मण एव कर्तृत्वं प्रतीयते इत्यत्राह "न हि परा देवते"ति, कर्तृस्थक्रिय-व्याकरणकर्तृस्थक्रिय इति विवक्षिया समानकर्तृक इत्यर्थः । लाक्षणिकत्व परिहरति "नैवमित्यादिना, वस्तुतो जीवस्य परमात्मांशत्वात् तस्य कर्तृत्वं परमात्मन एव भवति, तस्मान्मुख्यकोटिरित्यर्थः क्लिष्टनिर्वाहत्वात् यथा प्राभाकरैर्गवादिशब्दानां व्यक्तिर्मुख्यकोटिरिति मतं तद्वत् तृतीयायाः सहयोगाद्यर्थान्तरपरत्वे परमात्मन्येव कर्तृत्वं स्यादित्याशङ्क्याह "न च सहयोगे"ति, कर्तृकरणयोस्तृतीयेत्यादिभिः पदान्तरयोगमनपेक्ष्य विहिता विभक्तिः कारकविभक्तिः, पदान्तरसाहचर्ये विहितोपपदविभक्तिः । अन्याय्यत्वादिति पदान्तरपरामर्शसापेक्षतया विलम्बितवृत्तित्वादन्याय्यत्वमभिप्रेतम् । ननु करणे विहिता तृतीया नोपपदविभक्तिरित्यत्राह "न च करण इ"ति, तर्हि द्वयोरपि कर्तृत्वात्समानकर्तृकत्वावगमाद्वस्तुतोऽनन्यत्वाच्च तदवस्थपरमात्मकर्तृकत्वं स्यादित्यत्राह "जीवस्ये"ति, हेत्वन्तरमाह "अत एव चे"ति, राद्धान्तमाह "एवं प्राप्त"इति, त्रिवृत्करणं चतुर्मुखकर्तृकं स्यादित्यत्राह "त्रिवृत्करणं त्वि"ति, कुत इत्यत्राह "त्रिवृत्कृते"रिति, अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्येत्यर्थः । ततः किमित्यत्राह "चतुर्मुखस्ये"ति, चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याकरणवचननिर्वाहमाह "चतुर्मुखे"ति, त्रिवृत्करणं नाम किं तस्याण्डसृष्ट्यर्थत्वं कथम् ? अनेन जीवेनेति वाक्यात् तेजोऽबन्नप्रतीतिः कथं नाम रूपव्याकरणं च किमित्यत्राह "अतः सेयमि"ति, ॥ अनन्तरसूत्रशङ्कामाह "अथ स्यादि"ति, अण्डसृष्टेः पश्चात् चतुर्मुखसृष्टेषु पुरुषेषु त्रिवृत्करणोपदेशात् तत्सृष्टाग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनात् नामरूपव्याकरणोत्तरकालं त्रिवृत्करणश्रवणाच्च त्रिवृत्करणस्याण्डसृष्ट्यर्थत्वं न संभवति अतस्त्रिवृत्करणं चतुर्मुखकर्तृकमिति तदेककर्तृकं नामरूपव्याकरणं चतुर्मुखकर्तृकमित्यर्थः ॥

सू० मांसादिभौमं यथाशब्दमितरयोश्च ॥ १८ ॥

भू० यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोऽयं तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति त्रिवृत्करणोपदेश इति, तन्नोपपद्यते अन्नमशितं त्रेधा विधीयत इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेनाऽऽप्यतैजसत्वप्रसङ्गात् आपः पीता इत्यत्रापि मूत्रप्राणयोः स्थविष्ठाणीयसोः पार्थिवत्वतैजसत्वप्रसङ्गाच्च, न चैवमिष्यते मांसादेर्हि भौमत्वमिष्यते पुरीषवत् मांसमनसी अपि भौमे पार्थिवे इष्येते अन्नमशितं त्रेधेति प्रक्रमात्, यथाशब्दमितरयोश्च इतरयोरप्यापः पीतास्तेजोऽशितमिति पर्याययोर्यथाशब्दं विकारा इष्यन्ते आपः पीतास्त्रेधा विधीयन्त इत्यपामेव त्रिधा परिणामः शब्दात्प्रतीयते यथा तेजोऽशितं त्रेधा विधीयत इत्यपि तेजस एव त्रिधा परिणामः शब्दात्प्रतीयते, अतः पुरीषमांसमनांसि पृथिवीविकाराः, मूत्रलोहितप्राणा अब्विकाराः, अस्थिमज्जावाचस्तेजो विकारा इति प्रतिपत्तव्यम्, अन्नमयं हि सोम्यं मन आपोमयः प्राणः तेजोमयी वागिति वाक्यशेषाविरोधाच्च, अतस्तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्युक्तस्त्रिवृत्करणप्रकारोऽन्नमशितमित्यादिना न प्रदर्श्यते, तथा सति मनःप्राणवाचां त्रयाणामप्यणीयस्त्वेन तैजसत्वादन्नमयं हि सौम्य मन इत्यादिर्विरुध्यते प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानामन्नमशितमित्यादिनैकैकस्य त्रेधा परि-

णाम उच्यते अण्डसृष्टेः प्रागेव च तेजोऽबन्नानां त्रिवृत्करणेन भवितव्यम्। अत्रिवृत्कृतानां तेषां कार्य्यारम्भासामर्थ्यात्, अन्योन्यसंयुक्तानामेव हि कार्य्यारम्भसामर्थ्यं तदेव च त्रिवृत्करणम् ॥

टी० सू० मांसादिभौमं यथाशब्दमितरयोश्च ॥ १८ ॥ अन्नमशितमित्यादि कारणानुविधायित्वेन अत्रिवृत्कृतानामपि पृथिव्यप्तेजसां स्थूलत्वाणुत्वाणीयस्त्वात् त्रिवृत्कृतेष्वपि तत्तद्भूतांशानां स्वकारणानुगुणस्थूलत्वाणुत्वाणीयस्त्वं स्यात् तस्मादन्नमशितमित्यादिवाक्ये त्रिवृत्करणं प्रदर्श्यते चेत् स्थविष्ठं पुरीषं पार्थिवमणु मांसमाप्यमाणीयोमनश्च तैजसं स्यात् न तथोपपद्यते,मांसमनसोः पार्थिवत्वात्,पार्थिवत्वं चान्नमशितमिति प्रक्रमादवगतमित्यर्थः । एवमितरपर्यायद्वयेऽपि न चैवमिष्यत इत्यन्तेन प्रथमद्वितीयपर्याययोरनिष्टं दर्शितं, तृतीये तु न प्रसक्तं, तत्रायं भावः प्रतिपर्यायं चरमोपात्तेष्वनिष्टस्य प्रसञ्जनीयत्वात् तृतीयपर्याये चरमे प्रसञ्जनीयस्यानिष्टत्वाभावात् न तत्प्रसञ्जनीयमिति तृतीये ऽप्यस्थिमज्जापार्थिवाप्यत्वानिष्टता पश्चाद्वक्ष्यते, मांसादि हीति मांसमनसोराप्यतैजसत्वे अनिष्टे द्वितीये मूत्रं पार्थिवं लोहितमाप्यं प्राणस्तैजसः स्यात् तत्र मूत्रप्राणयोः पार्थिवतैजसत्वे अनिष्टे अन्नमशितमापः पीता इति च प्रक्रमेण मांसमनसोः पार्थिवत्वान्मूत्रप्राणयोराप्यत्वात्, अन्नमयं हि सोम्य मनः आपोमयः प्राण इति वाक्यशेषाच्च तृतीयेऽप्यस्थ्नः पार्थिवत्वं मज्जाया आप्यत्वं वाचस्तैजसत्वं च स्यात्तत्रास्थिमज्जयोः पार्थिवाप्यत्वे अनिष्टे तेजोऽशितमिति प्रक्रमात्तेजोमयी वागिति वाक्यशेषाच्च, तस्माच त्रिवृत्करणं प्रदर्श्यते अपि त्वन्नादीनां प्रत्येकं त्रेधा परिणाम उच्यत इत्यर्थः अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरो"दिति पाठक्रमान्नामरूपव्याकरणस्य पश्चात् त्रिवृत्करणः प्रतीयत इत्यत्राह "अत्रिवृत्कृतानामिति अन्योन्यसंयुक्तानां कार्यारम्भसामर्थ्यं चेत्कथं त्रिवृत्करणापेक्षेत्यत्राह "तदेव चे"ति, अन्योन्यसंयुक्तत्वमेव त्रिवृत्कृतत्वमित्यर्थः । एतद्विशदयति–

भू० यथा च स्मर्य्यते, "नानावीर्य्याः पृथग्भूतास्ततस्ते संहतिं[1] विना। नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥ समेत्याऽन्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति, अत एव चानेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति पाठक्रमोऽर्थक्रमेण बाध्यते, अण्डान्तर्वर्त्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्य्येष्वग्न्यादित्यादिषु क्रियते। स्यादेतत् अन्नमशितमात्रः पीतास्तेजोऽशितमिति त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोऽबन्नात्मकत्वेन त्रिरूपस्य कथमन्नमापस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यते इति, तत्राह—

टी० "तथा च स्मर्यत" इति, पाठक्रमः कथमित्यत्राह "अत एव चे"ति, उत्पत्तौ साधनस्य पूर्वभावित्वे फलस्य पश्चाद्भावित्वे सत्यपि संकल्पे फलमेव पूर्वभावि स्वर्गकामो यजेत इत्यादिषु तथा दर्शनात्, अस्मिन् प्रकरणेऽपि बहु स्यां प्रजायेयेति साध्यस्य बहुभवनस्य पूर्वभावित्वं च दृष्टम् उपबृंहणे च तद्विशदीकृतं, तस्मान्नामरूपे व्याकरवाणि त्रिवृतं त्रिवृतमेकैकां करवाणीति संकल्पवाक्ये त्रिवृत्करणफलस्य नामरूपव्याकरणस्य पूर्वप्रतिपत्तौ त्रिवृत्करणस्य पूर्वभावित्वं सिद्धम्। अग्निहोत्रं जुहोति यवागूं पचतीत्यादिष्वर्थक्रमेण पाठक्रमबाधदर्शनात्संकल्पवाक्यस्वाभावात् प्राकरणिकसंकल्पवाक्यान्तरे पश्चाद्भाविनः फलस्य पूर्वभावदर्शनादुपबृंहणवचनस्वारस्याच्च नामरूपे व्याकरोत् त्रिवृतं त्रिवृतमेकैकामकरोदिति पाठक्रमोऽर्थक्रमेण बाध्यत इत्यर्थः। तर्ह्यग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं किमर्थमित्यत्राह "अण्डान्तर्वर्तिष्वि"ति, अग्न्यादित्यादिष्वपि त्रिः श्रूयते

१ संहतिं विनेति पा०।

तथा पाठश्चेदयमर्थः । अग्न्यादित्यादिषु त्रिवृत्कृतभूतकार्य्येषु सत्सु त्रिवृत्कृतकार्य्यत्वादेव तेष्वग्न्यादिषु त्रिवृत्करणप्रदर्शनं क्रियत इति । यद्वाऽवान्तर्वाक्यत्वेनेत्यन्तमेकं वाक्यं कथमस्य हेतुत्वमित्यत्राह "तस्ये"ति, क्रियते त्रिवृत्करणप्रदर्शनमिति शेषः । अनन्तरसूत्रशङ्कायामवतारयति "स्यादेतदि"ति ।

## सू० वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥

मू० वैशेष्यं–विशेषभावः, त्रिवृत्करणेन निष्पन्नेऽप्येकैकस्मिन्नन्नाद्याधिक्यात् तच्च तच्चान्नादिवादः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ संज्ञामूर्त्तिक्लृप्त्यधिकरणं समाप्तम् ॥ इति श्रीमद्भगवद्रामानुजाचार्य्यविरचिते शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥ समाप्तश्चायमध्यायः ॥

टी० सू. वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥ विशेष–शब्दो विकारशब्दवद्धर्म्मिपरो धर्मपरश्च, अत्र तु धर्मिपरः, विशेषभावो वैशेष्यम् आधिक्यरूपम् परे तु जीवस्यानुप्रवेशकर्तृत्वं नामरूपव्याकरणकर्ता तु परमेश्वर इत्याहुः तन्मते श्रुतिविरोधः तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदिति नामरूपव्याकरणसमभिव्याहृतानुप्रवेशस्य परमात्मकर्तृत्वावगमात्समानकर्तृत्वं च न घटते जीवस्यापीश्वराद्वस्तुतोऽनन्यत्वेन युक्तं समानकर्तृकत्वमिति चेन्न जीवेश्वरयोरुभयोर्ब्रह्मणि कल्पितत्वात्कुलालकुविन्दकर्तृकयोर्घटपटयोरिव तदनुपपत्तेः, अधिष्ठानैक्यात्तदुपपत्तिरिति चेन्न स्वाप्नकुलालकुविन्दयोस्सन्मात्रकल्पितत्वेऽपि तन्निमित्तघटपटयोरेककर्तृकत्वाभावात् । किं च कर्तृत्वमुपाधिगतं? तद्विशिष्टगतं? तदुपलक्षितवस्तुगतं वा? आद्ये कर्त्रैक्यासिद्धिः, जीवेश्वरावच्छेदकानामुपाधीनां भिन्नत्वात्, द्वितीयेऽपि न कर्त्रैक्यं विशिष्टरूपभेदाद्यथाकुलालकुविन्दकर्तृकयोर्घटपटयोः, तृतीये तु सन्मात्रवस्तुनि स्वतः कर्तृत्वाभावादेव न कर्त्रैक्यं शरीरभेदेन कृतानां सौभरिव्यापाराणाम् इव सकर्तृकत्वोपपत्तिरिति चेन्न तच्छरीरव्यापारभूतमूलप्रयत्नस्यैव जीवेश्वरव्यापारभूतानुप्रवेशव्याकरणमूलप्रयत्नस्य

तत्तच्छरीरकैकात्मगतत्वानुपपत्तेः, । ननु छायया ऽऽदर्शमनुप्रविश्य तिलकं रचयामीतिवत्समानकर्तृकत्वोपपत्तिरिति चेन्न सत्यानृतयोर्बिम्बप्रतिबिम्बयोरेककर्तृकत्वाभावेन दृष्टान्तस्य साध्यविकलत्वात् । छायया ऽऽदर्शे भासमानता ऽतिरेकेणानुप्रवेशाभावाच्च, न हि मूर्तद्रव्यप्रतिघातिनो दर्शनस्यानुप्रवेशयोग्यत्वं तृतीयसूत्रेणानुपपत्तिविशेषपरिहाराय त्रिवृद्वचनान्तरोपन्यासपरं द्वितीयसूत्रमित्यप्ययुक्तं मन्दप्रयोजनत्वात्, प्रयोजनवत्तरनिर्वाहस्य दर्शितत्वाच्च, मनस आहङ्कारिकत्वनित्यत्वयोः सांख्यवैशेषिकाभिमतयोर्व्युदासेनान्नमयत्वसमर्थनार्थं द्वितीयं सूत्रमिति चेन्न आहङ्कारिकत्वस्य श्रुतिसिद्धत्वात्, सर्वेन्द्रियाणां भूतादिशब्दोपलक्षिते ऽहङ्कारे प्रलयश्रवणान्मनसो वाचश्च पृथिवीतेजः कार्य्यत्वे भूतप्रलयोत्तरकालमवस्थानानुपपत्तेः पाश्चात्यप्रलयश्रवणायोगाच्च, अपरेषामपि पक्षे ऽनुप्रवेशस्य जीवकर्तृकत्वं वक्तुमयुक्तं'नामरूपव्याकरणसमभिव्याहृतानुप्रवेशस्य परमात्मकर्तृकत्वश्रवणाज्जीवस्येश्वरादभिन्नत्वात्कर्तृकत्वे ऽप्यनुप्रवेशस्य परमात्मकर्तृकत्वोपपत्तिरिति चेत्तर्हि नामरूपव्याकरणस्यापि जीवकर्तृकतया परमात्मकर्तृकत्वं स्यात्समस्तनामरूपव्याकरणं जीवस्याशक्यमिति चेत् सर्वानुप्रवेशश्चाशक्यः । नन्वचिन्मात्रे ऽनुप्रवेश उपपद्यते तिस्रो देवता अनुप्रविश्येति हि श्रूयत इति चेन्न समानप्रकरणे "विज्ञानं चाविज्ञानं च सत्यं चानृतं चे"ति जीवे ऽप्यनुप्रवेशश्रवणात् ॥ अन्येषां मते ऽपि समानकर्तृकत्वमनुपपन्नं जीवेश्वरयोर्ब्रह्मांशत्वावगमात्, तदंशभूतयोश्च तयोर्द्वयोर्जीवयोरिवैककर्तृकत्वानुपपत्तेः, अंशिन एकत्वात् कर्त्रैक्यमिति चेन्न राजचारयोरपि ब्रह्मांशत्वेनैककर्तृकत्वप्रसङ्गात्, अस्त्विति चेत् असमानकर्तृकव्यापाराभावात्समानकर्तृकयोरित्यनुशासनवैयर्थ्यं स्यात्, उपरितनसूत्रद्वयस्याधिकरणान्तरत्वमप्ययुक्तं सूत्राणामव्यवहितत्वे सति फलफलिभावेनान्वितार्थप्रतिपादकत्वात् ॥ संज्ञामूर्तिक्लृप्त्यधिकरणं समाप्तम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतश्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

अत्र पादे अष्टावधिकरणानि सूत्राणि चैकोनविंशतिः । आदितः समस्तसूत्रसंख्या ॥ २८७ ॥ समुदिताधिकरणसंख्या च ॥ ६८ ॥ एतावती ॥

रूपमस्यास्ति रूपादाहतप्रशंसयोर्यप्, रूप्यः, ग्रामे भवो ग्राम्यः, नील वर्णे, इगुपधात्कः नीलः, अम् रोगे, औणादिक इत्रः, अमित्रः, गौकाद्यो गर्गादिर्यञन्तः, क्रथोदः, कुरुः, देवस्येव रथो ऽस्य देवरथः, तिले तिलः, तितिलः, पृषोदरादिः, ततो मत्वर्थीय इनुः, तितिलिनो ऽपत्यमौत्सर्गिकोऽण्, नस्तद्धित इति टिलोपः, तैतिलः, औरशशब्दो व्युत्पादितः, कुर्वादिभ्यो ण्यः, कौरव्यः, भूरि अस्यास्ति भूरिको व्रीह्यादिः, तस्यैव पक्षे कपिलकादित्वाल्लत्वं भूलिकः, ताभ्यामत इञ्, भौरिकिः भौलिकिः, चुप मन्दायां गतौ, ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चौपयतः, एवं चैटयतः, चिट परप्रेष्ये, ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चैटयतः, शीक् सेचने, णिजादि पूर्ववत्, शैकयतः, चितमाचष्टे चितयन्, तस्यापत्यं चैतयतः, ध्वजोऽस्यास्ति ध्वजवान्, तस्यापत्यं ध्वाजवतः, द्वौ शब्दावित्यन्ये, ध्वज गतौ ण्यन्तात्पचाद्यच्, ध्वाजः, वनोतेस्तः, वतः, चदि आह्लादने, ततो रमस् चन्द्रमाः, तस्यापत्यं चान्द्रमसायनिर्बुधः, शोभतेऽसौ शुभः, इगुपधात्कः, गमेर्गन्, गङ्गा,शुभ एष्यः वरेण्यः, सर्वधातुभ्यो मनिन्, यानं यामा, शोभनं यामास्य सुयामा, आरदो नाम जनपदः ततोऽपत्ये जनपदशब्दादित्यञ्, आरदः, वह्यं करणं, वह्यमेव वह्यका निपातनादिस्वाभावः, खलाय हिता खल्या, खलयवेति यत्, वृषु सेचने इगुपधात्कः वृषः, लोमानि कामयति लोमका, उदकमिच्छत्यात्मन उदन्यः, अशनायोदन्यधनायेत्युदकस्योदन्भावः, ततः पचाद्यच्, यञ्योगाद्यञः, एते तिकादयः ॥

"कौसल्यकार्मार्याभ्यां च" ॥ कोसलशब्दाद्वृद्धेत्कोसलाजादाञ्ञ्यङ्, कर्मारशब्दात्कारिलक्षणो ण्यः, एतयोरिह ग्रहणमिति शङ्कामपाकरोति । 'परमप्रकृतेरेवेति' । कथं तर्हि विकृतं प्रकृतिरूपं श्रूयते तत्राह । 'प्रत्ययसंयोगेन त्विति' । न चेयं स्वमनीषिकेत्याह । 'तथा चेति' । 'युद्धादिष्टस्येति' । पूर्वान्तकरणे दागव्यायनिः, आगुणो न स्यात्, अतः परादिकरणम् । 'आदिष्टस्येति' । दात्तायनादेशस्येत्यर्थः । एतस्मिन्ननुच्यमाने ऽनवकाशत्वादागुटि कृते ऽजादित्वादायनादेशो न स्यात् ॥

"अणो द्व्यचः" ॥ 'कार्त्र्यायणिरिति'। कर्त्तुरपत्यमित्यण्, कार्त्रः, ततो यूनि फिञ्, तस्याण्ग्राह्नणगोत्रादिति लुङ् भवति, विधानसामर्थ्यात्, अपर आह। कर्त्तृशब्दाच्च: कार्त्तः, तस्यापत्यमित्यादावगोत्रे च रिताऽर्थं वचनमिति। अपर आह, अपत्यग्रहणमावर्त्तते तत्रैकेनाण् विशेष्यते, अपरेण प्रत्ययार्थो निर्दिश्यते, ततश्चापत्यस्यैवाणो ग्रहणादस्त्येव वचनसामर्थ्यमिति ॥

"उदीचां वृद्धादगोत्रात्" ॥ 'कारिशब्दादपीति'। कारिलक्षणस्योदीचामिञोऽवकाशस्तान्तुवायिः, फिञोऽवकाशः आम्रगुप्तायनिः, नापितादुभयप्रसङ्गे फिञ् भवति। 'याज्ञदत्तिरिति'। वा नामधेयस्य वृद्धसंज्ञा वक्तव्या, पक्षे याज्ञदत्तायनिरिति भवत्येव ॥

"वाकिनादीनां कुक् च" ॥ 'यदिह वृद्धगोत्रमिति'। वाकिनगारेधकाकलङ्क्येते त्रयः, वचनं वाकः सोऽस्यास्ति वाकिनः, बर्हिणवदुपपाद्यः, अगारे एधते गारेधः पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपं, कायतेः काकः, अन्येषामपीति कः, कर्क्कटस्यापत्यं कार्क्कट्यः, गर्गादिः, कुर्वादिर्वा, लन्धयतेर्लङ्का, अस्मादेव निपातनाद् घस्य कादेशः, वर्मचर्मशब्दौ व्रीह्यादी। "इजाद्यपवाद इति'। वर्मिचर्मिणोरण् प्राप्तः, लङ्काशब्दाद्व्यच इति ठक् प्राप्तः, यञन्तात्पिञोश्चेति फक्, शेषेभ्य इञ् प्राप्तः, वर्मिचर्मिणोर्नलोपश्चेति कुकि कृते प्रातिपदिकस्यानकारान्तत्वान्नलोपो न प्राप्नोतीति विधीयते, यदि पुनरयं कुक् परादिः क्रियते आयनादेशो न स्यात् फस्यानादित्वात्, यदा च लिङ्गविशिष्टपरिभाषयावर्मिणीचर्मिणीशब्दाभ्यां प्रत्ययो भवति तदा भस्याढे तद्धितइति पुंवद्भावो न स्यात् ॥

"पुत्रान्तादन्यतरस्याम्" ॥ 'पूर्वेणैव प्रत्ययः सिद्ध इति'। तेनासाविह विधीयते, कथं तर्हि पञ्चम्या निर्देश इत्याह। 'पुत्रान्तादित्यादि' ॥

"प्राचामवृद्धात् फिन्बहुलम्" ॥ 'विकल्पार्थे इति'। विकल्पप्रयोजनं तत्राचार्योपादानं मतान्तरे प्रत्ययस्याभावं द्योतयति, बहुल-

ग्रहणं तु क्व चित्यङ्गस्यादिकम्, अन्यतरस्यांशब्दस्तु विकल्पमेव, तेषामेके नैव सिद्ध्यतीति प्रकरणाद्विकल्प इति गम्यते, किमर्थं तर्हि सर्वेषां ग्रहणं तत्राह । 'तत्रेति' । 'बहुलग्रहणं वैचित्र्यार्थमिति' । पारिशेष्यादन्यस्य ग्रहणं विकल्पार्थमित्युक्तं भवति, वैचित्र्यमेव दर्शयति । 'क्व चिदिति' ॥

"मनोर्जातावञ्यतौ षुक् च" ॥ 'तथा चेति' । अपत्यार्थे तु सति यञञोश्चेति बहुषु लुक् प्रसज्येत, लौकिकस्य गोत्रस्य तत्र ग्रहणात् । 'अपत्ये कुत्सितइति' । णत्वविधानार्थमिदम्, अणः सिद्धत्वात्, न च न दण्डमाणवान्तेवासिष्विति णत्वसिद्धिः, अर्थविशेषस्यानिश्चयाद् अनधीतवेदत्वान्मूढत्वं, विहिताकरणात्प्रतिषिद्धसेवनाच्च कुत्सितत्वम् ॥

"अपत्यं पौत्रप्रभृति गोत्रम्" ॥ 'तद्गोत्रसंज्ञं भवतीति'। अपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं युक्ता न सञ्ज्ञेति चेत्, न, लिङ्गवती परिभाषा भवति यथा इको गुणवृद्धी इति, विध्यन्तरशेषभूता वा, यथा विप्रतिषेधे परं कार्यमिति, न चेयं तथा, किं च वृद्ध्यादयोपि सर्वार्थप्रत्यायनयोग्याः सञ्ज्ञिविशेषे शक्त्यवच्छेदेन नियम्यन्ते, अथ च ताः सञ्ज्ञास्तथेयमपि भविष्यति, उक्तं च ।

व्यवहाराय नियमः सञ्ज्ञानां सञ्ज्ञिनि क्व चित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रे ऽस्मिञ् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमो हि सम्बन्धो विशेषणविशेष्यवत् ॥

इति । यदि पौत्रप्रभृतेरपत्यस्य गोत्रसञ्ज्ञा क्रियते गर्गस्यापि प्राप्नोति सोपि कं चित्प्रति पौत्रो भवत्येव, तत्र को दोषः, गोत्राद्यून्यस्त्रियामिति यूनि प्रत्ययप्रसङ्गः, गार्ग्यादेव तु यूनीष्यते, नैष दोषः । इहापत्यग्रहणं न कर्तव्यं, पौत्रस्यापत्यत्वात्तत्प्रभृतेरपत्यस्यैव ग्रहणं सिद्धं, तत् क्रियते ऽपत्यरूपेण प्रतिभासमानस्य यथा स्याद्वस्तुतो ऽपत्यस्य मा भूदित्येवमर्थमतोपत्यरूपेण प्रतिभासमानस्य गर्गस्य न भविष्यति, ननु चासत्यप्यपत्यग्रहणे पौत्रप्रभृतिरूपेण प्रतिभासमानस्य सञ्ज्ञाया विज्ञानात्तेन रूपेणाप्रतिभा-

समानस्य गर्गस्य न भविष्यतीति किमपत्यग्रहणेन, यद्येवमौपगवस्यापि न स्यात् सोपि ह्यपत्यरूपेण प्रतिभासते न तु पौत्रप्रभृतिरूपेण, अपत्यमात्रे प्रत्ययविधानाद् गार्ग्यादेरेव तु स्याद् यञ् गोत्र एव प्रत्ययः, कुतश्चायमर्थो लभ्यते पौत्रप्रभृतिरूपेण प्रतिभासमानस्येति, तद्ग्रहणसामर्थ्यादिति चेत् सर्वस्यापि यत्किं चित्प्रति वस्तुतः पौत्रप्रभृतित्वाव्यभिचारात् पौत्रप्रभृतिग्रहणं न कर्त्तव्यं भवति, तद्ग्रहणसामर्थ्यादयमर्थो लभ्यत इति, तच्च, सञ्ज्ञिनिर्देशार्थत्वादचेतनव्यावृत्त्यर्थत्वाच्च, गोत्रं इत्येतावति ह्युक्ते कस्य सञ्ज्ञा स्यात्, रथादीनां च वस्तुनोपि पौत्रप्रभृतित्वं नास्ति, अतो वस्तुतः पौत्रप्रभृतेर्गर्गस्य मा भूदपत्यरूपेण प्रतिभासमानस्य यथा स्यादित्येवमर्थं त्वपत्यग्रहणं कर्तव्यं, सम्बन्धिशब्दत्वाच्च पौत्रप्रभृत्यपत्यशब्दयोर्यं प्रति पौत्रप्रभृतित्वमपत्यत्वं च तमेव प्रति गोत्रसंज्ञा विज्ञायते, तेनाङ्गिरसः पौत्रे गर्गस्यानन्तरे न भवति गर्गादिभ्यो यञ्, तदेतत्सर्वमुक्तम्। 'सम्बन्धिशब्दत्वादित्यादि', 'यस्य यदपत्यमिति'। प्रतिभासत इति भावः। तदयमत्र सूत्रार्थः, वस्तुतः पौत्रप्रभृतिरपत्यरूपेण प्रतिभासमानोर्थो यं प्रत्यपत्यरूपेण प्रतिभासते यं च प्रति वस्तुतः पौत्रप्रभृतिस्तं प्रति गोत्रसञ्ज्ञ इति। 'आपत्यमिति व्यपदेशायेति'। सञ्ज्ञिन इति शेषः। अपत्यरूपेण प्रतिभासमानस्य सञ्ज्ञिनो व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः। इह कस्मान्न भवति गर्गापत्यस्य तृतीयादेरपत्यमिति, अत्र हि गर्गापत्यशब्देन गर्गे प्रत्यपत्यरूपेण प्रतिभासमानस्य वस्तुतः पौत्रप्रभृतेर्गर्गं प्रति गोत्रसञ्ज्ञायां सत्यां गर्गस्य चतुर्थे जीवद्वंश्ये गोत्राद्यूनीति गर्गापत्यशब्दात्प्रत्ययः प्राप्नोति, नैष दोषः। सञ्ज्ञाप्रकरणएवास्मिन्कर्त्तव्ये ऽपत्यप्रत्ययेषु विधीयमानेषु मध्ये सञ्ज्ञाकरणं प्रत्ययवाच्यस्यापत्यस्य परिग्रहार्थं, यदिदं तस्यापत्यमित्यारभ्य प्रत्ययार्थत्वेन निर्दिष्टमपत्यं तद्गोत्रसञ्ज्ञमिति, तेनापत्यशब्देन प्रतिभासमानस्यापत्यस्य सञ्ज्ञा न भविष्यति। ननु च ते तद्राजा इत्यत्र तच्छब्दनाञादीनामेव परिग्रहो यथा स्यात्पूर्वेषां मा भूदिति मध्ये सञ्ज्ञाकरणं स्यात्, यद्येतावत्प्रयोजनं स्यादञादयस्तद्राजा इत्येव ब्रूयात्तस्मादुक्तमेव साक्षात्प्रयोजनमस्मिन् प्रकरणे सञ्ज्ञाकरणस्य, स्थिते त्वेवमुक्तमपि

प्रयोजनं भवत्येव, अत एव तत्र वक्ष्यति गोत्रयुवसञ्ज्ञा काण्डेन व्यवहितत्वादिति ॥

"जीवति तु वंश्ये युवा" ॥ 'अभिजनप्रबन्धो वंश इति'। अभिजनाः पित्रादयः, अभिजायन्ते येभ्यः पुत्रादय इति कृत्वा, प्रबन्धः, सन्तानः। 'तत्र भवो वंश्य इति'।। दिगादित्वाद्यत्, पौत्रप्रभृत्यपत्यमिति षष्ठीसमासः, यद्यत्रापि पूर्ववत्पौत्रप्रभृतीत्येतत्सामानाधिकरण्येनापत्यं विशेषयेत् तृतीयस्यापि जीवद्वंश्यस्य युवसञ्ज्ञा स्यात्, तत्र को दोषः, युवसञ्ज्ञया गोत्रसञ्ज्ञाया बाधितत्वाद्गर्गादिभ्यो यञ् स्याच्च कश्चिदपत्यप्रत्ययः, किं कारणं, गोत्रादेव यूनीति नियमात्, नानन्तराच्च मूलप्रकृतेस्तस्माद्वाक्येनैवाभिधानं प्राप्नोति गर्गस्यापत्यं गार्गेरपत्यमिति, एतेनोपगोस्तृतीयो जीवद्वंश्यो व्याख्यातः, तस्माद्व्यधिकरणेन विशेषणमित्याह। 'पौत्रप्रभृतीति'। 'षष्ठी विपरिणम्यत इति'। अत्र च व्याख्यानमेव शरणम्। 'तुशब्दोऽवधारणार्थ इति'। अनेकार्थत्वान्निपातानां भिन्नक्रमो युवशब्दानन्तरं द्रष्टव्य इत्याह। 'युवैव भवति न गोत्रमिति'। असत्यवधारणे एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशाभ्युपगमात्कृत्यप्रत्ययसंज्ञानामिव गोत्रयुवसंज्ञयोः समावेशः स्यात्, अस्तु को दोषः, यस्कस्यापत्यं गोत्रं शिवादिभ्योऽण्, तदन्ताद्यून्यणो द्व्यच इति फिञ्। वृद्धो यस्येति लोपे कृते यास्कायनिरिति। बहुषु यस्कादिभ्यो गोत्र इति फिञो लुक् प्रसज्येत एकदेशविकृतस्यानन्यत्वा, द्यस्कादिभ्योऽनन्तरस्य गोत्रप्रत्ययस्य लुगुच्यते, न चात्रानन्तरः फिञ्, शिवाद्यणो यस्येति लोपः, तस्य पूर्वस्मादपि विधौ स्थानिवद्भावाद्य,स्कादिभ्यो विहितस्येति वा विज्ञास्यते, इह च कण्वस्यापत्यं काण्व्यः, तस्यापत्यं युवा काण्व्यायनस्तस्यच्छात्राः काण्वायनीया इति, कण्वादिभ्यो गोत्र इत्यण् न भवति, कण्वादिभ्यः परो योऽनन्तरो यो वा तेभ्यो गोत्रे विहितस्तदन्तादित्याश्रयणात्, इह च औपगवस्यापत्यमौपगविरिति गोत्राद्यूनीति प्रतिपदविधानादेको गोत्र इति नियमो बाध्यते, यदि बाध्यते औपगवेनापत्यमिति चतुर्थस्य यूनो गोत्रत्वात्पञ्चमे यूनि फक् प्राप्नोति, नैष दोषः, पञ्चमे

यूनि विवक्षिते उत्पन्नस्येञो यूनि लुगिति लुकि कृते श्रौपगवशब्दादणन्तात्पुनरपीञेव भविष्यति, इह तर्हि दाक्षेरपत्यं दाक्षायणस्यापत्यमित्यर्थविवक्षायां फक्फिञोरन्यतरस्यामिति फञो लुगभावपक्षे तदन्तादिञ् प्राप्नोति, किं च श्रौपगवेरपत्यमित्यत्रापि लुप्ते ऽपीञि प्रत्ययलक्षणेन फक् प्राप्नोति, एवं तर्हि गोत्राद्यूनीत्यत्र एकग्रहणमनुवर्तिष्यते तेनानेकः प्रत्ययो न भविष्यति, यस्तर्हि गोत्रेऽलुगचीत्यलुक् सोत्रीणां यूनां छात्र इत्यादौ प्राप्नोति, यूनोपि गोत्रत्वात्, प्राप्नोतु तं बाधित्वा परत्वाद्यूनि लुग्भविष्यति, नैवं शक्यं, फक्फिञोर्हि दोषः स्यात्, शालङ्केरपत्यं शालङ्किः, पैलादिषु पाठादिञ् शलङ्कादेशश्च, ततः शालङ्केरपत्यं युवा यञिञोश्चेति फक्, पैलादिभ्यश्चेति लुक्, ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां गोत्रे लुगचीति पैलादिषु लुकः प्रतिषेधे सति यूनि लुगिति लुकि नित्ये प्राप्ते फक्फिञोरन्यतरस्यामिति पक्षे फकः श्रवणप्रसङ्गः, असत्यां तु यूनो गोत्रसंज्ञायां गोत्रे लुगचीत्यस्याप्रवृत्तौ पैलादिषु लुग्भवत्येव, फक्फिञोरन्यतरस्यामित्ययं तु विकल्पो यूनि लुगित्यस्यानन्तरस्य न तु पैलादिषु लुको व्यवहितस्यान्तरङ्गस्य, तत इञश्चेत्यण् शालङ्का इति भवति, तथा पीलाया अपत्यं पीलाया वेत्यण्, पैलः, तस्यापत्यं युवा, अणो द्व्यच इति फिञ्, तस्य पैलादिभ्यश्चेति लुक्, ततः पैलस्य यूनश्छात्राः पैलीया इति ॥

'भ्रातरि च ज्यायसि" ॥ 'कनीयान् भ्रातेति'। भ्रातृज्यायःशब्दयोः संबन्धिशब्दत्वादयमर्थो लभ्यते। 'चकारणत्वादिति'। यः साक्षात्परम्परया वा कारणं भवति स लोके वंश्य इत्युच्यते। 'गार्ग्ये जीवतीति'। ज्यायसि भ्रातरि जीवतीत्यर्थः। एवं वात्स्यायनादावपि द्रष्टव्यम् ॥

"वान्यस्मिन् सपिण्डे स्थविरतरे जीवति" ॥ 'सप्तमपुरुषावधय इति'। आत्मनः प्रभृति पित्रादिषु पुत्रादिषु वा गण्यमानेषु सप्तमपुरुषोऽवधिर्येषां ते तथोक्ताः, प्रायेण तु पूरणप्रत्ययो न पठ्यते, सप्तपुरुषावधय इत्येव पठ्यते, न तत्र समीचीनमर्थं पश्यामः, समानः पिण्डो

येषामिति सपिण्डाः, निपातनात्सभावः । 'स्मर्यन्तइति' । तद्यथा 'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तत' इति, सप्तमे ऽतीते विनिवर्त्तत-इत्यर्थः । 'उभयत्रेति' । जनने मरणे वेत्यर्थः । 'एवमादिकायां क्रिया-यामिति' । आदिशब्देन 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तत-' इत्यादिका क्रिया गृह्यते । 'जीवद्ग्रहेति' । वस्तुव्याख्यानमेतत्, सूत्रे तु जीवतीत्याख्यातपदं तच्चेदपत्यं जीवतीति, प्रथमार्थे वा शत्रन्तात्स-प्तमी व्याख्येया । 'तरन्निर्द्देश इत्यादि' । असति तस्मिन्स्थविरशब्दाद्वयः-प्रकर्षमात्रं गम्येत, तरपा तु स्थानप्रकर्षो द्योत्यते, ततस्तदुपादानसाम-र्थ्यात्, यथा गोतरोऽश्वतर इत्यादावप्रवृत्तिनिमित्तभूतस्यापि वाहदोहादेः प्रकृत्यर्थसंबन्धिनः प्रकर्षे तरब् भवति तथात्रापि, स्थानं पदं पितृत्वा-दिकम् । 'स्थानवयोन्यूने इति' । स्थानेन वयसा च न्यूने इत्यर्थः । ननु च ज्यायसीत्यनुवृत्तेरेवोभयोः प्रकर्षो लभ्यते, प्रशस्यस्य श्रः, ज्य च, वृद्ध-स्य चेत्युभयत्र ज्य इत्यविधानात्, तन्न, नहि सकृत्प्रयुक्तः शब्दोनेकार्थमभि-धातुं समर्थः, एवमपि तरन्निर्द्देशो न कर्त्तव्यः, ज्यायसीत्यनुवृत्तेरेव स्थान-प्रकर्षलाभात्, एतदपि नास्ति, स्थविरइति विशेषणान्तरोपादाने सति ज्यायसीत्यस्यानुवृत्तेरेव दुर्ज्ञानत्वात् । 'जीवतीति किमिति' । मृतं प्रकृतं चोभयमधिकृत्य प्रश्नः । अत एवोभयोः प्रयोजनं दर्शयति । 'मृते मृतो वेति' । तत्र मृतइति स्वपितरि, मृतो वेति पौत्रप्रभृतेरपत्यभूतोर्थः ॥

"वृद्धस्य च पूजायाम्" ॥ 'अपत्यमन्तर्हितमित्यादि' । एत-च्चापत्यग्रहणेन वृद्धस्य विशेषणाद् इह परिभाषितस्य च शब्दात्मकस्या-पत्यत्वासम्भवात् विज्ञायते । 'पूजायां गम्यमानायामिति' । का पुनरत्र पूजा, यद्युवत्वमेव, यद्यपि युवशब्दोनपेक्षितप्रवृत्तिनिमित्तमेव सञ्ज्ञा तथापि प्रायेणाल्पवयसो जीवद्वंश्यत्वं सम्भवतीति तदध्यारोपे सति तत्सहचरितं वयोपि प्रत्यायितं भवतीति पूजा भवति । 'सञ्ज्ञासामर्थ्या-दिति' । गोत्रस्य सतो युवसञ्ज्ञा विधीयते, गोत्रसञ्ज्ञा चेत्प्रवृत्ता एको गोत्रइति नियमः प्राप्नोति, ततश्च परमप्रकृतेरेवोत्पन्नेन प्रत्ययेनाभिहि-तत्वादप्राप्तोपि प्रत्ययोस्माद्युवनात्भवतीत्यर्थः । इह पूर्वत्र सामानाधि-

करणेन सञ्ज्ञाविधानात्प्रक्रमाभेदाय तथैव सञ्ज्ञा विधातुं युक्ता, कोयं वृद्धस्येति षष्ठीनिर्देश इत्यत्राह । 'वृद्धस्येति' । षष्ठीनिर्देशवतीति करणो हेतौ, वार्त्तिककारीयं चेदं सूत्रं वृत्तिकारेण तु सूत्रेषु प्रक्षिप्तम्, एतेनोत्तरसूत्रं व्याख्यातम् ॥

"यूनश्च कुत्सायाम्" ॥ 'निवृत्तिप्रधानो विकल्प इति' । न पुनः प्रवृत्तिप्रधान इति पूर्वमेव प्रवृत्तत्वात्, यदाह । 'यूनश्चेति' । नह्यप्रवृत्तायां तस्यामेव निर्देश उपपद्यते, ननु च निवृत्तिरप्यनिर्वृत्ता या न शक्यते कर्तुं, यो हि भुक्तवन्तं ब्रूयान्मा भुक्थ्या इति किं तेन कृतं स्यात्, तस्माद्यूनश्चेति निर्देशो युवसंज्ञाविषयो लक्षणार्थः । 'जीवद्वंश्यस्य चतुर्थादेरिति' । न तु युवसंज्ञाशिष्टस्य निर्देश इति वक्तव्यमेवं च प्रवृत्तिविकल्पोऽप्युपपद्यते, सा तु प्रवृत्तिरसत्यपि सूत्रे लभ्यतइति मत्वा निवृत्तिप्रधान इत्युक्तम् । 'युवसंज्ञायां प्रतिषिद्धायामिति' । तस्या अभावपक्षइत्यर्थः । 'गार्ग्यो जाल्म इति' । का पुनरत्र कुत्सा, गोत्रस्यारोपियामेव, जीवद्वंश्या हि गोत्रसंज्ञकास्ते प्रायेण चरमवयसो भवन्तीति तदारोपे भवति कुत्सा ॥

"जनपदशब्दात्क्षत्रियादञ्" ॥ 'जनपदशब्दो यः क्षत्रियवाचीति' । नन्वेते पञ्चालादयः शब्दाः क्षत्रियशब्दा एव, तत्सम्बन्धात्तु तस्य निवास इति तद्धिते कृते जनपदे लुबिति च लुपि जनपदे वर्तन्ते, तत्कथमवरकालया जनपदशब्दतया नित्यक्षत्रियशब्दता लक्ष्यते, कः पुनराह क्षत्रियसम्बन्धादेव ते जनपदे वर्तन्तइति, सूत्रकारस्तावल्लुब्योगाप्रख्यानादिति वदन् क्षत्रियेष्विव जनपदेऽपि स्वाभाविकी पञ्चालादिशब्दस्य प्रवृत्तिरित्याह । 'पञ्चाल इति' । यद्यपि पञ्चालादयः शब्दा जनपदे बहुवचनान्ताः क्षत्रिये त्वेकवचनान्तास्तथापि प्रातिपदिकस्य विशेषणं जनपदत्वं न सुबन्तस्येत्येकवचनान्तादपि प्रत्ययो भवत्येव । 'ऐक्ष्वाक इति' । इक्ष्वाकुशब्दस्य दाण्डिनायनादिसूत्रे टिलोपो निपातितः । 'द्रौह्य इति' । क्षत्रियवचन एवायं न जनपदशब्दः । 'ब्राह्मणस्य पञ्चालस्येति' । बाह्वादिप्रभृतिषु येषां दर्शनमित्युक्तत्वात्कथमत्र प्रसङ्ग इति चिन्त्यम् ।

'क्षत्रियसमानशब्दादिति'। समानः शब्दो यस्य समानशब्दः, क्षत्रियेण समानशब्दस्तस्माज्जनपदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेये ऽपत्यवत्प्रत्ययो भवति, अवृद्धादपीति प्राप्तस्य वुञो ऽपवादः। क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते। 'मागध इति'। द्व्यञ्मगधेत्यण् ॥

"वृद्धेत्कोसलाजादाञ्ञ्यङ्" ॥ 'आम्बष्ठ्य इति'। इकारश्लेषार्थः, आकारो वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधार्थः। 'अन्यस्मादिति'। गुणवचनाद्युधिष्ठिरपितृवचनाच्च, पुरोरण्वक्तव्यः पौरव इति, इति क्वचित्पठ्यते, तत्र पुरुशब्दस्याजनपदशब्दत्वात्प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनं, जनपदवाचित्वे द्व्यञ्मगधेत्येव सिद्धम् ॥

"कुरुनादिभ्यो ण्यः" ॥ आदिशब्दो नकारेणैव संबध्यते न कुरुशब्देन, तदादेर्जनपदस्याभावात्, तदाह। 'कुरुशब्दान्नकारादिभ्यश्चेति'। 'अणञोरपवाद इति'। कुरुशब्दाद्द्व्यञ्मगधेत्यणोऽपवादः, नादिभ्यस्त्वञः। 'नैषध्य इति'। कथं नैषधोऽर्हति वेदधर्ममिति, स्वच्छन्दवाच ऋषयः, कथं स नैषधस्यार्थपतेः सुतायामिति, निरङ्कुशाः कवयः, शेषविवक्षायां वोभयत्राण् समर्थनीयः ॥

"साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" ॥ सल्वा क्षत्रियेति पाठः, तत्स्वामिकेति वचनात्, इदं हि तत्स्वामिकायाः प्राप्त्यर्थमुक्तं, न च साल्वाशब्दात्तस्य प्राप्तिः, वृद्धत्वात्, सल्वेयप्रत्ययः। 'अणपीष्यत इति'। साल्वावयवे, अपवादो साल्वादिति निर्देशात्, न च निपातितोण् ठकोपवादः, साल्वेयगान्धारिभ्यां चेति निर्देशात्। 'तेभ्यः क्षत्रियवृत्तिभ्य इति'। जनपदशब्दात्क्षत्रियादित्यनुवृत्तेरेतल्लभ्यते, उदुम्बरास्तिलखला इति श्लोकः प्रदर्शनार्थस्तेन बुस, अजमीढ, आजक्रन्द, इत्येतेभ्योऽपि भवति, तथा च भाष्यउदाहृतं, बौसिः, आजमीढिः आजक्रन्दिरिति। 'साल्वावयवसंज्ञिता इति'। साल्वावयव इत्येवं शब्दिता इत्यर्थः ॥

"ते तद्राजाः" ॥ 'तथा चैवोदाहृतमिति'। तत्र तद्राजस्य बहुषु तेनैवास्त्रियामित्यत्र कार्याश्रयमुदाहृतम्, इह तु प्रकरणे रूपाश्रयम् ॥

'कम्बोजाल्लुक्" ॥ 'चोल शक इति'। कुरुमगधेत्यस्यापवादः केरल इत्यत्राणः ॥

"स्त्रियामवन्तिकुन्तिकुरुभ्यश्च" ॥ 'अवन्तीकुन्तीति'। लुकि कृते इतो मनुष्यजातेरिति ङीष्। 'कुरूरिति'। ऊङुतः ॥

"अतश्च" ॥ 'तकारो विस्पष्टार्थ इति'। असति हि तस्मिन्नस्येति निर्देशः स्यात्ततश्च सन्देहः स्यात्किमयं वर्णनिर्देश आहोस्विदिदम इति, इदमश्च निर्देशेनन्तरस्येञो लुक् प्रसज्येत, तकारे सत्येष दोषो न भवति, तपरनिर्देशस्य भूयसा वर्णेष्वेव प्रसिद्धत्वात्तपरस्तत्कालस्येति सञ्ज्ञाकरणाच्च, कथं माद्रीसुतौ पुष्पफले समृद्धे इति, स्व छन्द आव चयः, मद्रिसुताविव्येव वा पाठ्यम्, । 'अवन्त्यादिभ्यो लुग्वचनादिति'। यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यादनेनैव सिद्धत्वात्, तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणेन सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद्भवति ॥

"न प्राच्यभर्गादियौधेयादिभ्यः" ॥ 'पाञ्चालीत्यादि'। पञ्चालादयः शरावत्याः प्राञ्चो जनपदाः, भर्गादिग्रहणमप्राग्यर्थं, भृञो गः, भर्गः, क्रुश उः, करु,स्तमोर्वति, द्वेष्टि, मूलविभुजादित्वात्कः, करूषाः, चिनोतेः कयः आदेश्च कः, बहुलवचनादित्सञ्ज्ञाभावः, केकयः, कशेर्मिरः, कश्मीरः, साल्वशब्दो निरूढः, शोभनानि स्थलान्यस्य सुस्थलः, उरसा शेते उरशः, कुरुनादिभ्यो ण्यः कौरव्यः। 'यौधेयीत्यादि'। युधाया अपत्यं, शुभ्राया अपत्यं, द्व्यच इति ढक्, शुभ्राशब्दाच्छुभ्रादिभ्यश्चेति, ततः स्वार्थे पर्श्वादियौधेयादिभ्यामित्यञ्, यद्यञो लुक् स्याद्गुणलक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात्, लुकि तु प्रतिषिद्धे शार्ङ्गरवाद्यञ इति ङीनि सत्याद्युदात्तं भवति। 'कस्य पुनरिति'। अस्य वाक्यमार्गोऽभिप्रायः, तमेव प्रकाशयति। 'कथं पुनरिति'। परिहरति। 'एतदेवेति'। 'पर्शुरिति'। पर्शुः क्षत्रियो जनपदेन समानशब्दः तस्यापत्यं सङ्घः, स्त्रीत्वविशिष्टः, कुरुमगधेत्यण्, तस्यातश्चेति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्, तस्यापि लुक्। 'एवं रक्षा इति'। रक्षसः क्षत्रियस्यापत्यं, स्त्रीत्वे

शिष्टः सङ्घः, पूर्ववदण्, द्वयस्यापि लुक्, अत्वसन्तस्येति दीर्घः। 'आसुरीति'। अनपत्यलक्षणस्याञो लुकि पश्र्वादिलक्षणस्याणो लुक्, जातिलक्षणो ङीष्, ज्ञापकत्वमेव दृढयति। 'तथा चोक्तमिति'। वार्त्तिककारेणैतदुक्तं, यौधेयादिषु त्रयो निरुक्ताः, ज्यायासहितो बाणो यस्याः स ज्याबाणा, तस्या अपत्यं ज्याबाणेयः, ज्याबानेय इत्यन्ये पठन्ति। तत्र ज्याबानो यस्या ज्याबाना, घृ क्षरणे, धृ धारणे आभ्यां क्तिजन्ताभ्यामितश्चानिञ इति ढक्, घार्त्तेयः धार्त्तेयः, त्रयो गर्त्ता येषां ते त्रिगर्त्ताः, भृञोतच्, भरतः, वशेः कर्मणि किः, उशिः, उशयः, उष्टा नरा यस्य स उशीनरः, अन्येषामपि दृश्यतइति दीर्घः॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थाध्यायस्य प्रथमः पादः॥



# काशिकाव्याख्या पदमञ्जरी ।

"तेन रक्तं रागात्" ॥ रञ्जिरयमस्त्येवाभिष्वङ्गे,भोजने रक्त इति, अस्ति वर्णविशेषे, रक्ता गौ,र्लोहितेत्यर्थः । अस्ति शुक्लस्य वर्णान्तरापादने, रक्तः पट इति, तत्राद्ययोरर्थयोर्ग्रहणे, रूपेण कान्तायां रक्तः, कोपेन रक्तं मुखमित्यत्रापि प्राप्नोतीति मन्यमानस्तृतीयमर्थमाश्रित्याह । 'शुक्लस्येत्यादि' । एतच्चाभिधानस्वाभाव्याल्लभ्यते । 'रज्यतेऽनेन राग इति' । घञि च भावकरणयोरिति नलोपः, भावसाधनस्तु रागशब्दो न भवति, नहि रञ्जनक्रियैव रञ्जनक्रियायाः करणं भवति । 'रागविशेषवाचिन इति' । स्वरूपग्रहणं तु न भवति उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात् । 'रागादिति किमिति' । अनभिधानादेव कर्तृवाचिनो न भविष्यति, देवदत्तं वैस्त्रमिति ह्युक्ते स्वस्वामिभावस्यैव संप्रत्ययादिति प्रश्नः, तत्रैकशरणो नैतत्प्रतिपत्तुमर्हतीत्युक्तम् । 'कथमिति' । नह्यत्र वर्णान्तरमाहितमिति प्रश्नः । 'उपमानादिति' । रूपसादृश्यनिमित्तात् ॥

"लाक्षारोचनाट्ठक्" ॥ शकलकर्दमयोर्वार्त्तिके दर्शनात्सूत्रे प्रक्षेपः । 'नील्या इति' । ओषधिविशेषो नीली, अणूबाधनार्थवचनं, नीलशब्दस्तु गुणशब्दत्वादेव नीलीरक्ते वस्त्रे सिध्यति । 'पीतादिति' । रागविशेषवाची पीतशब्दः, इदमपि वचनमणूबाधनार्थमेव, स्वार्थिककन्प्रत्ययान्तस्तु पीतकशब्दो गुणवचनो वस्त्रे लभ्यते ॥

"नक्षत्रेण युक्तः कालः" ॥ इह पारमर्षाः कालं क्रियात्मानमिच्छन्ति, यथोक्तम् ॥

आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥

इति । वैशेषिकास्तु द्रव्यमाकाशकल्पम्, उक्तं च ।

व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥

इति । द्वयोरपि दर्शनयोर्नक्षत्रेण कालस्य योगो न सम्भवति किं कारणम्, अप्राप्तिपूर्विका प्राप्तिर्योगः, कालविशेषावधारणार्थो हि लोके पौषादिशब्दप्रयोगः, एवंविध एव च योगः कालविशेषावधारणहेतुर्भवति, द्रव्यपक्षे तावद्द्वयोरपि नक्षत्रकालयोर्नित्यत्वात्कालस्य च सर्वगतत्वाच्च कदा चिदयोगः, क्रियापक्षेऽपि नक्षत्रगतायाः क्रियायाः कालाख्यायाः समवायलक्षणो योगो ऽव्यभिचारादविशेषणं, सूर्यादिगतायास्त्वसम्भवादविशेषणं, यदि तु यथाकथं चित्संयोगस्तदा व्यभिचाराभावः, नहि सोऽस्त्यहोरात्रो यः पुष्येण न युक्तः, तस्मान्नक्षत्रेण युक्तः काल इत्यनुपपन्नो निर्देशः, कथं तर्हि निर्देशः कर्त्तव्यः, नक्षत्रादैर्युक्तात्ताद्युक्ते काले प्रत्ययविधानं युक्तलोपश्च, पुष्येण युक्तश्चन्द्रमाः पुष्ययुक्तः, पुष्ययुक्तेन युक्तः काल इति पुष्ययुक्तशब्दाच्चन्द्रमसि वर्त्तमानात्प्रत्ययः, युक्तशब्दस्य च लोपः, पौषी रात्रिः, पौषमहः, एवं सर्वत्र, तत्र युक्तवद्भावे दोषः, मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य लुपि मघा इति स्त्रीत्वबहुत्वे न सिद्ध्यतः, युक्तस्येव तु चन्द्रमसो लिङ्गवचनप्रसङ्गः, अतो नक्षत्रवाचिन एव प्रत्यययोर्योगः सम्भवतीति मत्वा पृच्छति । 'कथं पुनरिति' । न चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता ज्योतिर्मात्रवचनत्वान्नक्षत्रशब्दस्य, ये तु पुष्यादीनामावस्यिकी नक्षत्रता चन्द्रमसा योगे भवतीत्याहुस्तेषामयं प्रश्नो ऽनुपपन्नः । 'पुष्यादिसमीपस्थ इति' । मुख्यार्थासम्भवे गौणस्याश्रयणमिति भावः, तत्र मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्त्तन्ते, यथा मञ्चादयः मञ्चान् स्त्रियः पश्येति, तेन युक्तवद्भावविषयेऽपि दोषाभावः । 'पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थ इति' । यद्यपि चन्द्रमसा कालस्य योगो नित्यः, चन्द्रमसो नित्यत्वात् पुष्यसमीपेन तु कादाचित्कः; पुष्यसमीपतायाः कादाचित्कत्वात् । 'पौषीति' । सूर्यतिष्येत्यादिना यलोपः ॥

"लुबविशेषे" ॥ यद्यविशेषे लुब् भवति, इहापि प्राप्नोति पौषी रात्रिः पौषमहरिति, अत्राप्यद्य श्वो वेति विशेषो न गम्यते । 'अथ रात्रिरहरिति' । विशेषावसायात्तदाश्रयः प्रतिषेधो भवति, इहापि तर्हि न स्यादद्य पुष्यो श्वः कृत्तिका इति, अद्यश्वादिविशेषावसायात्, पुष्ये पायसमश्नीयादित्यादावेव तु स्याद् यत्र न मनागपि विशेषावसायो ऽत आह । 'न चेदित्यादि' । रात्र्यादिरित्यादिशब्देन मुहूर्तादेः परिग्रहः । 'विशेषोऽभिधीयतइति' । प्रत्ययान्तेन, एतदेव स्पष्टयति । 'यावानिति' । क्रियांश्च कालो नक्षत्रेण युज्यतइत्याह । 'अहोरात्रइति' । षष्टिनाडिकात्मक इत्यर्थः, तावन्तं हि कालमेकस्य नक्षत्रस्य समीपे चन्द्रमा वर्तते तदेतदेवं यावान्कालो नक्षत्रेण युज्यते तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशस्याभिधानं विशेषः, एतच्च प्रत्ययान्तेनुप्रवेशादन्तरङ्गत्वाच्च लभ्यते, प्रसज्यप्रतिषेधश्चायं, तेन पौषोऽहोरात्र इत्यत्र समुदायेनापि प्रतीयमानो ऽवयवद्वयात्मकः प्रतीयतइति तदाश्रयः प्रतिषेधो भवति, इह पुष्येण युक्ता पौर्णमासी पौषी मघाभिर्युक्ता माघीत्यादौ लुप् प्राप्नोति, ज्ञापकात्सिद्धं, यदयं विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति निर्दिशति तज्ज्ञापयति पौर्णमास्यां लुब् भवतीति, श्रवणाशब्दात्तु भवति श्रवणाकार्त्तिकीति निर्देशादेव, कथं तर्हि श्रावण्यां पौर्णमास्यामिति, अबाधकान्यपि निपातनानि भवन्ति ॥

"सञ्ज्ञायां श्रवणाश्वत्थाभ्याम्" ॥ 'विशेषार्थोपमारम्भ इति' । न तु सञ्ज्ञायां नियमार्थः, विधिसम्भवे नियमायोगात्, श्रवणाकार्त्तिकीत्यसञ्ज्ञायामपि लुपो दर्शनाच्च । 'लुपि युक्तवद्भावः कस्मान्न भवतीति' । 'श्रवणारात्रिरित्यत्र निपातनादिति' । ङीप्प्रत्ययलक्षणेन न भवति, अण् यो ऽकार इति विज्ञानात् ॥

"द्वन्द्वाच्छः" ॥ नक्षत्रग्रहणमनुवृत्तं षष्ठ्यन्ततया विपरिणम्यते, तच्च द्वन्द्वस्य विशेषणमित्याह । 'नक्षत्रद्वन्द्वादिति' । 'राधानुराधीया रात्रिरिति' । एकदेशद्वारेण रात्र्यादेर्नक्षत्रद्वययोगः, । 'अत्र

राधानुराधीयमिति'। आद्रेत्यस्यालिङ्गत्वेऽपि तद्विशेषणस्य नपुंसकत्वं, लोकाश्रयत्वाल्लिङ्गस्य, लुपं परत्वाद्बाधते। 'छ इति'। ननु युगपत्प्राप्तयोर्विप्रतिषेधः, न च लुप्छयोर्युगपत्प्रसङ्गः, प्रत्ययादर्शनस्य हि लुप्सञ्ज्ञा तस्य कथं प्रत्ययेन सह प्रसङ्गः, तस्मादयमत्रार्थः, मध्ये ऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति, एवमयं लुबण एव भवति, नास्य छस्य, तेनायं छो लुपो विषये श्रूयते, एतदेव लुपं परत्वाद्बाधते छ इति बाधकत्वम्। 'परत्वादिति'। यतोऽयं परस्तेन लुबस्य न भवति, तेन तद्विषयेऽप्यसौ श्रूयतइति॥

"दृष्टं साम"॥ यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तेन दृष्टमित्युच्यते॥

"कलेर्ढक्"॥ 'सर्वत्रेति'। न केवलमग्नेः सास्य देवतेत्यस्मिन्नेवार्थे ढक्, नापि केवलं दृष्टं सामेत्यत्रैवार्थे कलेर्ढग् अपि तु सर्वेष्वेव प्राग्दीव्यतीयेष्वित्यर्थः, संग्रहश्लोके जाते च द्विरण् डिद्वा विधीयतइति पाठः। जातेऽर्थे योऽण् विधीयते स वा डिद्भवतीत्यर्थः। 'न विद्याया इति'। विद्यावाचिन ईकग् न भवतीत्यर्थः। 'गोत्राद्वुञ्वदिति'। अङ्के यो दृष्टः प्रत्ययः स सर्वोऽतिदिश्यते न त्वङ्क एवाहत्य विहितस्तेन सङ्घाङ्कलक्षणेष्वित्यस्याणो गोत्रचरणाद्वुञित्यस्य च वुञोऽतिदेशः॥

"वामदेवाड्ड्यड्ड्यौ"॥ 'डित्करणं किमर्थमिति'। यस्येति लोपेनैव सिद्धिं मत्वा प्रश्नः। 'अनयोर्ग्रहणं मा भूदिति'। अथ क्रियमाणेऽपि डित्करणे कस्मादेवानयोर्ग्रहणं न भवति तत्राह। 'अननुबन्धकेति'। अननुबन्धकस्य ग्रहणे न सानुबन्धकस्येति यद्ग्रहणे ड्यतोर्ग्रहणं न भवति, एकानुबन्धकपरिभाषया तु यद्ग्रहणे ड्यतो ग्रहणाभावः। 'अवामदेव्यमिति'। अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति, संग्रहश्लोके ऽतदर्थेइत्यनेन यंयतोश्चातदर्थेइत्येतत्सूचं लक्ष्यते। 'नञ्स्वर इति'। नञाश्रयः स्वरो नञ्स्वरः, उत्तरपदान्तोदात्तत्वं तस्मिन्विधीयमानइत्यर्थः॥

"परिवृतो रथः" ॥ 'चार्मण इति'। अचिति प्रकृतिभावः। 'परिवृतो रथ इति'। तदेकान्तग्रहणं, येन परिवृतो रथस्तदेकान्तश्चेद्भवतीति वक्तव्यं, तेन चर्मवस्त्रादावेव भवति, इतरथा छात्रादावपि प्रसङ्ग इत्याह। 'समन्ताद्वेष्टित इत्यादि'। वृणोतिर्वेष्टने परिः सर्वतो भावे। 'यस्य न कश्चिदवयव इति'। बाहुल्याभिप्रायमेतत्, नहि चक्रनेमिप्रभृतयश्चर्मणा पिधीयन्ते नाप्यन्तरावयवाः। ननु तत्कारी चायं यदाह। "छात्रैः परिवृत इति'। तद् दूर्षी च, यदाह। 'समन्ताद् वेष्टित इत्यादि'। नायं तत्कारी, औपचारिकोऽयं प्रयोगः, परिवृत इव परिवृतः॥

"पाण्डुकम्बलादिनिः" ॥ 'मत्वर्थीयेनैव सिद्धमिति'। यो हि येन परिवृतः स तस्यास्ति। 'अणो निवृत्त्यर्थमिति'। यद्येतन्नारभ्येत परिवृतो रथ इति विवक्षायां पूर्वेणाण् प्रसज्येत॥

"द्वैपवैयाघ्रादञ्" ॥ 'द्वीपिव्याघ्रयोरिति'। विरूपाणामपि समानार्थानामेकशेषः प्राप्नोति, तत्रावान्तरजातिभेदेन भिन्नार्थत्वाच्च भविष्यतीति समाधातव्यं, चर्मणैव रथस्य परिवरणं सम्भवति न विकारमात्रेणेति चर्मणी इत्युक्तं, द्वीपिव्याघ्रशब्दाभ्यां प्राणिरजतादिभ्योऽञित्यञ् प्रत्ययः, द्वीपिनष्टिलोपः॥

"कौमारापूर्ववचने" ॥ 'अपूर्ववचनइति'। अपूर्वशब्दो भावप्रधानः, अपूर्वत्वस्य वचनमपूर्ववचनं तस्मिन्नपूर्ववचने, कस्य पुनरपूर्वत्वोक्तावित्याह। 'पाणिग्रहणस्येति'। एतच्च निपातनसामर्थ्याल्लभ्यते, उभयतः, आख्यावित्यात्तसिः, स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते, उभयोश्च पक्षयोरपूर्वत्वं स्त्रिया एव न पुंस इत्यर्थः। तत्र कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादवसीयते उभयोरपि निपातनमिति, स्त्रिया एवापूर्वत्वमित्येतत्तु निपातनबलाल्लभ्यते। 'अपूर्वपतिमिति'। यस्याः पाणिर्न केन चिद्गृहीतपूर्वः सा ऽपूर्वपतिः, न विद्यते पूर्वः पतिरस्ति कृत्वा तामुपपन्नः प्राप्तः, भार्यात्वेन स्वीकृतवानित्यर्थः, स तु पूर्वकृतोद्वाहो भवतु मा वा भूत्। 'अपूर्वपति-

वती सा जनित्री भूतभाविनीति च, स्मृतिश्च भवति—प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महावाहो! ययेदं धार्यते जगत् ॥

द्वारभूतप्रकृतेः परिणामित्वे श्रुतिमाह अस्मादिति, अनेन माया–शब्दार्थोऽपि स्पष्टः । जनत्री–समष्टिजनित्री, भूतभाविनी-व्यष्टिहेतुरित्यर्थः उक्तार्थविषयां स्मृतिं दर्शयति स्मृतिश्चेति, प्रकृतिं पुरुषमित्यादिना प्रकृतिपुरुषयोरनादित्वं भूमिराप इत्यादिना द्वारभूतायाः प्रकृतेः परिणामित्व च सिद्धम् । एवं जीवरूपेणाचिद्रूपेण च ब्रह्मणः परिणामे दूषणमुक्तं प्रकृतिरेव परिणामिनी चेत्कथं ब्रह्मण उपादानत्वमित्यत्राह प्रकृतेरपीति, गौरनाद्यन्तवतीत्यादिषु प्रकृतिवाचिशब्दस्तच्छरीरकब्रह्मवाचीत्यर्थः, यतः प्रधानपुरुषावित्यादिषु पुरुष–शब्दोऽपि तथैवेत्याह पुरुषेति, ब्रह्मणः कार्यत्वसिद्ध्यर्थमाह अतस्तद्विकाराणामपीति, उक्तार्थे स्मृतिमाह तदाहेति, निर्दोषत्वनिर्विकारत्वोपादानत्वश्रुत्यविरोधमाह अत इति, सत्यसङ्कल्पत्वपदेनापहतपाप्मेत्यादिवाक्यं स्मारितम्

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥ इत्यादिका, एवं च प्रकृतेरपीश्वरशरीरत्वात्प्रकृति–शब्दोऽपि तदात्मभूतस्येश्वरस्य तत्प्रकारसंस्थितस्य वाचकः, पुरुषशब्दोऽपि तदात्मभूतस्येश्वरस्य पुरुषप्रकारसंस्थितस्य वाचकः, अतस्तद्विकाराणामपि तथैवेश्वर आत्मा, तदाह व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च ।

स एव क्षोभको ब्रह्मन्! । क्षोभ्यश्च परमेश्वरः ॥ इति, अतः प्रकृतिप्रकारसंस्थिते परमात्मनि प्रकारभूतप्रकृत्यंशे विकारः प्रकार्यंशे चाविकारः, एवमेव जीवप्रकारसंस्थिते परमात्मनि च प्रकारभूतजीवांशे सर्वे चापुरुषार्थाः ।

उपादानत्वश्रुतिर्विशिष्टविषया निर्विकारत्वादिश्रुतिर्विशेष्यांशमात्रविषयेत्यर्थः । विशिष्ट एवायमीश्वरः कारणं, विशिष्टः स एव कार्यमिति कार्यकारणयोरनन्यत्वसिद्धिरित्याह तथा च सतीति, कार्यकारणयोरनन्यत्वं कारणात् कार्यस्य द्रव्यान्तरत्वं वारयति न तु कारणस्य विशिष्टत्वविरोधि अविशिष्टत्वे कारणत्वायोगादित्यर्थः । सर्वेति, उपपादितप्रकारेण निर्दोषत्वोपादनत्वादिपरश्रुत्यविरोध इत्यर्थः । चिदचिद्विशिष्टस्य ब्रह्मणोनित्यत्वात्सृष्टिप्रलयायोगः, ब्रह्मणः कारणत्वं कार्यत्वं चायुक्तमित्यत्राह तदेवमिति, तदापत्तिः—सूक्ष्मदशापत्तिः—द्रव्यनित्यत्वेऽप्यवस्थाभेदेन सर्गाद्युपपत्तिरित्यर्थः । वस्तुस्वरूपनित्यत्वेऽप्यवस्थाभेदेन कारणत्वाद्युपपत्तौ प्रमाणमाह यथोक्तमिति, अत्रयोरित्यनेन कारणत्वावस्थायां सत्त्वं सूचितं, कार्यभूतयोरित्यनेन कार्यावस्थां प्रति कारणत्वमित्युक्तं, तर्हि कार्यत्वकारणत्वे प्रकृतिपुरुषयोरेवेति परमात्मनः कारणत्वादिनिर्देशोऽमुख्यः स्यादित्यत्राह तस्मादिति,

प्रकार्यंशो नियन्ता निरवद्यः सर्वकल्या*णगुणाकरः सत्यसङ्कल्प एव, तथा च सति कारणावस्थ ईश्वर एवेति तदुपादानकजगत्कार्यावस्थोऽपि स एवेति कार्यकारणयोरनन्यत्वं, सर्वश्रुत्यविरोधश्च भवति । तदेवं नामरूपविभागानर्हसूक्ष्मदशापन्नप्रकृतिपुरुषश-

* कल्याणगुणगण इति पा० ।

रीरं ब्रह्म कारणावस्थं जगतस्तदापत्तिरेव च प्रलयः, नामरूपविभागविभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यावस्थम्—

चिदचिद्द्रव्ययोःपरमात्माख्यद्रव्येण सहोपलम्भनियमाभावाज्जातिगुणवत्प्रकारतैकस्वभावत्वप्रयुक्तमित्यत्राह जीवात्मेति, सहोपलम्भनियमोऽपृथक्सिद्धप्रकारत्वे प्रयोजकः अतस्तदभावाद्देवादिशब्दानामपि जीवपर्यन्तत्वमुख्यमिति शङ्कायामाह यथेति, सहोपलम्भनियम एकसामग्रीवेद्यत्वप्रयुक्तः, न तु नियतप्रकारत्वप्रयुक्तः, गन्धादिषु व्यभिचारात् तस्मात्तदेकाश्रयत्व तदेकप्रयोजनत्वं च नियतप्रकारत्वेप्रयोजकम्। किञ्च मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगोयत्रास्ति तत्र सर्वत्रानुगतं प्रयोजकं कल्प्यम् अन्यथा जातित्वं गुणत्वं वा प्रयोजकं स्यात्, तस्माद्देवादिशरीरस्य चेतनप्रकारतैकस्वभावत्वात् तद्वाचिशब्दानां तत्पर्यन्तत्वं मुख्यमित्यर्थः। एवं दृष्टान्तोक्तमर्थं दार्ष्टान्तिकेऽतिदिशति वक्ष्यमाणशरीरलक्षणसङ्गत्यर्थं। तस्मादिति,

ब्रह्मणस्तथाविधस्थूलभाव एव जगतः सृष्टिरित्युच्यते, यथोक्तं भगवता पराशरेण—प्रधानपुंसोरजयोः कारणं कार्यभूतयोरिति, तस्मादीश्वरप्रकारभूतसर्वावस्थप्रकृतिपुरुषवाचिनः शब्दास्तत्प्रकारविशिष्टतयाऽवस्थिते परमात्मनि मुख्यतया वर्तन्ते जीवात्मवाचिदेवमनुष्यादिशब्दवत्, यथा देवमनुष्यादिशब्दा देवमनुष्यादिप्रकृतिपरिणामविशेषाणां जीवात्मप्रकारतयैव पदार्थत्वात् प्रकारिणि जीवात्मनि मुख्यतया वर्तन्ते,

चिदचिद्वस्तुनोः शरीरत्वं परमात्मनः शरीरित्वं चानुपपन्नं शरीर-

शरीरिलक्षणाभावात् चेष्टाभोगेन्द्रियाश्रयो हि शरीरमित्यत्राह अयमेवेति, पृथक् सिद्ध्यनर्ह-शब्दः प्रतिपदमन्वेति तेन पदेन गृहचेत्रघटपटादिव्यावृत्तिः, अत्र शरीरात्मभावलक्षणयोः सहोक्त्या शरीरमात्मा च प्रतिसम्बन्धिनि-रूप्यपदार्थं इति दर्शितं भवति, तत्र किं शरीरत्वं किमात्मत्वमिति शङ्कायां विभज्य दर्शयति सर्वात्मनेति, सर्वात्मना-यावद्द्रव्यभावित-येत्यर्थः । आत्मशब्दावयवार्थस्य च शरीरशरीरिलक्षणोपयिकत्वमभि-प्रेत्याह आप्नोतीति, द्रव्यत्वे सत्याधेयतयेत्यध्याहारेण योजयितव्यम् आधेयत्वं नियाम्यत्वं शेषत्वविशेषणं सर्वात्मनेति पदम् अपृथक्सिद्धमिति पदं प्रकारविशेषणं सर्वात्मनाऽऽधेयत्वादिभिरपृथक्सिद्धप्रकारत्वादित्यर्थः । आकारः शरीरमिति चोच्यत इति, जातिगुणयोरप्याकारत्वम् अपृथक्सिद्ध-प्रकारत्वात् शरीरमप्यपृथक्सिद्धप्रकारत्वादाकारशब्द-वाच्यं द्रव्यत्वात् शरीरशब्दवाच्यमित्यर्थः । अयमर्थः द्विपात्त्वं शरीरत्वं चतुष्पात्त्वं शरी-रत्वमिति शरीरलक्षणं किमिति न स्यात्

**तस्मात् सर्वस्य चिदचिद्वस्तुनः परमात्मशरीरतया तत्प्रकारत्वात् परमात्मनि मुख्यतया वर्तन्ते सर्वे तद्वा-चकाः शब्दाः । अयमेव चात्मशरीरभावः पृथक्सिद्ध्य-नर्हाधाराधेयभावो नियन्तृनियाम्यभावः शेषशेषिभा-वश्च सर्वात्मनाऽऽधारतया नियन्तृतया शेषितया च आप्नोतीत्यात्मा सर्वात्मनाऽऽधेयतया नियाम्यतया शेषतया च अपृथक्-**

द्विपात्त्वचतुष्पात्त्वादिविभागाभावेन सर्वत्र शरीरशब्दप्रयोगाविशेषादिति चे? नहि लोके वेदे च यत्र यत्र शरीरशब्दप्रयोगस्तत्र तत्र सर्वत्रानुगते लक्षणे वाच्ये कतिपयप्रयोगविशेषाननुगतत्वादव्याप्तलक्षणमुक्त्वा प्रयोग-विशेषे च मुख्यत्वाश्रयणमयुक्तं तस्मा[त्] इन्द्रिया*द्याश्रयत्वमव्याप्तमिति

* चेष्टेन्द्रियार्थाश्रय शरीरमिति पा० ।

सर्वप्रयोगानुगतं लक्षणमिदमेव साधीयः । यत्तु भाष्योक्तशरीरलक्षणान्ये अर्थजातमुक्तं तत्रापेक्षितांश इहानुसन्धेयः । व्याप्यत्वे सति सर्वात्मना स्वार्थे धारयितुं शक्यं शरीरमिति शरीरलक्षणं व्याप्तत्वे त्वे सति याव-द्द्रव्यभावितया स्वार्थे धारयितुं शक्त आत्मेति शरीरिलक्षणं स्वार्थे-शक्यपदाभ्यामुत्पतनादिव्यापाराणां कर्णाद्देहनियमनस्य च भावादप्र-भवाव्याप्तिशङ्कापरिहारः घटपटादिव्यावृत्त्यर्थं व्याप्यत्वे सतीत्युक्तं, परकायप्रविष्टं प्रति परकायस्य देहत्वव्यावृत्त्यर्थं सर्वात्मनेति पदम् आत्मनोधर्म्मभूतज्ञानं रत्नदीपादेः प्रभा च शरीरं स्यादिति तद्व्यावृत्त्यर्थं च व्याप्यत्वे सतीत्युक्तम्, अत एव शरीरलक्षणेऽपि व्याप्यत्वं स्पष्टतरम् ।

सिद्धं प्रकारभूतमित्याकारः शरीरमिति चोच्यते, एव-मेव हि जीवात्मनः स्वशरीरसंबन्धः, एवमेव परमात्मनः सर्वशरीरत्वेन सर्वशब्दवाच्यत्वं, तदाऽऽह श्रुतिगणः— सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकं भवन्तीति,

एवमन्यदप्यनुसन्धेयं शेषशेषिभावस्य शरीरशरीरिलक्षणत्वे तु स्वार्थे शक्यमिति पदानपेक्षैव । उक्तलक्षणस्य व्याप्तिं दर्शयति एवमेव हीति, उक्त शरीरात्मलक्षणं जगद्ब्रह्मणोरस्तीति तद्वाचिशब्दानां ब्रह्मपर्यन्तत्वं मुख्य-मित्याह एवमिति, एवं न्यायेन सर्वशब्दवाच्यत्वमुपपन्नमित्युक्तम् । तत्र प्रमाणमाह तदाहेति, सर्वे वेदा इति, पदं पद्यत इति व्युत्पत्त्या प्राप्यमित्यर्थः । यत्रैकं भवन्तीति एतद्व्याचष्टे तस्येति, अर्थैकत्वादेकं वाक्यमिति न्यायेन ब्रह्मण एकस्यैव प्रधानतया वाच्यत्वात्सर्वे वेदा एकवाक्यं भवन्तीत्यर्थः । सर्वशब्दवाच्यत्वे हेतुप्रतिपादिकां श्रुतिमाह एको देव इति, सर्वशरीरतया सर्वप्रकारत्वाद्धि सर्वशब्दवाच्यत्वं सदेव-सेत्यादिवाक्यस्थं देव-शब्दं व्याचष्टे देवा इति, उदाहृतवाक्यद्वयस्या-र्थमाह देवेति, स्मृतिवचनं दर्शयति तथा चेति, वचसां प्रतिष्ठेत्युक्ते शब्दगुणाश्रयाकाशशङ्का स्यादिति तद्व्यावृत्त्यर्थं व्याचष्टे वाच्ये हीति, प्र-तिष्ठा—पर्यवसानम् । उक्तार्थेविशदार्थमाह कार्याणामिति, वचसां वाच्यत्वे

हेतुः कार्याणां कारणत्वं सर्वं खल्विदं ब्रह्म तज्जलानिति हि श्रुतिः, वेदैश्चेत्यादि स्पष्टम् । मनुवचनमाह तथा चेति,

तस्यैकस्य वाच्यत्वादेकार्थवाचिनो भवन्तीत्यर्थः । एको देवो बहुधा संनिविष्टः सहैव सन्तं न विजानन्ति देवा इत्यादि, देवाः—इन्द्रियाणि, देवमनुष्यादीनामन्तर्यामितयाऽऽत्मत्वेन निविश्य सहैव सन्तं तेषामिन्द्रियाणि मनःपर्यन्तानि न विजानन्तीत्यर्थः । तथा च पौराणिकानि वचांसि—नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती । वाच्ये हि वचसः प्रतिष्ठा, कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्, वेदैश्च सर्वैरहमेव वेद्य इत्यादीनि सर्वाणि हि वचांसि सशरीरात्मविशिष्टमन्तर्यामिणमेवाचक्षते, हन्ताहं तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति हि श्रुतिः, तथा च मानवं वचः—प्रशासितारं

प्रशासितारमित्यादि वाक्येन सर्वशब्दवाच्यत्वे हेतुरुच्यते इमं श्लोकं व्याचष्टे अन्तरिति,अन्तः प्रविष्टः शास्ता जनानामिति हि श्रुत्यनुसारेणान्तः प्रविश्येत्युक्तम्, अन्तःप्रविश्य शा*स्तारमित्यन्वयः कुतः अन्तर्यामित्वं योऽन्तरो यमयतीत्यन्तर्यामिब्राह्मणप्रतिपादितत्वादित्यर्थः अन्तः प्रविश्य प्रशासितृत्वे हेतुरणीयांसमणीयसामिति । षष्ठ्यन्तं व्याख्येयपदं व्याख्यानसौकर्यार्थं प्रथमान्तत्वेनोपादत्ते अणीयांस इति, रुक्माभमिति व्याख्येयपदं तद्व्याचष्टे आदित्यवर्णम् इति, यदा पश्यः पश्यते रुक्मवर्णम् आदित्यवर्णं तमसः परस्तात् इति वाक्ययोर्दुराधर्षत्वभोग्यत्वाभिप्रायेणादित्यवर्णत्वं रुक्मवर्णत्वं चोक्तमित्यभिप्रायेणादित्य-

* नियन्तारमित्यन्वय इति पा० ।

वर्ण इति व्याचष्टे तथा य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते इति तत्र हिरण्मयशब्द औज्ज्वल्यपरत्वेन व्याख्यातो वाक्यकारेण हिरण्मय इति रूपसामान्याच्चन्द्रमण्डलमुखवदिति नीलतोयदमध्यस्था इत्यादिश्रुत्यनुसारेण हिरण्मयशब्द एवं व्याख्यातः ।

**सर्वेषामणीयांसमणीयसाम् । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥ अन्तः प्रविश्य—अन्तर्यामितया सर्वेषां प्रशासितारं—नियन्तारम् अणीयांस आत्मानः कृत्स्नस्याचेतनस्य**

नीलतोयदसाम्यमुपासनविशेषोपास्यस्य भगवत उपासनान्तरोपास्यस्य स्वरूपं हिरण्यवर्णमिति हिरण्मयशब्दो नौज्ज्वल्यपर इति चेन्न हृदयगुहायामेव नीलतोयदसाम्यहिरण्ययत्वश्रवणात् पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखमिति प्रकृत्य नीलतोयदमध्यस्थेति श्रूयते स य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मय इति हृदयगुहायामेव हिरण्मयत्वं च श्रूयते तस्मान्नीलतोयदसादृश्यश्रुत्याऽनुगुण्याद्धिरण्मयशब्द औज्ज्वल्यपरत्वेन व्याख्यातो वाक्यकारेण । एवं वर्णयन्ति केचिदाचार्याः—आदित्यवर्णं रुक्मवर्णमिति वर्णशब्दस्वारस्याच्च केवलं हिरण्मयशब्द औज्ज्वल्यमात्रपर, अपि तु वर्णपर एव तर्हि नीलतोयदसाम्यश्रुत्यविरोधः कथमिति चेत् उच्यते नीलतोयदवर्णस्यैव हेतुविशेषेण स्वर्णवर्णत्वमुपपद्यते, तथा सति भगवद्विग्रहो बालातपानुलिप्तमरकतगिरिनिभो विभाति तथा च श्रीरामायणे कश्चिच्च तद्धेमसमानवर्णं तस्याननं पद्मसमानगन्धीति, नीलतोयदवर्णस्यैव भगवतो हिरण्यवर्णत्वे हेतुः संप्रदायैकाधिगम्य इति नात्र *लिख्यते । स्वप्नधीगम्यमित्येतद्व्याचष्टे स्वप्नेति, एवं प्रशासितारमित्यादिश्लोकेन सर्व-शब्दवाच्यत्वे हेतुरुक्तः। अथ सर्वशब्दवाच्यत्वपरं श्लोकमाह एनमिति, एकशब्देन वादिप्रतिपत्तिशङ्का माभूदिति तं व्याचष्टे एक इति, वेदा—वेदभागा इत्यर्थः । उक्तरीत्या—पूर्व-

* रहस्यार्थानां परमभागवतेष्वेवाभिव्यक्तरणीयतया सर्वजनसाधारण्येन तादृशार्थोपदेशः सर्वथोपदेष्टुरनर्हायैव यथाऽऽह भगवान् स्वयं गीतासु—इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयतीति ।

श्लोकोक्तरीत्या सर्वप्रशासितृत्वेन सर्वान्तरात्मतया प्रविश्यावस्थितत्वादिति सर्वान्तरात्मत्वं नाम सर्वस्यानुप्रविश्य प्रशासितृत्वमित्यर्थः ।

**व्यापकतया सूक्ष्मभूतास्तेतेषामपि व्यापकत्वात्तेभ्योऽपि सूक्ष्मतर इत्यर्थः । रुक्माभः—आदित्यवर्णः, स्वप्नधीगम्यः—स्वप्नकल्पबुद्धिप्राप्यः, विशदतमप्रत्यक्षतापन्नानुध्यानैकलभ्य इत्यर्थः । एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् ।**

अपरे ब्रह्म शाश्वतमिति दृष्टान्ततयोक्तमित्यभिप्रायेणाह शाश्वतब्रह्मशब्दवदिति यथाऽद्वारकब्रह्मशब्दादयस्तस्यैव निरतिशयबृहत्त्वादिगुणविशिष्टस्य वाचकास्तथा सद्वारकशब्दा अप्यग्न्यादिमुखेन ब्रह्मण एव वाचका इत्यर्थः । इतवचनमाह तथा चेति, तद्व्याचष्टे पितृदेवेति, पितृदेवादिशब्दवाच्यकर्म्मकं यजनं विष्णुकर्म्मकमित्युक्ते पितृदेवादिशब्दानां विष्णुवाचित्वमर्थसिद्धं, तत्र कोहेतुरिति चेत् सर्वभूतान्तरात्मानमित्युच्यते पितृदेवादिशरीरकत्वेन तदन्तरात्मत्वात्तत्तच्छब्दाः परमात्मपर्यन्ता इत्यर्थः एवं सिद्धवस्तुपराणां भेदाभेदघटश्रुतीनामर्थ उपपादितः । तथाऽप्युपायपरवाक्यनिवर्त्यपरवाक्यपर्यालोचनया ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं प्रतीयते ब्रह्मविदाप्नोति परं ब्रह्म वेद ब्रह्मैव भवति इत्यादिषु ज्ञानस्योपायत्वमुच्यते ज्ञाननिवर्त्यं च मिथ्या रज्जुसर्पादिवन्निवर्त्यं चाज्ञानकृतं, विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ॥ भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेदित्यादिभिः ।

**इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतमिति ॥ एके—वेदा इत्यर्थः । उक्तरीत्या परस्यैव ब्रह्मणः सर्वस्य प्रशासितृत्वेन सर्वान्तरात्मतया प्रविश्यावस्थितत्वात् अग्न्यादयश्शब्दा अपिं शाश्वत—ब्रह्मशब्दवत् तस्यैव वाचका भवन्तीत्यर्थः । तथा च स्मृत्यन्तरं—ये**

यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥ इति, पितृदेवब्राह्मणहुताशनादिशब्दास्तन्मुखेन तदन्तरात्मभूतस्य विष्णोरेव वाचका इत्युक्तं भवति ।

एवं निवर्तकनिवर्त्त्यपरवाक्यैर्ब्रह्मव्यतिरिक्तस्य मिथ्यात्वात्तदनुगुणं श्रुत्यन्तराणामप्यर्थो वर्णनीय इत्यत्राह अत्रेदं सर्वशास्त्रहृदयमिति, जीवाद्वैतनिर्वाहार्थश्चायमारम्भः-सर्व-शब्देनोपायपरवाक्यानां निवर्त्यपरवाक्यानां च कार्त्स्न्येन पर्यालोचनं भेदश्रुति-भेदनिषेधश्रुतिपर्य्यालोचनं च विवक्षितं, न हि कतिपयवाक्यैरर्थनिष्कर्षः सुकरः । तस्मादुपायपरवाक्येषूपासननिदिध्यामनादिशब्दैरुपायं वदन्ति वाक्यानि, निवर्त्यपरेषु चाविद्या कर्म्मसंज्ञान्येत्यादिवाक्यानि च निरूपणीयानि भेदश्रुतयोऽपि निरूपणीयाः तदविरोधेनार्थस्य वाच्यत्वात् । न च निषेधार्थं भेदानुवाद इति वाच्यम् ईश्वरेशितव्यादिभेदानां प्रमाणान्तराप्राप्तत्वेनानुवादासम्भवात् तन्निषेधेऽभेदविधानस्याप्रामाण्यं स्यात् प्रमाणान्तराप्राप्तोऽपि भेदः फलविशेषार्थं गरुडभावनादिवदारोप्यत इति चेत् असतो भेदस्यारोपणमिति कथमवगतम् अभेदश्रुतिविरोधादिति चेत् भेदश्रुतिविरोधादभेदश्रुतिः फलविशेषार्थम् अभेदारोपणपरा स्यात् गरुडाभेदो ह्यारोप्यते भेद एव हि तत्र परमार्थः तत्त्वज्ञानस्यैव मोक्षोपायत्वान्मुमुक्षून्प्रत्यतत्त्वारोपणं न सम्भवतीति चेत् तद्भेदश्रुतेरपि समानम् । किं च प्रमाणान्तराप्राप्तभेदभ्रमं जनयित्वा तन्निषेधे प्रयोजनाभावात् शास्त्रस्य प्रयोजनपर्यवसायित्वं न स्यात्, न हि शास्त्रस्य प्रयोजनपर्यवसायित्वनियमः अभिचारादिप्रतिपादनादिति चेन्न तत्रापि तदर्थिनं प्रति प्रयोजनवत्त्वमस्त्येव, अभिचारस्तु देवब्राह्मणविद्विष्टप्रभृतिषु पापकर्म्मपरेषु नरेषु क्रियमाणः पुण्याय भवति, अभिचारादिकर्म्माराध्यत्वतदपेक्षितफलप्रदत्वरूपमीश्वरस्य वैभवं च ज्ञातव्यं यज्ञादीनामपि विज्ञातृत्वस्य तत्तदाराध्यत्वफलप्रदत्वरूपवैभवस्य च ज्ञातव्यत्वेन सर्वाः श्रुतयः प्रयोजनपर्यवसायिन्यः, तस्मात्प्रयोजनपर्यवसायित्वमवश्यम्भावि तत्तु प्र-

माणान्तरानवगतभेदज्ञापनतन्निषेधपरत्वे नोपपद्यते, तस्माद्भेदश्रुतय उपायपरा निवर्त्यपराश्च श्रुतयः कार्त्स्न्येन पर्यालोचनीया इति तत्कार्त्स्न्यपर्यालोचनेऽस्मदुक्त एवार्थ उपपन्नः स्यादित्यभिप्रायेणात्रेदं सर्वश्रुतिहृदयमित्युक्तं, तत्र निवर्त्यस्वरूपमाह जीवात्मान इत्यादिना, स्वयं—स्वत इत्यर्थः । स्वभावत एवासङ्कुचितं ज्ञानं रत्नादिप्रभायाः सङ्कोचनाभावेऽपि कतिपयप्रदेशवर्तित्वं दृष्टमिति तद्व्यावृत्त्यर्थम् अपरिच्छिन्न-शब्दः, ज्ञानस्य निर्मलत्वं रागद्वेषरूपत्वाभावः सर्वस्य भगवदात्मकत्वेन ग्रहणाच्च रागद्वेषाविर्भावः, स हि अयथावद् ग्रहणाद्भवति तस्मादयथार्थाविषयत्वान्नैर्मल्यं विवक्षितं स्वरूप-शब्दो धर्मवाची कर्मरूपाविद्या वेष्टिता इति अविद्याकर्म सञ्ज्ञान्येति वचनात्कर्मतारतम्यानुरूपसङ्कोच इत्याह तत्तदिति, विविध-शब्दो देवादिभेदपरः, विचित्रशब्दोऽवान्तरवैविध्यपरः तत्तद्देहोचितलब्धज्ञानप्रसरा इति अप्राणिमत्सु स्वल्पा सा स्यावरेषु इत्यादिवचनादिति भावः । पूर्वं कर्मतारतम्येन ज्ञानसङ्कोच उक्तः कर्माधीनं तारतम्यं देहविशेषद्वारकमित्यत्रोक्तं तत्तद्देहात्माभिमानिन इति अनेन सुखदुःखविभागहेतुरुक्तः आत्माऽभिमानुकूलं हि सुखं तत्प्रतिकूलं हि दुःखं तदुचितकर्माणि कुर्वाणा इत्यनेन बीजाङ्कुरन्यायादनादित्वमुक्तं भवति । अथोपायमाह एतेषामिति, प्रपत्ति*मन्तरेण नोपपद्यत इति भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं तदङ्गत्वेन प्रपत्तेरपेक्षितत्वात् प्रपत्तिनिष्ठस्य स्वतन्त्रयोपायत्वाच्च प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तं तदर्थमित्यादि प्राथम्यमर्थक्रमेण, न हि देहस्यैवात्मत्वे मोक्षोपायापेक्षा देहातिरिक्तत्वेऽपि भगवच्छेषतैकरसत्वे सिद्धे हि तत्प्राप्त्यपेक्षा तस्मात्प्रथमज्ञाप्यं देहातिरिक्तज्ञानैकाकारत्वं भगवच्छेषतैकरसत्वं चात्मन इत्यर्थः । भगवत्स्वरूपं चेति दिव्यात्मस्वरूपस्य हेयप्रत्यनीकत्वं कल्याणरूपत्वं चोच्यते हेयेति, । मङ्गलगुणाश्रयत्वमुच्यते अनवधिकेति, कल्याणैकतानतयाऽऽनन्दरूपत्वं । शरीरात्मभावमाह स्वसङ्कल्पेति, उपा-

---

* प्रपत्तिस्तु परमरहस्यार्थस्वरूपा श्रीसंप्रदायानुयायिनां सांप्रदायिकग्रन्थेषु कृतसपरिकरतत्त्वविवेचनेति तत एव श्रद्धानानां भगवद्धर्माचिता सुज्ञाना ।

यश्चोपासनमित्याह तदुपासनमिति, यथोक्तमित्यादिना उक्तक्रमेण प्रमाणान्युपन्यस्यात्मनोज्ञानैकाकारत्वे प्रमाणमाह निर्वाणेति,

अत्रेदं सर्वशास्त्रहृदयं—जीवात्मानः स्वयमसङ्कुचितापरिच्छिन्ननिर्मलज्ञानस्वरूपाः सन्तः कर्म्मरूपाविद्यावेष्टितास्तत्तत्कर्म्मानुरूपज्ञानसङ्कोचमापन्नाः ब्रह्मादिस्तम्बपर्यन्तविविधविचित्रदेहेषु प्रविष्टास्तत्तद्देहोचितलब्धज्ञानप्रसरास्तत्तद्देहात्माभिमानिनस्तदुचितकर्म्माणि कुर्वाणास्तदनुगुणसुखदुःखोपभोगरूपसंसारप्रवाहं प्रतिपद्यन्ते, एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते इति तदर्थं प्रथममेषां देवादिभेदरहितज्ञानैकाकारतया सर्वेषां साम्यं प्रतिपाद्य तस्यापि स्वरूपस्य भगवच्छेषतैकस्वरूपैकरसतया भगवदात्मकतामपि प्रतिपाद्य भगवत्स्वरूपं च हेयप्रत्यनीककल्याणैकतानतया सकलेतरविसजातीयमनवधिकातिशयासंख्येयकल्याणगुणगणा*लयं स्वसङ्कल्पप्रवृत्तसमस्तचिदचिद्वस्तुजाततया सर्वस्यात्मभूतं प्रतिपाद्य तदुपासनं साङ्गं तत्प्रापकं प्रतिपादयन्ति शास्त्राणीति, यथोक्तम्—

कथमचेतनप्रकृतेर्दुःखाद्यास्पदत्वमिति शङ्कायां तद् व्याचष्टे प्रकृतीति, दुःखादीनामौपाधिकत्वमस्तु तथाऽपि प्रकृतेरेव धर्म्मा इति निर्देशः कथमित्यत्राह प्राप्तेति, प्राप्ताप्राप्तविवेकेन अन्वयव्यतिरेकाभ्यामित्यर्थः प्रकृतेरेव धर्म्मा इति व्याख्येयग्रन्थभङ्ग्यनुकारः, दुःखादीनां प्रकृतिधर्मत्वे

* गुणगणाश्रयमिति पा० ।

यत्फलं तत्फलं प्रकृतिधर्म्मत्वाभावे दृष्टमित्यभिप्रायेण प्रकृतेरेव धर्म्मा इति निर्द्देश इत्यर्थः । प्रकृतिसम्बन्धे सति दुःखादिसद्भावः प्रकृतिविरहे दुःखादिनिवृत्तिश्चेति दुःखादीनां प्रकृतिधर्म्मत्वे यत्फलं तदिदानीं दृष्टमित्यभिप्रायेण प्रकृतेरेव धर्म्मा इति वचनभङ्गीति यावत् । देवादिभेदस्यौपाधिकत्वादुपाधिवियुक्तस्वरूपसाम्ये प्रमाणमाह विद्येति, ब्राह्मणादेरुत्कर्षे इतरेषामपकर्षे च शास्त्रसिद्धेऽपि समदर्शित्वमपाण्डित्यमेवेति शङ्कायां पण्डित-शब्दं व्याचष्टे देवेति, ।

**निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्म्माः प्रकृतेस्ते न चात्मनः ॥ प्रकृतिसंसर्गकृतकर्म्ममूलत्वान्नात्मस्वरूपप्रयुक्ता धर्म्मा इत्यर्थः । प्राप्ताप्राप्तविवेकेन प्रकृतेरेव धर्म्मा इत्युक्तं, विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डितास्समदर्शिनः ॥ इति, देवतिर्यङ्मनुष्यस्थावररूपप्रकृतिसंसृष्टस्यात्मनः**

उत्कर्षापकर्षशास्त्रमुपाधिसंसृष्टविषयं तद्वियुक्तस्वरूपस्य साम्यमेवेत्यर्थः । पण्डित–शब्दार्थमनुवदन् वाक्यार्थं योजयति तत्त्वदिति, विद्याविनयसम्पन्नेति श्लोकेन तत्तद्वैषम्यं विद्यमानमपि नात्मस्वरूपस्पर्शीति दर्शयितुं ब्राह्मणत्वादिविशिष्टे समदर्शित्वमुक्तं साम्यमुपाधिवियुक्तस्वरूपविषयमिति स्पष्टयितुमाह तदिदमाहेति, । दोषशब्दस्याभक्ष्यभक्षणादिमात्रविषयत्वशङ्काव्युदासाय निर्दोष–शब्दं व्याचष्टे निर्दोषमिति, वाक्यार्थमाह स्वरूपेणेति, उत्क्रमेणोपपादकत्वेन प्राप्तस्य भगवदात्मकत्वस्य प्रागेवोपपादितत्वमाह तस्यैवमित्यादिना, प्रपत्तिमन्तरेण मोक्षासिद्धौ प्रमाणमाह दैवीति, गुणमयीत्यनेन माया–शब्दः प्रकृतिवाचीति गम्यते तद्व्याचष्टे तस्येति, तस्यैतस्य स्वतः शुद्धस्यापि उपाधितोमलिनस्येति भावः । श्रुतिमाह–

स्वरूपविवेचनी बुद्धिर्येषां ते पण्डिताः, तत्तत्प्रकृतिविशेषवियुक्तात्मयाथात्म्यज्ञानवन्तस्तत्रतत्रात्यन्तविषमाकारे वर्तमानमात्मानं समानाकारं पश्यन्तीति समदर्शिन इत्युक्तं, तदिदमाह–इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ इति, निर्दोषं–देवादिप्रकृतिविशेषसंसर्गरूपदोषरहितं, स्वरूपेणावस्थितं सर्वम्–आत्मवस्तु निर्वाणरूपज्ञानैकाकारतया सममित्यर्थः । तस्यैवंभूतस्यात्मनो भगवच्छेषतैकरसता तन्नियाम्यता

नान्य इतीत्यादिभिः श्रुतिभिश्च भगवत्प्रपत्तिमन्तरेण नोपपद्यतइत्युक्तं भवतीत्यन्वयः । कथं तमेव विद्वानमृत इत्यादिवाक्यानां प्रपत्तिमन्तरेण मोक्षानुपपत्तिपरत्वमुच्यते तमेवं विद्वानित्यादिवाक्यानामुपासनविधिपरत्वादुपासनस्य च स्वनिष्पत्त्यर्थं प्रपत्तिसापेक्षत्वाच्चोक्तार्थः फलितः, वाक्यार्थज्ञानमात्रस्योपायताभ्यावृत्तिरेवाभिप्रेता । यद्वा विद्वानिति वेदनवाचिशब्द उपासन–प्रपदनसाधारण इति भावः । पूर्वोक्तस्य भगवदेकनियाम्यत्व–तदेकधार्यत्वादेः प्रमाणं च वदन् न च मत्स्थानि भूतानीत्यत्र सर्वात्मकत्वं मिथ्येत्युच्यत इति शङ्कान्तरं च परिहरति मयेति, तद्व्याचष्टे स्वैश्वर्येति, मया ततमित्यादिना व्याप्तिरुक्ता व्याप्तिश्च धारकत्वेनेत्युक्तं, मत्स्थानीति भगवतस्तदायत्तस्थितित्वं व्यावर्तितं न चाहं तेष्ववस्थित इति एवं स्वायत्तस्थितित्वविधानात् तदेव निषिध्यते न च मत्स्थानीति अपि तु लोके धार्यधारकभावो यथा भवति तथात्वं निषिध्यते अनायासेन स्वसङ्कल्पमात्रेण धारकत्वादित्यर्थः । धारकत्वे सत्यपि लोकसिद्धधार्यधारकभाववैलक्षण्यमेवोपपादयति पश्य मे योगमैश्वरमिति, तस्मात्स्वैश्वर्यवैचित्र्यमुक्तमित्यर्थः ।

तदेकाधारता च तत्तच्छरीरतत्तनुप्रभृतिभिः शब्दैस्तत्सामानाधिकरण्येन च श्रुतिस्मृतीतिहासपुराणेषु प्रतिपाद्यत इति पूर्व्वमेवोक्तं, दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति, तस्यैतस्यात्मन कर्म्मकृतविचित्रगुणमयप्रकृतिसंसर्गरूपात्संसारान्मोक्षो—

एवं सर्वशक्तियोगात्स्वसङ्कल्पैकदेशेन धारकत्वे स्पष्टं प्रमाणमाह तदाहेति, तद्व्याचष्टे अनन्तेति, अनन्तविचित्रमहाश्चर्यम् अनन्तवैचित्र्याद्विस्मयनीयमित्यर्थः अयुतायुतांशांशेनेत्यनेन यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता इति वचनं स्मारितं, प्रशासनेन सर्वधारणश्रुत्यनुरोधादुक्तं मत्सङ्कल्पेनेति, न त्वेकांशेनेति अंशमा शब्दव्याख्यानम् अंश—शब्दः स्वरूपैकदेशपरः निरंशे प्रतिपदानार्थं पूर्णावर्त्तिन्यपि स्वरूपेऽश—शब्दव्यवहार एकस्मिन्नेव वस्तुनि स्वरूपस्य पूर्णवर्तितया ऽन्यत्र वृत्त्ययोग्यत्वशङ्काव्युदासार्थः एकांशेने त्यनेन फलितमर्थमाह अनेन रूपेणेति, एवं मायावादपक्षानुगुण्यशङ्कावहो न च मत्स्थानीति ग्रन्थोव्याख्यातः । अथ भेदाभेदानुगुण इव यः श्लोकः स व्याख्यायते तदिदमाहेति, तदिदमाश्चर्यरूपत्वम् एकत्वे सति नानात्वमित्येतद्व्याचष्टे प्रशासितृत्वेनेति, एक—शब्दः प्रकार्यैक्यपरः शरीरतया प्रकारत्वोपपादकं प्रशासितृत्वेनेति पदं तत्तद्रूपेण विचित्रप्रकारः तत्तच्छरीरकतया

भगवत्प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तं भवति, नान्यः पन्था अयनाय विद्यत इत्यादिश्रुतिभिश्च, मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरमिति .सर्वशक्तियोगात्स्वैश्वर्यवैचित्र्यमुक्तं तदाह विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो

जगत् इति, अनन्तविचित्रमहाश्चर्यरूपं जगन्ममायुतायुतांशांशेनात्मतया प्रविश्य सर्वं मत्सङ्कल्पेन विष्टभ्यानेन रूपेणानन्तमहाविभूतिरपरिमितोदारगुणसागरो निरतिशयाश्चर्यभूतः—स्थितोऽहमित्यर्थः—तदिदमाह एकत्वे सति नानात्वं नानात्वे सति चैकता । अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति ॥ इति, ॥

विचित्रप्रकारः विचित्रकर्म्म कारयन्निति अनेन तदधीनप्रवृत्तित्वमुक्तं, तच्च तन्नियाम्यत्वमिति शरीरत्वमुपपादितं भवति नानारूपतां भजत इति तत्तच्छरीरकतया विचित्रप्रकारत्वं नानारूपत्वमित्यर्थः । ननु कारणरूपतया एकत्वं कार्यरूपेण नानात्वं च किमिति नोक्तं स्यात् उच्यते तदानीमेकत्वशब्दः कारणावस्थापरः स्यात् भावप्रत्ययान्तत्वात् कारणावस्थत्वं ह्यविभक्तनामरूपत्वं, तच्च विभक्तनामरूपतादशायां विरोधादेव नास्ति तस्मादेकत्वे सति नानात्वाभिधानमयुक्तमित्यभिप्रायेणैवं व्याख्यातं नानात्वे सति चैकतेत्येतद्व्याचष्टे एवमिति, अवस्थितोऽपि सन्नित्यन्तेन नानात्वे सत्येतद्व्याख्यातं लीलाविभूतिविशिष्टवैचित्र्यानुभावणपरो नानात्व-शब्दः सप्तम्यन्त इत्यर्थः । एकतापदं व्याचष्टे अनवधिकेति,

अथासितृत्वेनैक एव सन् विचित्रचिदचिद्वस्त्वन्तरात्मतया प्रविश्य तत्तद्रूपेण विचित्रप्रकारो विचित्रकर्म्म कारयन्नानारूपतां भजते एवं स्वल्पाऽल्पांशेन तु सर्वाश्चर्यमयं नानारूपं जगत्तदन्तरात्मतया प्रविश्य—विष्टभ्य नानात्वेनावस्थितोऽपि सन् अनवधिकातिशयासंख्येयकल्याणगुणगणः सर्वेश्वरेश्वरः परब्रह्मभूतः ।

नित्यविभूतिमत्तया समाभ्यधिकराहित्यमेकता—शब्दार्थः, अनवधिके-

त्यादिना तदुपयोगिविशेषणान्युच्यन्ते तत्र विभूतिद्वयनियमनधारणाद्य-नुगुणगणकत्वमनवधिकेत्यादिनोक्तम् ईश्वरातिरिक्तब्रह्मव्यावृत्त्यर्थं, सर्वेश्वरेश्वरः परब्रह्मभूत इत्युक्तं, पुरुषोत्तम—नारायण—शब्दाभ्यां श्रीपुरुषसूक्तं नारायणानुवाकश्च उक्तार्थे प्रमाणत्वेन*स्मारितौ। एवंविधत्वान्निरतिशयाश्चर्यभूतः विग्रहद्वाराऽप्याश्चर्यत्वविवक्षया नीलतोयदेत्याद्युक्तं तस्य यथा कप्यासमिति श्रुतिस्तु विग्रहवैलक्षण्ये प्रमाणत्वेन स्मारिता पुण्डरीकेति पदं पद्मपत्रोपमेक्षणं त्वक्षः कमलपत्राक्षेत्यादिवचनात् पद्मदलेन साम्यं विवक्षितमिति दर्शयितुं दल—शब्दः एवमक्षिणी इत्युक्ते पङ्कजत्वादिदोषा अक्षिणि माभूवन्नित्यभिप्रायेणामल—शब्दः पङ्कजादधिकगुणनिवृत्तिशङ्काव्यावृत्त्यर्थमायत-शब्दः, नित्यविभूतियोगोऽपि समाभ्यधिकराहित्यहेतुरित्यभिप्रायेण परमव्योम्नीत्याद्युक्तं, वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमेष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति श्रुत्यनुरोधेनैवं व्याख्यातं, तत्र ह्येष सर्वभूतान्तरात्मा तेनेदं पूर्णमिति लीलाविभूतिविशिष्टत्वं दिवि तिष्ठत्येकः दिव्यो देव एक इति द्यु-शब्दादिवाच्यनित्यविभूतिसम्बन्धित्वेनैकत्वं चावगम्यते

**पुरुषोत्तमो नारायणो निरतिशयाश्चर्यभूतो नीलतोयदसंकाशः पुण्डरीकदलामलायतेक्षणः सहस्रांशुः सहस्रकिरणः परमे व्योम्नि यो वेद निहितं गुहायां परमे व्योमँस्तदक्षरे परमे व्योमन्नित्यादिश्रुतिसिद्ध एक एवावतिष्ठते ब्रह्मव्यतिरिक्तस्य**

अन्यथा नानात्वे सति चैकतेत्यस्य प्रथमपादोक्तनानात्वैकत्वमात्रपरत्वे पौनरुक्त्यं स्यात् प्रयोजनाभावात्सकृदुक्त्याऽपि हि अचि-

* अत्र पुरुषसूक्त-शब्दस्य नपुंसकतयाऽनुवाक-शब्दस्य च पुँल्लिङ्गतया नपुंसकमनपुंसकेनेति पाणिनीयानुशासनेन नपुंसकानपुंसकयोर्नपुंसकैकशेषतायाः समुचितत्वेन स्मारिते इत्येव युक्तः पाठः। यथाश्रुतनिर्वहणार्थिनस्तु सूक्तशब्दस्योभयलिङ्गत्वमुपकल्प्य समाधातुमुद्यच्छन्ते। तदेतन्नातिसमञ्जसमिति कृतधियस्तस्मात् गौडद्राविडयावत्पुस्तकोपलब्धः स्मारितौ-इत्यपपाठ इति तु वयम्।

मीमांसाद्वयगुरवे श्रीमते रामानुजार्याय नमः ॥

# अथ श्रीभाष्ये

## तृतीयाध्याये प्रथमः पादः आरभ्यते ॥

तदन्तरप्रतिपत्त्यधिकरणम् ।

**सू० तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

भू० अतिक्रान्ताध्यायद्वयेन निखिलजगदेककारणं निरस्तनिखिलदोषगन्धमपरिमितोदारगुण[1]सागरं सकलेतरविलक्षणं परं ब्रह्म मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्तीत्ययमर्थः स्मृतिन्यायविरोधपरिहारपरपक्षप्रतिक्षेपवेदान्तवाक्यपरस्परविरोधपरिहाररूपकार्यस्वरूपसंशोधनैस्तदुद्वंषणत्वहेतुभिः सह स्थापितः, अतोऽध्यायद्वयेन ब्रह्मस्वरूपं प्रतिपादितम्। उत्तरेणेदानीं तत्प्राप्त्युपायैः सह प्राप्तिप्रकारश्चिन्तयितुमिष्यते, तत्र तृतीयेऽध्याये उपायभूतोपासनविषया चिन्ता वर्तते, उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा चेति तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु संचरतो जाग्रतः स्वपतः सुषुप्तस्य मूर्च्छितस्य दोषाः, परस्य च ब्रह्मणस्तद्रहितता कल्याणगुणाकरता च प्रथमद्वितीययोः पादयोः प्रतिपाद्यते ॥

१ अपरिमितोदारगुणसागर इत्येव युक्तः पाठो यदि तु यथाश्रुतपाठसंरक्षणसंरम्भस्तर्हि आधाराधेयप्रत्ययमवलम्ब्य सोऽपि शक्यते कथंचिन्निर्वोढुमिति युक्ताः प्रतिपद्यामहे ॥

टी० सू० तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ उत्तरद्विकसङ्गत्यर्थं पूर्वद्विकार्थमाह "अतिक्रान्ते"त्यादिना, इत्ययमर्थ इत्यस्मात्पूर्वं प्रथमाध्यायार्थः संक्षिप्तः, निखिलेत्यादिविशेषणानां पूर्ववदर्थः, द्वितीयस्याध्यायस्य प्रथमद्वितीयपादार्थं संक्षिपति "स्मृतिन्याये"ति, तत्र वेदान्तेत्यादिना तृतीयतुरीयपादार्थः संक्षिप्तः, एवं किञ्चिद्विस्तरेण अध्यायद्वयार्थ उक्तः, प्रथमद्विकस्य सङ्ग्रहेणानुगतमर्थमाह "अत"-इति, उत्तरद्विकार्थं संक्षिपति "उत्तरेणे"ति, इदानीं—विषये सिद्ध इति[1]भावः। प्रथमद्विके सिद्धवस्तुरूपविषयचिन्ता कृता। द्वितीये तु साध्यरूपविषयचिन्ता क्रियते इत्यर्थः। तृतीयचतुर्थयोः साधनफलविषयतया क्रममभिप्रयन् तृतीयाध्यायार्थमाह "तत्रे"ति, प्रथमद्वितीयपादयोर्न ह्युपासनं चिन्त्यत इत्यत्राह "उपासनारम्भे"ति अभ्यर्हितमन्तरङ्गम्, अत्र "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" इत्यस्यार्थोऽभिप्रेतः। लोकान्तरेषु संचरतो दोषाश्चिन्त्यन्ते तत्र जागराद्यवस्थस्य दोषाः फलिताः ॥ प्रथमाधिकरणस्य संशयमाह—

सू० तत्र देहाद्देहान्तरङ्गच्छन्नयं जीवो देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः संपरिष्वक्त एव गच्छति? उत ने? ति चिन्तायां यत्र यत्र जीवो याति तत्र तत्र भूतसूक्ष्माणां सुलभत्वादसंपरिष्वक्तो यातीति प्राप्तं पश्चादपि पूर्वपक्षबीजान्युपन्यस्य निरसिष्यति, तत्र सिद्धान्तमाह—

सू० तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति, संज्ञामूर्तिक्लृप्तिरिति मूर्ति-शब्देन देहः प्रस्तुतः स तच्छब्देन परामृश्यते, तदन्तरप्रतिपत्तौ—देहान्तरगमने भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहति—गच्छतीत्यर्थः, कुतः प्रश्ननिरूप-

१ तच्छब्दार्थमिति पा० ।

णाभ्यां—प्रश्नप्रतिवचनाभ्यां, पञ्चाग्निविद्यायामेवं प्रश्न-प्रतिवचने आम्नायेते, "श्वेतकेतुं किलारुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारम्

टी० 'तद' इति, किं देहान्तरं गच्छन् जीवो भूतसूक्ष्मैः संपरिष्वक्तो रंहति? उतासंपरिष्वक्त? इति, वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति तु पञ्चम्यामाहुतावापः पुरुषवचस इति प्रश्नप्रतिवचने किं संपरिष्वक्तस्य रंहणं गमयतो नेति? किं श्रद्धादिशब्दैर्यथाप्रसिद्धि स्वार्था उच्यन्ते? उत भूतसूक्ष्मपरिष्वक्तो जीव? इति, पितृयाणेन यथा निवर्त्तते एष सोमो राजेति सोम—शब्दस्य सोमदेहजीवपरत्वं, किं तस्या आहुतेः सोमो राजा सम्भवतीत्यत्र सोम—शब्दस्य सोमदेहिजीवपरतामवगमयति? नेति? तं देवा भक्षयन्तीति प्रतिपन्नं भक्षणम् एष सोमो राजेति सोमशब्दस्य सोमदेहजीवपरत्वविरोधि? उताविरोधीति? यदा विरोधि तदानीमेव सोमो राजेति सोम—शब्दस्य जीवविषयत्वाभावेन तस्या आहुतेः सोमो राजेति सोम—शब्दस्यापि जीवविषयत्वाभावेन श्रद्धादिशब्दानामपि प्रसिद्धार्थपरतया प्रश्नप्रतिवचनयोः परिष्वङ्गावगमकत्वाभावादसंपरिष्वक्तो रंहतीति पूर्वः पक्षः, यदा भक्षणं जीवपरत्वाविरोधि तदा तत्पूर्ववाक्यस्य-सोम—शब्दस्य जीवपरतया श्रद्धाहुत्यनन्तरवाक्यस्यसोमशब्दस्याप्यबादिद्रव्यसंसृष्टजीवपरत्वेन प्रश्नप्रतिवचनयोर्जीवस्य भूतसूक्ष्मपरिष्वङ्गावगमकत्वात् सम्परिष्वक्तो रंहतीति सिद्धान्तः, तत्र सिद्धान्तमित्यादि, तच्छब्दं व्याचष्टे संज्ञेत्यादिना, प्रश्नप्रतिवचनाभ्यामिति, न हि प्रश्नानन्तरं भूतसूक्ष्मपरिष्वङ्गपरं प्रतिवचनं दृश्यत इति शङ्कायामर्थान्तरव्यवधानशङ्कानिरस्यर्थमनेकप्रश्नतत्प्रतिवचनक्रमरूपतां प्रकरणस्य दर्शयति पञ्चाग्नीत्यादिना,

भा० देवयानपितृयाणपथव्यावर्त्तने अमुष्य लोकस्याप्राप्तारं च वेत्थेति पृष्ट्वेदमपि पप्रच्छ "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति तत इमं पश्चिमं प्रश्नं

प्रतिश्रुतंस्य द्युलोकमग्नित्वेन रूपयित्वा तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवतीत्यादिना देवाख्या जीवस्य प्राणा अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति, सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते, तं चामृतमयं देहं त एव प्राणाः पर्जन्येऽग्नित्वेन रूपिते प्रक्षिपन्ति स च देहस्तत्र प्रक्षिप्तो वर्षं भवति, तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति, तच्च तत्र प्रक्षिप्तमन्नं भवति, तच्चान्नं त एव पुरुषेऽग्नित्वरूपिते प्रक्षिपन्ति, तच्च तत्र रेतो भवति, तच्च त एव योषायामग्नित्वरूपितायां प्रक्षिपन्ति, तच्च तत्र प्रक्षिप्तं गर्भो भवति इत्युक्त्वाह—इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्येवं पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलप्या भवन्तीत्यर्थः । एवमुक्ते पूर्वास्वप्याहुतिष्वनुवर्त्तमानानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति ।

टी० देवयानपितृयाणपथव्यावर्त्तनं इति, व्यावर्त्तकाकाराविल्यर्थः, सम्भवतीत्यादिनेत्यस्य उक्त्वाऽऽहेत्युत्तरत्रान्वयः, श्रद्धा—शब्देन भूतसूक्ष्मावस्थाविशेष उच्यते सोमराज—शब्दश्चाख्यानममृतमयदेहशब्दः, प्राणा मुख्यप्राणा इन्द्रियाणि च । यद्वा प्राण—शब्दो मुख्यप्राणमात्रपरः गमनस्य प्राणाधीनत्वात् प्राणाधीनः प्रक्षेपो होमत्वेनोपचरित इत्यभिप्रायेण प्रक्षिपन्तीत्युक्तम्, इति त्वित्यादि श्रुतिवाक्यं, तस्यार्थमाह "एव"-

मिति, पुरुषवचस इति बहुव्रीहिसमासेन सम्बन्धमात्रं प्रतीतम् । तत्र पुरुष-शब्दः शब्दस्वरूपपरः वचःशब्दो वाचकपरः, अतः समास-प्रतिपन्नः सम्बन्धो वाच्यवाचकभावाख्यविशेषरूप इति दर्शयितुं पुरुष-शब्दाभिलप्या इत्युक्तम् । अनेन कथं रंहतो जीवस्य भूतसूक्ष्मपरिष्वङ्गा-वगम इत्यत्राह "एवमुक्त" इति, प्रश्नप्रतिवचनवाक्ययोरुभयोरपि पञ्चम्यामाहुतावापः पुरुषवचस इत्युक्ते होतव्यद्रव्याकाङ्क्षायां स्ववाक्य-स्थतया सन्निहिता आप एव होम्यत्वेन स्वरसतः प्रतीताः वाक्यान्तर-स्थाः श्रद्धासोमराजरूपेण परिणामास्त्वयोग्याः, अतस्सा ऽप्यपामेव ज्ञापिका, एवं प्रश्नप्रतिवचनवाक्यस्वारस्यात् प्रसिद्धश्रद्धाया अयोग्यत्वाच्च पञ्च-म्याहुतिष्वपां होम्यत्वेनानुवृत्तिरस्तीति तासामेव पुरुषवचस्त्वमित्यर्थः ॥
तत्; किमित्यत्राह—

सू० अत एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैः सह तत्र तत्र यातीति गम्यते। नन्वापः पुरुषवचस इत्युक्तेऽपां पुरुषाकारपरिणामप्रतीतेर्गच्छता जीवेन तासामेव परि-ष्वङ्गः प्रतीयते, अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग-इत्यत्राह—

**सू० त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

तु-शब्दश्चोद्यं व्यावर्तयति, देहारम्भिकाणामपां केवलानां न देहारम्भसम्भवः, देहाद्यारम्भाय हि तासां त्रिवृतं त्रिवृतमेकैकामिति त्रिवृत्करणं केवलानामपां श्रवणं तु तासां भूयस्त्वात्, देहे च लोहितादिभूयस्त्वेनारम्भके-ष्वपां भूयस्त्वं गम्यते ॥

## सू० प्राणगतेश्च ॥ ३ ॥

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते, उत्क्रामति जीवे प्राणानां तदनुगतिः, श्रूयते, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति, स्मर्यते च "मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति। शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशया"दिति, न च निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥

टी० "अत"इति, अन्यैस्तु पञ्चाग्निविद्या पितृयाणविषयप्रश्नप्रतिवचनाभ्यामिति व्याख्यातं पितृयाणविषयवाक्यं स्वश्रुतत्वादिति चेचेष्टादिकारिणां प्रतीतेरित्यत्रोदाहरणीयत्वादाद्यं सूत्रं पञ्चाग्निविद्याप्रतिवचनविषयमेवेति भाष्यकाराभिप्रायः ॥ अनन्तरसूत्रशङ्कामाह "नन्वाप" इति, सू० त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ प्रथमस्य पञ्चम्यन्तपदस्य संपरिष्वक्तो रंहतीत्यन्वयो दर्शितः शङ्कायन्यस्यपरिष्वङ्ग—शब्देन द्वितीयपञ्चम्यन्तपदस्य प्रतिज्ञावाक्यं सामर्थ्यादध्याहृतं, केवलानामपां श्रवणं त्विति वैशेष्यात्त्विति सूत्रे त्रिवृत्कृतेष्वप्येकैकस्याधिक्यात्तन्निबन्धनस्तद्व्यवहार इत्युक्तम्। अत्र तु तदाधिक्यमपामस्तीति दर्शयितुं सूत्रारम्भः ॥ सू० प्राणगतेश्च ॥ ३ ॥ अवान्तरसाध्यान्वयव्यावृत्त्यर्थमाह "इतश्च भूतसूक्ष्मे"ति, प्राणानामनुगतिः स्यात्ततः किमित्यत्राह "न चे"ति,

## सू० अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

भा० "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्य"मित्यादिना प्राणानां जीवमरणकालेऽग्न्यादि-

ष्यप्यतश्रवणान्नं तेषां जीवेन सह गमनमिति गतिश्रुति-रन्यथा नेयेति चेन्न भाक्तत्वात्, अन्याविषयश्रवणस्य कथं भाक्तत्वम्? "ओषधीर्लोमानि वनस्पतीन्केशा इत्य-नपियद्भिर्लोमादिभिः सह श्रवणात्, अतस्तुराद्यप्यय-श्रुतिरधिष्ठातृदेवतापक्रमणपरा ॥

## सू० प्रथमे श्रवणादिति चेन्न ता एव ह्युप-पत्तेः ॥ ५ ॥

यदुक्तमद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति तन्नोपपद्यते, द्युलोकाग्निविषये प्रथमे होमेऽपां होम्यत्वाश्रवणात्, "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती"ति श्रद्धैव होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेष-त्वेन प्रसिद्धा, अतो नापस्तत्र होम्या इति चेन्न यतस्ता आप एव श्रद्धा-शब्देन तत्राभिधीयन्ते, कुतः प्रश्नप्रति-वचनोपपत्तेः, वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्नस्य प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता, तत्र यदि श्रद्धा-शब्देनापो नोच्येरन् ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्यसङ्गतं स्यात्, इति तु पञ्चम्यामाहुतावापः पुरुषवचस इति प्रतिवचननिग-मनं च श्रद्धाया अप्त्वमेव साधयति ॥

१, भूयसीति पा० ।

टी० सू० अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ यत्रेत्यादिश्रुतिः अनपियद्भिः औषधिवनस्पतिषु चाप्ययरहितैः, तत्र हि केशादेरप्ययश्रुतिस्तत्तद्देवताऽपक्रमणपरा तथेदमित्यर्थः। "औषधीर्लोमानि" लोमाभिमानिदेवता औषध्यभिमानिदेवतामप्येतीति लोमाभिमानित्वं विहाय केवलमोषध्यभिमानिनी भवतीत्यर्थः । अग्निं वागप्येतीति वागभिमानिनी वन्ह्यभिमानिनीमप्येति वागभिमानित्वरूपं विहाय केवला[1]ग्न्यभिमानिनी भवतीत्यर्थः । सू॰ प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः, ॥ ५ ॥ कथमप्त्वं सूचयतीत्यत्राह–

सू० वेत्थ यथेति हि प्रश्नगतः प्रकार इति तु पञ्चम्यामिनीति–शब्देन परिहारो निगम्यते, श्रद्धासोमराजवर्षान्नरेतोगर्भरूपेणाऽपां परिणाममुक्त्वा ह्येवमापः पुरुषवचस इति निगम्यते, श्रद्धा–शब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते "अपः प्रणयति श्रद्धा वा आप" इति श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवतीति सोमाकारेण परिणामस्यापामेवोपपद्यते, अतो भूतान्तरसंसृष्टाभिरद्भिः संपरिष्वक्तो जीवो रंहन्तीत्युपपन्नम् ॥

## सू० अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

यत्पुनरुक्तमद्भिः संपरिष्वक्तो जीवो यातीत्ययमर्थ एतस्माद्वाक्यादवगम्यत इति तन्नोपपद्यते एतस्मिन् वाक्ये जीवस्याश्रवणात्, अत्र हि श्रद्धादय एवाम्भवस्थाविशेषा होम्यत्वेन श्रुता न तु जीवस्तत्परिष्वक्त इति चेत्तन्न इष्टा-

१ केवलाग्निर्भवतीत्यर्थ इति पा॰ ।

दिकारिणां प्रतीतेः, अस्मिन्नेव वाक्ये श्रुतश्च ब्रह्मज्ञा-नविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमराजानो भवन्ति पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्तीत्युच्यते। अथ य इमे ग्रामे इष्टापूर्तेदत्तमित्युपासते ते धूममभिसम्भवन्तीत्यारभ्य पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते "योऽयोऽन्नमत्ति यो यो यौनौ[1] रेतः सिञ्चति तद्भूय एव भवती"ति ।

टी० "वेत्थे"ति, प्रश्नगतप्रकारस्य प्रतिवचनान्ते निगमनान्मध्येऽपि तत्प्रकार एवोपपादितः स्यादित्यर्थः । अपामेवोपपद्यते न तु मनोवृत्तिविशेषस्य, तस्य सोमाकारपरिणामं प्रत्युपादानत्वायोगादित्यभिप्रायः ॥ मू· अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः, ॥ ६ ॥ अस्मिन्नेव वाक्ये-महावाक्य इत्यर्थः । सोमराजानः दिव्यदेहा इत्यर्थः । अस्मिन् वाक्ये ऽयमर्थ इत्यत्राह "अथ य इम" इति, पूर्तं खातादिकर्म इष्टापूर्तं दत्तं चेत्युपासते उक्तप्रकारेणानुतिष्ठन्ति, भवतिः प्राप्तिवाची परस्मैपदत्वन्तु छान्दसम् । यद्वा सत्तार्थोभवतिरेवोपसर्गवशात् प्राप्त्यर्थः । यावत्सम्पातमिति सम्पात-शब्देन कर्माभिधीयते । संपतत्यनेन स्वर्गमिति व्युत्पत्त्या तद्भूय एव भवति–तद्योगी भवतीत्यर्थः ॥

सू० अत्रापि द्युलोकाग्नौ श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवतीति तदेकार्थत्वाच्छ्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्तमिति गम्यते, देहस्य जीवविशेषणैकस्वरूपस्य वाचकः शब्दो विशेष्ये

१ योयोरेतः सिञ्चतीत्येतावन्मात्रं पुस्तकान्तरे ।

जीव एव पर्यवस्यति, अतः सम्परिष्वक्तो जीवो यातीत्युपपद्यते । ननु च "तं देवा भक्षयन्ती"ति देवैर्भक्ष्यमाणत्ववचनात्सोमो राजेति न जीव उच्यते, जीवस्यानदनीयत्वात्, तत्राह–

## सू० भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

वा–शब्दश्चोद्यं व्यावर्त्तयति इष्टादिकारिणोऽनात्मवित्त्वात्स देवानां भोगोपकरणत्वेनेहामुत्र च वर्तते इष्टेष्टापूर्त्तादिना तदाराधनं कुर्वन्नुपकरोति, आराधनप्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति "यथा पशुरेवं स देवानाम्" इत्यनात्मविदो देवानामुपकरणत्वं दर्शयति श्रुतिः, स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिमनात्मविदां च देवभोग्यत्वं दर्शयति "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति, । अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्, अतस्तद्भाक्तं, तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते "न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ती"ति तस्माद्भूतसूक्ष्मैः सम्परिष्वक्तो जीवो रंहतीति सिद्धम् । तदन्तरप्रतिपत्त्यधिकरणं समाप्तम् ॥

टी० अत्रापीति, उभयत्र सोमराज–शब्देन प्रत्यभिज्ञानादेकार्थ्यम् अस्फुटजीवसम्बन्धस्य पूर्ववाक्यस्य स्फुटजीवसम्बन्धेनोत्तरवाक्येनैकार्थ्या-

द्युक्त एवार्थ इत्यर्थः । श्रद्धासोमादिशब्दैस्तत्तदवस्थदेहविशिष्टवचनं लाक्षणिकमित्यत्राह "देहस्ये"ति, अनन्तरसूत्रशङ्कामाह "ननु चे"ति सू॰ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति, ॥७॥ इह चामुत्र च भोगोपकरणत्वं विवृणोति "इहे"ति अमुत्र तत्सेवकत्वात् तद्भोगोपकरणत्वं सेवमानस्य तस्य दर्शनमेव तेषां भोगः, "त एतदेवामृतं दृष्ट्वा तृप्यन्तीति न्यायात्, अधिकरणार्थमुपसंहरति "तस्मा"दिति, ॥ परे तु जीवस्याद्भिः सह गमनं वदन्त एव तासामपामग्निहोत्राहुतिरूपत्वं वदन्ति आहुतीनां क्षीरादिद्रवद्रव्यभूयस्त्वात् श्रद्धापूर्वकानुष्ठेयतया श्रद्धा-शब्दवाच्यत्वोपपत्तेः, तथा वाजसनेयके षट्प्रश्नब्राह्मणे "ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षमाहवनीयं कुर्वाते वायुं समिधं मरीचिमेव शुक्लामाहुतिं ते अन्तरिक्षं तर्पयतस्ते तत उत्क्रामतस्ते दिवमाविशतस्ते दिवमाहवनीयं कुर्वाते आदित्यं समिधं चन्द्रमसमेव शुक्लामाहुतिं ते दिवं तर्पयतस्ते तत आवर्तेते ते इमामाविशतस्ते इमामाहवनीयं कुर्वाते" इत्यारभ्य "ते पुरुषमाविशतस्ते स्त्रियमाविशतः यतस्ततः पुत्रो जायत" इत्यादिनैकार्थ्याच्चेति. तदिदमपेशलं शब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावात्, न हि श्रद्धाशब्दाप्शब्दयोरन्यतरनिर्देशः । न च द्युपर्जन्यादिक्रमः, अन्तरिक्षद्युपृथिव्यादिक्रमप्रतीतेः । किञ्च देवताविग्रहतदागमनादीनां देवताधिकरणे निर्णीतत्वात् अग्न्यभिरूढानां देवताभिरुपभुक्तानां क्षीरादीनामुत्क्रान्तजीवपरिष्वञ्जकत्वमयुक्तम् । अत्र चान्तरिक्षं तर्पयतो दिवं तर्पयत इत्याहुत्योरूर्ध्वलोकवर्तिनां तृप्तिहेतुत्वावगमाच्च पूर्वरूपेण जीवपरिष्वञ्जकत्वं नोपपद्यते, ।॰ननु चाहुत्योरेकदेशो देवताभिर्भुज्यते तदेकदेशो जीवान् परिष्वङ्क्ते देवतोपकरणभूतजीवशरीररूपपरिणामद्वारा देवतातृप्तिहेतुतया तर्पयत इत्येतदुपपद्यत इति नैवम् अश्रुतविभागकल्पनाप्रसङ्गात्, तथा कल्पितविभागस्य एकदेशस्य जीवदशायां प्रक्षिप्तस्य यावन्मरणमवस्थानकल्पनप्रसङ्गात्, तथा स्वरूपेण देवतातृप्तिहेतुत्वे सम्भवति जीवशरीरद्वारकत्वस्य कल्पनानुपपत्तेश्च, पटैकदेशे पटशब्दस्येवाहुत्येकदेशे आहुति-शब्दस्यामुख्यत्वाच्च ॥ अन्यैस्तु चन्द्रत्वापत्तिदेवताभक्ष्यत्वयोः

स्वरूपेणानुपपन्नत्वादद्भिः सह रंहतीति पूर्वपक्षं कृत्वा प्राप्यस्य चन्द्रस्य सोमराजत्वप्रतिपादनादन्नत्वस्य भाक्तत्वाच्च पृथग्[1]गच्छन्तीति सिद्धान्तः कृतः, अन्तिमसूत्रव्यतिरिक्तानि सूत्राणि पूर्वपक्ष[2]सूत्राणि व्याख्यातानि आपश्चाहुतिरूपा जीवस्य भूतसूक्ष्ममयदेहाप्यायिका अभिमताः, आसामपां षट्प्रश्नब्राह्मणोक्ताहुतिरूपत्वं तावच्छब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावादयुक्तं षट्प्रश्नब्राह्मणेऽपि तर्पयत इति देवतातृप्तिहेतुत्वेन श्रुतानामाहुतीनां वर्षादिपुरुषवचस्त्वपर्यन्तावस्थाविशेषानुपपत्तेश्चायुक्तम् आहुति—शब्दस्य तदेकदेशवाचित्वमश्रुतविभागकल्पनामुख्यत्वाभ्यामयुक्तमित्युक्तम् । अतो देवतातृप्तिमुखेन शुभतरजन्महेतुत्वपर्यन्ताहुतिवैभवानुसन्धानं तत्र प्रतिपाद्यते । न तु देहारम्भिका आप इति युक्तमभ्युपगन्तुं, भवतु वा विभाग आहुतीनां देहारम्भिका आपश्चाहुत्येकदेशरूपाः सन्तु तथाऽपि जीवस्य ताभिः सह रंहणनिषेधो न सिद्धान्तीकर्त्तव्यः "पृथिवी वाव गौतमाग्नि"रित्यारभ्य "तस्मिन्नेतस्मिन्नग्नौ देवाः वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति तस्या आहुते रेतः सम्भवती"ति पृथिव्याद्यग्नित्रयविषयाणान्तिसृणां वर्षान्नरेतोरूपाहुतीनामिह श्रुतत्वाद्धूमाभ्रमेघवर्षव्रीह्यादिषु सानुशयजीवसंसर्गस्योपरितनश्रद्धाधिकरणेषु भवन्मतेऽपि सिद्धत्वेनाहुतित्रयस्य जीवसंसृष्टत्वात्, श्रद्धासोमाख्याहुतिद्वयेऽपि जीवस्य वियुक्तत्वे तदनन्तरमप्सु तस्य संसर्गे च प्रमाणाभावात्तदुभयकल्पने गौरवात्, कल्पकस्य च कस्यचिदभावादप्प्रायन्यायेनाद्याहुतिद्वये ऽपि जीवसंसर्गकल्पनस्यैव युक्तत्वाच्च । किञ्चापः पुरुषवचस इति पुरुषवचस्त्वमपां श्रूयते, "तस्या आहुतेर्गर्भः सम्भवती"ति पञ्चम्या आहुतेर्गर्भसम्भवश्च श्रूयते, समानप्रकरणे तस्या आहुत्यैव पुरुषः सम्भवतीति श्रूयते, पुरुष—शब्दो न शरीरमात्रपरः किन्तु शरीरिणि चेतने स्वरस इत्यविगीतं वर्षाद्याहुतित्रये चेतनसंसर्गो भवद[3]भिमतश्च आपः पुरुषवचस इत्युक्ते सत्यपुरा-

[1] पृथग् गच्छतीति पा० ।

[2] पूर्वपक्षाणि व्याख्यातानीति पा० ।

[3] भवदभिहितश्चेति पा० ।

ब्दश्च पुरुषशब्दसमानाधिकरणः प्रतीयते अयं देवदत्तसंज्ञ इत्युक्ते इदं–शब्ददेवदत्तशब्दयोः सामानाधिकरण्यं हि प्रतीयते । अयं देवदत्त इति, एवं चापुशब्दपुरुषशब्दयोः सामानाधिकरण्यं चापुशब्दस्य चेतनोपस्थापकत्वे सिध्येत्, भिन्नविशेष्यनिष्ठयोः पदयोरिदंदेवदत्तशब्दयोरिव सामानाधिकरण्यानुपपत्तेः, न हि इदा देवदत्तवचस इति वक्तुं न्याय्यं, तस्मादपुशब्दवाच्यं वस्तु यत्र यत्र होतव्यं श्रुतं तत्र तत्र यया कयाचिद् वृत्त्या जीवस्योपस्थापितत्वमकामेनापि स्वीकार्यं, सामानाधिकरण्यप्रतीति प्राबल्यात्, यदा त्वपुशब्द एव जीवशरीरभूतभूतसूक्ष्मपरः तदा तस्य देवमनुष्यादिशब्दवच्चेतनविषयत्वं स्वरसतरम्, अतो जीवदेहभूतानामपां जीवस्य च पृथग्गमनमयुक्तम् एवं सहगमने सति प्राणोत्क्रमणविषयश्रुत्यन्तरानुग्रहश्च स्यात्, सोमराजशब्दप्रत्यभिज्ञानं च घटते । यदुक्तमाकाशाच्चन्द्रमसमेष सोमो राजेति प्राप्यस्य सोमराजत्वमुच्यते न तु प्राप्तुरिति तदयुक्तं वाक्यवैयर्थ्यप्रसङ्गात्, प्रसिद्धेन चन्द्रमःशब्देन पूर्वनिर्दिष्टस्य पुनस्तत्पर्यायाभ्यां सोमराजशब्दाभ्यां निर्देशे किं फलं पूर्वनिर्दिष्टप्रत्यभिज्ञाने तु प्रयोजनवत्त्वं स्फुटं श्रद्धाहुतिसम्भूतस्य सोमराजशब्दवाच्यत्वं चन्द्रप्राप्तिदशायामित्यस्यार्थस्य ज्ञाप्यत्वात् । किञ्च चन्द्रमसमभिसम्भवन्तीत्यभिसम्भवनक्रियाकर्तृतया प्रथमनिर्दिष्टः प्राप्ता जीव एव इति सर्वनामपदेन परामर्शमर्हति, चन्द्रमसस्तु द्वितीयानिर्दिष्टस्य परामर्शो न स्वरसः । ननु ते धूममभि सम्भवन्तीति वाजसनेयके बहुवचननिर्दिष्टानां प्राप्तॄणामेष इत्येकवचनेन परामर्शोऽनुपपन्नः चन्द्रमसस्तु उपपन्न इति चेन्न कृत्स्नवाक्यवैयर्थ्यादपि विभक्तिमात्रस्य क्लिष्टार्थताऽऽश्रयणेन जात्यभिप्रायत्वमात्रकल्पनोपपत्तेः प्रकरणे विभक्त्यर्थनिर्बन्धाभावदर्शनाच्च "तद्देवानामन्नं तं देवा भक्षयन्ती" ति बहुवचननिर्दिष्टोऽभिसम्भविता पुनरेकवचनेन निर्दिश्यते, न चैतदपि वाक्यं चन्द्रविषयं ते चन्द्रं प्राप्यान्नं भवन्तीति वाजसनेयके प्राप्तुरन्नत्वाभिधानात्, तथा "वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवती" त्येकवचनेन निर्दिश्य "त इमे व्रीहियवा ओषधि-

१ तु इत्त इति पा° ।

नस्पतयस्तिलमाषा जायन्त" इत्युक्त्वा यो यो ह्यन्नमत्ति यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवतीत्येकवचनेन निर्दिश्यते, अतो विभक्त्यनादरेण वाक्यवैयर्थ्यपरिहारो न्याय्यः। ननु पञ्चाग्निविद्यायामपि सोमराजशब्दश्चन्द्रविषय इति चेत् न तस्या आहुतेः सोमो राजा सम्भवतीत्युत्पत्तिश्रवणात्कलावृद्धिरेवोत्पत्तिरिति चेन्न अस्वरसत्वात्, सम्भव-शब्दस्याप्यायनवाचित्वाभावाच्च। किञ्च "पर्जन्यो वाव गौतमाग्नि" रित्यारभ्य "तस्मिन्नेतस्मिन्नग्नौ देवाः सोमराजानं जुह्वती" ति सोमराजस्य पर्जन्ये हुतत्वश्रवणाच्चन्द्रस्य पर्जन्ये प्रविलयाभावाच्च द्वितीयाहुतिविषयसो[1]मराजशब्दस्य चन्द्रविषयत्वमयुक्तम्। न चैवं सति पितृयाणवाक्यस्थसोमराजशब्दस्य प्रयोजनवत्त्वेयेष्टादिकारिविषयत्वे तत्प्रत्यभिज्ञानादत्र सोमराजशब्दस्येष्टादिकारिविषयत्वम् अत्रत्यसोमराजशब्दस्येष्टादिकारिविषयत्वे तत्प्रत्यभिज्ञापनेन प्रयोजनवत्तया पितृयाणवाक्यस्थसोमराजशब्दस्येष्टादिकारिविषयमित्यन्योन्याश्रयणाचयुक्तमिति चेन्न पितृयाणवाक्यस्थसोमराजशब्दावैयर्थ्यस्य पूर्वसोमराजशब्दस्येष्टादिकारिविषयत्वनिर्धारणानपेक्षत्वात्पूर्वसोमराजशब्दस्य चन्द्रव्यतिरिक्तविषयतामात्रज्ञानमेव ह्यपेक्षितं, तस्य चन्द्रव्यतिरिक्तविषयत्वं च चन्द्रस्य सम्भवहोम्यत्वानुपपत्त्यैव सिद्धं चन्द्रव्यतिरिक्तश्चार्थो घटः पटो वा दंशो मशको वा यत्किञ्चिद्भवतु तस्य सोमराजशब्दग्राह्यत्वं चन्द्रप्राप्तिदशायामित्येतावज्ज्ञापनेन उत्तरवाक्यावैयर्थ्यं सिध्यति, एवं प्रयोजनवदुत्तरवाक्यस्थसोमराजशब्दस्य प्राप्तृविषयतया इष्टादिकारिविषयत्वे सिद्धे तदैकार्थ्येन पूर्वश्रुतोऽपि द्वितीयाहुतिविषयः सोमराजशब्दः तत्पूर्वमेव चन्द्रव्यतिरिक्तविषयतयाऽवधारित इष्टादिकारिरूपविशेषयो ज्ञायत इति नान्योन्याश्रयः। अथवा प्राप्तुश्चन्द्रसादृश्यज्ञापनं वाक्यफलं तच्चैतच्छब्दस्य सोमराजपदसामानाधिकरण्ये न भवति, अग्नि-शब्दस्य सामानाधिकरण्येन माणवकस्याग्निसादृश्यज्ञापनवत्तच्च सोमराज-शब्दस्य चन्द्रव्यतिरिक्तविषयत्वे सिध्य-

१ सोमशब्दस्येति पा०।

ति, न हि स्वस्य स्वेन सादृश्यं ज्ञाप्यम्, अतः सोमराजशब्दस्य न प्राप्यविषयत्वम् यत्तु समानप्रकरणे ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्तीति सोमाद्युद्व्यपदेश इष्टादिकारिणां प्रतीयते, अतस्तेषां न सोमराजशब्दाभिलप्यत्वमित्युक्तं, तदप्यनेन परिहृतं छान्दोग्यस्थस्य सोमराजशब्दस्येष्टादिकारिविषयतानिर्वाहणपरत्वाद्वाजसनेयकवाक्यस्य, न हि वृत्त्यन्तरे सम्भवत्येकस्य शब्दस्य बहुष्वर्थेषु शक्तिभेदकल्पनं न्याय्यम्, अत इष्टादिकारिविषयसोमराजशब्दस्य तेषु कथं वृत्तिरित्यपेक्षायां यथा सोमं राजानमिति दृष्टान्तीकरणेन चन्द्रमादृश्यात् सोमराजशब्दप्रयोगः, सादृश्य चामृतयरूपत्वदेववर्गोपयोगयोग्यत्वलक्षणमिति ज्ञायते आप्यायस्वेति वाक्यस्यायमर्थः–यथाऽऽप्यायस्वापक्षीस्वेति सोमराजनं भक्षयन्ति एवमेनांस्तत्र भक्षयन्तीति तेनामृतमयदेहत्वं देववर्गोपयोगार्हत्वं च दर्शितं भवति, अतो भक्षणस्य भाक्तत्ववचनमप्युपपद्यते अतः पृथगच्छतीति राद्धान्तोऽनुपपन्नः ॥ तदन्तरप्रतिपत्त्यधिकरणं समाप्तम् ॥

कृतात्ययाधिकरणम् ।

## सू० कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

भू० केवलेष्टापूर्त्तदत्तकारिणां धूमादिना पितृयाणेन पथा गमनं कर्मफलावसाने पुनरावर्त्तनं चाम्नातं "यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्त" इति तत्र प्रत्यवरोहन् जीवः किमनुशयवान्प्रत्यवरोहति ? उत ने?ति संशय्यते, किं युक्तं, कर्मणः कृत्स्नस्योपभुक्तत्वान्नानुशयवानिति प्राप्तम् । अनुशयो ह्युपभुक्तशिष्टं कर्म ॥

टी० सू० कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ विषयसिद्ध्यर्थमवान्तरसङ्गत्यर्थं चाह "केवले"ति, यावत्संसारं प्रकृति.

सम्बन्धोऽवर्जनीय इत्युक्तं तद्धेतुभूत[1]धर्मसम्बन्धोऽपि अवर्जनीय इत्युच्यत इति सङ्गतिरित्यर्थः । अमुष्माल्लोकाद्विवर्त्तमानः किं सानुशयो निवर्त्तते? उत निरनुशय? इति चिन्ता यावत्संपातं प्राप्यान्तमिति च वाक्यं किं सानुशयस्य निवर्त्तनं विरुणद्धि ने? ति संपातकर्म-शब्दौ किं कर्ममात्रपरौ? उत फलदानप्रवृत्तकर्मपरौ? किं तद्य इह रमणीयचरणा इत्यादिवाक्यं संपातादिशब्दस्य फलप्रदानप्रवृत्तकर्मपरतामवगमयति? ने? ति अत्र किं चरणशब्द? आचारपरः उत सुकृतदुष्कृतपर? इति, यदा स आचारपरः, तदा तेन वाक्येन संपातादिशब्दस्य फलप्रदानप्रवृत्तकर्मपरत्वानवगमा-द्यावत्संपातमित्यादिवाक्यस्य सानुशयनिवर्त्तनविरोधितया निरनुशयो निवर्त्तत इति स्यात्, यदा चरण-शब्दः सुकृतदुष्कृतपरः तदा तद्य इह रमणीयचरणा इत्यादिवाक्यैकार्थ्येन संपातादि-शब्दस्य फलदानप्रवृत्तकर्म-परत्वावगमद्यावत्संपातमित्यादिवाक्यस्य सानुशयनिवर्त्तनाविरोधितया सानुशयो निवर्त्तत इति सिद्ध्यति । कृतात्यये-कृतस्य [2]कर्मणोऽनुभवेन विनाश इत्यर्थः । अनुशय-शब्दं व्याचष्टे "अनुशयो ही"ति,

सू० तच्च कृत्स्न[2]फलभोगे सति नावशिष्यते, यावत्संपातमुषित्वेति वचनात्कृत्स्नोपभोगश्च श्रूयते, संपतन्त्यनेन स्वर्गलोकमिति संपातः कर्मोच्यते, श्रुत्यन्तरं च "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणा" इत्येवं प्राक्तेऽभिधीयते अनुशयवान्प्रत्यवरोहतीति, कुतः दृष्टस्मृतिभ्यां-श्रुतिस्मृतिभ्यामित्यर्थः, श्रुतिस्तावत् "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् । ब्राह्मणयोनिं क्षत्रि-

---

१ तद्धेतुकर्मसंबन्धोऽप्यवर्जनीय इति पा० ।

२ कृत्स्नफलोपभोग इति पा० ।

ययोनिं वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्या-शो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा [1]शूकर-योनिं वा चण्डालयोनिं वे"ति प्रत्यवरूढान्प्रतिश्रूयते "अमुष्माल्लोकात्प्रत्यवरूढेषु रमणीयकर्माणो रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते कपूयचरणाः कुत्सितक-र्माणः कुत्सितां श्वशूकरचाण्डालादियोनिं प्रतिपद्यन्त इति प्रत्यवरूढानां पुण्यपापकर्मयोगं दर्शयति । स्मृति-रपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनु-भूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्त-सुखमेधसो हि जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्य-न्ती"ति तथा ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्चक्रवदुभयोर्लोकयोः सुख एव वर्त्तत" इति ॥

टी० तत्त्वेति, तच्छब्दः कर्ममात्रपरः । यद्वा नावशिष्यते अव-शिष्टं कर्म न सम्भवतीत्यर्थः । यावत्संपातमित्यस्य यावत्या[2]तमुषित्वे-त्यर्थश्चेद्वाक्यशैयर्थ्यमित्यभिप्रायेणाह "संपतन्ती"ति, एवं प्राप्त इत्यादि, तृष्ट-शब्देन प्रत्यक्षश्रुतिर्विवक्षिता अभ्याश इति पदं विश इतिवत्प्रथमा-बहुवचनम् अभ्याङ्पूर्वादशूङ् व्याप्ताविति धातोरेवं रूपं भवति, य इहा-भ्याशः-अभ्यागन्तारः ते रमणीयचरणा यत्साधुकर्मकारिणो यदि ते रमणीयां योनिमापद्येरन्नित्यर्थः । एवमुत्तरत्र द्रष्टव्यम् । अभ्याश इति पदं प्रत्यवरूढवाचि । स्मृतिरपीति । गौतमापस्तम्बवचनमुदाहृतम् ।

---

१ शूकरयोनिमिति दन्त्यघटितोऽपि पाठः ।

२ यावत्पतनमुषित्वेति पा० ।

सू० यावत्सम्पातमिति फलदानप्रवृत्तकर्मविशेषविषयं, यत्किञ्चेह करोत्ययमितीदमपि तद्विषयमेव अभुक्तफलानामकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः । अतोऽमुं लोकं गताः सानुशया एव यथेतमनेवं च पुनर्निवर्त्तन्ते, आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्त्तन्त इत्यर्थः । आरोहणं हि धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण । अवरोहणन्तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेण तथाकाशावरोहणात् यथेतं वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम् ॥

## सू० चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

रमणीयचरणाः कपूयचरणा इति न चरण-शब्देन ।

टी० यावत्सम्पातमिति फलप्रदानप्रवृत्तकर्मविशेषविषयमिति, अत्र किं स्वर्गकामनयाऽनुष्ठितस्यैव कर्मण एकदेशः फलदानाप्रवृत्तोऽप्यस्तीति सोऽनुशय इति फलदानप्रवृत्त-शब्देन तद्व्यवच्छेदः? उत स्वर्गार्थकर्मव्यतिरिक्तमैहिकफलं कर्मान्तरमप्रवृत्तफलमनुश्य इति तद्व्यवच्छेदो विवक्षितः? उच्यते कर्मान्तरमनुशयः, न तु स्वर्गार्थकर्मण एकदेश इति, फलदानप्रवृत्तकर्मविशेषविषयमिति हि भाष्यं, न तु कर्मांशविषयमिति वक्ष्यति च दृष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वादिति स्वर्गार्थकर्मैकदेशस्य तत्राभुक्तत्वं च स्वर्गकामो यजेतेति श्रुतिस्वारस्यविरुद्धं, यत्र तु स्वर्गनरकाद्युपभुक्तकर्मशेषेण योन्यन्तरप्राप्तिर्वचनसिद्धा तत्रानेकशरीरारम्भफल-

कल्यमेकस्य कर्मण इति वचनबलादवगन्तव्यं, तस्मादामुष्मिके कर्मजात उपभुक्ते ऽवशिष्टमैहिकफलं कर्मान्तरजात मनुशयस्तद्वन्तोऽवरोहन्तीति, श्रुत्यर्थोपपत्तिमाह "अभुक्ते"ति पुण्यकर्मणो मुमुक्षुपेक्षया पापस्थानीयस्य प्रायश्चित्तं ब्रह्मविद्या यथेतं–यथागतम्, इण् गताविति धा'तोः, यथेतमनेवमिति पदद्वयस्यार्थमाह "आरोहणे"ति, । ननु यथेतमिति व्याहृतम् आरोहावरोहयोः क्रमवैपरीत्यात्प्रतिलोमक्रमे यथेतमिति विवक्षिते-ऽप्यनेवमिति व्याहृतमित्यत्राह "आरोहणं ही"ति, ॥ सू· चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ वेदे चेति, पृथङ्निर्देशो भिन्नार्थत्वकृत इत्यर्थः । अनवद्यानि कर्माणीति यागाद्युच्यते यान्यस्माकं सुचरितानीत्याचार उच्यत इति पूर्वपक्षिणोऽभिप्रायः ॥

भू० पुण्यपापरूपं कर्माभिधीयते, चरण–शब्दस्य लोकवेदयोराचारे प्रसिद्धेः, लौकिकाः खलु चरणमाचारः शीलं वृत्तमिति पर्यायानभिमन्यन्ते, वेदे च "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि. नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणी"ति चरण कर्मणी भेदेनोपदिश्येते, अतश्चरणाच्छीलाद् योनिविशेषप्राप्तिर्नानुशयादिति चेन्न चरणश्रुतिः कर्मोपलक्षणार्थेति हि कार्ष्णाजिनिराचार्यो मन्यते, केवलादाचारात्सुखदुःखप्राप्त्यसम्भवात्,सुखदुःखे हि पुण्यपापकर्मफले॥

सू० आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

भू० एवं तर्ह्यफलत्वादाचारस्य स्मृतिविहितस्यानर्थक्यमिति

१ धातुरिति पा· ।

चेन्नाव तदपेक्षत्वात् पुण्यस्य कर्मणः, आचारवत एव पुण्यकर्मस्वधिकारः। "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु[1] आचारहीनं न पुनन्ति वेदा इत्यादिवचनेभ्यः अतश्चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्रायः॥

## सू० सुकृतदुष्कृते एवेति तु बादरिः॥ ११॥

पुण्यं कर्माचरति पापं कर्माचरतीति कर्मणि चरतेः प्रयोगात्पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन गोबलीवर्दन्यायेनोपपत्तेः, मुख्ये सम्भवति न लक्षणा न्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये इति बादरिराचार्यो मन्यते, अत्र च बादरिमतमेव स्वमतम्, आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकारसंपादनं फलमिति तु स्वीकृतम्, अतः सानुशया एव प्रत्यवरोहन्ति॥ कृतात्ययाधिकरणं समाप्तम्॥

टी० पुण्यपापरूपकर्मफले इति, आचाराङ्गकानुष्ठितपुण्यापुण्यफले इत्यर्थः। सू० आनर्थक्यमिति चेन्न तदपेक्षत्वात्, एतत्सूत्रार्थं पूर्वसूत्रार्थेन सङ्गमयति "अत" इति, सू० सुकृतदुष्कृते एवेति तु बादरिः, आचार-शब्दस्य साधारण्यं दर्शयति "कर्मणी"ति, कर्मणि चरतेः प्रयोगात् तदनुष्ठाने प्रयोगादित्यर्थः। पृथङ्निर्देशस्यान्यथासिद्धिमाह "पृथङ्निर्देशस्य चे"ति, अनवद्यानि कर्माणीति प्रत्यक्षश्रुतिसिद्धं कर्मोक्तम् अस्माकं सुचरितानीत्याचारानुमितश्रुतिसिद्धं कर्मोक्तमित्यर्थः। कार्ष्णाजिनिमताद्वैषम्यमाह

१ सर्वकर्मस्विति पा०।

"मुख्य"इति, कार्ष्णाजिनिमते स्वीकृतां ममाह "आचारानुमिते"ति, अधिकरणार्थमुपसंहरति "अत"इति, कृतात्ययाधिकरणं समाप्तम् ॥

अनिष्टादिकार्यधिकरणम् ।

**सू० अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥**

भा० केवलेष्टापूर्त्तदत्तकारिणश्चन्द्रमसङ्गत्वा सानुशया एव निवर्त्तन्त इत्युक्तम्, इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति नेति चिन्त्यते? ये विहितं न कुर्वन्ति ये च निषिद्धं कुर्वन्ति ते उभयेऽपि पापकर्माणोऽनिष्टादिकारिणः, किं युक्तं तेऽपि चन्द्रमसं गच्छन्तीति, कुतः, तेषामपि हि तद्गमनं श्रुतं "ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्यविशेषेण सर्वेषामेव गतिश्रवणात् एवं तर्हि सुकृतदुष्कृतकारिणोरुभयोरप्यविशिष्टैव गति स्यात्, नेत्याह—

टी० सू० अनिष्टादिकारिणामपि च श्रुतम्, अवान्तरसङ्गतिमाह "केवले"ति, प्रकृतिसम्बन्धतद्धेतुकर्मसम्बन्धयोरवर्जनीयत्वमुक्तं, तत्र कर्मसम्बन्धेऽपि साधुकर्मसम्बन्धनियमो नास्तीत्युच्यत इति सङ्गतिरिति भावः । किमनिष्टादिकारिणो यमयातनामनुभूय चन्द्रमसङ्गत्वा निवर्त्तन्ते? उत ने? ति, ये वै केचेति वाक्यं तेषां चन्द्रप्राप्तिमवगमयति? ने? ति, किमत्र सर्व—शब्दः प्रेतमात्रविषयः? उतेष्टादिकारिप्रेतविषय? इति, किं पितृयाणगमनमनिष्टादिकारिणामपि? उतेष्टादिकारिणामेवे? ति किमथ य इमे ग्राम इत्युपक्रमः पितृयाणस्येष्टादिकारिविषयतामवगमयति? नेति, किमनिष्टादिकारिणां पञ्चमाहुतिमन्तरेण पुरुषत्वसंपत्तिरस्ति? नेति किं

तृतीयस्थानमुपन्यस्योक्तं लोकासम्पूर्णवचनं तृतीयस्थानस्य पञ्चमाहुत्यनपेक्षतां पुरुषत्वनिष्पत्तेरवगमयति ? ने ? ति, यदा नावगमयति तदा पुरुषत्वसंपत्तेः पञ्चमाहुतिसापेक्षत्वेन ये इमे ग्राम इत्युपक्रमस्य पितृयाणस्येष्टादिकारिविषयस्यानवगमकतया पितृयाणस्य सर्वसाधारणत्वेऽनिष्टादिकारिणामपि प्राप्तत्वात् सर्वे गच्छन्तीति सर्व-शब्दस्य प्रेतमात्रविषयतया "ये वै केचेत्यादिवाक्येन सर्वेषां चन्द्रप्राप्त्यवगमादनिष्टादिकारिणामपि यातनानुभवानन्तरं चन्द्रमसं गत्वा निवर्त्तन्त इति, यदा परलोकासम्पूर्णवाक्यं तृतीयस्थानस्य पञ्चमाहुत्यनपेक्षतां देहनिष्पत्तेरवगमयति तदा पुरुषत्वसंपत्तेः पञ्चमाहुत्यनपेक्षतया य इमे ग्राम इत्युपक्रमस्यापि पितृयाणस्य इष्टादिकारिविषयत्वावगमकतया पितृयाणस्य सर्वसाधारणत्वाभावादनिष्टादिकारिणामप्राप्तत्वात् सर्वे गच्छन्तीति सर्व-शब्दस्येष्टादिकारिप्रेतविषयतया ये वै केचेत्यादिवाक्येन सर्वेषां चन्द्रप्राप्त्यनवगमादनिष्टादिकारिणो न चन्द्रमसं गच्छन्तीति सिध्यति, इष्टादिशब्देन इष्टापूर्त्ते उच्येते, अत्र देहानारम्भस्य पञ्चमाहुत्यपेक्षारूपश्रुत्यर्थापत्तिश्चाभिप्रेता ॥ अनन्तरसूत्रशङ्कामवतारयति "एवं तर्ही"ति, अविशिष्टैव गतिः स्यात्, पापस्य निष्फलत्वं स्यादित्यर्थः ॥

## सू० संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

भा० तु-शब्दः शङ्कां व्यावर्त्तयति, इतरेषामनिष्टादिकारिणां चन्द्रारोहावरोहौ संयमने यमशासने तत्प्रयुक्तयातना अनुभूयैव नान्यथा, कुतः तद्गतिदर्शनात्, दृश्यते हि पापकर्मणां यमवश्यतया तद्गमनम् "अयं लोको नास्ति न पर इति मानी पुनःपुनर्वशमापद्यते मे" वैवस्वतं संयमनं जनानां यमं राजान"मित्यादिषु ॥

**सू० स्मरन्ति च ॥ १४ ॥**

स्मरन्ति च सर्वेषां यमवश्यतां पराशरादयः "सर्वे चैते वशं यान्ति यमस्य भगवन् कले"त्यादिषु ॥

**सू० अपि सप्त ॥ १५ ॥**

पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति ॥ ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिरत आह—

**सू० तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥**

तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः, अतोऽनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चाच्चन्द्रारोहावरोहौ स्त इति प्राप्त उच्यते ।

**सू० विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥**

तु-शब्दः पक्षव्यावृत्त्यर्थः अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्तीत्येतन्नोपपाद्यते, कुतः विद्याकर्मणोरिति, विद्याकर्मणोः फलभोगार्थत्वाद् देवयानपितृयाणयोः ।

टी० सू· संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्, संयमन इति निमित्ते सप्तमी, यमाज्ञयेत्यर्थः, अयं लोको नास्ति न पर इति मानी · · · अत्रामुत्र च सुखं नास्तीत्यर्थः, तद्गतिदर्शनादित्यत्रोदाहृते वाक्ये । पापफलानुभवाश्रयत्वेनोक्तं तद्वश्यमित्याशङ्कायामाह सू· स्मरन्ति च, पूर्वसूत्रे प्रकृतेष्वारोहादिषु संवादकस्मृतिविषयांश्च दर्शयति "यमवश्यता"मिति, सू· अपि सप्त, नरकविषयवचनानां प्रसिद्ध्यतिशयादनुपादा-

नम् ॥ अनन्तरसूत्रशङ्कामाह "नन्वि"ति, सप्तसु लोकेषु स्थानेष्वित्यर्थः यमसदनप्राप्तिवचनानि पुराणादिषु पठ्यन्ते तद्विवक्षयेयं शङ्का । सू॰ तत्रापि तद्व्यापारादविरोधः, व्यापारः प्रशासनरूप इति दर्शयति, यमाज्ञयेति यमसदननरकप्राप्तौ क्रमादविरोध इत्यर्थः । पूर्वपक्षमुपसंहरति "अत"-इति, सू॰ विद्याकर्मणोरिति तु प्रकृतत्वात्, फलभोगार्थत्वादिति सम्बन्धसामान्यविषया षष्ठी तादर्थ्यपर्यवसायिनी, तादर्थ्यं च तत्फलभोगार्थत्वम् इतिश्च हेतावित्यर्थः ॥ विद्याप्रसङ्गः किमर्थं इत्यत्राह—

भा॰ एतदुक्तं भवति अनिष्टादिकारिणां यथा विद्याविधुरत्वाद्देवयानेन पथा गमनं न सम्भवति तद्वदेवेष्टापूर्तदत्तविधुरत्वात्पितृयाणेन चन्द्रगमनमपि न सम्भवतीति, देवयानपितृयाणयोर्विद्याविषयत्वं पुण्यकर्मविषयत्वं च कथमवगम्यत इति चेत्, प्रकृतत्वात्तयोः प्रकृता हि देवयाने विद्या, पितृयाणे च कर्म, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते इत्युक्त्वा तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽह-रि"त्यादिना देवयानवचनात् । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युक्त्वा ते धूममभिसम्भवन्तीत्यादिना पितृयाणवचनाच्च ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति इत्यपि वचनं ये इष्टादिकारिणस्ते सर्वे इति परिणेयम् । ननु पापकर्मणां चन्द्रगमनाभावे पञ्चमाहुत्यसम्भवात् शरीरारम्भ एव नोपपद्यते "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति शरीरारम्भः श्रूयते, सा चाहुतिश्चन्द्रप्राप्तिपूर्विकेति दर्शितम्, अतः शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहौ अवश्याभ्युपेत्यावित्यत आह—

रिति' । अयमपि बहुव्रीहिः, अत्रापि पुंवत्पूर्ववत् । 'कौमारेत्यादि' । कौमारेति निपात्यते ऽपूर्ववचने, किमत्र निपात्यते कुमार्या अण् विधीयते, कदा, ऽपूर्वत्वं यदा तस्याः, यदा कुमार्या अपूर्वत्वं न पुंसस्तदेत्यर्थः । 'कुमार्यां भवतीति वेति' । 'अनेन योगः प्रत्याख्यायते, यः कुमारीमुपपन्नस्तस्यामसौ भवति तदायत्तत्वाद्धर्माचरणादेस्ततश्च तत्र भव इत्येवाण् सिद्धः, यद्यपि वाच्यायाप्यपि कुमार्यां भवति तथापि सत्यभिधाने तत्र भव इति भवत्येव, सूत्रारम्भेपि हि नासौ दण्डवारितः, एवं तावत्कौमार इति सिद्धं स्त्रियामपि सिद्धं, कथं, कौमारस्य स्त्री कौमारी, प्रत्यासत्त्या च यस्यामसौ भवन् कौमारव्यपदेशं लभते सैवाभिधीयते न त्वन्तरम्, एतच्च सूत्रारम्भेप्यङ्गीकर्त्तव्यम् ॥

"तत्रोद्धृतममत्रेभ्यः" ॥ अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्त्तते तेन सप्तमीसमर्थाद् विभक्तिर्न नोपपद्यते । 'भुक्तोच्छिष्टमिति' । शिष्टमेवोच्छिष्टं, यथा उच्छिनष्टि न सर्वं जुहोतीति भुक्तशिष्टमित्यर्थः । 'यस्योद्धरणमिति प्रसिद्धिरिति' । कृत्यल्युटो बहुलमिति भूते कर्मणि ल्युट् । 'शरावेषूद्धृत इति' । उद्धृत्य निहित इत्यर्थः ॥

"स्थण्डिलाच्छयितरि व्रते" । 'शास्त्रित इति' । संजातशास्त्र इत्यर्थः । यद्वा तृतीयासमर्थाद्विधानेर्थे प्रातिपदिकाद्धात्वर्थइति णिच्, कर्मणि क्तः, शास्त्रेण विहित इत्यर्थः । 'स्थण्डिले शयितं व्रतमस्येति' । तुमुनत्र वक्तव्यः, व्रतस्याक्रियारूपत्वात् ॥

"संस्कृतम्भक्षाः" ॥ संस्कृतमित्येतत्कर्मसामान्ये व्युत्पाद्यते, तेन नपुंसकलिङ्गमेकवचनं च, भक्षा इत्येतत्तु अपूपाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुल्लिङ्गं बहुवचनं च, तच्च वाक्यार्थगम्यस्यार्थस्य पदसंस्कारे ऽनुपयोगात्संस्कृतमित्येतद्भवति, अत एव विरम्य संबन्धं दर्शयति । 'यत्तत्संस्कृतम्भक्षास्ते चेद्भवन्तीति' । अयो यत्कर्म यो चेत् स कर्त्तेतिवत्, तच्छब्दस्य प्रतिनिर्दिश्यमानलिङ्गता । 'खरविशदमिति' । खरं कठिनं, विशदं विभक्तम् । 'भक्षयन्नेनोव्यतइति' । यद्यप्यकसौ वायुभक्ष इति भक्षयतेरन्यत्रापि प्रयोगः, भक्षशब्दस्तु तत्रैव प्रसिद्ध इति भावः ॥

"शूलोखाद्यत्" ॥ शूलोखादिति समाहारद्वन्द्वः, उखापात्रविशेषः । यस्तु स्वाङ्गवाच्युखाशब्दस्तस्येह ग्रहणं न भवति, स्वाङ्गे संस्कर्तव्यस्याभावात् । 'कथमुख्योग्निरिति' । नह्यसौ भवः, भवार्थे दिगादित्वाद् द्रष्टव्यः ॥

"दध्नष्ठक्" ॥ 'इह तु दधि केवलमाधारभूतमिति' । यथा शूले संस्क्रियमाणस्य मांसस्य शूलं, यद्यप्यत्र दध्यपि संस्कारकं तथापि न तद्विवक्षितं किं तु तदाधारस्य द्रव्यान्तरेण यः संस्कारः स एव विवक्षित इति भावः ॥

"उदश्वितोऽन्यतरस्याम्" ॥ 'औदश्वित्क इति' । इसुसुक्तान्तात्कः ॥

"क्षीराड्ढञ्" ॥ अत्र संस्कृतमित्येव सम्बध्यते न भवा इति, तेन यवाग्वामपि भवति । 'क्षैरेयीति' । टिड्ढाणञित्यादिना ङीप् ॥

"सास्मिन्पौर्णमासीति सञ्ज्ञायाम्" ॥ 'ततश्चेद्विवक्षेति' । ततः प्रत्ययान्ताल्लोकस्य विवक्षा भवति चेद् एवं प्रत्ययो भवति नान्यथेत्यर्थः । 'संज्ञायामिति समुदायोपाधिरिति' । एतदेव स्पष्टयति । 'प्रत्ययान्तेन चेदिति' । 'पौषी पौर्णमासीति' । लुबविशेषइति पौर्णमास्यां लुब् भवतीति पूर्वमेवोक्तम् । 'भृतकमासे चेति' । भृता एव भृतकाः, कर्मकरास्तेषां यो मासः कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः । 'तुल्यमेव फलमिति' । किं पुनस्तदित्याह । 'प्रयोगानुसारणमिति' । ण्यर्थाल्ल्युट् । 'संज्ञाशब्देन तुल्यतामिति' । तुल्यफलतामित्यर्थः 'इतिकरणस्य ज्ञापयितुमिति' । किं पुनरिदं ज्ञापकसाध्यं तत्राह । 'नक्षत्रमिति' । ज्ञापनस्य प्रयोजनं दर्शयति । 'संज्ञार्थत्वे त्विमि' । संज्ञाशब्देन तुल्यफलत्वे इत्यर्थः । 'प्रवृत्तिभेदेन चायमर्थो ज्ञाप्यतइति' । संज्ञायामिति द्वितीयाप्रवृत्तिः, इह शास्त्रे संज्ञायामित्यस्यार्थे इतिशब्दो वेदितव्य इति परिभाषा सम्पद्यते । 'पूर्वो-

मासावणिति'। पूर्णो मासोऽस्यामित्यणाविति बहुव्रीहौ प्रज्ञादेराकृतिगणत्वादस्मादेव वा निपातनादण्। 'माइति चन्द्रमा उच्यतइति'। चन्द्रमश्शब्दैकदेशप्रयोगः सत्याभामा भामेतिवत् ॥

"आग्रहायण्यश्वत्थाट्ठक्" ॥ अग्रेहायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, पूर्वपदात्संज्ञायामिति णत्वम्। 'अश्वत्थेन युक्ता पौर्णमासी अश्वत्थ इति'। निपातनात्पौर्णमास्यामपि लुप् ॥

"सास्य देवता" ॥ 'यागसम्प्रदानं देवतेति'। यद्यपि देवशब्दो मनुष्यादिवज्जातिवचनः स्वार्थिकश्च तल्, तथापि समुदायशक्त्या देवताशब्दो यागे दर्शपूर्णमासादौ यद्यत्सम्प्रदानत्वेन चोदितं तत्र सर्वत्र वर्त्तते न स जातिविशेष इत्यर्थः। 'देयस्य पुरोडाशादेः स्वामिनीति'। दिवेरैश्वर्यकर्मणो देवताशब्दव्युत्पत्तिं दर्शयति, एवं च कृत्वा वाय्वृतुपित्रुषसो यत्, कालेभ्यो भववदिति वचनमुपपद्यते, नह्यृतुषु पितृषु उषसि वा जातिरस्ति, तथा पितृदेवत्यंत्रैवदेवत्यमिति प्रयोगोऽप्येवमेवोपपद्यते। 'कथमिति'। पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्तीति प्रश्नः। 'मन्त्रस्तुत्यामपीत्यादि'। नानेनौपचारिकत्वं प्रयोगस्योच्यतेऽपि तु मुख्य एव प्रयोगः, यागसम्प्रदाने सार्वलौकिकः प्रयोगः, अयं तु नैरुक्तानामित्येतावान्विशेषः। 'उपचरन्तीति'। ब्रुवते प्रयुञ्जतइत्यर्थः। 'कथमित्यादि'। पूर्वोक्तं प्रकारद्वयमत्र नास्तीति प्रश्नः। 'उपमानादिति'। काषायौ गर्दभस्य कर्णावितिवद्गौणोऽयं प्रयोग इत्यर्थः। 'सेति प्रकृतइति'। प्रकृतं हि सामर्थ्यं संज्ञया संबद्धुमिति तदनुवृत्तौ संज्ञाया अप्यनुवृत्तिः स्यात् ॥

"कस्येत्" ॥ किमो विभक्तौ कादेशं कृत्वा कस्येति निर्देश इमित्याशङ्कामपनयति। 'कशब्दइति'। एवं च कृत्वा कायानुब्रूहीति सम्प्रैषः, कस्मान्नानुब्रूहीति, न कस्मै देवाय हविषा विधेमेति तु छान्दसः स्मैभावः, यदिन्द्राग्नी अवमस्यामित्यादिवत्। 'काय्यमिति'। इस्वे कृते यस्येति लोपः प्राप्तः यस्यादाविइदुषा बाध्यते औद्देवतास्य आयमि-

तिवत्, सैमाट्ट्यणित्यत्र कथहणे च क्रियमाणे यद्यपि यस्येति लोपात्य-रत्वाद्वृद्धिर्भवति, कृतायामपि वृद्धौ यस्येति लोपः स्यादेव ॥

"अपोनप्त्रपान्नप्तृभ्यां घः" ॥ 'अपोनपात् अपांनपादिति देवतानामधेये इति'। पृषोदरादित्वादनयोः साधुत्वम्, । 'तयोस्तु प्रत्ययसन्नियोगेनेति'। एवं च अपोनपाते अनुब्रूहि अपां नपाते ऽनुब्रूहि अपोनपातं यज, अपां न पातं यजेति सम्प्रैषो, वेदे त्वपोनप्त्रे स्वाहेति छान्दसः प्रयोगः ॥

"छ च" ॥ 'योगविभाग इत्यादि'। पूर्वसूत्रएव छग्रहणे सति घच्छौ द्वौ प्रत्ययौ प्रकृती अपि द्वे इति स्यात्सङ्ख्यातानुदेशः। 'शतरुद्रीयमिति'। शतशब्दोऽनन्तवचनः, शतं रुद्रा देवता ऽस्येति घच्छौ, तयोर्विधानसामर्थ्याद् द्विगोर्लुगनपत्यइति लुङ् भवति ॥

"महेन्द्राद्घाणौ च" ॥ महेन्द्रादणचेत्युच्यमाने ऽनन्तरश्छ एव समुच्चीयेत न व्यवहितो घ इति पुनर्ग्रहणम् ॥

"सोमाट्ट्यण्" ॥ 'सौमीति'। टित्वान्ङीप्, हलस्तद्धितस्येति यलोपः ॥

"वाय्वृतुपित्रुषसो यत्" ॥ 'वायव्यमिति'। ओर्गुणः, वान्तो यि प्रत्यये। 'पित्र्यमिति'। रीङृत इति रीङ्, यस्येति लोपः ॥

"द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च" ॥ 'अणो यतस्य चापवाद इति'। वास्तोष्पतिशब्दात्पत्युत्तरपदस्य ण्यस्यापवादः, शेषेभ्योऽणः। 'द्यावापृथिव्यावेति'। दिवो द्यावा, दिवसश्च पृथिव्यामिति द्यावादेशः। 'शुनासीरावेति'। देवता द्वन्द्वे चेत्यानङादेशः, शुनो वायुः, सीर आदित्य इति, अन्ये तु एकमेव शुनसीरमिन्द्रस्य गुणमन्यन्त, यथाह्याश्वलायनः, इन्द्रो वा शुनासीर इति। मन्त्रलिङ्गञ्च भवति, इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहइति। मरुतो ऽस्य सन्ति मरुत्वानिन्द्रः, । 'अग्नीषोमीयमिति'। ईदग्नेः सोमवरुणयोः, वास्तोः पतिर्वास्तोष्पतिः, अस्मादेव निर्देशात्साधुः, गृहमेधशब्दमकारान्तं बहु-

चा मन्यन्ते, मरुद्भ्यो गृहमेधेभ्य उत्तरेत्याश्वलायनः, गृहमेधास आगतेति च मन्त्रलिङ्गं, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति तु तैत्तिरीयकं, तत्र चेकारान्तो नकारान्तो वेति विप्रतिपन्नाः ॥

"अग्नेर्ढक्" ॥ कलेर्ढगित्यत्रोक्तमेवार्थं स्मारयति । 'प्राग्दीव्यतीयेष्विति ॥

"कालेभ्यो भववत्" ॥ 'कालविशेषवाचिभ्य इति' । स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात् । 'वत्करणमित्यादि' । असति वत्करणे कालेभ्यो भव इत्युच्यमाने यदि तावदेवं सम्बन्धः, कालेभ्यो भवे ये प्रत्यया विधास्यन्ते ते सास्य देवतेत्यत्रार्थे भवन्तीति देवताप्रकृतिरविशेषिता स्यात्ततश्च कालाट्ठञिति ठञिन्द्रादेरपि प्राप्नोति, अथ पुनरेवं सम्बन्धो भवे ये प्रत्यया विधास्यन्ते ते भवन्ति कालेभ्यो देवताभ्य इति, एवमपि भवप्रत्यया न विशेषिताः स्युस्ततश्च दिगादिभ्यो यदिति यत् प्रत्ययोपि भवे विहितः कालवाचिभ्यो ऽस्मिन्नर्थे प्राप्नोति, अथाप्येवं सम्बन्धः कालेभ्यो भवे ये प्रत्ययास्ते भवन्ति, कालेभ्य एव देवतार्थे इति, तत्र सकृच्छ्रुतस्य कालशब्दस्यैवमुभयसम्बन्ध एव तावद्दुर्लभः । अथापि लभ्येत एवमपि यः कश्चित्कालाद्भवे प्रत्ययो यतः कुतश्चिद्देवतायाः स्याद् ऋतुभ्योण् मुहूर्तादेरपि प्राप्नोति, वतिनिर्देशे तु सति सादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन भवेर्थे विधास्यन्ते ये प्रत्ययाः, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन तएव प्रत्यया भवन्तीति न किं चिदनिष्टम् ॥

"महाराजप्रोष्ठपदाट्ठञ्" ॥ महाराजो वैश्रवणः, प्रोष्ठपदशब्दात्पूर्वेण नक्षत्राणि प्रोक्ते वचनं, नवयज्ञ आग्रयणम् । 'पूर्णमासादणिति' । अस्मिन्वर्ततइत्येव । 'पौर्णमासीति' । पूर्णो मासो ऽस्यां तिथौ वर्ततइति विग्रहः, एषैव च व्युत्पत्तिः सास्मिन्पौर्णमासीत्यत्रापि दर्शिता ॥

"पितृव्यमातुलमातामहपितामहाः" ॥ 'पितृमातृभ्यामिति' । स्वरूपपदार्थकत्वेनाभ्यर्हितत्वे विशेषाभावाल्लघ्वक्षरस्य पूर्वनिपातः, अयोनिसम्बन्धवाचित्वादनङ्भावश्च । 'डामहजिति' । कथं तर्ह्याकारे ऽवग्रहो

माता—महः पिता—मह इति । तस्मान्महप्रत्ययः पितृमातृभ्यां निपातितस्तयोश्चानङ्लादेश इति केचित् । वृत्तिकारस्तु संहितापाठस्यैव नित्यत्वात् लक्षणेन पदकारा अनुवर्त्या इति न्यायेनावग्रहो मा कारीति मन्यते । 'मातरि षिच्चेति' । षित्त्वमुपसङ्ख्येयमित्यर्थः । न पुनः षकारोऽनुबन्धः कर्त्तव्य इति देशाभावात्, मातामही इत्यपि मन्त्रे दृश्यते । 'अवेर्दुग्ध-इति' । दुग्धं क्षीरं सोढादीनामादेशप्रत्यययोरिति षत्वं न भवति, सकारोच्चारणसामर्थ्यात् । 'निष्फलस्तिलइति' । सस्यावस्थायां फलरहित उच्यते, धान्यावस्थायां प्रयोजनशून्य इत्यन्ये ॥

"तस्य समूहः" ॥ सर्वस्यैव विषयस्यापवादैरवष्टब्धत्वात्पृच्छति । 'किमिहोदाहरणमिति' । काकशुकवकशब्दा आद्युदात्ताः प्राणिनां कुपूर्वाणामित्यनेन, अस्यार्थः, अधिकरणे षष्ठी, अथादिः प्राक् शकटेरित्यत आदिरित्यनुवृत्तं षष्ठीबहुवचनान्तं विपरिणम्यते प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे अचस्तेषामुदात्तो भवतीति, तत्र शौकमित्यनुदाहरणं खण्डिकादिषु पाठात्, बकशब्दस्तूदाहार्यः ॥

"भिक्षादिभ्योऽण्" ॥ 'अण्ग्रहणं बाधकबाधनार्थमिति' । भिक्षाशब्दोऽयं गुरोश्च हल इत्यकारप्रत्ययान्तत्वादन्तोदात्तः, ततोऽनुदात्तादेरित्यञ् अणो बाधकः प्राप्नोति तस्य बाधनार्थमण्ग्रहणम् । ननु च यद्यत्राञ् स्यात्पुनर्वचनमनर्थकं स्यात्, नानर्थकं, परत्वादचित्त हस्तिधेनोष्ठक् प्राप्नोति, तद्बाधनार्थमत्र पुनर्वचनं स्यादित्यञ् स्यादेव, पुनरण्ग्रहणादणेव भवति । 'गार्भिणमिति' । भस्याढे तद्धितइति पुंवद्भावेन ङीपो निवृत्तिः, ततोऽणि इनण्यनपत्यइति प्रकृतिभावाभस्त्राद्धितइति टिलोपाभावः । 'तस्य ग्रहणसामर्थ्यात्पुंवद्भावो न भवतीति' । यदि स्यात्सिद्धत्वात्प्रत्ययविधाविति वचनादनुत्पन्नएव तद्धिते पुंवद्भावेन भवितव्यं, युवशब्दस्य कनिन्युवृषेति कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सर्गिकएवाण् सिद्ध इति तस्येह पाठोऽनर्थकः स्यात् । 'यौवतमिति' । यथा तु वार्त्तिकं तथा पुंवद्भाव दृश्यते । आह हि भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधाविति ॥

"गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्" ॥ 'अपत्याधिकारादन्यत्रेति' । यद्येवं राजन्यमनुष्ययोरुपादानमनर्थकं गोत्रइत्येव सिद्धं, न तावपत्यप्रत्ययान्तौ जातेः प्रत्ययार्थत्वात्, उक्तं हि । 'राज्ञोऽपत्ये जातिग्रहणं, मनोर्जातावञ्यतौ षुक्चेति, किं तर्हि स्यात्, प्रकृत्या के राजन्यमनुष्ययुवान इति, यलोपो न भवतीति, यावता ऽनापत्ययकारत्वेनैव न भविष्यति, सत्यम्, अपत्यार्थत्वमभ्युपेत्यैतदुच्यते, यद्यपत्यार्थत्वमभ्युपेयते राजन्यमनुष्ययोर्ग्रहणमनर्थकं, नानर्थकं ज्ञापनार्थत्वात्, एतज् ज्ञापयति, नैतयोरपत्यकृतं भवतीति, तेन यलोपो न भवति, सर्वथा प्रकृत्या के राजन्यमनुष्ययुवान इति न वक्तव्यम्, । 'औपगवकमिति' । यथात्र परोऽप्यनुदात्तादेरञ् न भवति तथा कपिष्ठलादिभ्यश्चेत्यत्र वक्ष्यते ॥

"ब्राह्मणमाणववाडवाद्यन्" ॥ 'नकारः स्वरार्थ इति' । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं यथा स्यात्, किमर्थं पुनर्ब्राह्मणादिभ्यो यन्विधीयते न प्रकृतौ यञेव विधीयेत, नहि कृद्वृषु यञो यनो वा विशेषोऽस्ति, तदेव रूपं स एव स्वरः, ठञस्त्वस्वरितत्वादननुवृत्तिः, ज्ञापनार्थं तु, एतज् ज्ञापयति अन्येभ्योऽप्ययं भवतीति, किं सिद्धं भवति, पृष्ठादुपसङ्ख्यानं चोदयिष्यति तन्न वक्तव्यं भवति पृष्ठानां समूह इति, पृष्ठशब्दः स्तुतिविशेषवचनः । 'पृष्ठ्यः षडह इति' । तद्वति तदुपचारः । 'वास्वत्त्वय इति' । नकारः पदसञ्ज्ञार्थः, तेन पार्श्वमित्यत्र भत्वाभावादोर्गुणो न भवति ॥

"अनुदात्तादेरञ्" ॥ 'अचित्तात्परत्वाद् ठका भवितव्यमिति' । चित्तवन्त उदाहृताः, कपोतमयूरशब्दौ लघावन्त इति मध्योदात्तौ, इगुपधात्कः, तत्तिः सन्वल्लघुनि चाभ्यासस्येति क्तिप्रत्ययान्तस्तित्तिरिशब्दः प्रत्ययस्वरेणान्तोदात्तः, सन्वद्भावेनाद्युदात्तत्वं न भवति, उणादयो बहुलमिति बहुलवचनात् ॥

"कपिष्ठलादिभ्यश्च" ॥ 'क्षुद्रकाश्चेति' । क्षुद्रकस्यापत्यानि, जनपदशब्दादिति विहितस्य तद्राजस्य लुक्, मालवास्तु वृद्धलक्षणस्य ञ्यङः । 'पूर्वेणापि सिद्ध इति' । समासान्तोदात्तत्वे सति शेषनिघातेनानुदात्तादित्वात् ॥ 'ननु च परत्वादिति' । अभ्युपेत्य गोत्रत्वमेतदुक्तं,

तदेव तु नास्तीत्याह । 'न च गोत्रसमुदायो गोत्रमिति' । तत्र च यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यतइति काशिकोसलाया इत्यत्र छ एव भवति न जनपदलक्षणो वुञ् तद्वदत्रापि गोत्रलक्षणो वुञ् न प्राप्नोतीति भावः । स्यादेतत् । मा भूत्समुदायो गोत्रं मालवशब्दस्तु गोत्रं भवति, ततश्च तदन्तविधिना समुदायादपि वुञ् प्राप्नोतीति तत्राह । 'न चेति' । येन विधिस्तदन्तस्येत्यत्र हि समासप्रत्ययविधौ प्रतिषेध इत्युक्तम् । 'एवं तर्हीत्यादि' । कथमेकेन यत्नेनोभयं शक्यं ज्ञापयितुं, शक्यमित्याह, अन्यथानुपपत्त्या ज्ञापकं भवति, उभयेन च विना नास्मादञ्विधानमुपपद्यतइति, किमत्रानुपपन्नं, तत्र पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनमौपगवकं कापटवकमिति, वुञोवकाशः यदाद्युदात्तं, ग्लुचुकस्यापत्यं ग्लुचुकायनिः, प्राचामवृद्धात्फिन्, तेषां समूहो ग्लैचुकायनकमिति, अञस्तु कापोतमित्याद्यगोत्रमवकाशः, गोत्रादनुदात्तादेरुभयप्रसङ्गे परत्वादञ् स्यात्, अस्मात्तु ज्ञापकाद्वुञेव भवति, तदन्तविधिज्ञापनस्य प्रयोजनं वनहस्तिनां समूहो वानहस्तिकम् । 'गौधेनुकमिति'। जङ्गलधेनुवलजान्तस्येत्युत्तरपदवृद्धिविकल्पः । पुनरस्यैव नियमार्थं वर्णयिष्यन् कथमेकेन यत्नेनायं लभ्यं, ज्ञापनं च नियमश्चेत्याशङ्क्याह । 'क्षुद्रकमालवादित्येतावतेति' । योगविभागेन यत्नद्वयमाश्रीयतइत्यर्थः । 'क्षौद्रकमालवी क्षौद्रकमालवकमिति' । उभयत्रापि मालवात्तुत्पन्नस्य ञ्यङो गोत्रे ऽलुगचीति लुकि प्रतिषिद्धे आपत्यस्येति यलोपः । 'अञ्सिद्धिरित्यादि' । अनुदात्तादेरिति हेतुगर्भं विशेषणं, यतोयं क्षुद्रकमालवशब्दोनुदात्तादिस्तेन तस्मादनुदात्तादेरित्येवाञः सिद्धिरस्ति, कोर्थस्तस्य गणपाठनेति शेषः, न किं चित्प्रयोजनमित्यर्थः, गोत्रलक्षणो वुञ् प्राप्नोति, अतस्तद्बाधनार्थः पाठ इति चेत्तत्राह 'गोत्राद्वुञिति' । गोत्राद्वुञ् विधीयते न च तत्क्षुद्रकमालवेतिशब्दरूपं गोत्रमित्यर्थः । 'तदन्तादिति' । मालवशब्दस्य गोत्रत्वात्तदन्तविधिना प्राप्नोत्येव । 'न स सर्वत इति' । प्रायादित्वात्सप्तम्यन्तात्तसिः, स तदन्तविधिः सर्वत्र न भवतीत्यर्थः । 'तदन्तस्वइति' । तदन्तविधिरस्तीत्यस्मिन्नर्थइत्यर्थः । 'तथा चेति' । धेनुरनञिकमुत्पादय-

तीत्यापिशलेः सूत्रम्, । अत्र वृञ्प्रत्ययानुबन्धो मृग्यः, इकस्यैव चेसुसुक्तान्तात्परस्य कादेशो द्रष्टव्यः, अर्थमात्रं वा भाष्यकारेण निर्दिष्टम् । इकमिति ठकमित्यर्थः । धेनूनां समूहो धैनुकम् । अनञिति किम्, अधेनूनां समूह आधेनवम्, उत्सादिपाठादञ्, यद्यपि धेनुशब्दः सूत्रे पठ्यते तथापि अञ्याम इति लिङ्गादधेनुशब्दादपि भवति, तत्र यदि सामूहिकेषु तदन्तविधिर्न स्यादनञिति प्रतिषेधो ऽनर्थकः स्यात्, प्रयोजनान्तरमप्याह । 'सेनायामिति' । 'यथेति' । पूर्वविप्रतिषेधेन वुञा ऽञो बाधा यथा स्यादित्येवमर्थश्च तस्य गणे पाठ इत्यर्थः । उलूकशब्दोऽत्र पठ्यते स लघावन्तइति मध्योदात्तः, छन्दसि तु यदुलूको वदति मोघमेतत्, इत्या उलूक आपप्तदिति यदाद्युदात्तत्वं तच्छान्दसम्, भाषायां तु मध्योदात्तमेव, तत्र पूर्वेणैवाञ् सिद्धस्तस्मादेवं व्याख्येयम्, औलूक्यशब्दो गर्गादियञन्तस्तस्य यञञोश्चेति बहुषु लुकि कृते रूपम् * । 'तदिह पठ्यतइति' । असति हि तस्य पाठे उलूकानां समूह इत्यर्थविवक्षायां गोत्रे ऽलुगचीति लुकः प्रतिषेधादौलूक्यशब्दाद्गोत्राश्रयो वुञ् प्राप्नोति । शुकशब्दोऽत्र पठ्यते, तस्य समूह इत्यत्र तु यस्य च नान्यत्प्रतिपदविधानमस्तीत्युक्त्वोदाहृतं काकं शौकमिति, तस्मात्तत्र शौकमित्यस्य स्थाने बाकमिति पठितव्यं, बकशब्दः प्राणिनां कुपूर्वाणामित्याद्युदात्तः, युगवरत्रेति पठ्यते, तत्सङ्घातविगृहीतार्थमिच्छन्ति, यौगवरत्रं यौगं वारत्रमिति, *तत्र सङ्घातपक्षे जातिरप्राणिनामिति द्वन्द्वैकवद्भावे नपुंसकह्रस्वत्वे सति युगवरत्रेति दीर्घनिर्देशानुपपत्तेस्तस्माद्युगसहिता वरत्रेति समासः कर्त्तव्यः, जातिपरत्वाभावाद्वा एकवद्भावाभावः ॥

"चरणेभ्यो धर्म्मवत्" ॥ 'गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्यन्तइति' । ननु च न तत्र धर्मग्रहणमस्ति तत्कथं धर्मवदित्यतिदेशो युज्यतइत्याह । 'तत्रेदमिति' । इदमेव धर्मवदितिवचनं लिङ्गमस्ति तत्र चरणाद्धर्माम्नाययोरिति । 'वतिः सप्तम्यर्थ इति' । असति तस्मिन् चरणेभ्यो धर्मे इत्युच्यमाने यद्धि तावदेवं संबन्धः, चरणेभ्यो धर्मे ये प्रत्यया विधास्यन्ते ते भवन्ति, समूह इति समूहप्रकृतिरविशेषिता स्यात्,

ततश्च काकादिभ्योपि वुञादयः प्रसज्येरन्, अथ पुनरेवं संबन्धो धर्मे ये प्रत्यया विधास्यन्ते ते चरणेभ्यः समूहे भवन्तीति, एवमपि धर्मप्रत्यया न विशेषिताः स्युः, ततश्च तस्येदमिति विधास्यमाना अणादयोपि कठादिभ्य आपद्येरन्, अथाप्येवं संबन्धः, चरणेभ्यो धर्मे ये प्रत्ययास्ते भवन्ति चरणेभ्य एव समूह इति, तत्र सकृच्छ्रुतस्य चरणशब्दस्यैवमुभयसंबन्ध एव ताव-द्दुर्लभः, अथापि लभ्येत एवमपि यः कश्चिद्धर्मे प्रत्ययो यतः कुतश्चि-च्चरणशब्दात्स्यात् कोपिञ्जलहास्तिपदादयः कठादिभ्योपि स्यात्, वति-निर्देशे तु सति सर्वसादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया धर्मे विधास्यन्ते इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन तएव भवन्तीति न किं चिदनिष्टम् । 'काठकं कालापक-मिति' । गोत्रचरणाद्वुञ् । 'छान्दोग्यमिति' । छन्दोगौक्थिकेति ञ्यः, । 'आथर्वणमिति' आथर्वणिकस्येकलोपश्चेत्यण् इकलोपश्च ॥

"अचित्तहस्तिधेनोष्ठक्" ॥ 'अणोऽपवाद इति' । अचित्ता-र्थेषु येन नाप्राप्तिन्यायेनाणोऽपवादः, कपोतादिषु चित्तवत्सु चरितार्थस्या-णोपि परत्वाद्बाधक इत्यर्थः । हस्तिधेनुशब्दयोस्तु प्रत्ययस्वरेणान्तोदा-त्तयोरनुदात्तादिलक्षणस्याञोऽपवादः, 'हस्तिशब्दो हस्ताज्जातावितीनि-प्रत्ययान्तः, धेनुशब्दो धेटोनुश्चेति नुप्रत्ययान्तः । 'आधेनवमिति' । उत्सादिपाठादञ्, अकुलधेनुवलजान्तस्येति पक्षे वृद्ध्यभावः ॥

"पाशादिभ्यो यः" ॥ यप्रत्ययान्तं स्वभावतः स्त्रीलिङ्गं वातश-ब्दोऽत्र पठ्यते वातानां समूहो वात्या, एकवातावयवेनावयुक्तोऽत्र समूहः, तस्माच्चोपत्वे प्रत्ययो वक्तव्यः, नैष दोषः । एकस्यापि वातावयविनो द्विभे-देन भेदो ऽध्यारोपः, तदाश्रयश्च समूहः, अथ वा प्रतिदिशं वातावय-विन एव भिद्यन्ते, तथा च प्रतिभासः पूर्वोवात उत्तरो वातः सर्वतो वान्ति वाता इति, आह च प्रायोवायुसंमूर्छनं नानात्वे लिङ्गमिति ॥

"खलगोरथात्" ॥ अथ कस्मात्खलादयोऽपि पाशादिष्वेव न पठिताः, एवं हि त्रिभक्तिर्नोच्चारयितव्या भवति, तत्राह । 'पाशादि-ष्वपाठ इति' ॥

"इनित्रकट्यचश्च." ॥ योगविभागो यथासङ्ख्यार्थः, अन्यथा इनि त्रकट्यचूस्त्रयश्चकाराश्चेति चत्वारः प्रत्ययाः प्रकृतयस्तु तिस्र इति वैषम्यं स्यात् । 'खलादिभ्य इति' । खलादयः प्रयोगतो गम्याः, एतेपि प्रत्ययाः स्वभावतस्त्रियामेव ॥

"विषयो देशे" ॥ ननु च विषयस्य देशत्वाव्यभिचाराद्देश इति विशेषणं व्यर्थमित्यत आह । 'विषयशब्दोयमिति' । अत्यन्तशीलितो त्यन्ताभ्यस्तः । 'तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थमिति' । यद्येवं देशग्रहणमेवास्तु मा भूद्विषयग्रहणं, नैवं शक्यं, देशशब्दोपि नानार्थः, देशनं देश इति क्रियाशब्दस्यापि भावात् । 'शिबीनां विषयो देशः शैव इति' । कथं शिबयो देश इति, निवासविवक्षायां तस्य निवासः, जनपदे लुबिति लुपि भविष्यति । नन्वर्थभेदो भवति, शिबीनां निवासो जनपद इत्यत्र स्वस्वामिभावो न प्रतीयते, अन्यदीयेपि जनपदे निवाससम्भवात्, शिबीनां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते न तु निवासार्थस्तत्रा-वसतामपि स्वामित्वसम्भवात्, सत्यं, य एवासौ येषां विषयस्तत्रैव तेषां निवासे जनपदे लुप् स्मर्यते न निवासमात्रे, अत्र चाभिधानस्वाभाव्यं हेतुः, एवं च शिबीनां विषयः शैव इत्यत्रार्थे शिबय इत्यपि भवति, एवं वसातीनां विषयो वासातः, तेषामेव निवासो वसातयः, तथा गान्धारीणां विषयो गान्धारः, निवासो गान्धारयः, अङ्गाः वङ्गाः सुह्माः पुण्ड्रा इति, निवासरूपतैव विवक्ष्यते न विषयरूपता, एवं राजन्यादिभ्यो वुञित्यत्रापि विषयविवक्षायां राजन्यकं, निवासो राजन्याः, तत्रैव बैल्व-तादिषु विषयविवक्षैव तेन बैल्वतकम्, आम्बरीषपुत्रकमित्याद्येव भवति, सर्वत्र चाभिधानशक्तिरेव हेतुः, तदाहि, विषयाभिधाने जनपदे लुप्, बहुव-चनविषयाद्गान्धार्यादिभ्यो वा राजन्यादिभ्यो नित्यं, न चाभिधेयस्य निवा-सविषयत्वात्, निवासविवक्षायां लुप्, विषयविवक्षायां तु प्रत्यय इति ॥

"सोस्यादिरितिच्छन्दसः प्रगाथेषु" ॥ छन्दस इति न स्वरूप-ग्रहणं नापि मन्त्रब्राह्मणयोः, कस्य तर्हि, अक्षराणामियत्तावचनश्छन्दः शब्दोस्ति यस्य जगत्यादयो विशेषास्तस्य ग्रहणं, प्रगाथानामादौ तस्यैव

सम्भवात्, तेन पङ्क्त्यादिशब्देभ्यः प्रत्ययः, यत्र द्वे ऋचौ तिस्रः क्रियन्त इति चतुर्थषष्ठौ पादौ बार्हतौ प्रगाथे पुनरभ्यसिष्यन्तयोरवस्येदित्येवमादिना प्रकारेण तद्यथा यज्ञायज्ञा वः प्रियं मित्रं न शंसिषं प्रियं मित्रं न शंसिषमूर्जे निपातमिति, तत्र योयमुच्चारणप्रकारस्तद्ग्रथनम्। 'प्रग्रथनादिति'। प्रगाथशब्दप्रवृत्तिनिमित्तं दर्शयति, प्रग्रथ्यतइति प्रगाथः, अकर्त्तरि च कारकइति कर्मणि घञ्, पृषोदरादित्वाद्रेफनकारयोर्लोपः। 'प्रा(१)गायाद्वेति'। कृत्यच इति णत्वं, कै गै शब्दे, प्रगीयतइति प्रगाथः, उषिकुषिगर्तिभ्यस्थन्। 'त्रैष्टुभमिति'। कुटीर इति स्वार्थिकस्यापि रप्रत्ययस्य यथा भिन्नलिङ्गता तथेहापि नपुंसकत्वं द्रष्टव्यम्॥

"संग्रामे प्रयोजनयोद्धृभ्यः"॥ समर्थानां प्रथमाद्वेति वचनात्संग्रामवाचिभ्यः प्रत्ययः प्राप्नोति न प्रयोजनयोद्धृभ्यश्चरमनिर्द्दिष्टेभ्य इत्याशङ्क्याह। 'सोस्येति'। 'समर्थविभक्तिरित्यादि'। 'प्रथमासमर्थविशेषणमिति'। तेन विशेष्यद्वारेण प्रयोजनयोद्धार एव प्रथमनिर्द्दिष्टाः, प्रत्ययार्थविशेषणं संग्रामइति, तेन तद्द्वारेण संग्राम श्चरमनिर्द्दिष्टः॥

"घञः सास्यां क्रियेति ञः"॥ 'अस्यामिति प्रत्ययार्थः स्त्रीलिङ्गइति'। तेन लिङ्गस्य विवक्षितत्वं दर्शयति, । 'घञन्तात्क्रियावाचिन इति'। भावे यो घञ् तदन्तादित्यर्थः। 'श्यैनंपातेति'। पतनं पातः, श्येनानां पात इति कर्त्तरि षष्ठ्याः समासः, ततो ञः, श्येनतिलस्य पाते ञइति मुम्। 'प्राकार इति'। द्रव्यवचनोयं कर्मणि घञन्तः, उपसर्गस्य घञ्यमनुष्ये बहुलमिति प्रशब्दस्य दीर्घत्वम्,। 'सामान्येन चेदं विधानमिति'। एतदेवोदाहरणेन द्रढयति। 'दण्डपात इति'॥

"तदधीते तद्वेद"॥ इह योयं ग्रन्थमधीते स तं स्वरूपतो वेत्ति, यश्च वेत्ति सोऽवश्यमधीतइत्यन्यतरोपादानेन सिद्धे किमर्थमिमावर्थावुपदिश्येते, नैतयोरवश्यकः समावेशः, अध्ययनं शब्दपाठः, अर्थावबोधो वेदनं, भवति च कश्चित्संपाठं पठति नार्थं वेत्ति, कश्चिच्चार्थं वेत्ति न संपाठं पठति। 'द्विस्तद्ग्रहणमित्यादि'। तदधीते वेदेत्युच्यमाने समु-

(१) मुद्रितमूलपुस्तके प्रगथनादिति पाठ उपलभ्यते स पदमञ्जर्यसंमतः।

च्चयो विज्ञायेत, ततश्च यस्तदधीते वेद च तत्रैव स्यान्नस्तु केवलमधीते वेद वा न तत्र स्यात्, द्वितस्तद्ग्रहणे तु वाक्यभेदेनाधीयानविदुषोः पृथक् प्रत्ययविधानं सिध्यति, ननु च तदस्य तदस्मिन्स्यादित्यत्र नानार्थनिर्देशे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति द्वितस्तद्ग्रहणेन न्यायो व्युत्पादयिष्यते, अत एव तेन दीव्यतीत्यत्र प्रत्यर्थं प्रत्ययो भवति, न भ्रम इहैव द्वितस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति किं तदुत्तरत्र क्रतूक्थादिसूत्रान्ताट्ठक्, वसन्तादिभ्यष्ठगित्यत्रापि, किं च कारणं न स्यात्, क्रतुशब्दः कर्मनामधेयं वसन्तादयोऽप्यर्थाः, न तेषामध्ययनं सम्भवति, तस्य शब्दविषयत्वात्, तत्सहचरिते तु ग्रन्थे सम्भवति, गौणत्वात्तु न गृह्यते, मख्य एव त्वयं वेदनं सम्भवतीति तेभ्यो विदुष्येव स्याद् नाध्येतरि, पुनस्तद्ग्रहणात्तु यमाद्गौणस्यापि ग्रहणात्तत्रापि भवति ॥

"क्रतूक्थादिसूत्रान्ताट्ठक्" ॥ 'क्रतुविशेषवाचिभ्य इति'। स्वरूपस्य तु ग्रहणं न भवति, यदि स्यादुक्थादिष्वेव पठेत्, क्रतुसामान्यवाचिनामपि सोमयागादीनां पर्यायाणां न भवति, उक्थादिषु यज्ञशब्दस्य पाठात्, तस्माद्विशेषवाचिनामेव ग्रहणं तेभ्यो मुख्यार्थवृत्तिभ्यो वेदितरि प्रत्ययस्तत्प्रतिपादनपरग्रन्थवृत्तिभ्यस्त्वध्येतरि । 'वार्त्तिकसूत्रिक इति'। वृत्तौ साधु वार्त्तिकं, कथादिभ्यष्ठक् । वार्त्तिकं च तत्सूत्रं चेति कर्मधारयात्प्रत्ययः, एवं सांग्रहसूत्रिकइति, कल्पसूत्रमिति कर्मधारयः समाहारद्वन्द्वो वा । 'यज्ञायज्ञीयात्परेणेति'। एनपा योगे पञ्चमी चिन्त्या, एनबपि परशब्दात्पाक्षिकः, यदा तद्विधावुत्तराधरदक्षिणादातिरिति नानुवर्त्तते दिक्शब्देभ्य इत्येवानुवर्त्तते। 'न च तान्यधीयाने प्रत्यय इष्यत इति'। ठग् अण् च प्रत्ययद्वयमपि नेष्यते तेनोक्थान्यधीयतइति वाक्यमेव भवति, अत्र च अभिधानमेव शरणम्, सामलक्षणं प्रातिशाख्यम् । 'औक्थिक्य इति'। औक्थिका नामाम्नायः, इदमर्थं छन्दोगौक्थिकेति ञ्यः। 'औक्थिक्यशब्दाच्च प्रत्ययो न भवतीति'। अण्प्रत्यय इत्यर्थः, इदं प्रसङ्गादुक्तम् । 'सूत्रान्तादिति'। अत्यल्पमिदमुच्यतइत्याह-'विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यमिति'' । विद्या चेत्यादिवाक्येनातिप्रसक्तस्यापवादः ।

अङ्गादिपूर्वो विद्याशब्दः प्रत्ययं नोत्पादयतीत्यर्थः । 'त्रैविद्य इति' । अथवा विद्या त्रिविद्या तामधीते त्रैविद्यः, तिस्रो विद्या अधीत इति तु विग्रहे द्विगोर्लुगनपत्य इति लुक् प्रसङ्गः । 'याबक्रीतिक इति' । यवक्रीतमधिकृत्य कृतमाख्यानं यवक्रीतशब्देनोच्यते, एवं प्रैयङ्गवमधिकृत्य कृतमुपचारात्प्रैयङ्गवमुच्यते । 'वासवदत्तिक इति' । वासवदत्तामधिकृत्य कृता आख्यायिका, अधिकृत्य कृते ग्रन्थ इत्यर्थाणे वृद्धाच्छः, तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्, ततोऽनेन ठक्, एवं सौमनोत्तरिकः । 'ऐतिहासिक इति' । इतिहासीदिति यदुच्यते स इतिहासः, पृषोदरादित्वात्साधुः । 'सर्वसादेरिति' । सर्वादेः सादेर्द्विगोश्चोत्पन्नस्य प्रत्ययस्य लो भवति लुभवतीत्यर्थः, अर्थवतः सशब्दस्य ग्रहणात्सर्वशब्दः पृथगुपात्तः, द्विगोश्चेत्यनेन द्विगोर्लुगनपत्य इत्ययमेव लुक् स्मारितः । 'सर्ववेद इति' । सर्ववेदानधीत इत्यणो लुक् । 'सवार्त्तिक इति' । वार्त्तिकान्तमधीत इति अन्तवचने सहशब्दस्याव्ययीभावः, अव्ययीभावे चाकाल इति सभावः, ततोऽणो लुक् । 'अनुसूरिति' । अनुसूशब्दष्ठकमुत्पादयति लक्ष्यलक्षणशब्दौ चेत्यर्थः । 'अनुसुक इति' । अनुसूमधीत इति ठक्, तस्येसुसुक्तान्तात्क इति कादेशः, केऽण इति ह्रस्वः । 'पदोत्तरपदादिति' । पदशब्द उत्तरपदं यस्य स तथोक्तः, पूर्वपदमधीते पूर्वपदिकः, एवमुत्तरपदिकः । 'शतषष्टेरिति' । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् भवति षकारो ङीषर्थः ॥

"अनुब्राह्मणादिनिः" ॥ 'ब्राह्मणसदृश इति' । यथार्थे यदव्ययमिति सादृश्येऽव्ययीभावः, चोदयति । 'मत्वर्थे इति' परिहरति । 'तत्रैतस्मादिति' । दूषयति । 'अनभिधानादिति' । साक्षात्परिहारमाह । 'अणो निवृत्त्यर्थं तु वचनमिति' । क्व चित्तु मत्वर्थ इत्यादि न पठ्यते ॥

"वसन्तादिभ्यष्ठक्" ॥ 'वसन्तसहचरित इति' । यत्र वसन्तो वर्ण्यते यो वा वसन्तेऽध्येयः, वसन्तसाहचर्यात्ताच्छब्द्यं लभते, ऋगयनादिष्वेते पठितव्यास्ते वा वसन्तादिषु तथा तु न कृतमित्येव, अथर्वन्शब्दोऽत्र

पठ्यते स उपचारेणप्रोक्ते ग्रन्थे वर्तते, अथर्वणामधीते आथर्वणिकः, दाण्डि-नायनहास्तिनायनेति निपातनादस्त्वित्त इति टिलोपाभावः ॥

"प्रोक्ताल्लुक्" ॥ 'प्रोक्तसहचरित इति'। अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य यौगपद्ययोगान्मुख्यार्थासम्भवाद्गौणस्य ग्रहणमित्यर्थः । अपर आह । प्रोक्तशब्द इह स्वर्यते तेन तदधिकारविहितः प्रत्ययो गृह्यतइति, यदि वा प्रोक्ते भवः प्रोक्त इति सोऽयमतद्वितनिर्देशः । 'पाणिनीयमिति'। ननु पणोऽस्यास्तीति पणी तस्यापत्यं पाणिनः, पाणिनस्यापत्यं पाणिनो युवा पाणिनिः, ततस्तेन प्रोक्तमित्यर्थविवक्षायां यूनि लुगिति इञो लुकि कृते प्रत्ययलक्षणेनेञश्चेत्यण् प्राप्नोति । नैष दोषः । इञश्चेत्यत्र कण्वा-दिभ्यो गोत्रइत्यतो गोत्रइत्यनुवर्तते तेनेञं विशेषयिष्यामः, गोत्रे य इञ् विहितस्तदन्तादिति, तत्र च पारिभाषिकं गोत्रं गृह्यते, तेन यूनीञो न भविष्यति, ततो वृद्धाच्छः, आपिशलिशब्दादिञश्चेत्यण् उभयत्राप्यनेनाप-त्ययस्य लुक्, नन्वत्र लुकि सत्यसति वा तदेव रूपमिति नास्ति विशेषस्त-त्राह । 'स्त्रियां स्वरे च विशेष इति' । असति लुकि स्त्रियां टिड्ढाण-ञित्यादिना ङीप् स्यात् अण्स्वरेणान्तोदात्तत्वं च, लुकि तु सति टाप् भवति, ञ्स्वरेण मध्योदात्तत्वं च, आपिशले तु स्वरे नास्ति विशेषः, यथा तु लुकि सत्यपिशलेत्यत्र ङीन्न भवति तथानुपसर्जनादित्यत्र प्रत्यपादि ॥

"सूत्राच्च कोपधात्" ॥ 'अष्टकं सूत्रमिति'। अष्टावध्यायाः परिमाणमस्य, संख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेष्विति संख्याया अतिशद-न्तायाः कन् । 'संख्याप्रकृतेरिति वक्तव्यमिति'। संख्या प्रकृतिर्यस्य प्रत्य-यस्य तदन्तात्कोपधादिति वक्तव्यमित्यर्थः। 'कालापकमधीते कालापक इति'। कलापिना प्रोक्तमधीयते कालापाः, कलापिनोऽण्, नान्तस्य टिलोपे सब्रह्मचारीत्योपसंख्यानिकष्टिलोपः, ततस्तदधीतइत्यण्, प्रोक्ताल्लुक् । कालापानामाम्नाय इति गोत्रचरणाद्वुञ्, कालापकं, ततस्तदधीत । इत्यण्, तस्य लुङ्भवति, यदि स्यात् ञित्स्वरेणाद्युदात्तत्वं स्यात्, लुगभावे त्वयमेव स्वरो भवति, स्त्रियां च ङीब् भवति। 'चतुष्टय इति'। चत्वारो-ऽवयवा अस्य संख्याया अवयवे तयप्, ह्रस्वात्तादौ तद्धितइति षत्वम् ॥

"छन्दोब्राह्मणानि च तद्विषयाणि" ॥ 'प्रोक्तग्रहणमनुवर्त्तत इति' तद्ध्यनुवर्त्तमानमेव पूर्वसूत्र आरम्भसामर्थ्याच्च सम्बध्यते । 'छन्दांसि च ब्राह्मणानि चेति'। तद्वाचीनि शब्दरूपाणीत्यर्थः । स्वरूपग्रहणं तु न भवति बहुवचननिर्द्देशात्, अप्रोक्तप्रत्ययान्तत्वाच्च । 'प्रोक्तप्रत्ययान्तानीति'। प्रोक्तादिति पञ्चम्यन्तं प्रकृतं प्रथमाबहुवचनान्तं विपरिणम्यते, छन्दोब्राह्मणानीत्यनेन सामानाधिकरण्यादिति भावः, अध्येतृवेदितृप्रत्ययविषयाणीत्यनेनैतद्दर्शयति तच्छब्देनाध्येतृवेदितृप्रत्ययः परामृश्यते, विधेयतया प्रधानत्वात्, नाध्येतृवेदितारावर्थौ, तयोः प्रत्ययविधौ गुणभावादिति किं सिद्धं भवति, अध्येतृविषयमपि वाक्यं निवर्त्तितं भवति । 'अनन्यभावो विषयार्थ इति'। ग्रामसमुदायादिवृत्तिस्तु विषयशब्दोऽसम्भवान्न गृह्यते, अत्र यद्यधीते वेदेत्यनुवर्त्तेत ततोऽध्येतृवेदितृविवक्षायामेव तद्विषयता विधीयेत ततश्च तद्विषयमेव वाक्यं निवर्त्तयेत् न क्रियान्तरविषयं नापि स्वातन्त्र्यमुपाध्यन्तरयोगं च, यदाह, तत्र यथाधिकारात्तद्विषयप्रसङ्ग इति, तस्मात्प्रोक्तग्रहणमेवानुवर्त्तते नाधीते वेदेति, तच्छब्देन च प्रत्ययः परामृश्यते विषयशब्दश्च अनन्यभावार्थः, तेन सर्वमेतत्स्वातन्त्र्यादि निवर्त्तते, आह च, सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनादिति । प्रोक्तग्रहणमेवाधिक्रियते नाधीते वेदेत्येतावर्थावित्यर्थः, इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता दृश्यते स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यमध्येतृवेदित्रोः प्रत्यय इति, स्वातन्त्र्यं तावत्पाणिनिना प्रोक्तं पाणिनीयमिति प्रोक्तार्थ एव वृत्तिः, उपाध्यन्तरयोगो महत्पाणिनीयमिति वाक्यं, पाणिनीयमधीतइति प्रत्ययः पाणिनीयाश्छात्रा इति, छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानां नित्यमध्येतृवेदितृप्रत्ययान्तत्वेष्यते न तु स्वातन्त्र्यादि, तदर्थमिदमारभ्यते तदाह । 'तेनेति'। एवं च कृत्वा ऽर्थद्वयस्यापि तन्त्रेण विग्रहः कर्त्तव्य इति दर्शयति, कठेन प्रोक्तमधीयते कठाः वैशम्पायनान्तेवासित्वाणिनिः, तस्य कठचरकाल्लुगिति लुक्, ततस्तदधीतइत्यण्, ततस्तस्यापि प्रोक्ताल्लुगिति लुक्, मुदपिप्पलादशब्दाभ्यां प्रोक्तार्थ औत्सर्गिकोऽण्, शेषं यथायोगं पूर्ववत्, चरकाभ्यां वैशम्पायनान्ते-

न्त्यत्वं सिद्ध्यति । अथाचिन्त्यं ब्रह्मणोरूपं कस्तद्वेदितुमर्हतीत्येतद्व्याचष्टे ब्रह्मेत्यादिना, एकस्वभावस्य न ह्येकोऽन्यस्वभावोऽग्निः शैत्यस्वभावो भवति एककार्यशक्तियुक्तस्य न हि दहनशक्तोऽग्निः जाड्यक्के*दनशक्तः एकरूपस्य एकाकारस्य न ह्यूर्द्ध्वज्वलनवतोरूपवतोऽग्नेर्गन्धादिमत्त्वं तिर्यगम†नादिकं वेत्यभिप्रायः सर्व्ववस्तुविसजातीयतयेति विसजातीयधर्म्मिणो विसजातीयधर्म्मयोग उपपद्यते इत्यर्थः । विचित्रेति, विविधं‡मित्यर्थः । पुनरपीति, अनन्त-शब्दोऽसंख्येयवाची अपरिमिताश्चर्य-शब्देनात्यन्ताश्चर्यत्वं विवक्षितम् । अनन्तापरिमिताश्चर्ययोगेनैकरूपता चेति असंख्येयात्यन्ताश्चर्यभूतपदार्थयोगेन समाभ्यधिकराहित्यमित्यर्थः, अनन्ताऽ§श्चर्यभूतपदार्थयोगो नाम दिव्यायुधभूषणादियोगः, वस्तुमात्रसाम्यादिति वस्तुत्वाच्चेतनोऽप्यचित् स्यादित्यादिवदयुक्तमिति भावः । अस्य वचनस्य ब्रह्मणोभिन्नाभिन्नत्वज्ञापनपरत्वमप्ययुक्तमचिन्त्यं ब्रह्मणोरूपं कस्तद्वेदितुमर्हतीत्युक्तत्वात्, न हि मृद्घटादिष्वपि दृष्टत्वेन पराभिमतस्य

**कस्यचिदपि वस्तुन एकस्वभावस्यैककार्यशक्तियुक्तस्यैकरूपस्य रूपान्तरयोगः, स्वभावान्तरयोगः, शक्त्यन्तरयोगश्च न घटते, तस्यैतस्य परब्रह्मणस्सर्ववस्तुविसजातीयतया सर्वस्वभावत्वं सर्वशक्तियोगश्चेत्येकस्यैव विचित्रानन्तनानारूपता च पुनरप्यनन्तापरिमिताश्चर्ययोगेनैकरूपता च न विरुद्धेति वस्तुमात्रसाम्याद्विरोधचिन्ता न युक्तेत्यर्थः ।**

भिन्नाभिन्नत्वस्याचिन्त्यत्वं घटादावपि तस्य तर्कावाध्यत्वमुच्यत इति चेन्न ब्रह्मणो रूपमित्युक्तेः । एवं यथा कथञ्चित्सामान्यमात्रेण विजातीयधर्म्मिणो विजातीयधर्म्मासम्भवापादनस्यायुक्तत्वे प्रमाणमाह यथोक्त-

* जाड्यजननशक्त इति पा० ।

† तिर्यक्पवनादिकमिति पा० ।

‡ विस्मयनीयमित्यर्थः । इति पा० ।

§ अत्यन्ताश्चर्यभूतेति पा० ।

मिति, पावकस्य सर्गादिशक्तिर्नास्ति तस्माद् दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितांशः क इत्यपेक्षायां तद्व्याचष्टे एतदुक्तं भवतीति, नानुमातुं युक्तमित्येतदुक्तं भवतीत्यन्वयः । सर्गाद्या भावशक्तय इति, भावः—पदार्थः सर्गादिगोचराः पदार्थशक्तयो ब्रह्मणः सम्भवन्तीत्यन्वयः एतत्प्रतिपादनपरं वाक्यमिति वक्तव्ये प्रतिपादनतत्परमितिवत्पदार्थशक्तय इति निर्देशः । फलितार्थमाह अतो विचित्रेति, ब्रह्मणः सकलेतरविसजातीयत्वादाश्चर्यशक्तियोगे प्रमाणमाह तदाहेति,

यथोक्तं—शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णता । एतदुक्तं भवति सर्वेषामग्निजलादीनां भावानामेकस्मिन्नपि भावे दृष्टैव शक्तिस्तद्विसजातीयभावान्तरेऽपीति न चिन्तयितुं युक्ता जलादावदृष्टाऽपि तद्विसजातीयपावके भास्व*रत्वोष्णतादिशक्तिर्यथा दृश्यते, एवमेव सर्ववस्तुविसजातीये ब्रह्मणि सर्वसाम्यं नानुमातुं युक्तमिति, अतो विचित्रानन्तशक्तियुक्तं ब्रह्मैवेत्यर्थः । तदाऽऽह—जगदेतन्महाश्चर्यं रूपं यस्य महात्मनः । तेनाश्चर्य्यवरेणाहं भवता कृष्ण ? सङ्गतः ॥ इति,

अक्रूरवचनमिदं जगदेतदित्यादि, स्वविरचितग्रन्थस्यापातप्रतीतार्थमात्रमेव न केवलं विवक्षितम् अपि त्वतिगम्भीरत्वादर्थगौरवमस्तीत्यभिप्रायेणाह तदेतदिति, तदेतदभेदभेदघटकश्रुत्यादिविषयमुक्तमर्थजातमित्यर्थः, अधीयमानानामेव श्रुतीनां नानाविधत्वं दृश्यते अर्थवैविध्यान्नानाविधत्वम् अनन्त-शब्देनानधीयमाना इतिहासपुराणोपबृंहिताः शाखाभेदा

* भास्करत्वोष्णत्वादीति पा० ।

विवक्षिता: सोपबृंहणश्रुतिनिकरेषु तद्व्याख्यानेषु च परिश्रमादवधारितमित्यर्थः. । श्रुतीनां नानाविधत्वं कथं तासां त्वदुक्तार्थपरत्वं वा कथमित्यत्राह तथा हीति, तत्र प्रथमं सृष्टिप्रलयश्रुतिवैविध्यमाह प्रमाणेति, अनेकतत्त्वानि महदादीनि तानि चापरिमितपरिणामानि प्रकृतेर्महान्महतोऽहङ्कार इति पारम्पर्यनियतः क्रमः, अनेकतत्त्वानि नियतक्रमाश्च प्रमाणान्तराविषया: तैर्विशिष्टौ सृष्टिप्रलयावित्यर्थः । अनेकविधाश्श्रुतय इति क्वचित्तेजोऽबन्नमात्रसृष्टिः, क्वचित्पञ्चभूतमात्रसृष्टिः, क्वचिन्महदादिसृष्टिश्चेति सृष्टित्रैविध्यं श्रूयते

**तदेतन्नानाविधानन्तश्रुतिनिकरशिष्टपरिगृहीततद्व्याख्यानपरिश्रमादवधारितं, तथा हि प्रमाणान्तरापरिदृष्टापरिमितपरिणामानेकतत्त्वनियतक्रमविशिष्टौ सृष्टिप्रलयौ ब्रह्मणोऽनेकविधाः श्रुतयो वदन्ति निरवद्यं निरञ्जनं विज्ञानमानन्दं निर्विकारं निष्कलं निष्क्रियं शान्तं निर्गुणमित्यादिकाः, निर्गुणं ज्ञानस्वरूपं ब्रह्मेति काश्चन श्रुतयोऽभिदधति । नेह नानाऽस्ति किञ्चन मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति**

तत्र सृष्टिप्रलयपरकृत्स्नवाक्यपर्यालोचनया हि सृष्टिप्रलयक्रमनिष्कर्षः क्रियते, एवमर्थान्तरेष्वपि कृत्स्नवाक्यपर्यालोचनयैवार्थो निर्णेतव्य इति भावः । सृष्टिप्रलयपरवाक्यानां मुहुरुदाहृतत्वात्तान्यत्रानुक्त्वा तदर्थमात्रमुक्तम् । अथ निर्गुणश्रुतीराह निरवद्य मिति, भेद*निषेधिनीः श्रुतीराह नेहेति, सगुणश्रुतीराह यः सर्वज्ञ इति, ऐक्यश्रुतीराह सर्वं खल्विति, भेदश्रुतीराह पृथगिति, शरीरात्मभावपरश्रुतीराह अन्तःप्रविष्ट इति, एवं नानाविधत्वं दर्शितम्, आसां श्रुतीनां स्वोक्तार्थपरत्वमेवोपपन्नमिति वक्तुमाह इतीति, अविरोधो मुख्यार्थापरित्यागश्च यथा सम्भवतीति, परपक्षेष्वन्योन्यविरोधो

* भेदनिषेधश्रुतीरिति पा० ।

मुख्यार्थपरित्यागश्च भवतः, सगुणभेदश्रुतीनां बाध्यत्वाभ्युपगमाद्विरोधः सम्प्रतिपन्नः ऐक्यश्रुतिष्वपि तत्त्वमादिपदानां लक्षणाश्रयणादमुख्यत्वम्, एवं भेदाभेदपक्षेऽपि निर्दोषत्वाविकारत्वादिपरश्रुतिविरोधः, तत्त्वमादिपदेष्वपि निर्दोषत्वसदोषत्वादिव्याघातादन्यतरपदामुख्यत्वप्रसङ्ग इति भावः, । तस्मादविरोधेन मुख्यत्वेन च वर्णनीयं-वर्णयितुं युक्तमित्यर्थः । कः पुनरविरुद्धो मुख्यश्चार्थ इत्यत्राह-

**यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं विजानीयादित्यादिका नानात्वनिषेधवादिन्यस्सन्ति काश्चन श्रुतयः, यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः, सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते, सर्वे निमेषा जज्ञिरे, विद्युतः पुरुषादधि, अपहतपाप्मा विजरो विमृत्युर्विशोको विजघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प इति सर्वस्मिन् जगति हेयतयाऽवगतं सर्वगुणं प्रतिषिध्य निरतिशयकल्याणगुणानन्त्यं सर्वज्ञतां सर्वशक्तियोगं सर्वनामरूपव्याकरणं सर्वस्याधारतां च काश्चन श्रुतयो ब्रुवन्ति,**

वर्णितं चेति, नास्माभिः स्वबुद्ध्याऽर्थस्थितिरुत्प्रेक्ष्यते पूर्वाचार्यैरेवोपदिष्टोऽयं ग्रन्थनिबन्धश्चार्थ उच्यत इति भावः ।. तत्र सर्वश्रुतीनां परस्परा*बाधं मुख्यार्थत्वं च दर्शयन् अविकारश्रुतिमुख्यार्थत्वं दर्शयति अविकारेति, निर्गुणश्रुतिमुख्यार्थत्वमाह निर्गुणेति, व्यवस्थिताः-विशेषेणावस्थिताः, भेदनिषेधवाक्यं च प्रकारिनानात्वानभ्युपगमात् मुख्यार्थमित्याह नानात्वेति, भेदश्रुतिमुख्यार्थत्वमाह सर्वेति, कल्याणगुणाकरत्व-शब्देनानुक्तसकलगुणास्पदत्वं विवक्षितं ज्ञानानन्दमात्रवादिवाक्यमप्यपृथ-

* परस्पराविरोधमिति पुस्तकान्तरपाठो युक्त इति प्रतिभाति ।

क्तिद्धर्मवाचिपदानां धर्मिपर्यन्तत्वाद्धर्मिस्वरूपस्य ज्ञानवत्स्वयम्प्रकाश-त्वाच्च मुख्यार्थमित्याह ज्ञानानन्देति,

सर्वं खल्विदं ब्रह्म, तज्जलानिति, ऐतदात्म्यमिदं सर्वम् एकः सन् बहुधा विचार इत्यादिका ब्रह्मसृष्टं जगन्नानाकारं प्रतिपाद्य तदैक्यं च प्रतिपादयन्ति, काश्चन श्रुतयः पृथगात्मनं प्रेरितारं च मत्वा भोक्ता भोग्यं प्रेरितारं च मत्वा प्रजापतिरकामयत प्रजाः सृजेयेति पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतं, तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं सर्वस्य वशी सर्वस्येशान इत्यादिका ब्रह्मणस्सर्व-स्मादन्यत्वं सर्वस्येशितव्यत्वमीश्वरत्वं च ब्रह्मणः सर्व-स्य शेषतां पतित्वं चेश्वरस्य, काश्चन—अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा एष आत्माऽन्तर्याम्यमृतः यस्य पृथवी शरीरं यस्यापः शरीरं यस्य तेजः शरीरं मित्या-दि, यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरं यस्यात्मा शरीरमिति ब्रह्मव्यतिरिक्तस्य सर्वस्य वस्तुनो ब्रह्मणश्च शरीरात्मभावं दर्शयन्ति काश्चनेति ना-नारूपाणां वाक्यानामविरोधो मुख्यार्थापरित्यागश्च यथा सम्भवति तथैव वर्णनीयं, वर्णितं च, अविकार-श्रुतयः स्वरूपपरिणाम—

ज्ञानानन्दमात्रवादि वाक्यमित्यन्वयः, सर्वस्मादन्यत्वं-विलक्षणत्वं तदुपपादकं सर्वकल्याणगुणत्वादि नोच्यते एषां विशेषणानामयमभिप्रायः सत्यं ज्ञानमित्यादिश्रुतिरार्थभेदनिषेधपरेति हि पराभ्युपगतिः, तत्रेदं विव-

त्रितं ज्ञानस्य ज्ञानादिगुणाश्रयत्वानुपपत्तिः कथम्, अदर्शनादिति चेत्तर्हि ज्ञानं कस्यचिद्धर्मभूतं दृष्टमिति ब्रह्म कस्यचिद्धर्म्मभूतं स्यात्, श्रुतिबलाच्च धर्म्मभूतमिति चेत्तर्हि श्रुतिबलात् ज्ञानाद्याश्रयत्वमपि स्वीकार्यं व्याप्तिविरुद्धस्यापि श्रुतिप्रतिपन्नस्याङ्गीकारात् । किञ्च व्याप्तिविरोधोऽपि नास्ति धर्म्मभूतज्ञानस्यैव हि ज्ञानाद्यनाश्रयत्वं दृष्टम् ।

परिहारादेव मुख्यार्थाः, निर्गुणवादाश्च प्राकृतहेयगुणनिषेधपरतया व्यवस्थिताः, नानात्वनिषेधवादाश्च एकस्य ब्रह्मणः शरीरतया प्रकारभूतं सर्वं चेतनाचेतनं वस्त्विति सर्वस्यात्मतया सर्वप्रकारं ब्रह्मैवावस्थितमिति सुरक्षिताः । सर्वविलक्षणत्व–पतित्वेश्वरत्व–सर्वकल्याणगुणाकरत्व–सत्यकामत्व–सत्यसङ्कल्पत्वादिवाक्यं तदभ्युपगमादेव सुरक्षितं । ज्ञानानन्दमात्रवादि च सर्वस्मादन्यस्य सर्वकल्याणगुणाश्रयस्य सर्वेश्वरस्य सर्वशेषिणः सर्वाधारस्य सर्वोत्पत्तिस्थितिप्रलयहेतुभूतस्य निरवद्यस्य निर्विकारस्य सर्वात्मभूतस्य परस्य ब्रह्मणः स्वरूपनिरूपकधर्म्मो मलप्रत्यनीकानन्दरूपज्ञानमेवेति स्वप्रकाशतया स्वरूपमपि ज्ञानमेवेति च प्रतिपादनादनुपालितम् । ऐक्यवादाश्च शरीरात्मभावेन सामानाधिकरण्यमुख्यार्थतोपपादनादेव सुस्थिताः ॥

अत्र तु धर्म्मत्वाभावात् ज्ञानाद्याश्रयत्वं युक्तमिति व्याप्त्यविरोधः, व्याप्तिविरोधेऽपि श्रुतिबलाद्धर्मान्तराश्रयत्वसिद्धिरित्यभिप्रेत्य सर्वविलक्षणत्वादिगुणाश्च श्रुतिसिद्धा इति प्रतिबन्दीदर्शनार्थमनेकविशेषणोक्तिरिति स्वरूपनिरूपकधर्म्मशब्दिपदस्य धर्म्मिपर्यन्तत्वं तदनुसारस्वादिति सूत्रोक्तमिह दर्शितं, स्वरूपेति, ज्ञान–शब्दो धर्म्मभूतज्ञानपरः, मलप्रत्यनीकशब्दविशे-

षितत्वाद्धर्म्मभूतज्ञानं चिदचिद्व्यावर्तकं विशेषणभूतचिदचिद्रूपजगदपेक्षया विशेष्यांशस्य व्यावर्तकतया धर्म्मभूतज्ञानस्य स्वरूपनिरूपणधर्म्मत्वम् । ऐक्यश्रुतिमुख्यार्थत्वमाह ऐक्येति, एवं सर्वश्रुत्यनुरोधेन चोदयति एवं चेति, उत्तरमाह सर्वस्येति, कथं सर्वं समर्थितमित्यत्राह सर्वेति, परैरुक्तो भेदो भेदाभेदौ च भेदश्रुतिविरोधादमुख्यत्वाच्च न प्रामाणिकाः, भेदश्रुत्यविरुद्धौ भेदाभेदौ अभेदश्चास्मदभिमत इत्यस्माकं भेदपक्ष एवेत्यभिप्रायः, सर्वस्य वेदवेद्यत्वात्सर्वं समर्थितमिति हि

**एवं च सत्यभेदो वा भेदो वा द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थः समर्थितो भवति, सर्वस्य वेदवेद्यत्वात् सर्वं समर्थितं, सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदस्समर्थितः, एकमेव ब्रह्म नानाभूतचिदचिद्वस्तुप्रकारं नानात्वेनावस्थितमिति भेदाभेदौ, अचिद्वस्तुनश्चिद्वस्तुनश्चेश्वरस्य च स्वरूप–स्वभाववैलक्षण्यादसङ्कराच्च भेदः समर्थितः ॥**

पूर्वमुक्तं तदयुक्तम् ऐक्यज्ञानस्यापवर्गोपायत्वेन परमार्थविषयत्वात्तत्रैव तात्पर्यमिति तदानुगुण्येन श्रुत्यन्तरं नेयमित्यभिप्रायेण चोदयति ननु चेति, परमपुरुषार्थलक्षणमोक्षसाधनमिति, उपासनादयः सगुणप्राप्तिरूपार्वाचीनमोक्षफला इति तद्व्यावृत्तिः परमपुरुषार्थ–शब्देनाभिप्रेता गम्यत इति, तत्त्वमसीत्येतावदेवात्र श्रूयते ऐक्यज्ञानं मोक्षसाधनमित्ययमर्थो न कण्ठोक्तः अपि तु गम्यत इति भावः । परिहरति नैतदेवमिति, तत इति व्याख्येयपदम् अस्य प्रकृत्यर्थं व्याचष्टे पृथक्त्वज्ञानादिति, प्रत्ययार्थं व्याचष्टे हेतोरिति, तेनेति व्याख्येयपदं तद्व्याचष्टे परमात्मनेति, जुष्टः–जुषी-प्रीतिसेवनयोः अनुगृहीत इत्यर्थः । साक्षाच्छब्देन कण्ठोक्तिर्विवक्षिता अनेनैक्यज्ञानस्य मोक्षसाधनत्वगम्यताव्यावृत्तिः, पुनः शङ्कते ऐक्येति, परिहरति पृथक्त्वेति, पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुतिविरोधादैक्यज्ञानमपर-

मार्थविषयं स्यादित्यर्थः । अन्यतरस्यापरमार्थविषयत्वमस्तु तत्रैक्यज्ञानस्य परमार्थविषयत्वं किमर्थं नाभ्युपेतं भवतीति शङ्कायामैक्यज्ञान-

ननु च तत्त्वमसि श्वेतकेतो ! तस्य तावदेव चिरमिति ऐक्यज्ञानमेव परमपुरुषार्थलक्षणमोक्षसाधनमिति गम्यते, नैतदेवं पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीति आत्मानं प्रेरितारं चान्तर्यामिणं पृथग् मत्वा ततः पृथक्त्वज्ञानाद्धेतोस्तेन परमात्मना जुष्टोऽमृतत्वमेति इति साक्षादमृतत्वप्राप्तिसाधनमात्मनो नियन्तुश्च पृथग्भावज्ञानमेवेत्यवगम्यते ।

स्यापरमार्थविषयत्वं नास्मन्मते अपि त्वन्यतरस्य परमार्थविषयत्वे अन्यस्यापरमार्थविषयत्वं प्रसज्जेदिति त्वन्मते ऽनिष्टप्रसङ्गः कुत इत्यभिप्रायेणाह एतदुक्तमिति, तुल्यप्रमाणभूतयोर्विरोधे ऽन्यतरस्य बाधे अन्यस्यापि बाधप्रसङ्गाद् द्वयोरप्यविरोधेन विषयो विवेचनीय इत्यर्थः । विषयभेदेनाविरोधं पृच्छति कथमिति, विषयविभागं दर्शयति अन्तर्यामीति, ऐक्यज्ञानस्य मोक्षोपायत्वश्रुतेर्विषयो दर्शितः अन्तर्यामीति, पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुतेर्विषयोदर्शितः एवमिति, एवमभेदतात्पर्यशङ्का निराकृता । अथ भेदाभेदज्ञानस्य मोक्षोपायतया तत्र तात्पर्यमिति शङ्कां व्युदस्यति भोक्तेति, सद्वारकमद्वारकं चाकारत्रयमस्तीति· त्रिविधं ब्रह्मेत्यस्याः श्रुतेरर्थं विवृणुः द्वारभूतयोश्चिदचितोः 'स्वभावं दर्शयन्नचित्स्वभावं दर्शयति भोग्येति, अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेरूपमुच्यते ॥ इत्यस्यार्थोऽत्राभिप्रेतः, जीवस्वभावमाह भोक्तुरिति, सद्वारकमाकारद्वयमद्वारक एक आकारश्चेति

ऐक्यवाक्यविरोधादेतदपरमार्थसगुणब्रह्मप्राप्तिविषयमित्यभ्युपगन्तव्यमिति चेत् पृथक्त्वज्ञानस्यैव

साक्षादमृतत्वप्राप्तिसाधनत्वश्रवणाद् विपरीतं कस्मान्न भवति, एतदुक्तं भवति—द्वयोस्तुल्ययोर्विरोधे सत्यविरोधेन तयोर्विषयो विवेचनीय इति, कथमविरोध इति चेत् अन्तर्यामिरूपेणावस्थितस्य परस्य ब्रह्मणः शरीरतया प्रकारत्वाज्जीवात्मनस्तत्प्रकारं ब्रह्मैव त्वमिति—शब्देनाभिधीयते, तथैव ज्ञातव्यमिति तस्य वाक्यस्य* विषयः, एवंभूताज्जीवात्तदात्मतयाऽवस्थितस्य परमात्मनो निखिलदोषरहिततया सत्यसङ्कल्पत्वाद्यनवधिकातिशयासंख्येयकल्याणगुणाकरत्वेन

ब्रह्म त्रिविधं जीवान्तर्यामितयाऽवस्थानमचिदन्तर्यामितयाऽवस्थानं स्वरूपेणावस्थानं चेति त्रिविधं ब्रह्मेत्यर्थः । ऐक्यज्ञानोपायपरत्वश्रुतिविरोधेन हि पृथक्त्वज्ञानस्यापरमार्थविषयत्वं शङ्कितं तेनैक्यज्ञानपरत्वपरोक्तं तत्त्वमसीति वाक्यं सगुणपरमित्याह तत्त्वमिति, पूर्व्वाचार्येषु वाक्यकारग्रन्थं दर्शयति यथेति, युक्तमिति सगुणस्यैव ब्रह्मण उपासनेन सगुणमेव प्राप्यं युक्तमित्यर्थः । एतत्स्पष्टीकरणाय प्राचा†र्यग्रन्थं दर्शयति व्याख्यातं चेति, यद्यपीत्यादिर्द्रमिडाचार्यग्रन्थः, तद्व्याचष्टे सच्चित्तेति,

च यः पृथग्भावः सोऽनुसन्धेय इत्यस्य वाक्यस्य विषय इत्ययमर्थः पूर्वमेवासकृदुक्तः । भोक्ता भोग्यं प्रेरितारं च मत्वेति भोग्यरूपस्य वस्तुनोऽचेतनत्वं परमार्थत्वं सततं विकारास्पदत्वमित्यादयः स्वभावा भोक्तुर्जीवात्मनश्चामलापरिच्छिन्नज्ञानानन्दस्वभावस्यैवानादिकर्म्मरूपाविद्याकृतनानाविधज्ञान-

* अर्थः इति पा० ।

† द्रमिडाचार्यग्रन्थमिति पा० ।

सङ्कोचविकासौ, भोग्यभूताचिद्वस्तुसंसर्गश्च परमात्मोपासनान् मोक्षश्चेत्यादयः स्वभावाः, एवंभूतभोक्तृभोग्ययोरन्तर्यामिरूपेणावस्थानं स्वरूपेण चापरिमितगुणौघाश्रयत्वेनावस्थानमितिपरस्य ब्रह्मणस्त्रिविधावस्थानं ज्ञातव्यमित्यर्थः, तत्त्वमसीति सद्विद्यायामुपास्यं ब्रह्म सगुणं सगुणब्रह्मप्राप्तिश्च फलमित्यभियुक्तैः पूर्वाचार्यैर्व्याख्यातं, यथोक्तं वाक्यकारेण 'युक्तं तद्गुणकोपासनादिति, व्याख्यातं च द्रमिडाचार्येण विद्याविकल्पं वदता 'यद्यपि सच्चित्तो न निर्भुग्णदैवतं गुणगणं मनसाऽनुधावेत् तथाऽप्यन्तर्गुणामेव देवतां भजते इति, तत्रापि सगुणैव देवता प्राप्यते इति, सच्चित्तः सद्विद्यानिष्ठः न निर्भुग्णदैवतं गुणगणं मनसाऽनुधावेत्, अपहतपाप्मत्वादि कल्याणगुणगणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत् ।

अन्तर्गुणामिति पदस्य हेतुगर्भतां दर्शयन् वाक्यस्यार्थमाह देवतास्वरूपेति, प्रकृतसद्विद्याया असाधारणत्वाखिलजगत्कारणत्वमुक्तं प्रतिविद्यं व्यवस्थितानां गुणानां प्रदर्शनार्थम् आदि—शब्देन सर्वविद्यासाधारणानन्दत्वादयो विवक्षिता, सर्वकल्याणगुण—शब्देन निरूपितस्वरूपस्य गुणा विवक्षिताः, दहरविद्यायां य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानिति दैवतात्पृथगपहतपाप्मत्वादिगुणजातं विभक्तमुक्तमुपास्यं विहितम्, एवं सद्विद्यायां देवतायाः पृथग्गुणजातमुपास्यत्वेन न विहितं, तथाऽपि जगत्कारणत्वादिकतिपयगुणविशिष्टत्वेनोपास्यमानं ब्रह्म स्वतोऽपरिमितकल्याणगुणमिति सामान्येनापरिमितगुणत्वेनोपास्यमानत्वात्तस्यापि प्राप्यं सगुणमेव ब्रह्मेत्यर्थः ।

तथाऽप्यन्तर्गुणामेव देवतां भजते देवतास्वरूपानुबन्धित्वात्सकलकल्याणगुणगणस्य केनचित्परदेवताऽसाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमानाऽपि देवता वस्तुतः स्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते, अतस्सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्या—दहरविद्ययोर्विकल्प इत्यर्थः ।

ननु च सर्वस्य जन्तोः परमात्माऽन्तर्यामी तन्नियाम्यं च सर्वमेवेत्युक्तम्, एवं च सति विधिनिषेधशास्त्राणामधिकारी न दृश्यते यः स्वबुद्ध्यैव

आनन्त्यस्य सर्वविद्यासाधारणत्वात् गुणतोऽऽप्यानन्त्यस्य तदन्तर्गतत्वात्सामान्येनापरिमितगुणत्वं हि सर्वविद्यानुयायि, न चैतावता सर्वगुणानां निरूपकत्वम् अपरिमितानां गुणानां स्वसम्बन्धेन मङ्गलानां च मङ्गलमिति प्रकारेण मङ्गलत्वापादनक्षमत्वस्य निरूपकत्वात् । एवं स्वोक्तार्थस्य स्वबुद्धिविलसितोत्प्रेक्षितत्वं व्यावर्तितम् । अथ परमात्मनियाम्यत्वे विधिनिषेधशास्त्रानर्थक्यं प्रसञ्जयंश्चोदयति ननु चेति, परमात्मनियाम्यत्वमस्तु ततः किमित्यत्राह एवं च सतीति, कथमधिकार्यभाव इत्यत्राह यः स्वबुद्ध्यैवेति, न चेति, एषः—अधिकारी, राजादिनियाम्यत्वे सत्यपि प्रजानां विधिनिषेधयोग्यत्वं दृश्यते तद्वदत्रापि स्यादित्यत्राह सर्वस्मिन्निति, स्वाधीनप्रवृत्तय एव प्रजा अपराधादिकं कुर्वन्ति तत्फलदुःखानुभवादिष्वेव राजनियाम्यत्वं तासाम्, अत्र तु साधनानुष्ठानदशायामपि परमात्मपराधीनप्रवृत्तय इत्यस्वाधीनानामचेतन—

प्रवृत्तिनिवृत्तिशक्तस्य एवं कुर्यान्न कुर्यादिति विधिनिषेधयोग्यः, न चैष दृश्यते सर्वस्मिन्प्रवृत्तिजाते सर्वस्य प्रेरकः परमात्मा कारयितेति तस्य सर्वनियमनं प्रति-

**पादितं, तथा च श्रूयते एष एव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष एवासाधु कर्म्म कारयति तं यमधो निनीषतीति, साध्वसाधुकर्म्मकारयितृत्वान्नैर्घृण्यं च, अत्रोच्यते सर्वेषामेव चेतनानां चिच्छक्तियोगः प्रवृत्तिशक्तियोगः इत्यादिसर्वं प्रवृत्तिनिवृत्तिपरिकरं सामान्येन संविधाय तन्निर्वहणाय तदाधारो भूत्वान्तः—**

एव विधिनिषेधयोग्यत्वमित्यभिप्रायेण सर्वस्मिन् प्रवृत्तिजाते इत्युक्तं प्रेरितारमित्यादिभिः सर्वप्रेरकतया प्रतिपाद्यमानस्य परमात्मनः सर्वं नियमनं सर्वत्र प्रवृत्तिजाते कारयितृत्वपर्यन्तमित्यर्थः । कारयितृत्ववैषम्यार्थे श्रुतिं वदन् नैर्घृण्यं च प्रसञ्जयति श्रूयते चेति, साध्वसाधुकर्म्मकारयितृत्वाच्च नैर्घृण्यं चेति, अत्र च-शब्दः अनुक्तसमुच्चयपरः, असाधुकर्म्मकारयितृत्वान्नैर्घृण्यं साधुकर्म्मकारयितृत्वाद्वैषम्यं चेत्यर्थः । परिहरति अत्रोच्यत इति, इह चिच्छक्तियोगस्य भगवन्नित्येच्छाधीनत्वात्तन्नित्यत्वाविरोध इति भावः । आदि-शब्देन निवृत्तिशक्तियोग इच्छाप्रयत्नौ च गृह्येते, इत्यादीति क्रियाविशेषणं प्रवृत्तिनिवृत्तिपरिकरं करणकलेवरं बाह्यप्रवृत्तिनिवृत्तिशक्तिं ज्ञानचिकीर्षाप्रयत्नशक्तिं च सर्वचेतनानां सामान्येन तत्स्वातन्त्र्यार्हं प्रदायेत्यर्थः । एवं ज्ञानचिकीर्षाप्रयत्नेषु प्रवृत्तेषु प्रवृत्त्यारम्भे न परमात्मापेक्षाऽस्ति अपि तु स्वयमेव प्रवर्त्तते तदानीं परमात्मोपेक्षकः, न चैतावता नियन्तृत्ववैकल्यं परस्योपेक्षाया अपि स्वस्वातन्त्र्या*धिकृत्वात् ।

**प्रविश्यानुमन्तृतया च नियमनं कुर्वन् शेषित्वेनावस्थितः परमात्मा एतदाहितशक्तिस्सन् प्रवृत्तिनि-**

* स्वस्वातन्त्र्याधीनत्वादिति पा० ।

**वृत्त्यादि स्वयमेव कुरुते, एवं कुर्वाणमीक्षमाणः परमात्मोऽदासीन आस्ते, अतः सर्वमुपपन्नं,साध्वसाधुकर्म्मकारयितृत्वं तु व्यवस्थितविषयं न सर्वसाधारणं, यस्तु पूर्व्वं स्वयमेवातिमात्रमानुकूल्ये प्रवृत्तः तं प्रति प्रीतः स्वयमेव भगवान् कल्याणबुद्धियोगदानं–**

देहसम्बन्धदुःखसुखाद्यन्वयदानादिना मुखान्तरेण नियमनस्य विद्यमानत्वात् जीवस्य नियमनार्हत्वानपगमाच्च । एवमुपेक्षकः सन् प्रथमप्रवृत्तौ सत्यां पश्चादनुमन्ता परमात्मा, अत एव ह्यनुमन्तृतया च नियमनं कुर्वन्नित्युक्तं भवति अनुमन्तृत्वं नाम प्रवृत्तिशैथिल्यपरिहारात्मकस्तत्फलपर्यन्तत्वहेतुर्व्यापारः,*न स्वप्र*वृत्तस्य प्रवर्तकत्वम्, एवं ज्ञानचिकीर्षादौ स्वातन्त्र्याद्विधिनिषेधयोग्यत्वं नियमनवैकल्यशङ्कापरिहारार्थमनुमन्तृतया नियमनं कुर्वन्नित्युक्तं, सर्वप्रकारनियमनशक्तोऽपि सन् सत्सङ्कल्पादेवानुमन्तृतया नियच्छति, अनुमन्तृत्वमपि नियमनमेव तेन विना प्रवृत्तेः फलपर्यन्तत्वायोगात्, एवं नियमनप्रकारविशेषाभावेऽपि धारकत्वं शेषित्वं च सुस्थितमित्यात्मशरीरभावस्य च न हानिरित्यभिप्रायेणाधारो भूत्वा शेषित्वेनावस्थित इति चोक्तं, पश्चादनुमन्तृत्वमपि प्रथमप्रवृत्तेर्निग्रहरूपमेव, निग्रहश्चेव दोषः अनिग्रहश्चेव गुणः लोके निग्राह्यनिग्रहस्य गुणत्वदर्शनान्निग्राह्यानिग्रहस्य दोषत्वदर्शनाच्च, प्रथमनिवर्तनशक्तस्यापि उपेक्षकत्वे को हेतुः

**कुर्वन् कल्याणे प्रवर्तयति, यः पुनरतिमात्रं प्रातिकूल्ये प्रवृत्तस्तस्य क्रूरां बुद्धिं ददत् स्वयमेव क्रूरेष्वेव कर्म्मसु प्रेरयति भगवान्, यथोक्तं भगवता–तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं**

* तत्प्रवृत्तस्य प्रवर्तकत्वमिति पा० ।

तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ तानहं द्विषतः

स्वातन्त्र्यमेवेति ब्रूमः, तर्हि तत्स्वातन्त्र्यं दोषरूपं कथं लोके तथाऽऽदर्शनादेव एवं व्याप्तिबलाद्दोषमापादयन् भवान् किं परमात्मधर्मिणमभ्युपगम्य दोषमापादयति उतानभ्युपगम्य, अनभ्युपगम्य चेदाश्रयासिद्धिः, अभ्युपगम्य चेद् धर्मिग्राहकप्रमाणबाधः शास्त्रप्रवर्तनमुखेन सामान्येनाहितनिवारणं च कृतमीश्वरेण तदतिलङ्घ्य प्रवर्तमानानां प्रथमप्रवृत्तौ उपेक्षक इति नास्त्येव दोष इत्यभिप्रायः । कारयितृत्वश्रुतेर्निर्वाहकमाह साधिवति, कारयितृत्वश्रुतेर्व्यवस्थितविषयत्वान्न विधिनिषेधशास्त्रानर्थक्यमिति भावः, दयायास्तु प्राचीनासंख्येयजन्मसु महापराधकारिणि पश्चात्तनप्रातिकूल्यव्यवसायनिवृत्तिमात्रेण तदपराधाननन्ताननादृत्य तस्य निरतिशय*सुखप्रदानाय स्वयमेव भगवान् प्रवर्तत इति सावकाशत्वम् । अथोपायस्वरूपं विशदयति सोऽयमिति, पूर्वमुपायस्वरूपमत्रेदमित्यादौ नातिविस्तृतं ततोऽत्र स्फुटमुच्यते ईश्वरविषया भक्तिः

क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ इति, सोऽयं परब्रह्मभूतः पुरुषोत्तमो निरतिशयपुण्यसंचयक्षीणाशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यस्य सदाचार्योपदेशोपबृंहितशास्त्राधिगततत्त्वयाथात्म्यावबोधपूर्वकाहरहरुपचीयमानशमदमतपःशौच-

न तु ब्रह्मविषयेति शङ्काव्यावृत्त्यर्थं परब्रह्मभूतः पुरुषोत्तम इत्युक्तं, जन्मान्तरसहस्रेषु तपोध्या†नसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ इत्यस्यार्थं हृदि निधायाह निरतिशयेति, मामेव ये प्रपद्यन्ते इत्युक्ताङ्गपत्तिसापेक्षत्वमाह परमपुरुषेति, सदाचार्योपदेशोपबृंहितेति उपबृंहितं—पुष्कलीकृतम्, अनेन पाण्डित्यं च निर्विद्येति श्रुत्यर्थ उक्तः,

* संपत्प्रदानायेति पा० ।

† ज्ञानेति पा० ।

तत्त्वयाथात्म्येति, धर्म्मविपर्यासप्रकारविपर्यास—व्यावृत्त्यर्थौ तत्त्वयाथा-
त्म्यशब्दौ प्रकारविपर्यासो रजः कार्यः धर्मिविपर्यासस्तमः कार्यः तदुभय-
राहित्यं विवक्षितं, शमदमौ अन्तःकरणबाह्येन्द्रियजयौ तपः—कृच्छ्रादि-
शौचं मानसवाचिककायिकरूपेणेति त्रिविधं, क्षमा दुःखसहिष्णुत्वं भगव-
दपचारादिना भीरुत्वं, भयस्थानविवेकः तद्रक्षकत्वाध्यवसायादिना निर्भ-
यत्वम् अभयस्थानविवेकः, दया परदुःखासहिष्णुत्वम्, अहिंसा परदुःखा-
हेतुत्वं, वर्णाश्रमाचारवतेत्यादिवचनाभिप्रायेण परमपुरुषाधनवेष इत्युक्तम्,
उपसंहृतिरनुष्ठानं, भगवति न्यस्तभरत्वमाह परमेति, शुद्धभावं गतो
भक्त्या शास्त्राद्वेद्मि जनार्दनमित्यादिवचनागुण्येन शास्त्रज्ञानात्प्रभृति-
भक्तिसापेक्षत्वात्तद्भक्तिकारितेत्युक्तं, स्तुतिर्गुणकथनं वन्दिकृत्यं वा यतनं

**क्षमार्जवभयाभयस्थानविवेकदयाऽहिंसाद्यात्मगुणोपे-**
**तस्य वर्णाश्रमोचितपरमपुरुषाराधनवेषनित्यनैमित्ति-**
**ककर्म्मोपसंहृतिनिषिद्धपरिहारनिष्ठस्य परमपुरुषच-**
**रणारविन्दयुगलन्यस्तात्मात्मीयस्य तद्भक्तिकारिता-**

भगवद्गुणानादिकरणं, कीर्तनं भगवन्नामोच्चारणं, वचनं परेभ्यो भगव-
द्गुणानां प्रतिपादनं, ध्यान—शब्देनारम्भण—संशीलनं विवक्षितं न त्वङ्गी,
अनुध्यानोपायस्योच्यमानत्वात् । नन्वर्चनप्रणामादेरङ्गिकोटिनिवेशः
प्रागुक्तः वर्णाश्रमधर्म्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनप्रणामा-
दिरिति इह कथमर्चनप्रणामादेरङ्गत्वमुच्यते यावद्धारणासिद्धि क्रियमा-
णमर्चनादिकमङ्गस्ततः पश्चादनुष्ठीयमानमङ्गीति विभाग इति स्वान्त-
ध्वान्तं पापमूलरजस्तमसी विषयस्य प्रियत्वादस्य निरतिशयप्रियत्वम् अनु-
ध्यानरूपभक्त्येकलभ्य इति एवंविधानुध्यानं भक्तिः तयैव लभ्य इत्यर्थः।
यद्वा पूर्वमपि ध्यान—शब्देनाविच्छिन्नस्मृतिसन्ततिरूपध्यानमेवोच्यते, न
त्वारम्भणसंशीलनं पश्चादनुध्यानशब्देन दिव्यात्मस्वरूपानुसन्धानरूपः
समाधिरुच्यते, स हि ध्यानसाध्यः तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि
यन्मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते इति वचनात् उपेयविरो-

धिनिरासकत्वं समाधेरेव, ध्यानमपि समाधिविरोधिनिरासकं यथाऽग्निरुद्धुतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्विषम् ॥ मनसा ध्याननिष्पाद्यमित्युक्तेः,

**नवरतस्तुति–स्मृति–नमस्कृति–वन्दन–यतन–कीर्त्तन–गुणश्रवण–वचन–ध्यानार्चन–प्रणामादिप्रीतपरमकारुणिकपुरुषोत्तमप्रसादविध्वस्तस्वान्तध्वान्तस्यानन्यप्रयोजनानवरतनिरतिशयप्रियविशदतमप्रत्ययतापन्नानुध्यानरूपभक्त्येकलभ्यः । तदुक्तं परमगुरुभिर्भगवद्यामुनाचार्यपादैः–उभयपरिकर्म्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्य इति, ज्ञानयोगकर्म्मयोगसंस्कृतान्तःकरणस्येत्यर्थः**

तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ? ॥ इति,–सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् । यमनियमविधूतकल्मषाणाम्, ॥ सदा तद्भावभावित इति, धारणापर्यन्तानामङ्गानां ध्याननिष्पादकत्ववद् ध्यानस्य समाधिनिष्पादकत्वमेवेति समाधेरेवाङ्गित्वं,ध्यानस्यैव प्राधान्यं यत्रोच्यते तत्र ध्यान–शब्देन समाधिपर्यन्तध्यानं विवक्षितं समाधिनिष्ठेनापि व्युत्थानकाले क्रियमाणमर्चनादिकमीङ्गकोटिनिविष्टं मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु मामेवैष्यसीत्युक्त्या प्राप्तेरव्यवहितोपायत्वप्रतीतेः, तेनानुष्ठीयमानो वर्णाश्रमादिधर्म्मस्त्वङ्गमेव, अतोयथोक्त एवार्थः, अस्यार्थस्य साम्प्रदायिकत्वमाह तदुक्तमिति, उभयपरिकर्मित–शब्दं व्याचष्टे ज्ञानेति, उक्तार्थे प्रमाणानि दर्शयन्प्रथमं कर्म्मानुगृहीतत्वे प्रमाणमाह तथा चेति, अत्र कर्म्मवाचिपदं किमित्यत्राह अत्रेति, अविद्या–शब्दस्य कर्म्मवाचित्वे प्रयोगं दर्शयति तथोक्तमिति, ज्ञानव्यपाश्रयः–शास्त्रजन्यज्ञानवान्, ब्रह्मविद्यामधिष्ठाय–विवेकजं ज्ञानमवलम्ब्य उद्दिश्येत्यर्थः ।

सू० न तृतीये तथोपलब्धेः, ॥ १८ ॥

न तृतीयस्य स्थानस्य शरीरारम्भाय पञ्चमाहुत्यपेक्षा, कुतः तथोपलब्धेः तृतीयस्थान-शब्देन केवलपापकर्माण उच्यन्ते, तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते "वेत्थ यथा ऽसौ लोको न संपूर्यत" इत्यस्य प्रश्नस्य प्रतिवचने अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यत इति तृतीयस्थानस्य द्युलोकारोहावरोहाभावेन द्युलोकासंपूर्तिवचनादस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा, पञ्चम्यामाहुताविति चापां पञ्चमाग्निसम्बन्धस्य पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति नान्यन्निवारयति अवधारणाश्रवणात् ॥

टी० "एतदुक्त"मिति, दृष्टान्ततयेत्यर्थः विद्याविषयत्वं पुण्यकर्मविषयत्वं चेति विषय-शब्देन फलं विवक्षितं, विशिंषन् हि विषयः परिच्छेयमितिवोाद्यम् । अनन्तरसूत्रमवतारयति "नन्वि"ति, सू० न तृतीये तथोपलब्धेः, वेत्थेत्यादि संपूर्यते प्राप्यत इत्यर्थः । न कतरेण च-न केनचिदित्यर्थः जायस्व म्रियस्व इति ईश्वरशासनानुवर्तिनीत्यर्थः । जायन्ते म्रियन्त इति वार्थः वेदस्वातन्त्र्यात्, वज्रे मग्ने इति भूतार्थता वा पुरीमवस्कन्द लुनीहि नन्दनमित्यादिवत्कर्मफलानुभवाश्रयतया स्थान-शब्दवाच्यत्वं पञ्चम्यामित्यत्रायोगव्यवच्छेद एव, नान्ययोगव्यवच्छेद इत्यर्थः ॥ कुत इत्यत्राह-

सू० स्मर्यतेऽपि च लोके ॥ १९ ॥

पुण्यकर्मणामपि केषांचित्पञ्चमाहुत्यनपेक्षया देहारम्भो लोके स्मर्यते द्रौपदीधृष्टद्युम्नप्रभृतीनाम् ॥

## सू० दर्शनाच्च ॥ २१ ॥

चकारा[1]च्छ्रुतावपि दृश्यते केषांचित्पञ्चमाहुत्यनपेक्षया देहारम्भः "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जमित्येषूद्भिज्जस्वेदजयोर्भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते । ननु न स्वेदजानामत्र संकीर्तनमस्ति त्रीण्येव बीजानीति वचनात्, तत्राह ।

## सू० तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजस्य स्वेदजस्याप्यण्डजं जीवजमुद्भिज्जमित्यत्र तृतीयेनोद्भिज्ज-शब्देनावरोधः, सङ्ग्रहो विद्यते इत्यर्थः, अतः केवलपापकर्मणां चन्द्रप्राप्तिर्न सम्भवति ॥ अनिष्टादिकार्यधिकरणं समाप्तम् ॥

टी० "अवधारणाश्रवणा"दिति सू० स्मर्यतेऽपि च लोके, अपि-शब्दसूचितमाह "पुण्यकर्मणा"मिति, पुण्यकर्मस्वप्ययं नियमो भज्यते किं पुनः पापकर्मस्विति भावः । सूत्रार्थसमुच्चयपरश्च-शब्द इति स्फुटत्वादनुक्तिः, लोक-शब्दः प्रसिद्ध्यतिशयद्योतनार्थः । सू० दर्शनाच्च, बीजत्रैविध्यं तत्कार्यभूतत्रैविध्येन श्रुतिर्विशृणोति, अण्डजमिति जीवजं जरायुजमुद्भिज्ज-मिति उद्भिज्जशब्दार्थ एव वक्ष्यमाणसूत्रानुरोधेन विवृतः "उद्भिज्जस्वेदजयोरि"ति । अनन्तरसूत्रमवतारयति "नन्वि"ति, सू० तृतीयशब्दावरोधः संशोकजस्य, उद्भिज्जस्य पञ्चमाहुतिनिरपेक्षत्वसम्प्रतिपत्तेः पृथिव्यूष्मजत्वायोनिजत्वपापोत्तरत्वसाम्याच्च तृतीयशब्देन संग्रहः न तु प्रथमेन द्वितीयेन चेति भावः ॥ अधिकरणार्थमुपसंहरति "अत"इति, परं तु संयमने त्वनुभूयेत्यादिसिद्धान्तसूत्राणि वर्णयन्ति तु-शब्दानुरोधात् यमवश्यतास्मरणसप्तनरकस्मरणपरयोः सूत्रयोश्च साफल्यात्, ते हि चन्द्रप्राप्तिप्रति-

[1] कुत्रचित्पुस्तके श्रुतावपि दृश्यते इत्येव पा० ।

बेधसमर्थं पूर्वपक्षविषयत्वे तु तयोस्सूत्रयोर्न किञ्चित्प्रयोजनं रौरवादिषु चित्रगुप्तादीनामधिष्ठातृत्वं स्मर्यमाणं यमाज्ञामूलमित्यधिष्ठातृबुद्ध्याविरोधपरं तत्रापि तद्व्यापाराद्विरोध इति सूत्रं च व्याख्यातम्, अत्रोच्यते विद्याकर्मणोरिति सूत्रस्थतु-शब्दस्य सिद्धान्तद्योतकत्वाभावे प्रयोजनाभावात् द्वितीयसूत्रस्थतु-शब्दस्य शङ्काविशेषव्यावर्तकतया ऽपि सफलत्वात् सूत्रपञ्चकं पूर्वपक्षविषयं भवितुमर्हतीति विद्याकर्मणोरित्यत्र तु-शब्दः शङ्कामात्रव्यवच्छेदक इति चेन्न तदसम्भवात्, विद्यया देवयाने कर्मणा पितृयाणे च पथ्यनधिकृतानां तृतीयस्थानसम्बन्धप्रतिपादनाच्च अनिष्टादिकारिणां न चन्द्रप्राप्तिरिति[1] हि सूत्रार्थो व्याख्यातः, न हि तत्र व्युदसनीया काचिच्छङ्का सम्भवति, श्रुत्या सर्वेषां चन्द्रप्राप्तिशङ्का व्युदसनीया चेत्तर्हि पूर्वपक्ष एवात्र तु-शब्दव्युदसनीय इत्युक्तं स्यात्, द्वितीयसूत्रे तु व्युदसनीयशङ्कोपन्यस्ता । किञ्चारोहावरोहशब्दास्वारस्यं स्फुटं नरकेषु यामीर्यातना अनुभूयास्मिन् लोके जायमानानामुक्तस्थानप्राप्तेस्ततोऽवरोहणस्य चाभावात् पूर्वं यामालयमारोहन्ति ततो नरकप्राप्तिः पुनर्जन्मावधिको व्यापारोऽवरोह इति चेत् अनुभूयेति ल्यबन्तनिर्देशेनारोहावरोहयोरुभयोरपि पश्चाद्भावित्वावगमात् नरकानुभवादनन्तरं यमालयमारुह्य ततोऽवरोहन्तीति चेत् न, अश्रुतत्वात् कल्पकाभावाच्च भवतां ग्रन्थेषु तथाऽनुक्तत्वाच्च । यमप्राप्तिवचने पापफलानुभवाश्रवणेन पापवैयर्थ्यचोद्यस्य तदवस्थत्वशङ्कापरिहारार्थतया सू० स्मरन्ति च, अपि सप्तेति सूत्रयोः साफल्यमित्युक्तं, । तत्रापि तद्व्यापाराद्विरोध इति तत्र कस्याविरोध इत्यपेक्षायां नरकगमनाविरोध इति युक्तं पूर्वसूत्रोत्थापितत्वात्तद्विरोधस्य चित्रगुप्ताद्यधिष्ठानस्याप्राकृतत्वाच्च । अन्ये तु न तृतीय इत्यतः पूर्वमेवाधिकरणसमाप्तिमिच्छन्त एवं वर्णयन्ति अनिष्टादिकारिणोऽमुं लोकं धूमादिना मार्गेण गच्छन्ति नेति विषये तत्र पापफलभोगाभावात् कर्मणा विना भोगसम्भवे अस्कवैयर्थ्याच्च न गच्छन्तीति पूर्वपक्षः । द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं

[1] चन्द्रप्राप्त्यभाव इति पा० ।

विश्वमेतत्समेति यदन्तरा पितरं मातरं चे"ति श्रुतेः आपितृलोकात्तेनैव मार्गेण गमनमिति सिद्धान्त इति भोगाभावव्युदासपरं द्वितीयं सूत्रमाहुः अपि सप्तेति सूत्रं च मत्तोभीता यान्ति जना इत्यादि मृत्युगीतश्लोकसप्तकविषयं तेषु पुण्यकर्मफलस्यापि यमाधीनत्वाम्नानादविरोधः पुण्यकर्मस्वपि पुरुषेषु यमव्यापाराभ्युपगमादिति तत्रापीत्यादिसूत्रस्यार्थ इत्याहुः । यद्वा आरोगभ्राजःदिसूर्यसप्तकविषयमपि सप्तेति सूत्रं "कश्यपादुदिताः सूर्याः पापान्निघ्नन्ति सर्वदे"ति पापकृतां यातयितृत्वश्रवणात् सप्तसूर्या दिवमनुप्रविष्टाः तानन्वेति पथिभिर्देवयानैरिति तेषां पुण्यकृत्प्राप्यत्वाविरोधश्च, पुण्यकर्मस्वपि तद्व्यापाराभ्युपगमादिति तदनन्तरसूत्रार्थ इति योजनान्तरं कृतं सूत्रद्वयस्य । अथैतयोः पथोः न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनीति मार्गद्वयभ्रष्टानां तृतीयस्थानप्राप्तिवचनादनिष्टादिकृतां पितृयाणप्राप्तिर्नास्तीति शङ्कापरिहारपरं विद्याकर्मणोरिति सूत्रम् एतयोः पथोरिति पथि-शब्दो न मार्गद्वयपरः, तत्परत्वे हि मार्गसम्बन्धो निषिद्धो भवेत् किन्तु तत्प्राप्तिसाधनविद्याकर्मपरः, तयोः प्रकृतत्वान्मार्गयोश्च प्रकृतत्वे सत्यपि ताभ्यां गमनस्यापुरुषतन्त्रस्य विधातुमशक्यतया तत्साधनस्यैव विधेयत्वाद्विद्याकर्मपरिभ्रंशापराधेन दुर्गतिप्रदर्शनपरा श्रुतिरिति नात्र मार्गद्वयसम्बन्धनिषेधः, अतः पितृयाणेनानिष्टादिकारिणां यमप्राप्तिरिति वर्णितं, न तृतीय इत्यादिकमधिकरणान्तरं तृतीयस्थानभूतानां चन्द्रविषयसर्वगमनश्रवणादेहारम्भकपञ्चमाहुत्यपेक्षाभ्यां पितृयाणप्राप्तिं पूर्वपक्षीकृत्य जायस्व म्रियस्वेति विशेषवचनानुपपत्त्यादिभिः पितृयाणगमनं नास्तीति सिद्धान्तितं तत्र तावत्पूर्वाधिकरणस्य पूर्वपक्षराद्धान्तावनुपपन्नौ राद्धान्तस्य प्रमाणविरोधात्, यथा विद्वदधिकारस्य देवयानस्याविद्वद्विषयत्वमयुक्तं तथा अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती"ति पुण्यकृदधिकारतया प्रतिपादितस्य पितृयाणस्यापुण्यकृत्सेव्यत्वं ह्यनुपपन्नं ताभ्यामिदं विश्वमेतत्समेतीति श्रुतिबलादुपपन्नमिति चेत्तर्हि त एव तृतीयस्थानभूतानां पितृयाणेन प्राप्तिः स्यात् विश्वशब्दासङ्कोचात्, जायस्व

म्रियस्वेत्यादिवाक्यवशात्सङ्कोच इति चेत् तर्हि पुण्यकृदधिकारतया प्रतिपादितस्य पितृयाणस्य पुण्यकृत्सेव्यत्ववाक्यबलादपुण्यकृद्भ्योऽपि सङ्कोच आश्रीयतां; यमसदनस्य पितृलोकैकदेशत्वात् पितृलोकप्राप्त्यन्यथाऽनुपपत्त्या धूमादिप्राप्तिरपुण्यकृतां कल्प्येति चेत्तर्हि तृतीयस्थानमृतानां शरीरग्रहणाऽन्यथाऽनुपपत्त्या चन्द्रपर्यन्तधूमादिमार्गप्राप्तिः कल्प्यतां तत्र वचनविरोधाद्देहग्रहणस्य पञ्चमाहुतिनैरपेक्ष्यं चेत् पुण्यकृदधिकारवचनविरोधादेव यमसदनप्राप्तेर्धूमादिमार्गनैरपेक्ष्यं कल्प्यतां गन्तव्यैक्येऽपि गन्तृभेदेन मार्गनियमश्च सम्भवति, यथा चन्द्रप्राप्तिर्विदुषां देवयानसापेक्षा अविदुषां तन्निरपेक्षा, एवं यमसदनप्राप्तिरपि पुण्यकृतां धूमादिसापेक्षा अपुण्यकृतान्तु तन्निरपेक्षेति युज्यते, अत एव पूर्वपक्षवर्णनं चातिमन्दम्, अत एव संयमने त्वित्यादिसूत्राणि न भोगाभावव्युदासपराणि किन्तु पूर्वपक्षे पुण्यापुण्यकृतां गत्यविशेषशङ्काव्युदासपराणि भवितुमर्हन्ति, अत एवापि सप्तेति सूत्रस्य मृत्युगीतश्लोकसप्तकविषयत्वमयुक्तं कर्मवश्यानां मर्त्यानां यमवश्यत्वे संशयाभावात्, पापिनां दुःखभोक्तृत्वे संशयाभावादारोगभ्राजादिसप्तसूर्यविषयत्वं चायुक्तम्, अतः पुण्यापुण्यकृतां स्थानतोऽपि फलवैषम्यपरत्वमेव युक्तम् । अथैतयोः पथोरिति वाक्ये च पथिशब्दस्य विद्याकर्मविषयत्वादपि देवयानपितृयाणविषयत्वं युक्तं मुख्यत्वान्मार्गवाचिशब्दस्यानुष्ठानविशेषविषयत्वं हि गौणं, मुख्ये सम्भवति च तदन्याय्यं पुरुषतन्त्रत्वाद्विद्याकर्मणी एव विधेये इति चेत् सत्यं, तयोः पुरुषतन्त्रत्वन्तद्विधानपरत्वं पथि-शब्दस्य मुख्यत्वेऽप्युपपद्यते विद्याकर्मफलभूतमार्गभ्रंष्टानां दुर्गतिसंकीर्तनस्य विद्याकर्मविधानोपयिकत्वात् यतो विद्याकर्मणोरिति त्विति सूत्रेणापुण्यकृतां धूमादिप्राप्तिर्निवारिता, अत एव तृतीयस्थानमृतानां चन्द्रप्राप्तिशङ्का दूरादपास्तेति नाधिकरणं पृथग्वर्णनीयम् । अत एव न तृतीय इत्यादिसूत्राणां पूर्वप्रकृतसाध्योपपादकतया ऐकाधिकरण्यमेव युक्तम् ॥ अनिष्टादिकार्यधिकरणं समाप्तम् ॥

तत्स्वाभाव्यापत्त्यधिकरणम् ।

सू० तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

भा० इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्ताः सानुशयाश्चन्द्र[1]मसमवरोहन्तीत्युक्तम्, अवरोहप्रकारश्च अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुर्वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती"ति वचनात्, यथेतमनेवं चेत्युक्तं तत्रास्याकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः ? उत तत्सादृश्यापत्तिमात्र ? मिति विशये अश्रुतावस्थस्य सोमभाववदविशेषादाकाशादिभाव इति प्राप्ते तत्स्वाभाव्यापत्तिरेवेत्युच्यते, तत्स्वाभाव्यापत्तिः—तत्सादृश्यापत्तिरित्यर्थः, कुत एतत्, उपपत्तेः सोमभावमनुष्यभावादौ हि सुखदुःखभोगाय तद्भावः अत्र त्वाकाशादौ सुखदुःखोपभोगाभावात् तद्भावानुपपत्तेस्तद्भावपतिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥ तत्स्वाभाव्यापत्त्यधिकरणं समाप्तम् ॥

टी० सू० तत्स्वाभाव्यापत्तिरुपपत्तेः, मार्गविषयविचारे कृते तदेकदेशविचारविषयतया पेटिकाभेदेन सङ्गत्यर्थमनुवदति "इष्टादी"ति अपो बिभर्तीत्यभ्रं मिह सेचन इति धातोर्मेघ इति रूपं, जलधारणावस्थावर्षणोन्मुखावस्था च विवक्षिता, आकाशादिभावः—आकाशादिशरीरकत्वं सादृश्यापत्तिराकाशात् पृथङ्निर्देशानर्हतत्संसर्गः किमाकाशादिभावो देवमनुष्यादिभाववदाकाशादिशरीरत्वापत्तिः? उत तत्सादृ-

[1] चन्द्रमसोऽवरोहन्तीत्युक्तम् इति पा० ।

श्यापत्तिमात्र? मिति, किमत्र सामानाधिकरण्यं मुख्य? मुत गौण? मिति मुख्यत्वअपवादोऽस्ति ने? ति, अपवादाभावे मुख्यत्वादाकाशादिदेहत्वं स्यात्, अपवादसद्भावे सामानाधिकरण्यस्य अमुख्यत्वादाकाशादिसादृश्यापत्तिमात्रमिति भवति । अविशेषात्—प्रकरणस्यस्याविशेषात् ।

नातिचिराधिकरणम् । सू० नातिचिरेण विशेषात् ॥ २३ ॥

आकाशप्राप्ति प्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्र तत्र नातिचिरं तिष्ठ? त्युताऽनियम? इति, विशये नियमहेत्वभावादनियम इति प्राप्त उच्यते नातिचिरेण इति, कुतः, विशेषात् उत्तरत्र—व्रीह्यादिप्राप्तौ अतो वै खलु दुर्निष्प्रपतरमिति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात्, पूर्वत्र ह्याकाशादिप्राप्तावचिरं निष्क्रमणं गम्यते, दुर्निष्प्रपतरमिति छान्दसत्वात्त—शब्दलोपः, दुर्निष्प्रपततरं—दुःखनिष्क्रमणतरमित्यर्थः, नातिचिराधिकरणं समाप्तम् ॥

अन्याधिष्ठिताधिकरणम् । सू० अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

टी० तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायमिति तत्संसर्गहेतुकभेदकस्थूलाकाराभावपरमित्यर्थः । परे तु व्यपदेशस्य मुख्यत्वादाकाशादिस्वरूपापत्तिं पूर्वपक्षीकुर्वन्ति तदयुक्तं नित्यत्वजत्वादिभिराकाशादिवैलक्षण्यस्य स्थितत्वात्तद्भावानुपपत्तेः । अन्ये तु सर्वस्य वस्तुनो ब्रह्मानन्यतया सर्वविधपरिणामशक्तियोगादाकाशाद्यवस्थापत्तिरिति पूर्वपक्षयन्ति तदप्युक्तन्यायादयुक्तं, पूर्वसिद्धार्थाक्षेपेणाधिकरणमुत्थितमिति चेत् गत्यभावे हि तथा वक्तव्यम् उक्तानाक्षेपेण सम्भवति पूर्वपक्षन्याये स एव निरसनीयः ॥ तत्स्वाभाव्यापत्त्यधिकरणं समाप्तम् ॥ सू० नातिचिरेण विशेषात्, आकाशप्राप्तीत्यादिना सङ्गतिसूचनम्, आकाशादिषु कंचित्कालं तिष्ठति ? उता-

नातिचिरेण निष्क्रामती ? ति व्रीह्यादिभावे दुर्निष्प्रपततरत्वाभिधानं किमन्यच्च नातिचिरनिष्क्रममवगमयति ने ? ति अनवगमकत्वे नियमाभावः, अवगमकत्वे नातिचिरनियमः, नातिचिर–शब्देनाकाशादौ किञ्चिद्विलम्बो-व्रीह्यादावतिविलम्बश्च द्योतितौ । नातिचिराधिकरणं समाप्तम् ॥ सू॰ अन्याधिष्ठिते पूर्ववदभिलापात्, सङ्गतिं विषयं च दर्शयति–

भा॰ अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते, 'मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतय स्तिलमाषा जायन्ते" इति ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीनाश्लिष्यन्ति ? उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त ? इति विशये, जायन्त इति वचनात् देवो जायते मनुष्यो जायत इतिवत् व्रीह्यादिशरीरा एवेति प्राप्त उच्यते–अन्याधिष्ठित इति जीवान्तरेणाधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव, कुतः पूर्ववदभिलापात्, आकाशादिमेघपर्यन्तवत् केवलतद्भावाभिलापात्, यत्र हि भोक्तृत्वमभिप्रेतं तत्र तत्साधनभूतं कर्माभिलप्यते, रमणीयचरणाः कपूयचरणा इति, इह चाकाशादिवन्नाभिलप्यते कर्म फलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गभोगादेव समाप्तत्वात्, अनारब्धस्य च रमणीयचरणाः कपूयचरणा इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च, अत आकाशादिभाववचनवत् व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ॥

टी॰ "अवरोहन्त" इति, अवरोहतां जीवानां व्रीहियवादिभावः किं देवमनुष्यादिभाववत्तच्छरीरकत्व ? मुत व्रीहियवादिसंश्लेषमात्र ? मिति

कपूयचरणा इत्यादिवत्कर्मनिर्देशाभावः किं संश्लेषमात्ररूपतामवगमयति? नेति अनवगमकत्वे व्रीह्यादिशरीरकत्वम्, अवगमकत्वे संश्लेषमात्रम् इति। केवलशब्दाभिप्रेतमर्थमाह "यत्र ह्री"ति, इष्टादिकर्म युतं हीत्यत्राह "फलप्रदान"इति, समाप्तत्वात् यावत्संपातमुषित्वेति हि वचनं, मध्ये-प्रकरणमध्ये कर्मान्तराभावात्-कर्मान्तरश्रवणाभावात् । यद्वा आकाशादिप्राप्तेर्मनुष्यजन्मनश्च मध्ये इत्यर्थः । ननु व्रीह्यादिप्राप्तेरहेतुकत्वमयुक्तं तत्कथं कर्माभावः सत्यं, मनुष्यादिजन्मनिमित्तं कर्मैव तदुपयोगित्वात् व्रीह्यादिप्राप्तिहेतुः, न तु कर्मान्तरमित्यभिप्रायेण कर्मान्तराभावादित्युक्तं, न तु कर्माभावादिति व्रीह्यादिशरीरकाश्च जीवास्तल्लवनदशायामेव अपक्रामन्ति लवनशोषणावघातपचनाभ्यवहाराद्यवस्थास्वनुवर्त्तमानत्वं न तच्छरीराणां जीवानां किन्तु तत्संश्लिष्टानां जीवानामेवेति ॥

## सू० अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

सू० नैतदस्ति यदन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रं भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्मेति भोक्तृत्वहेतुसद्भावात् स्वर्गोपभोग्यफलमिष्टादिकर्मैवाशुद्धं पापमिश्रम् अग्नीषोमीयादिहिंसायुक्तत्वात्, हिंसा च "न हिंस्यात्सर्वाभूतानी"ति निषिद्धत्वात् पापमेव, न चात्र पदाहवनीयादिवदुत्सर्गापवादभावः सम्भवति, भिन्नविषयत्वात्, अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति, न हिंस्यादिति तु हिंसायाः प्रत्यवायफलत्वम् । अथोच्येत अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति, रागप्राप्तविषयत्वात्तस्येति, नैवम्, इहापि रागप्राप्तेरविशिष्टत्वात्स्वर्गकामो

यजेतेत्यवमादौ हि कामिनः कर्त्तव्यतया यागाद्युपदेशात् यागादेः स्वर्गादिसाधनत्वमवगम्य फलरागत एव यागादौ प्रवर्त्तते ।

टी० सू· अशुद्धमिति चेन्न शब्दात्, अशुद्ध—शब्दस्याशुद्धियुक्तवाचित्वात्पापस्य अशुद्धिरूपत्वाच्च पापमिश्रमित्युक्तं, भाट्टोक्तं मृषावादिभिश्च तदनुरोधादुपन्यस्तम् उत्सर्गापवादन्यायमनूद्य दूषयति न चात्रेत्यादिना, भिन्नविषयत्वादिति आहवनीये जुहोतीति वाक्येन होमस्याहवनीयस्य स्थानत्वं प्राप्तम्, एवमेकहोमविषयवाक्यद्वयेऽन्यतरानुष्ठानगर्भोऽन्यतरपरित्यागविरोधोऽस्त्येव अतस्तयोरुत्सर्गापवादभावसम्भवः । अत्र तु भिन्नविषयत्वाद्विरोधाभावेन नोत्सर्गापवादभाव इत्याह "अग्नीषोमीये"ति, क्रतूपकारकत्वविषयमेकं वाक्यमन्यत्तु प्रत्यवायफलविषयमतो न विरोधः यथा क्षीरं पित्तोपहतस्य रुचकं प्रमेहोपहतस्य बाधकमिति वाक्ययोर्न विरोधः तद्वत्यदि प्रत्यवायफलत्वतदभावपरं वाक्यद्वयं तदा विरोधः स्यात्, न तदस्ति, अतो नायमुत्सर्गापवादन्यायविषय इत्यर्थः । नन्वेवं सोमपानेऽप्युच्छिष्टदोषः स्यात् सोमपानविध्युच्छिष्टनिषेधयोः क्रतूपकारकत्वप्रत्यवायकरत्वविषयतया विरोधाभावात्, नेत्रं सोमे नोच्छिष्टा भवन्तीत्युच्छिष्टताया एव निषिद्धत्वात्, उच्छिष्टदोषतदभावपरशास्त्रद्वयविरोधस्यावर्जनीयत्वे सति उत्सर्गापवादन्यायेन विशेषवचनप्राबल्यात् निर्दोषत्वसिद्धेः । प्राभाकरोक्तं परिहारं सांख्यः शङ्कते अथोच्यतेत्यादिना, दूषयति "नैवमि"ति, यागादौ प्रवृत्तिः फलरागादस्तु कथं हिंसाया रागप्राप्तत्वमित्यत्राह—

मू० अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्त्तते, लौकिक्यामपि हिंसायां केनचित्प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात्प्रवर्त्तत इति न कश्चन विशेषः । तथा नित्येष्वपि कर्मसु सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं

सुखमित्यादिवचनात्, फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम्, अत इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसांशस्य फलं व्रीह्यादिस्थावरभावेनानुभूयते स्थावरभावं च पापफलं स्मरन्ति "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति अतो व्रीह्यादिभावेन भोगायानुशयिनो जायन्त इति चेत्तन्न, कुतः शब्दात् अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् पशोरपि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति "यज्ञे हिंसितः पशुर्दिव्यदेहो भूत्वा स्वर्गलोकं याती"ति शब्दार्थं कुर्वन्ति हिरण्यशरीर ऊर्द्ध्वस्वर्गं लोकमेतीत्यादिकम् अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव तथा च मन्त्रवर्णः "न वा उ एतत् म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधात्वि"ति ॥

टी० "अग्नीषोमीयादिष्वपी"ति, हिंसास्वित्यर्थः, तर्हि को विशेषो लौकिकवैदिकहिंसयोरित्यत आह "लौकिक्यामपी"ति, फलसाधनभाववाहिप्रमाणवैषम्यमेव रागप्राप्तिस्तुल्येत्यर्थः, फलरागादृते ऽपि केषुचित्कर्मसु प्रवृत्तिर्दृश्यते इत्यत आह "तदा नित्येष्वपी"ति, सर्ववर्णानामित्यापस्तम्बसूत्रं, श्रीविष्णुपुराणे च तत्तदाश्रमकर्मानुष्ठायिनां फलविशेषा उक्ताः । यद्वा प्रत्यवायपरिहारफलत्वं स्यात् तथा ऽपि रागादेव प्रवृत्तिरिति भावः । तेषामप्यशुद्धियुक्तत्वं नित्यकर्मादीनामपि संवत्सरपश्वा-

लम्भनादिभिरशुद्धियुक्तत्वमित्यर्थः । सिद्धान्तमाह "तद्वे"ति, दुःखहेतुः संज्ञपनं हि हिंसा स्यादित्यत्राह "अतिशयिते"ति तथा च मन्त्रवर्णं इति, न केवलं स्वर्गलोकगमनेन अहिंसात्वकल्पनं किंतु अहिंसात्वं कण्ठोक्तं चेति भावः । अस्यार्थस्य लोकसिद्धत्वमाह—

सू० चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञाः ॥

सू० रेतः सिग्योगोऽथ ॥ २६ ॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्, व्रीह्यादिभाववचनानन्तरं "यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवती"ति रेतःसिग्भावेऽनुशयिनां श्रूयमाणो यथा तद्भाव[1]मात्रं प्रतिपादयति तद्वद्व्रीह्यादिभावेऽपीत्यर्थः ॥

सू० योनेः शरीरम् ॥ २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः तत्रैव सुखदुःखोपभोगसद्भावात्, ततः प्रागाकाशादिप्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥ अन्याधिष्ठिताधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये तृतीयाऽध्यायस्य प्रथमः पादः ॥ १ ॥

टी० "चिकित्सकं चे"ति, हिंसात्वे सति श्रुतदोषसम्भवः, हिंसात्वाभावादेव दूरोत्सारितो दोषः । अयमेव समीचीनो दुष्परिहारः, अतः श्येनाग्नीषोमीयवैषम्यं चेदमेव अल्पदुःखदोऽप्यतिशयिताभ्युदयसाधको व्यापारो रक्षणम् अनर्थोदर्कोव्यापारो हिंसेत्यर्थः । अन्ये तु यत्किञ्चिदपि कार्यं नियोगादेव कुर्वतां न प्रत्यवायः यथा राजशासनात्प्रवृत्तानां, श्येनादिवाक्यन्तु परहिंसायां स्वतः प्रवृत्तस्य तदु-

[1] तद्योगमात्रमिति पा० ।

पायबोधनमात्रपरमिति वैषम्यमाहुः, तदयुक्तं प्रायश्चित्तकाम्यपश्वालम्भनानां प्रत्यवायजनकत्वप्रसङ्गात् "अकुर्वन् विहितं कर्म निन्दितं च समाचरन्। प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते[1] भवेद् द्विजः"। इत्यादिशास्त्रात् विहिताकरणादिनिमित्तप्रत्यवायभीतो ह्यास्तिकः प्रायश्चित्तमाकाङ्क्षति कामी च पुत्रपशुभूत्यादिसाधने प्रवर्तितुमिच्छति, ततश्च शास्त्रस्योपायबोधन मात्रपरत्वं स्यादिति श्येनसाम्यं दुष्परिहरम् ॥ सू॰ रेतःसिग्योगोऽथ, अनन्तरमित्यन्तेनाथ–शब्दो व्याख्यातः, तद्रूप एव भवति स इत्यध्याहारः, भूयः पश्चात्स तद्भवति, रेतःसिग् भवति, रेतःसिग्योगी भवतीत्यर्थः तत्तद्भावस्यौपचारिकत्वप्रकरणमविच्छिन्नमिति भावः। सू॰ योनेश्शरीरम्, योनिप्राप्तिः–योषिद्योनिप्राप्तिस्तु चेदिति संसारिजीवशरीरं चेत् भोगार्थमेव न चेद् भोगार्थं तर्हि न तत्संसारिशरीरमिति भावः ॥ अन्याधिष्ठिताधिकरणं समाप्तम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥ अस्मिन् पादे षडधिकरणानि, सूत्राणि तु सप्तविंशतिः ॥

संध्याधिकरणम्। **सू॰ सन्ध्ये सृष्टिराह हि ॥ १ ॥**

**भा॰ एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्[2], इदानीमस्य स्वप्नावस्था परीक्ष्यते, स्वप्नमधिकृत्य श्रूयते "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः**

१ प्रायश्चित्तीभवेन्नर इति पा॰।
२ ख्यापितमिति पा॰।

सृजते न तत्र वेशन्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशन्तान्पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ते”ति, तत्र संशयः किमियं रथादिसृष्टिर्जीवेनैव क्रियते? आहोस्विदीश्वरेणे? ति किं युक्तं, सन्ध्ये सृष्टिर्जीवेनेति, कुतः सन्ध्यं स्वप्नस्थानमुच्यते सन्ध्यं “तृतीयं स्वप्नस्थान”मिति वचनात्, सा तु जीवेनैव क्रियते, सृजते स हि कर्त्तेत्याह हि, स्वप्नदृग्जीव एव तत्र प्रतीयते ॥

टी० सू० सन्ध्ये सृष्टिराह हि, एवमित्यादिना पादसङ्गतिरुच्यते जन्मादीति, अत्रादि-शब्देन सुखदुःखानुभवो विवक्षितः दुःखित्वं व्याप्तिमिति सुखानुभवेऽपि स्वर्गेऽपि पापभीतस्य क्षयिष्णोर्नास्ति निर्वृत्तिरिति वचनेन दुःखप्राचुर्यात्तत्रापि दुः[1]खित्वमेवेति भावः । वक्ष्यमाणविषयवाक्यस्थस्य तत्र-पदस्य व्याख्यानायाह “स्वप्नमधिकृत्ये”ति, स्वप्नं पश्यतीति हि प्रकृतम्, अनुकूलविषयजा प्रीतिरानन्दः, स्वकीयत्वबुद्धिजा प्रीतिर्मुत्, तद्विनियोगजा प्रीतिः प्रमुत्, तत्रेति किं स्वप्नार्थसृष्टिर्जीवकर्तृका? उत परमात्मकर्तृका? स हि कर्त्तेति किं जीवः परामृश्यते? उत परमात्मे? ति, प्रजापतिवाक्योदितसत्यसङ्कल्पत्वं जीवस्य स्रष्टृत्वमुपपादयति? नेति, स्वप्नार्थमात्रेषु जीवस्य सङ्कल्पाविर्भावकल्पनमुपपद्यते ने? ति यद्योपपद्यते तदा तस्यैव स्रष्टृत्वोपपत्तेः स हीति जीवपरामर्शाज्जीवकर्तृकत्वं स्यात् यदाऽऽविर्भावकल्पनमनुपपन्नं तदा स्रष्टृत्वानुपपत्तौ स इति जीवपरामर्शायोगात् परमात्मकर्तृकत्वमिति भवति। आह स हीति सूत्रखण्डं व्याचष्टे “सृजत”इति, स्वप्नं पश्यतीति प्रकृतो जीवः स इत्युच्यते इति भावः ॥

सू० निर्म्मातारं चैके पुत्रादयश्च ॥ २ ॥

श्रु० किं चैनं जीवं स्वप्ने कामानां निर्म्मातारमेके शाखिनो-

१ दुःखत्वमेवेति भावइति पाठान्तरम् ।

ऽधीयते, "य एषु सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाण" इति, पुत्रादयश्च तत्र काम्यमानतया काम-शब्देन निर्दिश्यन्ते, नेच्छामात्रं पूर्वत्र हि सर्वान् कामान् छन्दतः प्रार्थयस्व शतायुषः पुत्रपौत्रान् वृणीष्वे" ति पुत्रादय एव कामाः प्रकृताः, अतो रथादीन् जीवः स्वप्ने सृजति, जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम्, अत उपकरणाद्यभावेऽपि सृष्टिरुपपद्यत इति प्राप्तेऽभिधीयते—

**सू० मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥**

तु-शब्दः पक्षं व्यावर्त्तयति, स्वप्ने रथपुष्करिण्याद्यर्थजातं मायामात्रं—परमपुरुषसृष्टमित्यर्थः, माया-शब्दो ह्याश्चर्यवाची "जनकस्य कुले जाता देवमायेव निर्म्मिते" त्यादिषु तथा दर्शनात्, अत्रापि "न तत्र रथा न योगा न पन्थानः" सकलेतरपुरुषानुभाव्यतया न भवन्तीत्यर्थः । अथ रथान् रथयोगान् पथः सृजते स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् सृजत इत्याश्चर्यरूपत्वमेवाह—

टी० सू· निर्म्मातारं चैके पुत्रादयश्च, त्यन्तरे परमात्मकर्तृकत्वं श्रूयत इति शङ्कायामिदं सूत्रम्। अत्रोपात्तवाक्ये जीवलिङ्गं दर्शयति "पुत्रादयश्चे"ति, अपरिकरस्य जीवस्य कथं सृष्टिरित्यत्राह 'जीवस्य चे"ति, एतत्सूत्रद्वयं पूर्वपक्षविषयम् । सू· मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्, मायामात्रमाश्चर्यरूपमेव अनाश्चर्यरूपं न किञ्चिदपि इत्यर्थः । परमपुरुषसृष्टमिति तु-शब्दसिद्धार्थ उक्तः, मिथ्यार्थव्यावृत्त्यर्थं माया-शब्दं व्याचष्टे

"मायामात्रं ही"ति, जनकस्येति हेत्वस्वं।आश्चर्यरूपा शक्तिर्मूर्तिमतीवेत्यर्थः न भवन्तीति श्रुतौ मिथ्यात्वं प्रतीयत इत्याह "अत्रापी"ति, स्वाप्नार्थानां पूर्वकालीनाभावो मिथ्यात्वं च लोकसिद्धमिति तदुभयपरत्वे न भवन्तीति वाक्यस्य वैयर्थ्यं, मिथ्यात्वपरत्वे तुच्छत्वस्वारस्यं च स्यात्, प्रसिद्धरथाद्यनुभवस्य प्रतिषेधेऽपि वाक्यवैयर्थ्यं स्यात् स्वप्ने तेषामननुभूतत्वस्य लोकसिद्धत्वात्, स्वप्नदृष्टानां हि जाग्रद्दृष्टेभ्यो ऽन्यत्वं हि लोकसिद्धम्, अतस्तत्परिहाराय प्रसिद्धरथादिभावप्रतिषेधेन विजातीयविचित्रार्थसृष्टिपरत्वं वाक्यस्यावर्जनीयं, तथा सति तद्वैजात्यम् अर्थवशात् सकलेतराननुभाव्यत्वतत्कालमात्रस्थायित्वरूपत्वमिति माया-शब्दो व्याख्यातः, तेन सह प्रतिज्ञाखण्डस्यार्थमाह–

सू० एवंविधाश्चर्यरूपा सृष्टिः सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते न जीवस्य, तस्य सत्यसङ्कल्पत्वादिगुणकस्यापि संसारदशायां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते, "कामं कामं पुरुषो निर्मिमाण" इति च परमपुरुषमेव निर्मातारमाह "य एषु सुप्तेषु जागर्ति तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"त्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः, "अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ते"ति च तथा श्रुत्यैकार्थ्यात् परमपुरुषमेव कर्त्तारमाह। स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकं कुतस्तन्नाभिव्यज्यत इत्यत आह–

**सू० पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययौ ॥ ४ ॥**

तु-शब्दः शङ्काव्यावृत्त्यर्थः, पराभिध्यानात्परमपुरुषसङ्कल्पादस्य जीवस्य स्वाभाविकं रूपन्तिरोहितम्, अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति, ततस्तत्सङ्कल्पादेव ह्यस्य जीवस्य बन्धमोक्षौ श्रुतौ "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति एष ह्येवानन्दयाति भीषाऽस्माद्वातः पवत" इत्यादिषु ॥

सू० देहयोगाद्वा सोऽपि ॥ ५ ॥

सोऽपि तिरोभावोऽपि देहयोगद्वारेण वा भवति सूक्ष्माचिच्छक्तियोगद्वारेण वा ।

टी० "एवं विधे"ति, हेतुखण्डं व्याचष्टे "तस्ये"ति, पूर्वपक्षयुक्तिं परिहरति "कामङ्काममि"ति, णमुलन्तं पदं, सङ्कल्प्येत्यर्थः । सू० पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ, परस्य नैर्घृण्यादिप्रसङ्गपरिहारमाह "अनादिकर्मे"ति, तत इत्यादि, तत इति व्याख्येयं पदं बन्धस्य तत्सङ्कल्पायत्तत्वे तदन्तर्गततिरोभावश्च तत्सङ्कल्पकृत इति सिद्धमित्यर्थः । कथं भगवत्सङ्कल्पस्य तिरोधायकत्वं प्रकृतेः कर्मणां च हि तिरोधायकत्वमित्यत्राह सू० देहयोगाद्वा सोऽपि, भगवत्सङ्कल्पस्य द्वारभूतं प्रकृत्यादिकमित्यर्थः, वा-शब्दो न तुल्यविकल्पवाची अपि तु व्यवस्थितविकल्पवाचीत्यभिप्रायेणाह-

सू० सृष्टिकाले देहावस्थेनाचिद्वस्तुना संयोगाद्भवति प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात्, अतो-

ऽनभिव्यक्तस्वरूपत्वात्स्वप्ने जीवो न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति, सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्यादयो हि परमपुरुषस्यैव हि सम्भवन्ति, अतो जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावसानांस्तत्तत्पुरुषमात्रानुभाव्यानर्थानुत्पादयति ॥

## सू० सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

इतश्च स्वाप्नार्था न जीवसङ्कल्पपूर्वकाः, यतः स्वप्नोऽभ्युदयानभ्युदययोः सूचकः श्रुतेरवगम्यते 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने" इति, अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादेश्च स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते, सूचकत्वं च स्वसङ्कल्पादस्य नोपपद्यते, तथा चाशुभस्यानिष्टत्वात् शुभस्य सूचकस्येव स्रष्टा पश्येत्, अतः स्वप्ने सृष्टिरीश्वरेणैव कृता । सन्ध्याधिकरणं समाप्तम् ॥

तदभावाधिकरणम् ।

## सू० तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

टी० "सृष्टिकाल"इति, सूक्ष्मचिच्छक्तियोगेति अत्र शक्ति-शब्देन भगवदपृथक्सिद्धविशेषणत्वं विवक्षितम्, एवमवान्तरसाध्यसाधनयोः परमसाध्येनान्वयं दर्शयति अतोऽनभिव्यक्तेत्यादिना, मायामात्रमिति सूत्र-

भाष्ये परमपुरुषासाधारणस्वभावप्रतीतेरिति सङ्ग्रहेणोक्तम् । अत्र सर्वेषु सुप्तेषु जागरणमित्यादिना स्वभाव-शब्दार्थो विवृतः, ईश्वरेण क्रियते चेत् किमर्थमस्थिररथादिसृष्टिरित्यत्राह "अत" इति, अल्पाल्पकर्मफलानुभवार्थमस्थिरतत्तद्वस्तुसृष्टिरित्यर्थः । सू· सूचकश्च हि श्रुतेराचक्षते च तद्विदः, जीवस्य स्वाप्नसृष्टिमात्रोपयोगिसत्यसङ्कल्पत्वाद्याविर्भावस्तदानीं स्यादिति शङ्काव्यावृत्त्यर्थमिदं सूत्रं, स्वप्नाध्यायविदः—स्वप्नवाचिवेदवाक्यविदः, अत इत्यधिकरणार्थोपसंहारः । परे तु स्वाप्नार्थानामीश्वरसृष्टतया वियदादिवत्पारमार्थ्यं पूर्वपक्षीकृत्य देशकालनिमित्तसंनिरूपतया मिथ्यात्व सिद्धान्तयन्ति, एषां च जीवकर्तृकत्वमेव सृजत इत्युच्यते तच्चौपचारिकं सुखदुःखदर्शननिमित्तसुकृतदुष्कृतकर्तृत्वनिबन्धन औपचारिकः स्वाप्नार्थकर्तृत्वव्यपदेशः "बहिष्कुलायादमृतश्चरित्वे"ति स्वाप्नार्थविषया श्रुतिश्च बहिरिव चरित्वेत्येवम्परा, तस्मिन् प्रकरणे ईश्वरप्रतिपादनं जीवस्य तदनन्यत्वोपदेशार्थं सुखदुःखसूचकत्वकृतपारमार्थ्यशङ्काव्युदासपरम् ॥ सूचकश्च हि, इति सूत्रं, तच्च द्वितीयं सूचनीयपारमार्थ्येऽपि सूचकं स्त्रीदर्शनादिकं मिथ्येति सूत्राभिप्रायः । ईश्वरादनन्यत्वेन जीवस्य तस्य सङ्कल्पतया सत्यत्वशङ्कां व्युदस्यति "पराभिध्यानात्त्वि"ति जीवस्य ज्ञानैश्वर्यशक्त्यादिसत्त्वेऽपि अविद्यातिरोहितं तिरोधाननिवृत्तिः परमात्माभिध्यानात्, अस्य बन्धमोक्षौ हि परमात्माधीनौ, स च तिरोभावः सूक्ष्मस्थूलदेहयोगादिति योजयन्ति, तत्र तावत्पादानुगतार्थतत्सङ्गती अनुपपन्ने जीवस्यावस्थानिरूपणं चेत् पादकृत्यं फलमत इत्यधिकरणासङ्गतिः, न चेश्वरो जीवावस्था तस्य ब्रह्मणि कल्पितस्य जीवाध्यस्तत्वाभावात्, परमात्मनिरूपणं पादकृत्यं चेत् स्वाप्नार्थानां जीवकर्तृकतया मिथ्यात्वोक्तिरिह न सङ्गच्छते, पूर्वपक्षश्चानुपपन्नः मिथ्यात्वस्य सिद्धान्तीकरणायोगात् मिथ्यात्वं ह्यारम्भणाधिकरणे कृत्स्नप्रपञ्चस्य समर्थितं, यदा वियदादेरपि मिथ्यात्वसिद्धिः तदा कैमुत्यसिद्धं स्वाप्नार्थमिथ्यात्वमित्यधिकरणवैयर्थ्यं, वियदादीनां व्यावहारिकं सत्यत्वमस्ति स्वाप्नार्थानां तदपि नास्ति व्यवहारविसंवादादिति वियदादिवैलक्षण्यप्रतिपादनार्थोऽयमारम्भ इति चेत्र व्यवहारविसंवादस्य

प्रबोधसमये सर्वलोकसंप्रतिपन्नत्वाद्वैधर्म्याच्च न स्वप्नादिवदित्यत्र तद्वै-धर्म्यस्योक्तत्वाच्च, श्रुतिवाक्यकृतसत्यत्वशङ्काव्युदसनार्थ आरम्भ इति चेन्न सूत्रश्रुतिवाक्यासामञ्जस्यात्, तथा हि मिथ्यात्वं समर्थनीयं चेत् सर्व-लोकाश्रयत्वादिभिः स्वरसप्रतिपन्नमीश्वरस्रष्टृत्वं न बाधितव्यम्, ईश्वर-स्रष्टृत्वस्य व्यावहारिकसत्यत्वनिवृत्त्यविरोधात् उपासनविशेषप्रीतपरावर-देवताप्रसादलब्धानां स्वप्नानां ब्रह्मदत्तोर्वादिदृष्टानामपि व्यावहारिक-सत्यत्वनिवृत्तेस्त्वदिष्टत्वात्, व्यावहारिकसत्यत्वाभावः साध्यश्चेत् जीवकर्तृत्वाश्रयणमपि विरुद्धं जीवकर्तृकघटादीनामिव व्यावहारिकस-त्यत्वप्रसङ्गात्, जीवस्रष्टृत्वस्यान्तिमसूत्रद्वयव्युदस्तत्वाच्च जीवस्य मुख्यं स्रष्टृत्वं व्युदस्तं, सुखाद्यवभासमूलादृष्टकर्तृत्वादौपचारिकं कर्तृत्वमिति न विरोध इति चेन्न जीवादृष्टमूलानां देहेन्द्रियसंगादीनामिव व्यावहारि-कसत्यत्वप्रसङ्गात्, जीवादृष्टमूलत्वेऽपि देहसंगादीनामीश्वराधीनत्वम-स्तीति चेत् तादृशमीश्वराधीनत्वं स्वाप्नार्थानामप्यस्ति तदीशनस्या-संकुचितत्वात्तदधीनत्वस्य भवदनुमतत्वाच्च सर्वदेशसर्वकालवर्तिसर्वज-न्तुदृष्टस्वाप्नप्रपञ्चानां जाग्रत्प्रपञ्चादपि महत्तरतया तेषामन्याधीनत्वे पारमैश्वर्यमीश्वरस्य न स्यात्, उभयविधप्रपञ्चस्यापि हि प्रतीतिसत्त्वम-विशिष्टं बाधस्याशुतरत्वविलम्बौ हि वैषम्यम्, एवं जीवानां साक्षात्स्व-प्नार्थकर्तृत्वाभावस्य मिथ्यात्वानुपयुक्तस्य सूचितत्वादेव सूत्रकारेण मिथ्या-त्वस्य सिषाधयिषितत्वाभावोऽवगम्यते, सूचकश्चेति विरुद्धसूत्रप्रणयनाच्च विरुद्धत्वं वक्ष्यामः । अतो यस्मिन् साध्ये सूत्राण्युपयुक्तानि स्युः न त्वनु-पयुक्तानि विरुद्धानि च तदेव साध्यं भवितुमर्हति, ईश्वरस्रष्टत्वं पूर्वपक्षयुक्ति-श्चेत् पुत्रादयश्चेति सूत्रांशो निष्फलः, पुत्रादिस्रष्टृत्वस्य जीवेषु सम्भवात् ईश्वरसाधकत्वायोगात्, माया–शब्दस्य मिथ्यात्वशक्तित्वाभावाच्चाक्षरा-ननुगुणत्वं, सूचकश्चेति सूत्रं विरुद्धं मिथ्यात्वविरोधित्वादर्थक्रियायाः सत्यस्यैव पारमार्थ्यं न सूचकस्येत्यभिप्राय इति चेत् नाशाब्दत्वात्, उक्तसू-त्राभिप्रायकल्पने च श्रुतिविरुद्धकल्पनायोगात्, पराभिध्यानात्तिरोधाननिवृ-त्तिरिति योजनायामध्याहारव्युत्क्रमान्वयौ स्फुटतरौ, सोऽपीति तिरोभा-

वपरामर्शश्च अयुक्तः तिरोभाव-शब्दस्याप्रकृतत्वात्तिरोहितमिति निर्दिष्टे तिरोधानरूपधात्वर्थमात्रस्य तदिति परामर्शार्हस्य स इति परामर्शायोग्यत्वाच्च पुल्लिङ्गपदेषु निर्दिष्टेषु *कस्यचिदर्थे उचितः परामर्शनीयः श्रुतिवाक्यं च निरूप्यं न भवतीति श्रुतिर्मुख्या तदनुरोधेन सृजतिर्भाक्त इति हि भवतां निर्वाहः, सृजतेर्भाक्तत्वं स्थितं पूर्ववाक्यमपि विफलं लोकप्रसिद्धत्वात् स्वाप्नमिथ्यात्वस्य, अप्राप्ते हि शास्त्रमर्थवत् अतो वैयर्थ्यभाक्तत्वाभ्यां वाक्यद्वयमपि दुःस्थं मिथ्याभूतं स्वाप्नार्थजातमनूद्य भाक्तेन सृजतिना जीवादृष्टमूलत्वं प्रतिपाद्यत इति वाक्यैकत्वमिति चेन्न उद्देश्यविशेषणभूतमिथ्यात्वानुरोधेन उपादेयवचनस्वारस्यभङ्गस्य न्यायविदामनभिमतत्वात्, उभयमुख्यत्वसम्भवेऽन्यतरामुख्यत्वाश्रयणानुपपत्तेश्च, न च न भवन्तीति जागरितानुभूतार्थाभावपरः प्रबोधे दृश्यानां रथादीनां स्वप्नसमये विद्यमानत्वात्, न च स्वाप्नार्थानां प्राक्कालीनाभावपरः स्वप्नकल्पितानां पूर्वमभावस्य लोकसिद्धत्वात्, न च न भवन्तीति स्वाप्नजाग्रद्दृष्टानामन्योन्याभावोक्तिर्लोकप्रसिद्धत्वादेव, अतः स्वाप्नार्थानां प्रसिद्धरथादिभावप्रतिषेधेन तद्वैजात्यं प्रतिपाद्यते, तेन तदेकानुभाव्यत्वतत्तत्कालावसायित्वरूपवैलक्षण्यमुक्तं स्यादतो वैलक्षण्यविशिष्टमीश्वरसृष्टत्वं प्रतिपिपादयिषितमिति वाक्यैकवाक्यत्वमवैयर्थ्यमभाक्तत्वं न्यायाविरोधश्च भवति, बहिष्कुलायादमृतश्चरित्वेति मुख्यं स्यात्तपोबलसृष्टैर्देहान्तरैस्सौभरेरिव ईश्वरसृष्टदेहान्तरेण ज्ञानधिष्ठितेन बहिर्वृत्त्युपपत्तेस्तस्मिंश्च देहान्तरे चक्षुरादीनां विद्यमानत्वान्न दुर्निरूपनिमित्तत्वं तेषां चक्षुरादीनां स्वाप्नार्थमात्रग्रहणयोग्यत्वात्, देशान्तरगतविशेषान्तरप्रश्ने प्रतिवचनाभावोपपत्तिः, देशकालविपर्यासश्च घटते स्वप्ने ईश्वरसृष्टेस्तदेकानुभाव्यैरादीन्यगत्याद्युपाधिविशेषैरवच्छिन्नानां दिक्कालानां तत्तत्स्वप्नद्रष्टृपुरुषापेक्षया तथाभावोपपत्तेर्जागरितावस्थायामपि हि प्राच्यादयः प्रातरादयश्च देशकालविशेषा आपेक्षिका भवन्ति । ननु यत्र प्रबोधसमये रथो दृश्यते तत्रैव स्वप्ने कथं गजावस्थानं मिथ्यात्वेन विना घटत इति चेन्न स्वाप्नार्थानां जाग्रद्दृश्यपदार्थैः प्रतिघातानर्हत्वात्, अनिर्बाध्यस्य गजादेरपि

तथात्वं वक्तव्यं तन्निर्वाच्यपक्षेऽपि समानं, कथं मूर्त्तद्वयस्य मिथो ऽप्रतिघातकत्वमिति चेत् वयमप्यनिर्वचनीयवादिनं त्वामेव पृच्छामः कथमिति, अर्थाभावादुपपन्नमिति चेत्, अविषयख्यातिः स्यात् अपसिद्धान्तश्च, दोषवशादनिर्वचनीयमर्थान्तरं जातमिति भवतां प्रक्रिया, अतश्चोद्यपरिहारौ समानौ, अनिर्वचनीयत्वादुपपन्नमिति चेन्निर्वचनीयत्वान्ममाप्युपपत्तिः, अनिर्वचनीयनिर्वचनीयोर्मिथः प्रतिघातकत्वाभावः शुक्तिकारजतादिषु दृश्यत इति चेत् निर्वचनीययोरपि मिथः प्रतिघातकत्वाभावो वाय्वाकाशादिषु दृष्टः, सूक्ष्मत्वादप्रतिघात इति चेत्, स्वाप्नार्थानामपि सूक्ष्मत्वसम्भवादप्रतिघातः मूर्त्तं चेन्मूर्त्तान्तरप्रतिघातार्हमिति चायुक्तं मूर्तत्वमसर्वगतत्वं चेद्रूपादिषु व्यभिचारः, न हि रूपरसादिकं परस्परेण वा द्रव्येण वा प्रतिहन्यते, असर्वगतद्रव्यत्वं मूर्त्तत्वं चेद् गगने व्यभिचारः, न हि गगनं घटादिभिः प्रतिहन्यते, गगनं चासर्वगतं वेदान्तिनामाद्यन्तवत्त्वात्, दशगुणावरणान्तपरिच्छिन्नत्वाच्च, स्पर्शवत्त्वं मूर्त्तत्वं चेत्तदानीमपि न प्रतिहन्तव्यत्वनियमः, गगनेन घटस्याप्रतिघातात्, स्पर्शवद् द्वयं मिथःप्रतिघातीति चेन्न वय्वालोकयोर्व्यभिचाराद्, रूपिद्वयं मिथः प्रतिघातीति चेन्न सलिलालोकयोर्व्यभिचारात्, आलोको ह्यगाधस्वच्छजलेनाप्रतिघातात्तदन्तर्गतान् पदार्थान् स्वयमन्तर्गतः प्रकाशयति, न ह्यालोकमनपेत्य जलान्तर्गतं वस्तु द्रष्टुं शक्यं तमसि तद्दर्शनाभावात्, न चाप्यावयवानां विरलत्वादालोक इव आलोकप्रवेश ऊर्ध्वाधरभावेन दक्षिणोत्तरादिभावेन च संयुक्तानां द्रव्याणां जलावयवानां निम्नपातितया निरुध्यमानतया द्रवतया च सच्छिद्रत्वानुपपत्तेः, अतो रूपिद्वयस्य मिथः प्रतिघातनियमाभावात् स्वाप्नगजादीनां प्रतिघातानर्हत्वसम्भवान्न दुर्निरूपत्वम्। अतः श्रुतिन्यायसूत्राक्षरसामञ्जस्यमस्मत्पक्ष एवोपपन्नम् ॥ अपरेऽपि ईश्वरसृष्टत्वात् सत्यत्वं पूर्वपक्षीकृत्य देशादिभिरनभिव्यक्ततया मिथ्यात्वमाहुः तत्रापि सूत्राक्षरस्य परेषामिव स्यात्, मायामात्र-शब्दो निरालम्बनज्ञानवाचीत्यप्ययुक्तं श्रुतिस्थरथादिशब्दानां रथादिज्ञानवाचित्वाभावात्, दुःखप्रतिभासात् स्वाप्नसृष्टिर्जीवस्येति चासङ्गतं जाग्रद्दृष्टपृथिव्याद्यर्थानां च

दुःखहेतुत्वदर्शनेन जीवस्रष्टत्वप्रसङ्गात्, ईश्वरस्रष्टृत्वश्रुतिस्वारस्यं तु स्वाप्नार्थेष्वपि तुल्यम् । अन्ये तु सृजत इति स्वातन्त्र्येण जीवस्य कर्तृत्वावगमात्स्वस्य स्वयमेव मायया मोहनायोगात् जीवस्य सत्यसङ्कल्पत्वाच्च सत्या सृष्टिरिति पूर्वपक्षं कृत्वा स्वातन्त्र्योपदेशस्य भ्रान्तिसिद्धानुवादरूपत्वात् सङ्कल्पानाविर्भावात् सूचकत्वादिभिः पुरुष-शब्दाच्च परो मायारूपेण सृजतीति जीवः प्रेक्षकः मायारूपेण सृष्टिश्च विषयशून्यप्रतिभासमात्रसृष्टिरिति वदन्ति । तत्र पराभिध्यानादित्यादिसूत्रद्वययोजनायामस्वारस्यं पूर्ववदनुसन्धेयं श्रुतौ चानुपयोगविरोधाभावेऽपि माया-शब्दस्यमन्त्रौषधादिषु प्रयुक्तस्य निर्विषयज्ञानवाचित्वाभावाच्छ्रुतिवाक्यगतरथादिशब्दानां रथादिप्रतिभासवाचित्वाभावाच्च तन्मतमनुपपन्नं, सूत्रक्रमश्च यथाभाष्यमेव समुचितः, मिथ्यात्वसमर्थनपरत्वेऽनुपपत्तेऽनभिव्यक्तस्वरूपत्वशब्दस्यापि जीवस्य तिरोहितस्वरूपतापरत्वे स्थिते तिरोधानविषयसूत्रद्वयस्य तदासत्तेरुपपन्नत्वाद्धेत्वन्तराभिधायिनः सूचकश्चेति सूत्रस्य तदवधायकत्वादपि चरमभावित्वोपपत्तेश्च ॥ संध्याधिकरणं समाप्तम् ॥

सू· तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ १ ॥

भा० इदानीं सुषुप्तिस्थानं परीक्ष्यते, इदमाम्नायते "अथ यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न कश्चन विजानाति आसु तदा नाडीषु सृप्तो भवती"ति तथा "अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरितति शेते" इति, तथा "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य ! तदा सम्पन्नो भवती"ति एवं नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते किमेषां विकल्पः समुच्चयो वेति विशये निरपेक्षत्वप्रतीतेर्युगपदनेकस्थानद्वयसम्भवाच्च विकल्प इति प्राप्ते

उच्यते तदभाव इति, तदभावः स्वप्नाभावः सुषुप्तिर्नाडीषु पुरितत्यात्मनि च भवति ते[1] षां स्थानानां समुच्चय इत्यर्थः। कुतः तच्छ्रुतेः त्रयाणां स्थानत्वश्रुतेः, न च कार्यभेदेन समुच्चये सम्भवति पाक्षिकबाधगर्भविकल्पो न्याय्यः।

टी० इदानीमित्यादिना सङ्गतिरुक्ता भवति, नाडीपुरितद्ब्रह्माणि किं जीवस्य सुषुप्तौ विकल्पेन स्थानानि ? उत समुच्चयेन ? किमेषां प्रासादखट्वापर्यङ्कवत्कार्यभेदोऽस्ति न ? ति सत आगच्छामह इति ब्रह्मणः प्रबोधश्रवणं ब्रह्मणः पर्यङ्कस्थानीयतामवगमयत् किं कार्यभेदमवगमयति ? तिने ? अनवगमकत्वे तुल्यकार्यतया युगपदनेकस्थानवृत्त्ययोगाच्च विकल्पः स्यात्, कार्यभेदावगमकत्वे तु प्रासादखट्वापर्यङ्कानामिव कार्यभेदात् समुच्चयः स्यात्, ततश्च परमात्मनः सुषुप्तौ जीवमिश्रमस्थानत्वरूपगुणनियमसिद्धः, युगपदनेकस्थानवृत्त्यसम्भावदिति अणुत्वादिति भावः। तदभाव इति, "यदा सुप्तः स्वप्नं न कथञ्चन पश्यती"ति श्रुत्यनुसारात्तदभाव इति व्यपदेशः,सूत्रस्य च-शब्दात् पुरीतद्विवक्षितम्॥ पूर्वपक्षयुक्तिव्युदासार्थमाह "न चे"ति, पाक्षिकेति विकल्पश्चाष्टदोषदुष्ट इति शावरभाष्यम्, एकैकशिरसि चत्वारो दोषा इति शिरोद्वयेऽप्यष्टौ दोषाः, दोषाश्च बाधरूपाः प्रथमं फलसाधनताप्रतिपत्तिबाधः, अनुष्ठानबाधोऽपूर्वोत्पत्तिबाधः, फलबाधश्चेत्येकैकशिरसि चत्वारो दोषाः, अत्र तु यथासम्भवं बाधः, न चतुर्विधोऽपीत्येतदभिप्रेत्य पाक्षिकबाधगर्भविकल्प इति सामान्यनिर्देशः कृतः॥ कार्यभेदः कथमित्यत्राह-

भा० सम्भवति प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदः, तत्र नाडीपुरीततौ प्रासादखट्वा स्थानीयौ ब्रह्म तु पर्यङ्कस्थानीयम्, अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्॥

सू० अतः प्रबोधोऽस्मात्॥ ८॥

[1] षां।मिति पा०।

वासी, एवं ताण्ड्यः। वाजसनेयशब्दः शौनकादिः। 'ताण्डिन इति'। आप-त्यस्येति यलोपः, भाल्लविशब्द इञन्तः, शाट्यशब्दाद्गर्गादियञन्तादृञि-ञोश्चेति फक्, ऐतरेयशब्दः शुभ्रादिढगन्तः, तेभ्यः पुराणप्रोक्तेष्विति णिनिः, सर्वत्राध्येतृप्रत्ययस्य लुक्। 'ब्राह्मणविशेषप्रतिपत्त्यर्थमिति'। ब्राह्मणस्य विशेषः पुराणप्रोक्तत्वम्। 'याज्ञवल्क्यानीति'। याज्ञवल्क्यशब्दः कण्वादिः, सुलभादौत्सर्गिकोण्, अत्र स्वातन्त्र्यं भवति। पुराणप्रोक्तेष्वित्यत्र वक्ष्यति, याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता इत्याख्यानेषु वार्तेति। 'काश्यपिनः कौशिकिन इति'। काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। 'पाराशरिण इति'। पाराशर्यशब्दाद्गर्गादियञन्तात्पाराशर्यशिलालिभ्यामिति णिनिः, पूर्ववद्यलोपः। 'कर्मन्दिन इति'। कर्मन्दकृशाश्वादिनिः, पिङ्गशब्दात्पु-राणप्रोक्तेष्विति णिनिः॥

"तदस्मिन्नस्तीति देशे तन्नाम्नि"॥ 'इतिकरणस्ततश्चेद्विव-क्षेति'। ननु तन्नामग्रहणादेवातिप्रसङ्गो न भविष्यति, तच्च, द्विविधं नाम कदा चित्केन चित्सङ्केतितं नित्यं व्यवहारानुपाति, तत्र द्वितीयस्य परिग्र-हार्थमितिकरणः क्रियते, भूमादिविशेषपरिग्रहार्थं च, तन्नाम्नीत्येतत्तु नाम-धेयताविरोधिनो बलीयसोपि प्रत्ययान् बाधितुमन्यथा नाप्राप्ते मतुप्या-रम्भात्तस्यायं बाधकः, तदपवादैरस्त्यनिठनादिभिः सह सम्प्रधारणा-यामपवादविप्रतिषेधादिनिठनादय एव स्युः॥

"तेन निर्वृत्तम्"॥ निर्वृत्तमित्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः॥

"तस्य निवासः"॥ 'ऋजुनावामिति'। ऋज्वी नौर्येषां तेषा-मित्यर्थः॥

"अदूरभवश्च"॥ अदूरमन्तिकं तत्र भवतीत्यदूरभवः, निपात-नात्सप्तमीसमासः। 'विदिशाया इति'। दूरान्तिकार्थैः षष्ठ्यन्यतरस्या-मिति षष्ठी। 'चकार इत्यादि'। असति तु तस्मिन्नानन्तर्यादयमेवार्थ उत्तरत्र सम्बध्येत॥

"ओरञ्"॥ अरडुः क्षत्रियविशेषः। 'नद्यां तु मतुप्परत्वादिति' आरडवमित्यादिरञोवकाशः, नद्यां मतुबित्यस्योदुम्बरावतीत्यादिः॥

"मतोश्च बह्वजङ्गात्" ॥ 'चातुरर्थिक इति'। चतुर्णामर्थानां समूहश्चतुरर्थी, तत्र भवः, अध्यात्मादित्वाट्ठञ्, तद्धितार्थे द्विगौ तु ठञो लुक् स्यात्। 'अङ्गग्रहणं किमिति'। मतोश्च बह्वच इत्येवास्तु, व्यधिकरणे पञ्चम्यौ, बह्वचो यो विहितो मतुप् तदन्तादिति विज्ञायमाने सिद्धत्येव विवक्षितमिति प्रश्नः। 'मतुबन्तविशेषणं मा भूदिति'। अन्यथा सामानाधिकरण्ये सम्भवति वैय्यधिकरण्यस्यायुक्तत्वात् तस्यैव विशेषणं स्यादिति भावः, अस्ति चेदिदानीं क्वचिदबह्वज् मत्वन्तो यदर्थं बह्वज्ग्रहणं स्यात्, अस्तीत्याह, स्ववान् श्ववान् ॥

"उदक्च विपाशः" ॥ 'महती सूक्ष्मेक्षिकेति'। एवं नाम स्वरेष्वाचार्येोऽवहित इति आचार्यस्य प्रशंसैषा ॥

"सुवास्त्वादिभ्योऽण्" ॥ 'अञ इति'। अण्ग्रहणरहितसूत्राभिप्रायमेतत्, तस्य तु प्रयोजनं स्वयमेव वक्ष्यति अण्ग्रहणं मतुपो बाधनार्थमिति, तेन वस्तुतो मतुपोऽयमपवादः, अथाण्ग्रहणं किमर्थं न सुवास्त्वादिभ्यो यथा विहितमित्येवोच्येत, पुनर्वचनाद्धि यो विहितो न च प्राप्नोति स एव भविष्यति स चाणेव तत्राह। 'अण्ग्रहणमिति'। असत्यण्ग्रहणे मध्येपवादन्यायेन यथाविहितमित्युच्यमानोऽञ एव बाधकः स्यात् नदीमतुपा तु परत्वाद्बाध्येत, पुनरण्ग्रहणात्तु मतुपो विषये भवतीत्यर्थः, किं च ओरञित्यस्य नद्यां मतुप्परत्वाद्बाधक इत्युक्तं तत्रासत्यण्ग्रहणे यथाविहितमित्युच्यमाने नद्यामोरञेव स्यात् वचनं तु मतुपो बाधनार्थं स्यात्, तस्मादेतदर्थमप्यण्ग्रहणं कर्त्तव्यम् ॥

"रोणी" ॥ 'केवलात्तदन्ताश्चेति'। अन्यथा ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् केवलादेव स्यान्न तदन्तात्, रोणीति पुनः शास्त्रनिरपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिह सूच्यत इति परिभाषाया अनपेक्षणात्तदन्तादपि भवति, ननु च रोणीति नेदं प्रातिपदिकं स्त्रीप्रत्ययान्तत्वात्, न च ग्रहणवता प्रातिपदिकेनेत्यत्र लिङ्गविशिष्टस्य ग्रहणं येन स्त्रीप्रत्ययान्तेनापि तदन्तविधिः प्रतिषिध्येत, स्वरूपविधिविषया परिभा-

येवं प्रातिपदिकस्य स्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्युक्तत्वात्, यथाकथंचित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं भवतीति भाष्यकारपक्षस्तदाश्रयेणैतदुक्तम्, एवं च वृत्तिकारस्याप्ययमेव पक्षः, ङ्याप्सूत्रे तु परपक्षो दर्शित इति गम्यते, किं सिद्धं भवति, कुमारीमाचष्टे कुमारयति णाविष्ठवदिति टिलोपः सिद्धो भवति ॥

"वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः" ॥ सूत्रे कुमुदशब्दो द्विरुपादीयते तत्रारीहणकृशाश्वर्श्यकुमुदाश्च काशतृणादयश्चेति द्वन्द्वयोर्द्वन्द्वकरणादेकशेषाभावः । 'कुमुदादिष्विति' । ऋश्यादेरनन्तरेषु औत्सर्गिकोऽपि तत इष्यत इत्यादि यदुक्तं तदेवाप्तप्रयोगेण द्रढयति । 'तथा चोक्तमिति' । लुपि युक्तवदित्यत्र भाष्यकारेणैतदुक्तम्, अथास्मात्प्रयोगाद्विशेषविहितानामेव पक्षे लुब् भवतीति कस्मान्नोच्यते, तथा वा भवतु सर्वथा चातूरूप्यमेवात्र नः समीहितम् ॥

"शर्कराया वा" ॥ 'कुमुदादिष्विति' । ऋश्याद्यनन्तरेषु । 'पाठसामर्थ्यादिति' । नित्ये हि लुपि गणयोरस्य पाठोऽनर्थकः स्यात् । 'शर्करेति' । अणो लुप् । 'शार्करमिति' । तस्यैव श्रवणम् । 'शर्करिकमिति' । कुमुदादित्वाट्ठच् । 'शार्करकमिति' । वराहादित्वात्कक् । केण इति ह्रस्वः । 'शार्करिकं शर्करीयमिति' । उत्तरसूत्रेण ठक्छौ ॥

"नद्यां मतुप्" ॥ तदस्यास्त्यस्मिन्निति मतुपि सिद्धे वचनमिदं तदस्मिन्नस्तीति प्राप्तस्याणो बाधनार्थं निर्वृत्ताद्यर्थं च, तत्सूचितम् । 'चातुरर्थिक इति' । 'देशस्य विशेषणं नदीति' । यद्यपि विशिष्टलिङ्ग इत्यत्रोक्तं नदीग्रहणमदेशत्वात् जनपदो हि देश इति, इह तु नद्यां देश इति सम्बन्धसामर्थ्यादजनपदोऽपि देशग्रहणेन गृह्यते, एवं च पर्वतेष्वपि चातुरर्थिको भवति, अन्ये त्वाहुः । नद्यपि देश एव लोकप्रसिद्धेः, विशिष्टलिङ्ग इत्यत्र तु नदीग्रहणं यस्य द्वन्द्वस्य सर्व एवावयवो नदीवचनस्तत्परिग्रहार्थं, यत्र कश्चिदवयवो नदीवचनः कश्चिदन्यदेशवाची तत्र मा भूदि-

त्येवमर्थमिति, उदुम्बरावतीत्यादौ मतौ बह्वचो ऽनजिरादीनामिति दीर्घत्वम् । 'भागीरथीति' । तेन निर्वृत्तमित्यण् ॥

"कुमुदनडवेतसेभ्यो ड्मतुप्" ॥ कुमुद्वानित्यादौ झयः मादुपधायाश्चेति वत्वम्, अथ वकारादिरेव कस्मान्न विहितः, ज्ञापनार्थम्, एतज्ज्ञापयति अन्योऽप्ययं भवतीति, तेन महिष्मानिति सिद्धं भवति, महिषाच्चेति न वक्तव्यं भवति, एतेनैतदपि निरस्तं प्रकृतस्यैव मतुपो डित्वातिदेशेन सिद्धमिति, नहि डित्वातिदेशे पूर्वोक्तं ज्ञापनं समर्थितं भवति ॥

"नडशादाड् ड्वलच्" ॥ शादशब्दो दोपधः, पङ्कोऽस्त्री शादकर्दमाविति ॥

"शिखाया वलच्" ॥ 'शिखाया वलज् वक्ष्यतीति' । दन्तशिखात्संज्ञायामित्यनेन । 'तद्देशार्थं वचनमिति' । इदं तु निर्वृत्ताद्यर्थं, देशे तत्राऽन्यणो बाधनार्थं च ॥

"नडादीनां कुक् च" ॥ 'तत्रवलोपश्चेति' । यदि पुनरयं कुक् परादिः क्रियेत नान्तस्य पदत्वात्सिद्धो नलोपः किं तु कुटि प्रत्ययादेरादेशानुपपत्तिः, छस्याप्रत्ययादित्वादीयादेशो न प्राप्नोति ॥

"शेषे" ॥ 'उपयुक्तादन्यः शेष इति' । शब्दार्थकथनमेतत्, तस्यैव प्रकरणादागतं विशेषमाह । 'अपत्यादिभ्य इति' । एते ह्यत्रोपयुक्ताः । 'चतुरर्थपर्यन्तेभ्य इति' । चत्वारोऽर्थास्तदस्मिन्नस्तीत्यादयः पर्यन्तो येषामिति त्रिपदो बहुव्रीहिः, चातुरर्थ्यपर्यन्तेभ्य इति पाठे समाहारद्विगोश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्, ये तु पठन्ति, चातुरर्थपर्यन्तेभ्य इति ते प्रज्ञादेराकृतिगणत्वादणमिच्छन्ति, किमर्थं पुनः शेषवचनं, शेषे घादयो यथा स्युरपत्यादिषु मा भूवन्, चिरनिवृत्ता अपत्यादयः, चतुर्ष्वर्थेषु तर्हि मा भूवन्, अन्यथा औरसः इत्यादयो नडादीनां कुक् चेत्येवमन्ता यथा चतुरर्थेषु भवन्ति तथा घादयोऽपि विभाषा पूर्वाह्णापराह्णाभ्यामित्येवमन्तास्तत्रैव स्युः, नह्यकस्मात्प्रकरणं विच्छिद्यते, निवर्तिष्यते तर्हि चतुर्थो ऽस्वरितत्वाल्लिङ्गाच्च, यदयमुत्करादिषु कांश्चिद्वृद्धान् शब्दान्पठति

घाट्टका शालेति, अन्यथा वृद्धाच्छ इत्येव सिद्धः स्यात्, स्वार्थे तर्हि घादयो मा भूवन् अनिर्दिष्टार्थत्वाद्धि स्वार्थएव स्युः, नामी अनिर्दिष्टार्थाः, जातादिष्वर्थेषु घादयोनुवर्त्तिष्यन्ते, यद्यनुवर्त्तन्ते या या परा प्रकृतिः तस्यास्तस्याः पूर्वः पूर्वः प्रत्ययः प्राप्नोति नार्थनिर्देशं प्रति, अनयोरन्योन्यमभिसम्बन्धो भवति, लिङ्गाच्च, यदयं क्व चित्ककारेण प्रकृतं समुच्चिनोति रङ्कोरमनुष्येण् चेति तज्ज्ञापयति न पूर्वः पूर्वः प्रत्ययः परस्याः परस्याः प्रकृतेर्भवतीति, अथ वा लौकिकोधिकारोपेक्षालक्षणः, न च घादीनां प्रकृत्यन्तरापेक्षा नापि ग्रामादीनां प्रत्ययान्तरापेक्षा, तस्माद्दप्रयोजनमेतत्स्वार्थे मा भूवन्निति, तदेव तर्हि प्रयोजनम्, अपत्यादिषु तर्हि मा भूवन्निति, ननु चोक्तं चिरनिवृत्ता अपत्यादयश्चातुरर्थौं च नापेक्ष्यन्तइति, न ब्रूमोपत्यादीनामत्राभिसम्बन्ध इति किं तर्हि तस्येदमित्यनेनापत्यादिष्वपि प्राप्नुवन्ति, कथमित्याह। 'तस्येदं विशेषा ह्यपत्यसमूहनिवा[1]सदय इति'। यथा तस्येदमित्यनेन पाणिनीयाश्छात्रा इति छात्रादिषु विशेषेषु प्रत्ययो भवति एवमपत्यादिष्वपि विशेषेषु घादयः स्युः, विशेषेषु सामान्यभावात्, ननु च विशेषशब्दसंनिधौ सामान्यशब्द उपात्तस्तत्र विशेषे पर्यवस्यति कौण्डिन्यो ब्राह्मण इति, विशेषान्तरे वा दधि ब्राह्मणेभ्यस्तक्रं कौण्डिन्यायेति, तत्रापत्यादिविशेषसन्निधावुपात्तं तस्येदमिति सामान्यं, यद्यपत्यादिष्वेव पर्यवस्येत् सामान्योपादानं व्यर्थं स्यादिति विशेषान्तर एव पर्यवसास्यति, किं च यद्यपत्यादिष्वपि घादयः स्युः प्राग्दीव्यतोणित्यत्रैवाणादिभिः सह विधीयेरन्, लिङ्गाच्चापत्यादिषु घादयो न भविष्यन्ति, किं लिङ्गं, फेश्छ चेत्यत्र फेर्वृत्येव ठग्विधानार्थे वक्तव्यं, ठका मुक्ते वृद्धाच्छ इति तावच्छः सिद्धः, तदेव छविधानं ज्ञापनार्थं नह्यपत्यादिषु घादयो भविष्यन्ति, तथा गोत्रचरणाद्वुञिति समूहइदमर्थोन्तर्भूते वुञि सिद्धे गोत्रोक्षोष्ट्रेति पुनर्विधानमपि लिङ्गमस्यार्थस्य, तथा राजन्यादिभ्यो वुञिति राजन्यादिषु दैवयातवशब्दः पठ्यते स च दैवयातूनामपत्यानि दैवयातवा इति गोत्रप्रत्ययान्तः, तथाऽरीहणादिषु भास्त्रायणशब्दो गोत्रप्रत्ययान्तः पठ्यते

१ निवास इति मुद्रितमूलपुस्तके नास्ति।

तत्रापि गोत्रचरणाद्वुञित्येव सिद्धः, तदेतैर्लिङ्गैरपत्यादिषु घादयो न भविष्यन्ति, तदेवमेतत्प्रयोजनं नोपपद्यतइति प्रयोजनान्तरमाह । 'किं चेति'। असति हि शेषग्रहणे प्रथमेनैवार्थेन सम्बन्धमनुभवन्तो कृतार्थता विज्ञायेत द्वितीयादिषु त्वर्थेषु प्राग्दीव्यतइति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः, शेषशब्दस्तूपयुक्तादन्यतयाऽजाताद्दीनर्थान्वशीकृत्य शक्नोत्यभिधातुमिति सर्वत्र घादयः सिध्यन्ति, अतः साकल्यार्थमपि विशेषवचनं कर्त्तव्यम् । 'लक्षणं चाधिकारश्चेति'। तत्र तस्येदमित्येव चाक्षुषादयः सिध्यन्ति, दार्षदादयस्तु संस्कृतं भक्षा इति, तस्माल्लक्षणत्वं नातीवोपयुज्यते ॥

"राष्ट्रावारपाराद्धखौ" ॥ 'विगृहीतादपीष्यतइति'। सूत्रे तु संघातस्यैव ग्रहणम् अन्यथा वैषम्यात्संख्यातानुदेशो न स्यात् । 'विपरीताच्चेति'। इयमपीष्टिरेव ॥

"ग्रामाद्यखञौ" ॥ ग्रामशब्दः कत्र्यादिषु पठ्यते तेन ढकञपि भवति ॥

"कत्र्यादिभ्यो ढकञ्" ॥ 'कात्रेयक इति'। कुत्सितास्त्रयः कत्रय इति बहुव्रीहिर्वा, अस्मादेव निपातनात्कोः कद्भावः, तेन कद्भावे त्रौ उपसंख्यानमिति न वक्तव्यं भवति । 'कुल्याया यलोपश्चेति'। केचित्तु तृतीयं वर्णं लकारं पठन्ति, अन्ये तु डकारम् ॥

"कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" ॥ अयं योगः शक्योऽवक्तुं, कथं कौलेयकः श्वा, यदा कुलशब्दः श्वकुले वर्त्तते तदा तस्यापत्यमपि श्वैव भवति तत्रापूर्वपदादन्यतरस्यामिति ढकञा सिद्धं, कुक्षिग्रीवाशब्दाभ्यां दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञिति ढञि कृते आस्यलङ्कारयोः स्वार्थिकः कन् भविष्यति ॥

"नद्यादिभ्यो ढक्" ॥ गणे नदीति स्वरूपग्रहणं न संज्ञा नद्याः मह्यादीनां पृथग्ग्रहणात्, पौरेयमित्यादिषु पुरि भवं वने भवं गिरौ भवमिति विग्रहः । 'उभयमपि दर्शनं प्रमाणमिति'। उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥

"दक्षिणापश्चात्पुरसस्त्यक्" ॥ दक्षिणाशब्दो दक्षिणादाजित्याजन्तोऽयं गृह्यते पश्चात्पुरोभ्यां साहचर्यात्, तेन न टाबन्तस्य प्रवीणवाचिनो ग्रहणम् ॥

"कापिश्याः ष्फक्" ॥ 'बह्ल्यादिभ्यश्चेति' । अवृद्धादपीति वुञि प्राप्ते वचनम् ॥

"रङ्कोरमनुष्येऽण्च" ॥ रङ्कवो नाम जनपदस्ततः प्रागदीव्यतोऽण् प्राप्तस्तस्याऽवृद्धादपीति वुञ् बाधकस्तस्य ओर्देशे ठञ्, ततः कोपधादण्, ततः कच्छादिभ्यश्चेत्यण् प्राप्तः, ततःष्फगणौ विधीयेते, कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य कच्छादिषु पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थः । 'मनुष्ये परत्वादिति' । उत्कृष्टत्वाद् अपवादत्वादित्यर्थः । 'कच्छादिपाठादमनुष्येऽणपि सिद्ध इति' । ननु च मनुष्यतत्स्थयोर्वुञ्विधानार्थस्तत्र पाठः स्यात् ततश्च तद्व्यतिरिक्ते विषये ष्फगेव स्यादत्राण् विधीयते, नैतदस्ति, कच्छादिपाठस्योभयार्थत्वे बाधकाभावात् । 'नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियतइति' । यस्त्वमनुष्यशब्दो रक्षःपिशाचादिषु रूढो न तस्यैव ग्रहणम् अनभिधानादिति मन्यते, अथैवं कस्मान्न विज्ञायते परत्वादेव वुञि सिद्धे मनुष्यप्रतिषेधो ज्ञापयति मनुष्यतत्स्थयोरित्यस्याण्येतौ ष्फगणौ बाधकाविति, तेन तत्स्थे ष्फगणावेव भवतो न वुञिति, तत्र, अनिष्टत्वात्, नहि तत्स्थे ष्फगणाविष्येते किं तर्हि वुञेव । 'राङ्कवः कम्बल इति व्यङ्क् भवतीति' । यथा तु वार्त्तिकं भाष्यं च तथात्र ष्फगिष्यते, मनुष्यप्रतिषेधश्च प्रत्याख्यातः, यथाऽऽह, रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्, तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वादण्ग्रहणानर्थक्यं च कच्छादिभ्योऽणिविधानादिति । 'विशेषविहितेन च ष्फकेति' । अन्यथा कच्छादिपाठस्याप्राणिनि चरितार्थत्वात्प्राणिनि ष्फगेव स्यात् ॥

"द्युप्रागपागुदक्प्रतीचो यत्" ॥ द्यु इति दिव उत्वेन निर्देशः, द्युशब्दस्य तु ग्रहणं न भवति व्याख्यानात् । 'अवाच्यमिति' । अवाची

दक्षिणा दिक् । 'अव्ययात्तु कालवाचिन इति' । यथाव्ययात्कालवाचिनः कालाट्ठञिति ठञ् न भवति न्यायस्य तुल्यत्वात् ॥

"वर्णौ वुक्" ॥ 'तत्समीपो देशो वर्णुरिति' । अदूरभवश्चेत्यार्थे सुवास्त्वादिभ्योऽणित्यण्, तस्य जनपदे लुबिति लुप् । 'तद्विषयार्थवाचिन इति' । स वर्णुर्देशो विषयो यस्यार्थस्य तद्वाचिन इत्यर्थः, विषयग्रहणेन वर्णाविति विषयसप्तमीं दर्शयति ॥

"अव्ययात्त्यप्" ॥ 'अमेहेति' । योऽव्ययात्त्यब्विहितः सोमादिभ्य एव स्मृत इत्यर्थः, अमाशब्दः समीपवाची स्वरादिः, अमा समीपे भवोऽमात्यः । 'औपरिष्ट इति' । उपरिष्टाद्भव इत्यणि कृते ऽव्ययानां भमात्रे टिलोप इति टिलोपः, परतःशब्दो विभाषापरावराभ्यामित्यतसुजन्तः, तत्र भवः । 'आरातीय इति' । बहिर्षष्टिलोपश्चेत्यनित्यत्वज्ञापनादत्र टिलोपाभावः । 'त्यब्नेर्ध्रुवइति' । निशब्दाद् ध्रुवे वाच्ये त्यब् भवति, नियतं सर्वकालं भवो नित्यः । 'निसो गतइति' । निःशब्दाद्गते वाच्ये त्यब् भवति । 'निष्ट्य इति' । ह्रस्वात्तादौ तद्धितइति षत्वन्तकारस्य ष्टुत्वमेवमाविर्भूतमाविष्ट्यम् । 'आरण्याणा इति' । अणि सति ङीप् स्यादिति णो विधीयते । 'दूरेत्य इति' । तत आगत इत्यर्थे एत्यः । 'उत्तरादाहञिति' । आद्युदात्तार्थं वचनम् । 'औत्तराहमिति' । उत्तराच्चेत्याहि प्रत्ययः, उत्तराहिशब्दात्परिगणनेन त्यपोऽभावादणि सति सिद्धम् ॥

"ऐषमोह्यःश्वसोरन्यतरस्याम्" ॥ 'ठञपि तृतीयो भवतीति' । विधिवाक्यापेक्षं तृतीयत्वं प्रत्ययापेक्षया तु ठञ् चतुर्थः, श्वसस्तुट्चेत्यत्र विकल्पाधिकाराट् ट्युट्युलावपि भवतः ॥

"तीररूप्योत्तरपदादञ्ञौ" ॥ अञ्ञयोः स्त्रियां विशेषः, काकतीरी चाहरणरूप्या । 'बहुच्पूर्वान्मा भूदिति' । अन्यथा बहुतीरशब्दादपि स्यात्, उत्तरपदशब्दस्य तु समासविषये नियतत्वान्नास्ति बहुच्पूर्वात्प्रसङ्गः ॥

"दिक्पूर्वपदादसंज्ञायां ञः" ॥ 'असंज्ञायामिति' । न चैवमसंज्ञाया इति पञ्चम्या निर्देशः विषयसप्तम्यापि तदर्थलाभादित्याह । 'संज्ञाविषयादिति' । 'पौर्वशाल इति' । पूर्वस्यां शालायां भव इति तद्धितार्थे समासः, ततः प्रत्ययः । 'पदग्रहणमित्यादि' । दिक्पूर्वादित्युच्यमाने स्वरूपग्रहणं स्यात् ततश्च दिग्गज इत्यादेरेव स्यात् पदग्रहणे तु सति दिग्विशेषवाचिना ग्रहणं भवति, कथं, व्यधिकरणपदो बहुव्रीहिः दिशः पूर्वपदमस्मिन्निति, दिश इति वाचकापेक्षया षष्ठी, दिशो वाचकं पूर्वपदमस्मिन्नित्यर्थः ॥

"मद्रेभ्योऽञ्" ॥ मद्रशब्दो जनपदवचनः, बहुवचननिर्देशो जनपदवाचिनः परिग्रहार्थः, तेन भद्रपर्यायो न गृह्यते । 'पौर्वमद्र इति' । मद्रैकदेशे मद्रशब्दस्य वृत्तेर्दिक्शब्देन सामानाधिकरण्ये सति तद्धितार्थ इति समासः ॥

"उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्" ॥ 'शैवपुरमिति' । प्रस्थपुरवहान्तादिति वुञ् न भवति, वृद्धादिति तत्र वर्तते ॥

"प्रस्थोत्तरपदपलद्यादिकोपधादण्" ॥ 'उदीच्यग्रामलक्षणस्याञोऽपवाद इति' । ततोऽन्यत्र व्रीहिप्रस्थगिरिप्रस्थकर्किकादावौत्सर्गिक एवाण्, कैलासप्रस्थकाकशाकादिषु वृद्धेषु वृद्धाच्छो भवति, देशवाचिनि तु मालाप्रस्थादौ प्रस्थपुरवहान्ताच्चेति वुञ्, इत्वाकुप्रभृतिषु जनपदवुञोऽपवादः. कोपधादणित्यण् वक्ष्यते, अरीहणादौ च वृद्धादकेकान्तेति छो भवति, तस्मादञोऽपवाद इति सूक्तम्, उत्तरपदग्रहणादिह न भवति, उत्तरो माहकिप्रस्थ उत्तरमाहकिप्रस्थः, तत्र भव इति, प्रस्थान्तादिति तूच्यमानेऽत्रापि स्यात् । 'अण्ग्रहणं बाधकबाधनार्थमिति' । यद्यण्ग्रहणं न क्रियेत तदा यदत्र वृद्धं वाहीकग्रामवाचि तस्मात्प्राग्दीव्यतोऽणित्यणि प्राप्ते वृद्धाच्छः प्राप्तस्तस्मिन्वाहीकग्रामेभ्यश्चेति ठञ्ञिठाभ्यां बाधिते पुनर्विधानाच्छ एव स्यात् तस्माद्बाधकमपि तं छं बाधित्वा अण्ग्रहणादणेव भवति, यकृल्लोमशब्दः पठ्यते यकृल्लोम्नि भवः याकृल्लोमः, अन्निति प्रकृतिभावो न भवति, गणे नलोपनिपातनादित्याहुः ॥

"कण्वादिभ्यो गोत्रे" ॥ 'गोत्रमिह न प्रत्ययार्थ इति'। शेषाधिकारस्य बाधप्रसङ्गात्। 'न च प्रकृतिविशेषणमिति'। कण्वादीनामगोत्रप्रत्ययान्तानां गोत्रे वृत्त्यसम्भवात्। 'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहित इति'। प्रतिपदविहितो यञेव गृह्यते, एवं च कृत्वा गोत्रमपि पारिभाषिकं गृह्यते न त्वपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतइत्यपत्यमात्रस्य ग्रहणम्। 'कण्वो देवतास्येति'। ननु कण्वादिभ्य इत्युच्यमाने कथमणन्तात्प्रसङ्गः, कथं वा यञन्तेभ्यः स्याद् येनेष्टं तावत्सिध्यति, एवं मन्यते, केवलेभ्यः कण्वादिभ्य औत्सर्गिक एवाण् सिध्यति ह्यापवादत्वाद्योगस्य कण्वाद्यवयवे तद्धितान्ते कण्वादिशब्दो वर्तिष्यतइति ॥

"इञश्च" ॥ 'गोत्र इत्येवेति'। पूर्वत्र पारिभाषिकस्य गोत्रस्य ग्रहणमित्युक्तम् इहापि तदेवानुवर्तते तेनात्रापि पारिभाषिकस्यैव ग्रहणादिह न भवति पाणिनेर्यूनश्छात्राः पाणिनीया इति। 'सौतङ्गमेरिदमिति'। सुतङ्गमशब्दात्सुतङ्गमादिसूत्रेण चातुरर्थिक इञ्, अत्रापत्यत्वमेव नास्तीति सुतरामगोत्रत्वाद्भवति प्रत्युदाहरणम् ॥

"न द्व्यचः प्राच्यभरतेषु" ॥ ननु च भरताः प्राच्या एव तत्किमर्थं तेषां स्वशब्देन ग्रहणं तत्राह। 'ज्ञापकादन्यत्रेति'। बह्वच इञः प्राच्यभरतेष्वित्यत्रायमर्थो ज्ञापितः, अन्यत्र प्राच्यग्रहणे भरतानां ग्रहणं न भवतीति, अपर आह, ज्ञापकादन्यत्रेत्यन्वयः, अन्यत्रास्यार्थस्य ज्ञापितत्वादित्यर्थः ॥

"वृद्धाच्छः" ॥ 'अव्ययतीरेत्यादि'। अव्ययात्त्यब् भवतीत्यस्यावकाशो ऽमात्यः, छस्यावकाश शालीयो मालीयः, आराच्छब्दाच्छो भवति आरातीयः। अमेहक्वतसित्रेभ्य इति परिगणनमनपेक्ष्यायं विप्रतिषेधः, तीरोत्तरविधेरवकाशः काश्यतीरः, छस्य स एव, वायसतीराच्छो भवति वायसतीरीयः, रूप्योत्तरविधेरवकाशः चारूप्यः छस्य स एव, माणिरूप्याच्छः प्राप्तस्तं चापि योपधलक्षणो वुञ् बाधते माणिरूप्यकः प्राप्तिमात्राश्रयेण तु छस्य रूप्योत्तरपदलक्षणस्य च अस्य विप्रतिषेध उक्तः, उवीच्यग्रामलक्षणस्य विधेरवकाशः शिवपुर–शैवपुरः, वाडवकर्णाच्छो भवति

वाडवकर्णीयः, कोपधविधिः प्रस्थोत्तरपदपलद्यादिकोपधादणित्ययं विव-क्षितः, स तस्माद्धि परस्यस्तस्यावकाशो निलीनक-नैलीनकम् उलूका अस्मिन्सन्ति तदस्मिन्नस्तीत्यण्, औलूको नाम ग्रामस्तत्र भवस्तस्माच्छो भवति औलूकीयः, यस्तु कोपधादणित्यण् स जनपदवुञोऽपवादः, तस्यापि वृद्धादकेकान्तेत्यत्र कोपधग्रहणं सोसुकाद्यर्थमिति विहितश्छो बाधको भवति ॥

"भवतष्ठक्छसौ" ॥ 'ठक्छसावित्येताविति'। सित्करणादवसीयते छसोऽयं निर्दिशो न शस इति, शसि हि स्वादिपदत्वेनैव सिद्धम्। 'सकारः पदसञ्ज्ञार्थ इति'। तेन भवदीय इत्यत्र जश्त्वं भवति। 'भावत्क इति'। इसुसुक्तान्तात्कः, प्रक्रियालाघवार्थं कक्कि विधातव्ये ठग्विधानं स्त्रियां ङीबर्थं भावत्की। 'अवृद्धात्तु भवत इति'। शत्रन्ताद्, ङित्तु भवतः शतु-रित्येव पाठः ॥

"काश्यादिभ्यष्ठञ्ञिठौ" ॥ 'वृद्धादित्येवेति'। कथं तर्ह्यवृद्धेभ्यो युवराजादिभ्यः प्रत्यय इत्यत आह। 'ये त्विति'। यद्यवृद्धेभ्यो वचनप्रा-माण्यात्प्रत्ययौ भवतः किमर्थं तर्हि वृद्धाधिकार इत्यत आह। 'देवदत्त-शब्द इत्यादि'। 'कथं भाष्यउदाहृतमिति'। यद्यपि तत्र स्वयमपि छप्रत्ययमुदाहरत्येव तत्तु भाष्यकारप्रामाण्येन न स्वातन्त्र्येणेति भाष्य-इत्युक्तम्। 'आपदादिपूर्वपदादिति'। आपदादिराकृतिगणः। 'कालादिति'। कालशब्दान्तादित्यर्थः ॥

"वाहीकग्रामेभ्यश्च" ॥ 'छस्यापवाद इति'। एवं च ये छेनैव बाधिता अव्ययतीरुप्योत्तरपदोदीच्यग्रामकोपधविषयास्तद्विषयेऽप्येतावेव भवतो न चेदन्येन बाधः, तद्यथा आरान्नाम वाहीकग्रामः आरात्की आरात्का इसुसुक्तान्तात्कः, तथा कास्तीरं नाम वाहीकग्रामः कास्ती-रिकी कास्तीरिका, इह तु दाशरूप्यं नाम वाहीकग्रामः धन्वयोपधाद्विति वुञ् ठञ्ञिठौ बाधते दाशरूप्यकः, तथा शकलान्यस्मिन्सन्ति शाकलं नामोदीच्यग्रामः भूयो वाहीकग्रामः ततष्ठञ्ञिठौ भवतः शाकलिकी शाकलिका, इह तु सोसुकं नाम वाहीकग्रामः प्रस्थोत्तरपदादिसूत्रेण

प्राप्तं कोपधलक्षणमणं छो बाधते परत्वात्समम्यपवादत्वाद्वृद्धादकेकान्ते-त्यत्र कोपधग्रहणं सौसुकाद्यर्थमिति कोपधलक्षणश्छो बाधते, सौसुकीयः॥

"ओर्देशे ठञ्"॥ 'नैषादकर्षुकः शाबरजम्बुक इति'। निषाद-कर्षूशबरजम्बूशब्दाभ्यां ठञ्, इसुसुक्तान्तात्कः, केण इति ह्रस्वः॥

"वृद्धात्प्राचाम्"॥ 'वृद्धादेव प्राचामिति'। विपरीतस्तु नियमो न भवति प्राचामेव वृद्धादिति, अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याभावाद् यच्च पूर्वसूत्रस्यातिप्रसङ्गः स्यात्। 'आढकजम्बुक इति'। पूर्ववत्कादेश-ह्रस्वत्वे॥

"धन्वयोपधाद्वुञ्"॥ 'धन्ववाचिन इति'। धन्वविशेषवाचिन ऐरावतादेरित्यर्थः, स्वरूपस्य पर्यायाणां च ग्रहणं न भवति वृद्धाधिकारात्। 'पारेधन्वक इति'। पारेमध्ये षष्ठ्या वेत्यव्ययीभावः, अनश्चेति टच् समा-सान्तः, वुञि यस्येति लोपः, यदि तु धन्वशब्दो नपुंसकलिङ्गस्तदा नपुं-सकादन्यतरस्यामिति टजभावपक्षे वुञि नस्तद्धित इति टिलोपः, साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण यथान्तौ॥

"प्रस्थपुरवहान्ताच्च"॥ 'वृद्धादिति वर्त्तत इति'। यद्येवमन्त-ग्रहणमनर्थकं प्रस्थादीनामवृद्धत्वादेव तदन्तविधिर्भविष्यति, नैतदस्ति, वा नामधेयस्येति प्रस्थादीनामेव पदानां वृद्धत्वसम्भवात्, अथाप्येवं नाम्नोद्देशस्याभावस्तथापि यथा पूर्वसूत्रे धन्वविशेषग्रहणं तथेहापि सम्भाव्येत, नादीपुरं नाम वाहीकेषु ग्रामस्तत्र वाहीकग्रामलक्षणौ ठञ्ञिठौ छस्यापवादौ, अयमपि वुञ् छस्यापवादः, इह त्वपवादविप्रति-षेधाद्वुञ् भवति, एवं च पातनप्रस्थकः कौञ्जीवहकः इत्यत्रापि वुञेव भवति॥

"रोपधेतोः प्राचाम्"॥ 'ईकारान्ताच्चेति'। ह्रस्वस्य तु ग्रहणं न भवति तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्। 'ऐकचक्र इति'। एकचक्रा नाम प्राग्देशे नगरी तत्र ग्रह् प्राचां देशइति वृद्धसञ्ज्ञा, ककन्देन निर्वृत्ता नगरी काकन्दी, स्त्रीषु सौवीरसाल्वप्राक्ष्वित्यञ्। 'तपरकरणं विस्पष्टा-र्थमिति'। न तु ह्रस्वप्लुतयोर्निवृत्त्यर्थं तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्,

ईकारस्यानणत्वेन तयोरग्रहणाच्च, असति तु तकारे रोपधयोरित्युच्यमाने किमत्र गृहीतमिति विस्पष्टं न ज्ञायेत तकारे तु सति वर्णनिर्द्देशो निश्चीयते तत्रैव तस्य प्रसिद्धत्वात्, ईकाररोपधयोरिति निर्द्देशे गौरवप्रसङ्गः ॥

"जनपदतदवध्योश्च" ॥ 'तदवधिरपि जनपद एव गृह्यत इति'। स चासाववधिरिति कर्मधारय आश्रीयते न तु तस्यावधिस्तदवधिरिति षष्ठीसमास इत्यर्थः, तथा हि सति मौञ्जी नामावधिभूतो ग्रामस्तत्र भवो मौञ्जीय इत्यत्रापि स्यात्, कस्य पुनरसाववधिर्व्विति चेत् सन्निधानाज्जनपदस्यैवेति विज्ञायते। 'गर्त्तोत्तरपदाच्छं बाधित्वेति'। अन्यथा तु गर्त्तोत्तरपदाच्छो भवतीत्यस्यावकाशः, वृकगर्तीयः जनपदवुञोऽवकाश आङ्गकः, त्रिगर्त्तशब्दादुभयप्रसङ्गे परत्वाच्छः स्यात्, ततश्च गर्त्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् पूर्वविप्रतिषिद्ध इति पूर्वविप्रतिषेधः पठितव्यो भवति। 'त्रैगर्त्तक इति'। उत्तरसूत्रेण वुञ्, एतेनोत्तरत्र तदवधिग्रहणस्योपयोगं दर्शयति ॥

"अवृद्धादपि बहुवचनविषयात्" ॥ 'अणञ्छयोरपवाद इति'। अवृद्धादणोपवादो वृद्धाच्छस्य, इहावृद्धादपि बहुवचनादित्येव सिद्धं, यौगिको बहुवचनशब्दो बहूनामर्थानां वचनो बहुवचन इति, यदि वा बहुवचनाद्बहुवचनान्तादित्यर्थो नार्थो विषयग्रहणेन, तत्राह। 'जनपदैकशेषबहुत्वइति'। जनपदस्यैकशेषवशेन यद्बहुत्वं तत्रेत्यर्थः। 'वर्त्तन्य इति'। अवयवभेदेन भेदमाश्रित्य एकशेषः, नायं नित्यबहुवचनान्तः द्व्येकयोरपि दर्शनात्। 'तक्रकौण्डिन्यन्यायेनेति'। पूर्वसूत्रे हि जनपदसामान्ये वृद्धाद्वुञ् विहितः, यथा ब्राह्मणसामान्ये दधिदानं, इह तु बहुवचनविषये विशेषे ऽवृद्धाद्वुञ् यथा कौण्डिन्ये तक्रदानं, ततश्च बहुवचनादपि वृद्धाद्वुञि प्राप्ते आरभ्यमाणोऽवृद्धाद्वुञ् वृद्धाद्वुञो बाधकः स्यादित्यपिशब्देन समुच्चीयतइत्यर्थः, इह बहुवचनविषयादित्येतावता सिद्धमवृद्धार्थोयमारम्भः, वृद्धाधिकारविच्छेदार्थं त्ववृद्धादपीति वचनम् ॥

"कच्छाग्निवक्त्रवर्त्तोत्तरपदात्" ॥ कच्छशब्दार्थमुत्तरपदग्रहणं, स हि केवलोपि कूलाख्ये देशे वर्त्तते, इतरेषां तु केवलानां देशवृत्त्य-

सम्भवादेव तदन्तविधिः सिद्धः, कच्छाग्रन्तौदित्युच्यमाने बहुचपूर्वादपि स्यादित्युत्तरपदग्रहणम् ॥

"धूमादिभ्यश्च" ॥ 'अणादेरपवाद इति'। अशृङ्गेभ्यो धूमादिभ्योणोपवादः, शृङ्गेभ्यश्छस्य, उदीच्यग्रामेभ्यस्त्वञः, वाहीकग्रामेभ्यष्ठञ्ञिठयोः। 'कूलात्सौवीरेष्विति'। कौलको भवति सौवीरेषु कौलमन्यत्र ॥

"नगरात् कुत्सनप्रावीण्ययोः" ॥ केनेदं मुषितमिति प्रश्नः, इह नगरे मनुष्येणेत्युत्तरम्। सम्भाव्यतएतदित्यादि प्रष्टुर्वचनम्। 'संज्ञानगरं पठ्यतइति'। माहिष्मतीशब्दसाहचर्यात् सञ्ज्ञा नगरं सञ्ज्ञाभूतो नगरशब्द इत्यर्थः ॥

"अरण्यान्मनुष्ये" ॥ 'औपसंख्यानिकस्येति'। अरण्याण्णो वक्तव्य इत्युपसंख्यानप्राप्तस्य, मनुष्यइत्यल्पमिदमुच्यतइत्याह। 'पथ्यध्यायेति'। 'आरण्यकोध्याय इति'। यो ऽरण्ये ऽधीयते उपनिषद्भागः स उच्यते, विहारः क्रीडा ॥

"विभाषा कुरुयुगन्धराभ्याम्" ॥ 'कुरुशब्दः कच्छादिषु पठ्यतइति'। कथं तर्हि कुरुशब्दाद्वुञः प्राप्तिरुक्ता ताभ्यामवृद्धादपीति नित्यं वुञि प्राप्तइति, आद्यप्राप्त्यभिप्रायेण तदुक्तं न पुनर्यानेन विकल्पेन बाध्यते तदभिप्रायेण, येपि पठन्ति वुञि सिद्धइति, प्राप्त इत्यर्थः, यथा सिद्धे सत्यारम्भो नियमार्थ इति, कुरुशब्दार्थं विभाषाग्रहणं न कर्तव्यमिति प्रतिपादयिष्यन्नाह। 'कुरुशब्दः कच्छादिषु पठ्यतइति'। ततः किमित्यत्राह। 'तत्रेति'। किमर्थं तर्हि विभाषाग्रहणमित्याह। 'सैषेति'। ननु युगन्धरशब्दादप्यवृद्धादपीति नित्ये वुञि सिद्धे ऽन्तरेणापि विभाषाग्रहणं पुनर्वचनाद्विकल्पो विज्ञास्यते, नैवं शक्यं, विपर्ययोपि स्यात्, युगन्धरशब्दान्नित्यो वुञ्, अवृद्धादपीत्यनेन तु विभाषित इति पुनरारम्भो ह्येवमप्युपपद्यते। 'मनुष्यतत्स्थयोरित्विति'। एतच्च कच्छादिषु पाठसामर्थ्याल्लभ्यते ऽन्यथाऽनयैव विभाषया वुञणोः सिद्धत्वात्तत्रास्य पाठोऽनर्थकः स्यात् ॥

"मद्रवृज्योः कन्" ॥ मद्रशब्दः स्फायितञ्चीति रक्प्रत्ययान्तः, वृजीवर्जने इगुपधात्किदिति किप्रत्ययान्तो वृजिशब्दः । 'जनपदवुञोऽपवाद इति' । अवृद्धादपीति- प्राप्तस्य ॥

"कोपधादण्" ॥ किं पुनरदेशवाचिनोऽयं नेष्यते यतो देशग्रहणमनुवर्त्ततइत्यत आह । 'अन्यत्रेति' । पूर्वेण, प्रस्थोत्तरपदादिसूत्रेण, एवं चोत्तरार्थं देशानुवृत्तिर्न त्विहेति इत्यर्थः, नन्वदेशवाचिनः प्राग्दीव्यतीयेनाण् सिद्धः, प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणाञो बाधनार्थं, तत्किमुच्यतेऽन्यत्र पूर्वेणैवेति, सत्यं, सति त्वेवमर्थे तस्यारम्भे प्रतिपदविधानात्तेनैव सर्वत्राणविधिर्युक्तः, अथाण्ग्रहणं किमर्थं, न कोपधाद्यथाविहितमित्येवोच्येत, अप्रभसामर्थ्याद्धि यो विहितो न स प्राप्नोति स एव भविष्यतीत्यत आह । 'अण्ग्रहणमिति' । इक्ष्वाकुशब्दादोर्देशे ठञ् प्राप्तस्तस्मिन् जनपदवुञा बाधिते यद्यण् ग्रहणं न क्रियेत पुनर्वचनाद्वुञेव स्यात् अण्ग्रहणे त्वणेव भवति । 'ऐक्ष्वाक इति' । दाण्डिनायनादिसूत्रेण टिलोपः, एवं चाण्ग्रहणादेवायमोर्देशे ठञो बाधको न परत्वात् ॥

"कच्छादिभ्यश्च" ॥ 'वुञादेरपवाद इति' । ये जनपदवाचिनो बहुवचनविषयास्तेभ्यो वुञोऽपवादः, सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः, साल्वशब्दः पठ्यते जनपदलक्षणो वुञ्माभूदिति, अपदातौ साल्वात् गोयवाग्वोश्चेति नियमार्थं भविष्यति, अपदातावेव गोयवाग्वोरेवेति, वृद्धत्वाच्छः प्राप्नोति ॥

"अपदातौ साल्वात्" ॥ 'पादाभ्यामततीति' । पादस्य पदाज्यातिगोपहतेष्विति पदादेशः, न पदातिरपदातिरपदातिरश्वारोहादिः । 'अपदातावेव मनुष्ये तत्स्थे चेति' । द्वन्द्वनिर्दिष्टत्वेन तत्स्थे चेत्युक्तं न तु तत्स्थस्य पदातैः सम्भवोऽस्ति, अपदातौ साल्वादेवेत्येव तु विपरीतनियमो न भवति गोयवाग्वोश्चेत्यारम्भात् ॥

"गर्त्तोत्तरपदाच्छः" ॥ 'वाहीकग्रामलक्षणमिति' । यद्यपि वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ विहितौ तथाप्युत्सृष्टानुबन्धयोस्तयोष्ठक्रूपाविशे-

याह्लीकग्राममलक्षणमित्येकवचननिर्देशः । 'श्वाविद्गर्त्तीयमिति'। श्वानं विध्यतीति व्यधेः क्विप् सम्प्रसारणं, नहिवृतीति दीर्घः, श्वाविधां गर्तः श्वाविद्गर्त्तः ॥

"गहादिभ्यश्च" ॥ 'अणादेरपवाद इति'। तत्र प्राहकिपस्यश-ब्दात्प्रस्थपुरवहान्ताच्चेति वुञोपवादः, वाल्मीकिप्रभृतिभ्य इञन्तेभ्य इञ-श्चेत्यणः, शेषेभ्य औत्सर्गिकस्याणः । 'सम्भवापेक्षमिति'। येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेव विशेषणं न त्वन्तस्थपूर्वपदादीना-मित्यर्थः । 'पृथिवीमध्यस्येति'। पृथिवीमध्यवाच्येव मध्यशब्दो गाह्या न मध्यान्तरवाचीत्यर्थः। 'चरणसम्बन्धेन निवासलक्षणोऽणिति'। चरणसम्ब-न्धेन योऽणिवधीयते ऽण् चरणइत्यनेन स निवासलक्षणो द्रष्टव्यः, सोऽस्य निवास इत्यस्मिन्नर्थे भवतीत्यर्थः, तेन पृथिवीमध्यं निवास एषां कठादीनां चरणानामित्यत्रार्थे मध्यमा इति भवति । 'मुखपार्श्वतसोर्लोप इति'। मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति स चालो-न्त्यस्य, तत्र कृते यस्येति लोपः, लोपवचनमव्ययानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थं, तेनारातीय इति सिद्धं भवति ॥

"वृद्धादकेकान्तखोपधात्" ॥ 'आरीहणकीयं द्रौघणकीयमिति'। तेन निर्वृत्तमित्यत्रार्थे वुञ्छणादिसूत्रेण यो वुञ् तदन्ताभ्यां प्रत्ययः, उदा-हरणदिक्चेयमकान्तस्य दर्शिता, वृद्धाच्छ इत्येव ह्यत्र छः सिद्धः, नह्येतौ जनपदवाचिनौ येन कोपधादणः प्रसङ्गः स्यात्, इदं त्वत्रोदाहरणं द्रष्टव्यं ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनो ब्राह्मण-कोष्णिके सञ्ज्ञायामिति निपातनात्साधुः, तत्र जातो ब्राह्मणकीय इति। 'अकेकान्तग्रहणे कोपधग्रहणमिति'। सूत्रे ऽकेकान्तग्रहणमपनीय कोप-धादिति वक्तव्यं, व्यापकत्वाल्लघुत्वाच्चेत्यर्थः ॥

"कन्थापलदनगरग्रामह्रदोत्तरपदात्" ॥ अन्तग्रहणेनैव सिद्धं नार्थ उत्तरपदग्रहणेन, न च बहुचपूर्वे प्रसङ्गः, प्राचां देशइत्यधिकारात् ॥

"विभाषा ऽमनुष्ये" ॥ यद्यत्र नञः प्रश्लेषो न स्यादसन्देहार्थं मनुष्ये विभाषेत्येव ब्रूयात्, लाघवे विशेषाभावादिति मत्वाह । 'अमनुष्ये-

तथा च श्रुतिः—विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ इति, अत्राविद्या—शब्देन विद्येतद् वर्णाश्रमाचारादि-पूर्व्वोक्तं कर्म्मोच्यते विद्या—शब्देन च भक्तिरूपापन्नं ध्यानमुच्यते, यथोक्तम्—इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्त्तुं मृत्युमविद्यया ॥ इति, तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । य एनं विदुरमृतास्ते भवन्ति, ब्रह्मविदाप्नोति परं तपो ह वै तत्परं वेद ब्रह्म वेद ब्रह्मैव भवतीत्यादि वेदन—शब्देन ध्यानमेवाभिहितं निदिध्यासितव्य इत्यादिनैकार्थ्यात्, तदेव ध्यानं पुनरपि विशिनष्टि—नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामिति

न हि विवेकजन्यज्ञानस्यो*पायत्वमुपपद्यते, भक्तेरुपायत्वं कथमिति शङ्कायामुपायविधायिवाक्यान्यैकण्ठ्येन योजयति तमेवेति, ध्यानं विधेयमस्तु तत्का†थं भक्तेरुपायत्वम् इत्यत्राह तदेवेति, नायमात्मा इत्यादिवाक्येन फलितार्थमाह भक्तीति, केवलस्य निषेधकश्शब्दः क इत्यत्राह न मेधयेति, न मेधयेत्युक्तेः केवलस्य निषेध इति कथमवगम्यते भक्तिवाचिशब्दश्च न प्रतीयते भक्तेर्ध्यानविशेषत्वं वा कथमिति शङ्कायामाह एतदुक्तमिति,

भक्तिरूपापन्नानुध्यानेनैव लभ्यते न केवलं वेदन-

* ज्ञानस्य प्रेर्यत्वमुपपद्यत इति पा० ।

† ततः किमिति पा० ।

मात्रेण न मेधयेति केवलस्य निषिद्धत्वात्, एतदुक्तं भवति—योऽयं मुमुक्षुर्वेदान्तविहितवेदनरूपध्यानादि-विशि*ष्टः यदा तस्य तस्मिन्नेवानुध्याने निरवधिकाति-शया प्रीतिर्जायते तदैव तेन लभ्यते परः पुरुष इति, यथोक्तं भगवता—पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्व-नन्यया। भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन !। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ?॥ भक्त्या माम-भिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ इति, तदनन्तरं मां तत एव भक्तितो विशते इत्यर्थः । भक्तिरपि निरतिशयप्रियानन्यप्रयोजनस†कलेतरवैतृष्ण्यावह-ज्ञानविशेष एवेति, तद्युक्त एव तेन परेणात्मना वर-णीयो भवतीति तेन लभ्यत इति श्रुत्यर्थः ।

उपासनादिविधायिवाक्याविरोधाय केवलश्रवणादिनिषेध इत्यव-गम्यत इत्यभिप्रायेण वेदान्तविहितेत्युक्तं, यदा तस्येति, ध्येयस्य निरति-शयप्रियत्वाद् ध्याने प्रीतिः ध्यानदशायां प्रीतिः ध्यानस्य प्रीतिरूपत्वमुक्तं भवति, एवं वरणीयत्वहेतुर्गुण उक्तः, तत्र प्रमाणमाह यथोक्तमिति, भक्त्या मामभिजानातीत्यादिश्लोके भक्तिसाध्यं ज्ञानान्तरमपवर्गोपाय इति शङ्का माभूदिति तद्व्याचष्टे तदनन्तरमिति, भक्त्येति परभक्तिरुच्यते मद्भक्तिं लभते परामिति स्मृत‡त्वात्, अभिजानातीति परज्ञानमुच्यते, य इति धर्मिस्वरूपं, यावानिति गुणविभूत्यादि विवक्षितं, तत इति परमभक्ति-

* ध्यानादिनिष्ठ इति पा॰ ।

† स्वेतरेति पा॰ ।

‡ प्रकृतत्वादिति पा॰ ।

इत्यते, साक्षात्काराभिनिवेशः परभक्तिः, साक्षात्कारः—परज्ञानं पश्चादनुभवाभिनिवेशः परमभक्तिः, न च तत इति साक्षात्कारपरामर्शः प्रवेष्टुं भक्त्या त्वनन्यया शक्य इति पूर्व्वोदाहृतवचनैकार्थ्यात्, विशत इति प्रकृतिबन्धविनिर्मुक्तस्यानुभव उच्यते, भक्तिरपीति निरतिशयप्रियत्वादनन्यप्रयोजनत्वम् ।

एवंविधपरभक्तिरूपज्ञानविशेषस्योत्पादकः पूर्व्वोक्ताहरहरुपचीयमानज्ञानपूर्व्वककर्म्मानुगृहीतभक्तियोग एव, यथोक्तं भगवता पराशरेण—वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ इति, निखिलजगदुद्धारणायावनितलेऽवतीर्णः परब्रह्मभूतः पुरुषोत्तमः स्वयमेवैतदुक्तवान्—स्वकर्म्मनिरतः सिद्धिं यथा—

अनेनैश्वर्यार्थभक्तियोगो व्यावृत्तः, स्वेतरवैतृष्ण्यावह इति भक्तेः प्रियतमत्वातिशयात् भगवत्प्राप्तावपि नैरपेक्ष्यं भवतीत्यर्थः । उदाहृतश्रुत्यर्थमुपसंहरति तदुक्त एवेति, एवं विधेति, परभक्तिरूपज्ञानविशेषस्येति, परज्ञानात्पूर्व्वभाविनी परभक्तिर्न विवक्षिता परमभक्तिरेवाभिप्रेता, ज्ञानपूर्व्वककर्म्मानुगृहीतो ऽहरहरभ्यस्यमानो भक्तियोगः परभक्तेरुत्पादक इत्यर्थः, अहरहरभ्यस्यमान एव भक्तियोगः परभक्तिदशापन्नः स्यादित्यर्थः । प्रीतिरूपध्यानेन निरतिशयानन्दरूपदिव्यात्मस्वरूपानुसन्धानं निरतिशयप्रियं सिद्ध्यति । तदेव साक्षात्काररूपानुभवाभिनिवेशं जनयति सोऽभिनिवेशः परमभक्तिरिति यावत् । कर्म्मानुगृहीतत्वे प्रमाणमाह यथोक्तमिति, तत्तोषकारक इत्यनेन भगवत्तोषहेतुभूतज्ञानाङ्गत्वं सिद्धम् । भगवद्वचनं दर्शयंस्तस्यातिशयमाह निखिलेति, स्वकर्म्मणा सिद्धिं विन्दतीति चेत्कथं भक्तेरुपायत्वमित्यत्राह यथोदितेति, यथोक्तकर्म्मानुगृहीतक्रमपरिणतभक्त्येकलभ्य इत्यर्थः । पूर्व्वमुपेयस्वरूपनिष्कर्षे स्वोक्तप्रकारस्य शिष्टप-

रिगृहीतव्याख्यानमूलत्वमुक्तम् । इदानीं तदपि विशदयन् उपासनस्वरूपस्य यथोदितप्रकारस्य तन्मूलत्वमाह बोधायनेति, टङ्को—ब्रह्मानन्दी, शिष्टपरिगृहीत—शब्दोऽर्थविशेषणम्, उक्तार्थविरुद्धमुपायोपेयस्वरूपं वर्णयन्तो वादिनस्तर्कानुगृहीतश्रुतिविरोधादेव निरस्ता इत्याह अनेनेति,

**विन्दति तच्छृणु । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥ स्वकर्म्मणा तमभ्यर्च्य सिद्धं विन्दति मानवः ॥ इति, यथोदितक्रमपरिणतभक्त्येकलभ्य एव भगवद्बोधायन—टङ्क—द्रमिड—गुहदेव—कपर्दि—भारुचिप्रभृत्यविगीत—शिष्टपरिगृहीत—पुरातन—वेद—वेदान्तव्याख्यान—सुव्यक्तार्थ—श्रुतिनिकरनिदर्शितोऽयं पन्थाः ॥**

औलूक्यः—कणादः, पतञ्जलिमतं हैरण्यगर्भमतपादादीनां वेदप्रामाण्याभ्युपगमेऽपि वेदविरुद्धार्थानां कुतर्कमूलानाम् अभ्युपगमाद्वेदस्य पौरुषेयत्वाभ्युपगमाच्च तन्मतानुसारिणां बाह्यसाम्याद्बाह्यत्वोक्तिः, वेदावलम्बिनां कुदृष्टीनां निरासो बाह्यानामिव नोपपद्यते वेदावलम्बिनां वेदैकरुचित्वमूलसत्त्वगुणोद्रेकादित्यत्राह वेदावलम्बिनामपीति, उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् । तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥ इति श्लोकेन बाह्या निरस्ताः, अर्वाक्कालिकतयेत्यनेन दोषमूलत्वं सूचितं, निष्फलानि तदर्थानुष्ठानेषु नैष्फल्यम्, अनृतानि तत्त्वस्थितेरनृतत्वम्, एवं पूर्वश्लोके बाह्यानां निरस्तत्वाद् या वेदबाह्या इत्यादिश्लोके कुदृष्टीनां बाह्यसाम्यमेव विवक्षितमित्यभिप्रायः । कुदृष्टीनामपि वेदैकरुचित्वमूलसत्त्वगुणोद्रेकात्तन्निरासानुपपत्तिशङ्कां परिहरन् फलितार्थमाह रज इति, रजस्तमोभ्यामस्पृष्टं, तमोनिष्ठा हि ताः स्मृता इत्यत्र तमःशब्दो रजसोऽप्युपल—

**अनेन चार्वाक—शाक्यौलूक्याक्षपाद—क्षपणक—कपिल—पतञ्जलिमतानुसारिणो वेदबाह्याः वेदावल-**

म्बिकुदृ*ष्टिभिस्सह निरस्ताः, वेदावलम्बिनामपि यथाऽवस्थितवस्तुविपर्यस्तदृशां बाह्यसाम्यं मनुनैवोक्तं—या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ इति, रजस्तमोभ्यामस्पृष्टमुत्तमं सत्त्वमेव येषां स्वाभाविको गुणास्तेषामेव वैदिकी †रुचिः, वेदार्थयाथात्म्यावबोधश्चेत्यर्थः—यथोक्तं मात्स्ये सङ्कीर्णाः—सात्त्विकाश्चैव राजसास्तामसास्तथेति, ।

तथार्थः शुद्धसत्त्वव्यतिरिक्तत्वादित्यभिप्रायेण रजस्तमोभ्यामित्युक्तं, स्वाभाविक इत्यनेन सत्त्वगुणस्य स्थायित्वं विवक्षितम् । अनेन क्वचिदपि तन्मात्रमावि‡कताव्यावृत्तिः तेषामेव वैदिकी रुचिर्वेदार्थयाथात्म्यावबोधश्चेति वेदावलम्बिकुदृष्टीनां वेदैकरुचित्वमूलसत्त्वगुणसद्भावेऽपि तदर्थयाथात्म्यानवबोधहेतुभूतरजस्तमःसम्भवात्ते निरसनीया इत्यर्थः । बाह्यानामपि मन्त्रजपध्यानादिषु दृष्टफलत्वात्तदनुष्ठानस्य न नैष्फल्यमिति शङ्काव्यावृत्त्यर्थं प्रेत्य—पदं, शुद्धसत्त्वव्यतिरिक्तानामप्रामाण्यहेतुत्वमभिप्रेत्य मात्स्यवचनं दर्शयति यथोक्तमिति, सङ्कीर्णा इत्यादिवचने प्रमाणाप्रमाणविभागकथनाभावेऽपि सात्त्विकादिविभागकथनस्य प्रयोजनान्तराभावात्प्रामाण्याप्रामाण्यनिर्णय एव प्रयोजनमित्यभिप्रायः । उदाहृतश्लोकं व्याचष्टे केचिदिति,सङ्कीर्णादिशब्दानां विशेष्या ब्रह्मकल्पाः—यस्मिन् कल्पे त्विव्युक्तेरिति भावः। कल्पानां रजःप्रभृतिगुणप्राचुर्यं तस्मिन्कल्पे ब्रह्मणस्तद्गुणप्राचुर्यात्

---

* कुदृष्टि—पदेन निर्विशेषाद्वैतवादिन उच्यन्ते, ते हि भगवच्छरीरस्वरूपयोश्चिदचितोर्मिथ्यात्वमातिष्ठन्ते, अत एव तु दुर्दर्शमशालितया तथाऽभिहिताः, यथा चिदचितोर्भगवच्छरीरस्वरूपयोर्मिथ्यात्वाख्यानं न युक्तं तथा प्राचीनाचार्यैः सिद्धित्रयश्रीभाष्यादिमहानिबन्धेषु सम्यगुपदर्शितं, तदेवास्माभिस्तत्रतत्र विशदीकृत्य स्वीयग्रन्थेषु दशावतारभाष्यादिषु बहुधा समालोच्य संसाधितमिति तत एव दृष्टव्यं तत् ।

† वेदैकरुचिरिति पा० । ‡ प्रमाणताव्यावृत्तिरिति पा० ।

केचिद्ब्रह्मकल्पाः सङ्कीर्णाः, केचित् सत्त्वप्रायाः केचिद्रजःप्रायाः केचित्तमःप्राया इति कल्पविभागमुक्त्वा सत्त्वरजस्तमोमयानां तत्त्वानां माहात्म्यवर्णनं च तत्तत्कल्पोक्तपुराणेषु सत्त्वादिगुणमयेन ब्रह्मणा क्रियत इति चोक्तं—यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।

यस्मिन्कल्पे इत्यादेरुदाहरिष्यमाणस्यार्थमाह सत्त्वरजस्तमोमयानां तत्त्वानामिति, दैवतानामित्यर्थः । यस्मिन्निति यस्मिन्कल्पे यत्पुराणं ब्रह्मणोक्तं तस्मिन्कल्पे तत्पुराण इत्यध्याहारः, तस्य तस्येति न कल्पपरः शब्दः, न हि ब्रह्मणो दिवसानां माहात्म्यं पुराणेषु वर्ण्यते अग्नेः शिवस्येति देवताविशेषवर्णनपरत्वस्य वक्ष्यमाणत्वाच्च तस्य तस्येति पदं तत्तद्देवताविशेषपरम्, अतः तस्मिन्कल्पे तस्मिन्पुराणे तत्तद्गुणप्राचुर्यस्य तस्य तस्य दैवतस्य माहात्म्यं वर्ण्यत इत्यर्थः । यद्वा कल्पमाहात्म्यप्रतिपादनं नाम तत्तत्कल्पानुगुणदेवता*माहात्म्यप्रतिपादनं यथा पुरवर्णनं नाम पुरस्थगुणवर्णनं, यथा च वनवर्णनं नाम तदाधारवृक्षादिवर्णनं किं दैवतं किंगुणकमित्यत्राह विशेषतश्चेति, जगत्स्रष्टुरीश्वरस्य ब्रह्मणो गुणव‡श्यत्वं न सम्भवति गुणविभागकथनस्य न किं प्रयोजनं सङ्कीर्णाः सात्त्विकाश्चैवेत्यादिवचनं किंगुणकेन ब्रह्मणा प्रोक्तं भूयसां बलीयस्त्वन्यायादिदं वचनं बहुभिः पुराणैर्बाध्यमिति शङ्कायामाह—

तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते॥ इति, विशेषतश्चोक्तम्—अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सात्त्विकेषु† च कल्पेषु माहात्म्यमधिकं हरेः ।

* तत्तत्कालानुगुणदेवतेति पा० ।
† सात्त्विकेष्वथेति पा० ।
‡ गुणवत्त्वमिति पा० ।

तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम् ॥ सङ्कीर्णेषु सरस्वत्याः पितॄणाम् इत्यादि, एतदुक्तं भवति आदिक्षेत्रज्ञत्वाद् ब्रह्मणस्तस्यापि केषुचिदहस्सु सत्त्वमुद्रिक्तं केषुचिद्रजः, केषुचित्तमः, यथोक्तं भगवता—न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वम्प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ इति, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा इति श्रुतेः, ब्रह्मणोऽपि सृज्यत्वेन शास्त्रवश्यत्वेन च क्षेत्रज्ञत्वं गम्यते ।

एतदुक्तं भवतीति, ब्रह्मणः क्षेत्रज्ञत्वं कथमित्यत्राह यो ब्रह्माणमिति, सृज्यत्वेन *शास्त्रवश्यत्वश्रवणादपहतपाप्मत्वादिश्रवणरूपापवादरहितजन्मवत्त्वेनेति भावः । शास्त्रवश्यत्वेन शास्त्रप्रदानं हि तत्सापेक्षस्येति भावः । ततः किमित्यत्राह सत्त्वेति, भूयसां बलीयस्त्वनयं परिहरति तेषामिति, नैतद्वचनविरोधात्तेषां बाधः किन्तु परस्परविरोधात् कृत्स्नपुराणानामर्थनिश्चायकत्वशक्तिविरहे सति तानि किं कार्त्स्न्येन त्याज्यानि? उत कानिचित्स्वीकार्याणीत्यपेक्षायां सत्त्वादिमूलत्वलक्षणवैषम्यपरमिदं वचनमतो न भूयसां बलीयस्तयाऽस्य बाध इत्यर्थः । प्रयोजनमाह पुराणेति, किंगुणकेनोक्तमित्यत्राह सत्त्वनिष्ठेनेति, स्वतःप्रमाणत्वादपवादकवचनान्तरादर्शनात् योह खलु वाऽस्येत्यादिमैत्रायणीयश्रुत्या तत्तद्गुणकत्वेनाभिमतस्य तत्तद्देवताविशेषस्य प्रतिपादकानां प्रबन्धानां तत्तद्गुणमूलत्वस्योचितत्वरूपेण वस्तुसामर्थ्येन स्वतःसिद्धस्य प्रामाण्यस्य स्थिरीकरणाच्च प्रामाण्यहेतुभूतरजस्तमोऽभिभवननिरासकसत्त्वमूलत्वं सिद्धमिति भावः ॥

सत्त्वप्रायेष्वहस्सु तदितरेषु यानि पुराणानि ब्र-

* ऐच्छत्वश्रवणादिति पा० ।

ह्मणा प्रोक्तानि तेषां परस्परविरोधे सति सात्त्विकाद्दःप्रोक्तमेव पुराणं यथार्थं, तद्विरोध्यन्यदयथार्थमिति पुराणनिर्णयायैवेदं सत्त्वनिष्ठेन ब्रह्मणाऽभिहितमिति विज्ञायत इति। सत्त्वादीनां कार्यं च भगवतैवोक्तं—सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च। प्रमादमोहौ तमसो भवतो ऽज्ञानमेव च॥ प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये। बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी॥ यया धर्म्ममधर्म्मं च कार्यं चाकार्यमेव च।

सात्त्विकादिविभागोऽस्तु तत्र कस्य प्रामाण्यं कस्याप्रामाण्यमित्यत्राह सत्त्वादीनामिति, पुराणानां ब्रह्मप्रोक्तत्वे कथं पराशरादिप्रोक्तत्वं सङ्घटत इत्यत्राह सर्वानिति, पौरुषेयेषु हि विरोधे तु वक्तुर्गुणानुगुणप्रामाण्याप्रामाण्यविभाग उपपद्यते। अपौरुषेयश्रुतिवाक्येषु गुणानुगुणप्रामाण्याप्रामाण्यविभागेन निर्वाहो नोपपद्यत इति शङ्कते अपौरुषेयेष्विति, परिहरति तात्पर्येति, अभेदश्रुत्यादीनां पूर्व्वापरपर्यालोचनादिना निर्वाहस्योक्तत्वात्तेनैव प्रकारेणात्राप्यविरोधनिर्वाह इत्यभिप्रायेण पूर्व्वमेवोक्त इत्युक्तम्, एक एव रुद्र इत्यादिवाक्यस्य पूर्व्वापरपर्यालोचनया क्रतोरेकदेवताकत्वपरं तद्वाक्यमिति निश्चीयते, हरिकेशायेति पदं पदाध्ययनपारम्पर्यादेव व्याख्यातं, सोमः

अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी। अधर्म्मं धर्म्ममिति या मन्यते तमसाऽऽवृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ? तामसी॥ इति, सर्वान् पुराणार्थान् ब्रह्मणः सकाशादधिगम्यैव सर्वाणि पुराणानि पुराणकाराश्चक्रुः, यथोक्तं—कथयामि यथा पूर्व्वं

दक्षाद्यैर्मुनिसत्तमैः। पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः॥ इति अपौरुषेयेषु वेदवाक्येषु परस्परविरुद्धेषु कथमिति चेत् तात्पर्यनिश्चयादविरोधः पूर्व्वमेवोक्तः। यदपि चेदं विरुद्धवद् दृश्यते प्राणं मनसि सह करणैर्नादान्ते परमात्मनि सम्प्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायीतैवं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते न कारणं, कारणं तु ध्येयः सर्वैश्वर्य्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः, यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।

पवत इत्यादावृग्वेदमन्त्रे सोम-शब्दोऽपि सोमलतापरः योगाद्रूढेर्बलीयस्त्वात्समासविभागाभावेन पदक्रमाध्ययनात्सोमलताविषयस्य मन्त्रस्य विनियोगाच्च सोम-शब्दस्यो-मा-सहितवाचित्वाभावात्। किञ्च सोम-शब्दस्य देवतापरत्वेऽपि रूढ्याऽवगतश्चन्द्र एव स्वरसतः प्रतीयते न योगावसेयो रुद्रः, अतो न किञ्चिदेतत्। अस्मिन्मन्त्रे जनितेति पदं च प्रीतिजनकार्थम्। एवमन्यदपि प्रकरणपर्य्यालोचनादिभिः परिहर्त्तव्यमित्यभिप्रायः। एवं वेदपूर्व्वभागवचसां विरोधे निर्वाहोऽस्तु उपनिषद्भागेष्वन्यपरत्वाद्यभावात् तत्र कथं निर्वाह इत्यत्राह यदपीति, आदि-शब्देनाथर्वशिरोवाक्यानि चतुर्मुखकारणत्वपराणि हिरण्यगर्भः समवर्त्तताग्रे धाता यथापूर्व्वमकल्पयत् प्रजापतिः प्रजा असृजतेत्यादीनि च वाक्यानि विवक्षितानि। ततः किमित्यत्राह नारायण इति, परिहरति अत्यल्पमित्यादिना-

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति, सर्वानन-

शिरोग्रीवः सर्वभूतगुहाशयः सर्वव्यापी च भगवाँस्तस्मात्सर्वगतः शिवः । यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणीत्यादि, नारायणः परं ब्रह्मेति च पूर्वमेव प्रतिपादितं, तेनास्य कथमविरोधः ।

तत्र प्रथमं स्वपक्षं प्रतिजानीते वेदविदित्यादि श्लोकेन वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिता इति स्मृतीतिहासपुराणमीमांसान्यायोपबृंहिता इत्यर्थः । तत्र स्वपक्षस्य प्रतिज्ञातस्य प्रमाणमुपन्यसिष्यन्प्रथमं कारणवाक्यान्युदाहरिष्यन्सूत्रपुरःसरं लक्षणवाक्यमाह जन्मादीति, जगत्कारणं वस्तु ब्रह्मास्तु तच्च जगत्कारणं किमित्यपेक्षायामाह तच्चेति, जगत्सृष्टिप्रलयप्रकरणेष्वेवेति न तूपासनादिविधिपरेषु शम्भुराकाशमध्ये ध्येय इत्यादिष्वित्यर्थः । तत्र हि कारणत्वानुवादेन ध्येयताविधिपरत्वं जगत्सृष्टिप्रलयप्रकरणेषु सद्ब्रह्मेत्यादिबहुभिः शब्दैः कारणत्वप्रतिपादनान्नारायणस्यैव कारणत्वसिद्धिरित्यत्राह सदेवेति, गतिसामान्यन्यायात्सर्वेषां कारणवाक्यानामैककण्ठ्यमभिप्रेत्य उदाहृतवाक्यैकार्थ्ये वाक्यान्तरं दर्शयति अयमेवेति, कारणवाक्यजातैकार्थ्यंसिद्धम् ।

अत्यल्पमेतत्—वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिताः । वेदाः साङ्गा हरिं प्राहुर्जगज्जन्मादिकारणम् । जन्माद्यस्य यतः, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति जगज्जन्मादिकारणं ब्रह्मेत्यवगम्यते । तच्च जगत्सृष्टिप्रलयप्रकरणेष्वेवावगन्तव्यं, सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयमिति जग-

दुपादानता–जगन्निमित्तता–जगदन्तर्यामितादिमुखेन परमकारणं सच्छब्दे*नाभिहितं ब्रह्मेत्यवगतम्। अयमेवार्थः ब्रह्म वा इदमेकमेवाग्र आसीदिति शाखान्तरे ब्रह्म–शब्देन प्रतिपादितः, अनेन सच्छब्देनाभिहितं ब्रह्मेत्यवगतम् अयमेवार्थः–

सच्छब्दस्य ब्रह्म–शब्दार्थे पर्यवसानमाह अनेनेति, वाक्यान्तरमुक्तवाक्यैकार्थमाह अयमेवेति, अयमेवार्थः प्रतिपादित इत्यर्थः। सद्ब्रह्मशब्दयोरात्मपर्यवसानमाह तथेति, आत्म–शब्दस्य सद्ब्रह्म–शब्दापेक्षया विशेषशब्दत्वेऽपि नारायण–शब्दापेक्षया सामान्यशब्दत्वात् तत्र पर्यवसानमाह तथा चेति, शिवस्य कारणत्वत्रादिनाऽप्यर्पितकसामान्यविशेषभावोऽभ्युपेत्यः, अन्यथा बहुकारणत्वप्रसङ्गात्, तत्र शिवादिशब्दानामपि नारायणशब्दापेक्षया सामान्यशब्दत्वात् नारायणे पर्यवसानमिति भावः। यथा पशुना यजेतेत्यत्र पशुसामान्यवाचिपशुशब्दः छागस्य वपाया मेदस इति मन्त्रस्थच्छाग–शब्दोक्तविशेषे पर्यस्यति, एवं सच्छब्दो वृहद्वृहच्छब्दसाधारणत्वाद्ब्रह्मशब्दोक्तविशेषे पर्यवस्यति चेतनाचेतनसाधारणो ब्रह्म–शब्दश्चेतनैकान्तात्म–शब्दोक्तविशेषे पर्यवस्यति।

तथा शाखान्तरे आत्मा वा इदमेकमेवाग्र आसीत् नान्यत्किञ्चन मिषदिति तथा सद्ब्रह्म–शब्दाभ्यामात्मैवाभिहित इत्यवगम्यते तथा च शाखान्तरे एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणीत्यादिना सद्ब्रह्मात्मादिपरमका†रणवादिभिः शब्दैर्नारायण एवाभिहित इति निश्चीयते, यमन्तः समुद्रे कवयो वयन्ति इत्यादिना

* प्रतिपादितमिति। † परमकारणवाचिभिरिति पा०।

एनमूर्द्धं न तिर्यञ्चं न मध्ये परिजग्रभवत् । न तस्येशे कश्चन तस्य नाम महद्यशः, न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति, इति

तथाऽऽत्म-शब्दश्च सर्वचेतनसाधारणो नारायण एव विशेषे पर्यवस्यतीति नारायण एव सद्ब्रह्मात्मशब्दैरभिधीयत इत्यर्थः । ननु एको ह वै नारायण आसीदित्यत्र अनुवादसूचक-ह वै-शब्दश्रवणात्सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति वाक्यवदिदमपि वाक्यमनुवादपरमिति वाक्यान्तरसापेक्षं तच्च तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणमिति विधित्वसूचकैवकारवता न सच्च त्यासदित्यादिवाक्येनोक्तः शिव एवानूद्यत इति । अत्रोच्यते अप्राप्ते हि शास्त्रमर्थवदिति न्यायेन स्वतःप्राप्तस्य विधित्वस्य ह-वै-शब्दो न भञ्जकः, यथा यदाग्नेयोऽष्टाकपाल इत्यत्र यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यनुवादसूचकयच्छब्दसद्भावेऽपि वचनानि त्वपूर्व्वत्वादिति सूत्रेण विधित्वं स्थापितं प्रमाणान्तराप्राप्तत्वात् तथा उपरि हि देवेभ्यो धारयतीत्यत्र हि-शब्दसद्भावेऽपि विधिस्तु धारणे ऽपूर्व्वत्वादिति सूत्रेण विधित्वं स्थापितं प्रमाणान्तराप्राप्तत्वात्, तस्माच्च स्वतःप्राप्तविधित्वभञ्जको ह-वै-शब्दः । अपि तु प्रमाणान्तरेण विधित्वे भग्ने प्रयुक्त-शब्दस्य गतिप्रदर्शकः आकाशकारणत्ववाक्ये त्वयोग्यत्वादिना विधित्वभङ्गाद्ध-वै-शब्दोऽनुवादरूपताज्ञापकः, अत्र तु प्रमाणान्तराप्राप्तत्वाद्विधित्वभञ्जकाभावाच्च ह-वै-शब्दो न स्वतःप्राप्तविधित्वभञ्जकः, शिव एवेत्यनेन विधित्वं भग्नमिति चेन्न शिवास्ते सन्तु पन्थानः शिवं कर्म्मास्तु शिवः शिवानामशिवोऽशिवानाम्, यो वः शिवतमो रस इत्यादिष्वर्थान्तरपरत्वदर्शनेन शिव-शब्दस्य साधारणत्वात् साधारणोऽपि विधित्वभञ्जक इति चेत्सदेवेत्यादिशब्दात् शिव एवेत्यस्यानुवादरूपत्वमस्तु तस्मात्साधारणः शिव-शब्दोऽपि नारायणपर्यवसायीति । एको हवै-वाक्यस्य अनुवाद-

रूपत्वमस्तु तथाऽपि विष्णुस्तदासीद्धरिरेव निष्कल इत्यादिस्वसमानार्थवाक्यश्रवणात्तदनुवादित्वमेवेति न विरुद्धार्थपरवाक्यानुवादित्वम् । किञ्च शिवस्य कारणत्वमनुवदतीति चेत् न ब्रह्मा नेशान इत्यनन्तरवाक्यव्याहतिः त्र्यक्षशूलपाणिः पुरुषोऽजायत इत्युत्तरवाक्यव्याहतिश्च, तस्मान्नारायणस्यैव परमकारणत्वप्रतिपादकमिदं वाक्यमित्यभिप्रायः । अत्र शिव–शब्दः साधारण एव अत्यचः तस्मात्साधारणः शिव–शब्दोऽपि नारायणपर्यवसायीति अत्रैको ह वा इत्यादिवाक्यं नारायणकारणत्वविधायकमेवेति विष्णुस्तदासीद्धरिरेव निष्कल इत्यादीनि कारणवाक्यान्यप्यनुसंधेयानि । अथोक्तार्थं प्रमाणान्तरं च वक्ष्यन्वर्णाद्धिरण्यगर्भस्य कारणत्वशङ्कां च निराकरोति यमन्तरित्यादिना, अत्र समुद्रशायित्वलिङ्गेन अस्य प्रकरणस्य नारायणपरत्वनिश्चयार्थं यमन्तःसमुद्रे इति वाक्यमुपात्तम्, आदि–शब्देन विद्युतः पुरुषादधीत्युक्तं विद्युद्वर्णपुरुषत्वं च विवक्षितं वेदाहमेतं

**सर्वस्मात् परत्वमस्य प्रतिपाद्य न तस्येशे कश्चनेति तस्मात्परं किमपि न विद्यते ।**

महान्तमादित्यवर्णं तमसस्तु पार इति श्रुतेर्विद्युद्वर्णपुरुषत्वं हि परमपुरुषलिङ्गं जगत्कारणत्व*सर्वेश्वरत्वमोक्षप्रदत्वरूपपरत्वदर्शनार्थं नैनमूर्ध्वमित्यादिवाक्यमुदाहृतम्, अद्भ्यः सम्भूत इत्युत्तरनारायणैकवाक्यत्वाच्च नारायणपरत्वमाह अद्भ्य इति, अद्भ्यः सम्भूत इत्यनुवाकस्य कथं नारायणपरत्वमित्यत्राह तच्चेति, वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति वाक्येन महापुरुषप्रकरणस्यावगमाल्लक्ष्मीपतित्वलिङ्गाच्च अद्भ्यः संभूत इत्यनुवाकस्य नारायणपरत्वमित्यर्थः । सहस्रशीर्षा पुरुष इत्यनुवाकस्य कथं नारायणपरत्वं पुरुष–शब्दोऽप्यन्यवाची स्यादिति चेत् उच्यते सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते नारायणाभ्यामुपस्थानम् उत्तरनारायणेनादित्यमुपतिष्ठते इत्यादिकल्पसूत्रकारनिर्देशान्नारायणपरत्वं सिद्धम् । अथर्ववेदोक्तेष्वष्टाक्षरमहाशान्तिक-

* जगत्कारणत्वानन्येश्वरत्वेति पा० ।

र्मसु वैष्णव्यां महाशान्त्यां श्रीपुरुषसूक्तं विनियुक्तं वैष्णव्यां पुरुषसूक्तमिति आद्यया ऽऽवाहयेद्देवमृचा तु पुरुषोत्तममित्यादिना शौनकादिभिर्भगवत्समाराधने च विनियुज्यते, स्मृतिवचनं च पुरुषस्य हरेः सूक्तमिति सुबालोपनिषदि च चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायण इत्यादिना

इति च प्रतिषिध्य अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टाविति तेनैकवाक्यतां गमयति, तच्च महापुरुषप्रकरणं ह्रीश्च ते लक्ष्मीश्च पत्न्याविति च नारायण*स्यैवेति द्योतयति, अयमर्थो नारायणानुवाके प्रपञ्चितः

नारायणात्मकत्वं सर्वस्योक्त्वा पुरुष एवेदं सर्वमिति पुरुषात्मत्वेकनोपसंहृतं सहस्रशीर्षं देवं, विश्वमेवेदं पुरुष इति नारायणानुवाकस्यसहस्रशीर्षपुरुषशब्दाभ्यां सहस्रशीर्षा पुरुष इति प्रत्याभिज्ञापिताभ्यां च तयोर्नारायणपरत्वं गम्यते, महादेवं महापुरुषं वाचयेदिति प्रयोगाच्च वेदाहमेतं पुरुषं महान्तमिति पुरुष - शब्दस्य साधारण्यशङ्का दूरोत्सारिता । एवं पुरुष--शब्दस्य नारायणपरत्वं निश्चीयते अम्भस्यपार इत्याद्यनुवाक एवोक्ताभ्यां समुद्रशायित्व--विद्युद्वर्णपुरुषत्वलिङ्गाभ्यां महापुरुषप्रकरणत्वलक्ष्मीपतित्वलिङ्गान्वितोत्तरनारायणेनैकवाक्यत्वाच्चेदं प्रकरणं नारायणपरम्, एतदेकवाक्यत्वाद्धिरण्यगर्भः समवर्तताग्र इत्यादिकमपि नारायणपरमित्यर्थः । एवं नारायणस्यैव परमकारणत्वे श्रीपुरुषसूक्तादिकं प्रमाणतयोक्तं, चतुर्मुखकारणत्वं च अर्थादिरस्तं हिरण्यगर्भ इत्यादीनामृचां भगवत्समाराधने हविर्निवेदने विनियोगाच्च हिरण्यगर्भो भूगर्भ इति भगवति प्रयोगाच्च हिरण्यगर्भशब्दस्य नारायणपरत्वं सिद्ध्यति । अथ नारायणानुवाकमपि प्रमाणत्वेनाह अयमर्थ इति, प्रपञ्चित इति, न केवलं समुद्रशायित्वादिना लभ्यते अपि तु कण्ठोक्त इत्यभिप्रायः । नारायणानुवाकः कः तत्रार्थस्य प्रपञ्चितत्वं कथ-

* नारायण एवेति पा० ।

मित्यत्राह सहस्रेति, प्रपञ्चितत्वमुपपादयति सर्वेति, इदं तावत्सर्वविद्योपास्यविशेषनिर्णयपरं दहरविद्याप्रकरणत्वादेव तच्छेषभूतमिति चेन्न प्रकरणादपि बलीयसा वाक्यप्रमाणेन सर्वविद्याशेषत्वावगमात्प्रकरणान्तराधीतविद्यानां प्रकरणान्तरस्थमिदं कथमुपास्यविशेषसमर्पकमिति चेदुच्यते यथा प्रकरणान्तरस्थेन जुह्वा जुहोतीति वाक्येन होमसाधनतया विहितामपि जुहूं प्रकरणान्तरस्थमपि यस्य पर्णमयी जुहूरिति वाक्यं जुहू-शब्दप्रत्यभिज्ञापितामनूद्य तस्याः पर्णमयत्वं विदधाति जुह्वा द्रव्यविशेषस्याकाङ्क्षितत्वाद्योग्यत्वाच्च, एवं तत्तद्विद्यासूपास्यत्वेन विहितं वस्तु किमित्यपेक्षायां तत्तच्छब्दप्रत्यभिज्ञापितं तत्तदनूद्य तस्य नारायणत्वं विधीयत इत्युपपन्नमित्येतदभिप्रायेण सर्वशाखासु इत्युक्तं, तत्तद्गुणयोगेन तत्तच्छब्दानां नारायणवाचित्वमित्याह तत्तदिति, विश्वमेवेदं पुरुष इति सामानाधिकरण्यस्यार्थमाह समस्तस्येति, तदायत्तत्व-तन्नियाम्यत्व-तच्छेषत्व-तद्व्याप्यत्वैस्तादात्म्यमित्यर्थः । तदिदमत्रैव स्पष्टं व्याप्य नारायणः स्थितः, पतिं विश्वस्य तद्विश्वमुपजीवति । पतित्वं शेषित्वं विश्वोपजीव्यत्वं धारकत्वेन नियमनं चार्थसिद्धम् । एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिना नियमनेन धारकत्वश्रवणात्तस्मादुक्त एव सामानाधिकरण्यस्यार्थः नारायणपरं ब्रह्मेत्यत्र नारायणात्परमिति केचिदवैदिका विदुः तदयुक्तं महोपनिषदि नारायणः परं ब्रह्मेति पदविच्छेदेनाधीत्वात्, तत्त्वं नारायणः पर इत्यादिप्रकरणविरोधाच्च सुपां सुलुगित्यादिना लुप्तविभक्तिकमिदं पदं समस्तत्वेऽपि निषादस्थपतिन्यायेन प्रथमाविभक्त्यर्थत्वमेव न्याय्यम् । लैङ्गे च-अहमेव परं ब्रह्म परन्तत्त्वं पितामहः । अहमेव परं ज्योतिः परमात्मा त्वहं विभुः ॥ इति भगवद्वचनाच्च प्रथमार्थः । स ब्रह्मा स शिव इति सामानाधिकरण्यस्यार्थमाह ब्रह्मेति, इन्द्रादीत्यादि-शब्देन परमस्स्वराडिति मुक्तसामानाधिकरण्यं विश्वमेवेदं पुरुष इति विश्वजगत्सामानाधिकरण्यं च विवक्षितम् । इन्द्रसामानाधिकरण्यमुक्तसामानाधिकरण्यं विश्वजगत्सामानाधिकरण्यं च हि विभूतित्वकृतं, तद्वदेव ब्रह्मशिवसामानाधिकरण्यं चेत्यर्थः परमस्स्वराडिति

मुक्तात्मोच्यते तत्र परम–शब्देन कैवल्यमोक्षव्यावृत्तिः। यद्वा जीवस्यावस्थासु सर्वास्वतः परं निरतिशयावस्थान्तरं नास्तीति परम–शब्दार्थः ननु एतदनुवाक्यजातं शम्भुशिवादिशब्दानुगुण्येन नेयं न त्वितरानुगुण्येन तेषां नेयत्वमिति शङ्कायां वैषम्यमाह केवलेति, अत्रानुवाके कस्यचिदर्थान्तरस्य विधानादर्शनादिदमनन्यपरमुपास्यविशेषैकनिर्णयपरमित्यर्थः। अन्यानि त्वन्यपराणीत्याह अस्मिंश्चिति, यथा यस्य पर्णमयी जुहूरिति वाक्ये पर्णमयत्वेनोक्तस्य जुह्वा जुहोतीति होमसाधनत्वविधिस्तथाऽत्र सर्वस्मात्परत्वेनोक्तस्य नारायणस्य ब्रह्म विदाप्नोतीत्यादिषु मुमुक्षूपास्यत्वविधिरित्यर्थः। दहरं विपाप्ममित्यादिना पूर्वानुवाकोक्तस्यार्थस्य पद्मकोशप्रतीकाशमित्यत्र प्रतिपादितत्वाद्दहरोपासनपरमिति चेद् दहरविद्यायाः प्रकृताया उपास्यविशेषाकाङ्क्षायां न केवलमस्यामेवोपास्यो नारायणः अपि तु सर्वासु विद्यासु स एवोपास्य इति दहरविद्याप्रसङ्गेन सर्वविद्योपास्यविशेषनिर्णय एवात्र क्रियत इति वाक्यप्रमाणावगतत्वात्सर्वविद्याशेषभूतम् ।

सहस्रशीर्षं देवमित्यारभ्य स ब्रह्मा स शिवस्सेन्द्रः सोऽक्षरः परमः स्वराडिति सर्वशाखासु परतत्त्वप्रतिपादनपरानक्षर–शिव–शम्भु–परब्रह्म–परज्योतिः–परतत्त्व–परायण–परमात्मादि–सर्वशब्दान् तत्तद्गुणयोगेन नारायण एव प्रयुज्य तद्व्यतिरिक्तस्य समस्तस्य तदायत्ततां तद्व्याप्यतां तदाधारतां तन्नियाम्यतां तच्छेषतां तदात्मकतां च प्रतिपाद्य ब्रह्मशिवयोरपीन्द्रादिसमानाकारतया तद्विभूतित्वं च प्रतिपादितम् । इदं च वाक्यं केवलपरतत्त्वप्रतिपादनैकपरम् अन्यत् किञ्चिदप्यत्र न विधीयते ।

तत्र दहरविद्याया अप्युपास्योऽनेन निर्णीतो भवतीति, तत्र पूर्वप्रस्तुते दहरं विपाप्ममित्यादौ वक्तव्यांशसद्भावात्तदत्रोक्तमिति नात्रोपा-

यतो ब्रह्मैव सान्ततसुषुप्तिस्थानम् अतोऽस्माद्ब्रह्मण एषां जीवानां प्रबोधः श्रूयमाण उपपद्यते, "सत आ[1]गत्य न विदुः सत आगच्छामहे" इत्यादिषु । तदभावाधिकरणं समाप्तम् ॥

टी० "सम्भवति चे"ति, सुषुप्तो नाड्या हृदयाद्विनिःक्रम्य पुरीतति शयनं प्रत्यवसृप्येति श्रुतेः । सू० अतः प्रबोधोऽस्मात् ॥ ८ ॥ अतोऽस्मादिति पदद्वयं व्याख्येयं नाड्यादीनामेकार्थत्वाद् व्रीहियवादिनामिव विकल्प इति पूर्वपक्षयुक्तिं परे वदन्ति परस्परयैकप्रयोजनत्वे समुच्चयः स्यादिति निरपेक्षत्वप्रतीतिरेव विवक्षितेति तैरपि वक्तव्यं, तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यति । अथास्मिन् प्राण एवैकधा भवति ताभिः प्रत्यवसृप्य पुरीतति शेत" इति नाड्यादिसमुच्चयश्च श्रुत्या प्रदर्श्यत इति सिद्धान्तयुक्तिवक्ता, तत्र नाडीनां प्रत्यवसर्पणमार्गत्वामात्रं प्रतिपन्नमिति तासां सुषुप्तिस्थानत्वे समुच्चयाप्रतीतेस्तदनादरः, नाडीपुरीततोर्जीवाधारत्वव्यपदेशस्तदुपाध्याधारतया, ब्रह्माधारत्वं नाम ब्रह्मात्मकत्वमेवेति चायुक्तं सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रितत्वाद्व्यधिकरणश्रुतीनामस्वारस्याच्च । ननु यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इति पुरीतति शेत इति च श्रुत्योः कथमविरोधः अत्राकाशे परमात्मनीति परे तथाऽपि हृदय इति वचः पुरीतच्छयने न विरुद्धम्, अतः आकाशशब्दवाच्यपुरीतदाख्यधर्मैक्यादविरोध इति वाच्यं हृदयवेष्टनमांसं पुरीतच्च हृदयाधारः, अतो न विरोध इत्यन्ये तच्चायुक्तं हृदयान्नाडीभिः प्रत्यवसृप्य पुरीतति शयनस्य हृदि शयनस्य च विरोधात् । अन्ये तु स्वप्ने सान्तर्यामिकः परमात्मानमुपैतीति वदन्ति तच्चायुक्तम् अन्तर्यामिण ईश्वराद्व्यतिरिक्तस्य परमात्मनोऽप्रामाणिकत्वात्प्राज्ञेनात्मना संपरिष्वक्त इति श्रुतिविरोधाच्च अन्यत्सर्वं तुल्यम् ॥ तदभावाधिकरणं समाप्तम् ॥

१ आगम्येति पा० ।

कर्मानुस्मृतिशब्दविध्यधिकरणम् ।

**सू० स एव तु कर्म्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥**

किं सुषुप्त एव प्रबोधसमये उत्तिष्ठ? त्युतान्य? इति संशये अस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियादिसम्बन्धाभावादन्य इति प्राप्त उच्यते "स एव त्वि"ति, तु-शब्दः पक्षं व्यावर्त्तयति, स एवोत्तिष्ठति, कुतः, कर्मानुस्मृतिशब्दविधिभ्यः, कर्म्म तावत्सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक् तेनैव भोक्तव्यम्, अनुस्मृतिरपि य एवाहं सुप्तः स एव प्रतिबुद्धोऽस्मीति, शब्दोऽपि सुषुप्तप्रबुद्धस्य एवेति दर्शयति "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ती"ति, विधयश्च मोक्षार्थाः सुषुप्तस्य मुक्तत्वे ऽनर्थकाः स्युः, न चासौ सर्वोपाधिविनिर्मुक्त आविर्भूतस्वरूपः तद्यत्रैतत्सुषुप्त इति सुषुप्तं प्रकृत्य नाह "खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी"ति वचनात् ॥

टी० सू० स एव तु कर्मानुस्मृतिशब्दविधिभ्यः, सङ्गतिः स्फुटा, किंसुषुप्तादन्यः प्रबोधसमय उत्तिष्ठति उत स एवेति? किं सुषुप्तो सकलोपाधिविनिर्मोकोऽस्ति? उत ने? ति किं कर्मानुस्मृतिशब्दविधयः सकलोपाधिनिर्मोकाभावमवगमयन्ति ने? ति न गमयन्ति चेत्सकलोपाध्यभावाद्ब्रह्मणि

सम्पन्न इत्यन्य उत्तिष्ठन्ति गम्यन्ति चेत्सर्वोपाधिनिर्मुक्तब्रह्मसम्पत्त्यभावात्स एवोत्तिष्ठतीति स्यात्, सकलोपाधिनिर्मुक्तस्येत्यत्र "न कञ्चन पाप्मानं स्पृशती"ति श्रुतिरभिप्रेता, सता सोम्य तदा सम्पन्नो भवतीति वाक्यमभिप्रेत्य "ब्रह्मणि सम्पन्नस्येत्युक्तं "यद्यद्भवन्ति तथा भवन्ती"ति, पूर्वं ये यथा भवन्ती ते तथा भवन्तीत्यर्थः, न चासाविति अत्र विनाशमेवापीतो भवतीति वाक्ये ज्ञानसङ्कोचो विवक्षितः, । एतद्वचनात्सुषुप्तस्य सर्वोपाधिविनिर्मोक्षाभावः कथमित्यत्राह–

सू० मुक्तस्य परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत् क्रीडन् रममाणः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश" इति सर्वज्ञत्वाति श्रूयते, अतः सुषुप्तः संसरन्नेवापास्तसर्वकरणो ज्ञानभोगाद्यशक्तो विश्रा[१]मस्थानं परमात्मानमुपसम्पद्याश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ कर्मानुस्मृतिशब्दविध्यधिकरणं समाप्तम् ॥

टी० "मुक्तस्ये"ति, सुषुप्तौ सर्वप्रवृत्तिशून्यत्वज्ञानसङ्कोचावभिहितौ मुक्तस्य तु तदुभयं विपरीतमित्यर्थः । न कंचन पाप्मानं स्पृशतीति श्रुतेः कोऽर्थ इत्यत्राह "अत"इति, ज्ञानभोगाद्यशक्त इत्यादि–शब्देनानुष्ठानमुक्तं, न कञ्चन पाप्मानं स्पृशतीत्यत्रानुष्ठानाशक्तिर्विवक्षिता. सुखदुःखानुभवादिकालुष्यराहित्यं विश्रान्त्यर्थं परमात्मनि सम्पत्तिः, कर्मानुष्ठानवैधुर्यं चाभिहितं न तु सर्वोपाधिमोक्षपूर्वकब्रह्मप्राप्तिरित्यर्थः । सति सम्पत्तिर्नाम शरीरेन्द्रियाधिष्ठातृत्वादिव्यापारान्तरराहित्येन ब्रह्मणि स्थितिमात्रं विवक्षितं सदा सति सम्पन्नत्वादात्मस्वरूपस्य, पूर्वेद्युः प्रक्रान्तस्य कर्मणोऽपरिसमाप्तस्य अपरेद्युरनुष्ठानात् स एवेति कर्मशब्दं परे सर्वे व्याचक्षते, तदयुक्तम् अन्येनोपक्रान्तस्य रथनिर्माणदेवताप्रतिष्ठापनादेरन्यैः

१ विश्रम इति पु॰ ।

समापनदर्शनात्, मयेदं प्रक्रान्तमिति प्रत्यभिज्ञापूर्वकसमापनं विवक्षितं चे-दस्यानुस्मृतेः को भेदः अर्थान्तरप्रत्यभिज्ञाधारत्वं स्वविषयप्रत्यभिज्ञानं चेति वैधर्म्यमिति चेत् न. अनुस्मृतिशब्देनैवोभयविधप्रतिसन्धानस्य वक्तुं शक्यत्वात्, न च गोबलीवर्दन्यायेन सङ्कोचः, अर्थान्तरसम्भवेनान्यथासिद्धत्वात्, अनन्यथासिद्धं हि सङ्कोचकम् । ननु कर्मविधयो विद्याविधयश्च विधि-शब्देन वक्तुं शक्याः अतस्तत्सङ्कोचे तत्रापि त्वदुक्तदोष इति चेन्न कर्मशब्दस्य तत्फलभोगतत्त्वज्ञानाभ्यां विना कर्मक्षये विनाशस्य निर्हेतुकत्वप्रसङ्गाभिप्रायत्वात्तस्य च विधि-शब्देनाधातुमशक्यत्वात्, एवं सति कर्मविधिवैयर्थ्यमप्यार्थो हेतुः स्यात्, अतो विधि-शब्दः पारिशेष्याद्विद्याविधिविषय इति युक्तम्, एवं निरूपणं मरणेऽपि तुल्यमित्यन्ये वदन्ति तदयुक्तं शङ्काहेत्वभावात्, यत्र त्वस्य सर्वमात्मैवाभूदित्यादिवाक्यस्य ब्रह्मानुभवविषयत्वाच्च तेन शङ्का अनुस्मृतेः सिद्धान्तहेतुतया सूचितत्वात् भूमृतजातानां प्रत्यभिसन्धानाभावाच्च मरणविषयत्वानुपपत्तेः ॥ कर्मानुस्मृतिशब्दविध्यधिकरणं समाप्तम् ॥

मुग्धाधिकरणम् ।

सू० मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

भा० मुग्धमधिकृत्य चिन्त्यते किमयं मूर्च्छा सुषुप्त्यादिष्वन्यतमाऽवस्था? उतावस्थान्तर? मिति विशये सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छाप्रसिद्ध्युपपत्तेरवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्थेति प्राप्त उच्यते मुग्धेऽर्द्धसम्पत्तिरिति, मुग्धे पुरुषे या तस्यावस्था सा मरणायार्द्धसम्पत्तिः कुतः परिशेषात्, न तावत्स्वप्नजागरौ ज्ञानाभावात् निमित्तवैरूप्यादाकारवैरूप्याच्च, न सुषुप्तिमरणे, निमित्तं हि मूर्च्छाया अभिघातादिः, पारिशेष्येण

मरणायार्द्धसम्पत्तिर्मूर्च्छा मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः सूक्ष्मप्राणदेहसम्बन्धावस्थितिर्मूर्च्छा ॥ मुग्धाधिकरणं समाप्तम् ॥

टी० सू० मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ किं मूर्च्छा नाम जाग्रत्स्वप्नसुषुप्तीनामन्यतमावस्था? उतावस्थान्तरं? किंतत्त्वतो भेदोऽध्यवसातुं शक्यते ने?ति, अशक्यत्वे तास्वन्यतमत्वं, शक्यत्वे अवस्थान्तरत्वं, सुषुप्त्यादीनामित्यादि-शब्देन जागरस्वप्नमरणावस्था गृह्यन्ते, प्रसिद्ध्युपपत्तेः मूर्च्छाशब्दप्रयोगोपपत्तेरित्यर्थः। उपपत्तिश्च ज्ञानलोपस्याविशेषात्। निमित्तवैरूप्यं विवृणोति "निमित्तं ही"ति, आदि-शब्देनात्यन्तानिष्टश्रवणाद्यभिप्रेतं, तर्हि मरणान्तर्गतेति शङ्कायामाकारवैरूप्यं विवृणोति "मरणं ही"ति, निमित्तवैरूप्यात् सुषुप्तिव्यावृत्तिः, आकारवैरूप्यात् मरणव्यावृत्तिः, न सुषुप्तिमरणे इत्युक्तेरासन्नतया सुषुप्तिमरणयोर्धीस्थत्वात्पारिशेष्यमुक्तवान्, पश्चान्मरणान्तर्भावशङ्कायामाकारवैरूप्यं विवृतं सुषुप्तौ प्राणो भूयिष्ठमुपलभ्यते मूर्च्छायामल्पः किञ्चिदुपलभ्यते मृतौ न किञ्चिदपि बाह्यवायुना भूयिष्ठमाप्यायितः सुषुप्तौ मूर्च्छायां किञ्चिदाप्यायितः, अनाप्यायितस्य प्राणस्योपलम्भानर्हत्वात्। अन्ये तु मूर्छितः किं मरणाय परमात्मानमभिसम्पन्नः? उत स्वाप्ने तस्मिन् निलीन? उत प्रकारान्तरगत? इति विचारमाचक्षते, जाग्रदादिष्वन्यतमेत्येकविचारान्तर्भावात् पृथक्करणे फलभावाद् द्वेधा विचार उचितः। विचारस्य परमात्मपर्यन्तत्वं च विफलं पारिशेष्यहेतोः परमात्मपर्यन्तत्वे अतत्पर्यन्तत्वे चाविशेषात् ॥ मुग्धाधिकरणं समाप्तम् ॥

उभयलिङ्गाधिकरणम् । सू० न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

भा० दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः, इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निरू-

पत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते तत्र जाग-रस्वप्नसुषुप्तिमुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषास्ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि तत्र तत्रावस्थितस्य सन्ति ने? ति विचार्यते किं युक्तं सन्तीति, कुतः तत्तदवस्थशरीरेऽवस्थानात् । ननु सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् स्थित्यदनाभ्यां चेत्यादिषु परस्याकर्मव-श्यत्वेन दोषाभाव उक्तः तत्कथमकर्मवश्यस्य परस्य ब्रह्म-णस्तत्तत्स्थानसम्बन्धाद्दोष उच्यते, इत्यमुच्यते कर्माण्यपि देहसम्बन्धमापादयन्ति अपुरुषार्थजननानि भवन्तीति देहयोगाद्देत्यचोक्तम् । तच्च देहसम्बन्धस्यापुरुषार्थत्वे न भवति ।

टी० सू० न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ सङ्गतिमाह "दोषे"ति, प्रथमपादप्रतिपाद्यं जीवस्य सदोषत्वं, द्वितीयपादप्रतिपाद्यं हि परमात्मनो निर्दोषत्वकल्याणगुणाकरत्वे, तत्कथं स्वप्नाद्यवस्थाऽस्मिन् पादे निरूप्यत इति चेत् उच्यते स्वप्नसुषुप्तिनिरूपणेन परमात्मनः स्वाप्नविचित्रार्थस्रष्टृत्वं सुषुप्तिस्थानत्वं चाकारद्वयं प्रतिपादितं भवतीति परमात्मगुणसिद्धेरस्मिन् पादे तन्निरूपणं मूर्छादिनिरूपणन्तु पूर्वपादे निर-वकाशत्वात् सुषुप्तिनिरूपणसापेक्षत्वाच्चात्र कृतम् ॥ "आरभत इति, सूत्रकार इति शेषः, मुग्ध्युत्क्रान्तिषु स्थानेष्ववस्थास्वित्यर्थः सुषुप्त्यादि-स्थानेषु स्थितस्य जीवशरीरकस्य परस्य जीवगता अपुरुषार्थाः किं प्रस-ज्यन्ते ने? ति चिन्त्यते देहादिसम्बन्धस्यापुरुषार्थहेतुत्वं किं तद्वस्तुस्वभा-वप्रयुक्त? मुत कर्मविशेषकृतमिति? किं परमात्मविषयोभयलिङ्गत्वश्रुतिरपु-रुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मनिबन्धनतामवगमयितुं प्रभवति नेति? परस्योभयलिङ्गत्वश्रुतिः किमन्यथा सिद्धा नेति? परस्योभयं लिङ्गत्वं जीववदवस्थाभेदेन वा आतात्त्विकत्वेन वा निर्वोढुं शक्यं नेति

तत्रावस्थाभेदेन निर्वाहार्थं चिन्त्यते परस्योभयलिङ्गत्वं किं तिरोधानार्हं नेति? नामरूपव्याकरणश्रुत्यवगवगतं ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं किं परस्य कर्मवश्यतामवगमयति ने? ति अतात्त्विकत्वेन निर्वाहार्थमित्थं त्रेधा चिन्त्यते जलसूर्यादिदृष्टान्तः परस्य किमध्यासमूलाविद्यादिदोषसम्बन्धमवगयति ने? ति, अथात आदेशो नेति नेतीति निषेधः किं प्रकृतसर्वाकारविषय? उत शङ्कुचित? इति च ज्ञानानन्दस्वरूपत्वव्यपदेशः किं परस्य सार्वज्ञ्यसत्यसङ्कल्पत्वादिगुणाश्रयत्वं प्रतिक्षिपति? नेतीति च, यदा ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं परस्य कर्मवश्यतामवगमयति तदा परस्योभयलिङ्गत्वं तिरोधानार्हमवस्थाभेदेन निर्वाह्यं स्यात्, यदा जलसूर्यादिदृष्टान्तः परस्याविद्यादिदोषसंसर्गज्ञापकः, यदा च नेति नेतीति निषेधः प्रकृतसर्वाकारविषयः, यदा च ज्ञानानन्दस्वरूपत्वव्यपदेशः सार्वज्ञ्यादिप्रतिक्षेपकः तदोभयलिङ्गत्वमतात्त्विकत्वेन निर्वोढुं शक्यं स्यात्, एवमुभयथानिर्वाहसम्भवादुभयलिङ्गत्वश्रुतिरन्यथा सिद्धैस्यपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मकृतत्वं व्यवस्थापयितुं सा न प्रभवतीत्यकर्मवश्यत्वेऽपि परस्य देहादिसम्बन्धादपुरुषार्थान्वयः स्यात्, यदा तु ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं न परस्य कर्मवश्यतामवगमयति तदा तस्योभयलिङ्गत्वं तिरोधानानर्हतयाऽवस्थाभेदेन निर्वोढुमशक्यं स्यात्, यदा जलसूर्यादिदृष्टान्तः परस्याविद्यादिदोषसंसर्गं न ज्ञापयति यदा च नेति नेतीति निषेधः शङ्कुचितविषयः, यदा च ज्ञानानन्दस्वरूपत्वव्यपदेशो ज्ञातृत्वादिगुणाश्रयत्वं न प्रतिक्षिपति तदा अतात्त्विकत्वेन निर्वोढुमशक्यं स्यात्, अत उभयलिङ्गत्वश्रुतेरुभयथाऽप्यन्यथासिद्धत्वाभावादपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मविशेषप्रयुक्तत्वं सा व्यवस्थापयितुं प्रभवतीत्यकर्मवश्यस्य परमात्मनो देहादिष्ववस्थितस्यापि नापुरुषार्थादिदोषान्वयप्रसङ्ग इति तत्तदवस्थशरीर इति तच्छब्दो जागरादिपरः जागरादिहेतुताशरीरस्यावस्था । पौनरुक्त्यं शङ्कते "नन्वि"ति, परिहरति "इत्थंभि"ति, कर्मणां दुःखावहत्वं देहद्वारकमस्तु ततः किमित्यत्राह 'तच्चेति, द्वारभूतस्य साक्षादपुरुषार्थहेतुत्वं भवति यथा राजकोपस्य

वधादिहेतुत्वेऽपि तस्य खड्गप्रहारादिद्वारकत्वात् द्वारभूतखड्गप्रहारस्य वधं प्रति साक्षाद्धेतुत्वं तथेहापीति, इममर्थमभिप्रेत्याह "अपुरुषार्थत्वे न भवती"ति, तदुपपादयति–

सू० इतरथा कर्माण्येव दुःखं जनयिष्यन्ति किं देहसम्बन्धेन, अतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसम्बन्धोऽपुरुषार्थ एव, अतस्तन्नियमनार्थं स्वेच्छया तत्प्रवेशोऽप्यपुरुषार्थसम्बन्धोऽवर्ज्जनीयः, पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव, अतो यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणा[1]करं च ब्रह्म तथाऽपि "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् यश्चक्षुषि तिष्ठन् यो रेतसि तिष्ठन्" इत्यादिवचनात् तत्र तत्रावस्थितस्य तत्तत्सम्बन्धकृतापुरुषार्थाः सन्तीत्येवं प्राप्ते प्रचक्ष्महे "न स्थानतोऽपि परस्ये"ति, न पृथिव्यात्मादिस्थानतोऽपि परस्य ब्रह्मणोऽपुरुषार्थगन्धः सम्भवति, कुतः उभयलिङ्गं सर्वत्र हि, यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्मोभयं लिङ्गम्–उभयलक्षणमभिधीयते निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः "अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतवर्गः। तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे। समस्तहेयरहितं विष्ण्वाख्यं परमं पदमित्यादिश्रुतिस्मृतिभ्य उभयलक्षणं हि ब्रह्मावगतम्॥

१ कल्याणगुणाकरत्वेति समुचितः पाठः।

टी० "इतरथे"ति, तस्माद् द्वारभूतदेहसम्बन्धोऽपुरुषार्थं इत्याह "अत"इति, कर्मवश्यत्वादृते स्वेच्छया प्रवेशेऽप्यपुरुषार्थसम्बन्धो वस्तुस्वभावायत्तत्वादवर्जनीयः यथाऽनन्याधीनस्य स्वयमेवासिना स्वच्छन्दतोऽपि शिरश्छेदोऽपुरुषार्थ एव तद्वदित्याह "अतस्त"इति, दृष्टान्तमाह "पूये"ति, अकर्मवश्यस्येऽपि वस्तुस्वभावायत्तापुरुषार्थसम्बन्धः स्यादेवेति पूर्वपक्षोत्थानमित्यर्थः । राद्धान्तमाह "एवं प्राप्त"इति, निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थं इति निर्दोषत्वश्रुतिवत्कल्याणगुणाकरत्वश्रुतिरपि दोषशङ्कानिरासोपयोगिनी कल्याणगुणानां दोषप्रतिपक्षरूपत्वादिति भावः ॥

## सू० भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

वृ० यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुषार्थयोगः तथाऽन्तर्यामिणः परस्यापि स्वतोऽपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभेदादपुरुषार्थयोगोऽवर्जनीय इति चेत्तन्न प्रत्येकमतद्वचनात् यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्नित्यादिषु प्रतिपर्यायं स त आत्माऽन्तर्याम्यमृत इत्यन्तर्यामिणोऽमृतत्ववचनात् तत्र तत्र स्वेच्छया नियमनं कुर्वतस्तत्तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात्, जीवस्य तु तत् स्वरूपन्तिरोहितमिति पराभिध्यानात्तु तिरोहितमित्यत्रोक्तम् । ननु स्वेच्छया कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तापुरुषार्थसम्बन्धोऽवर्जनीय इत्युक्तं नैतद्युक्तं न ह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपं कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पा-

देकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति ।

टी० सू· भेदादिति चेन्न प्रत्येकमतद्वचनात्, उभयलिङ्गत्वश्रुतिर्जीवस्याप्यस्ति तत्रावस्थाभेदेन हि तन्निर्वाहस्तद्वत्परमात्मनोऽपि इत्यर्थं परिहरति "तच्चे"ति, प्रतिपर्यायमिति अमृत–शब्दस्य सङ्कुचितनित्यत्वपरत्वं स्यात् । रूपकृदावृत्तत्वात् प्रतिपर्यायमुक्ततत्तद्वस्तुगतदोषविशेषसम्बन्धराहित्यमेवामृत–शब्देनाभिप्रेतमित्यर्थः । जीवस्य उभयलिङ्गत्वश्रुतिसद्भावेऽपि कथं तस्यापुरुषार्थसम्बन्ध इत्यत्राह "जीवस्ये"ति तिरोधानादेः श्रुतिसिद्धत्वाज्जीवविषयोभयलिङ्गत्वश्रुतिः सङ्कोचिता परमात्मनस्त्वन्याधीनतिरोधानादिश्रुत्यभावात्तद्विषयोभयलिङ्गत्वश्रुतिरसंकुचितवृत्तिरित्यर्थः । नन्वित्यादिना चोदिते परिहरति "नैतदि"ति, वस्तुस्वभावायत्तत्वे सति ह्यपुरुषार्थत्वप्रसङ्गः तदेव नास्तीत्याह "न ही"ति, न केवलं क्षेत्रस्यैवापुरुषार्थसम्बन्ध औपाधिकः अचेतनस्याप्यपुरुषार्थत्वं न स्वभावप्रयुक्तमित्यपि–शब्दस्य भावः । धान्यादिषु हेमन्तादिकालापेक्षया सुखदुःखहेतुत्वं दृष्टं पुरुषभेदेन एकमेव वस्तु स्वकीयत्वपरकीयत्वबुद्ध्या सुखदुःखकरं दृष्टं, यथा धान्यादिषु तद्वदित्यर्थः । वस्तुस्वभावायत्तत्वे दूषणमाह–

भू० वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात्, न चैवं दृश्यते तथा चोक्तं "नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ? । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः । तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते तदेव कोपाय यतः प्रसादाय च जायते । तस्माद् दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकमि"ति, अतो जीवस्य कर्मवश्यत्वात्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एवापुरु-

षार्थः स्यात्, परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तत्तद्विचित्रनियमरूपलीलारसायैव स्यात् ॥

सू० अपि चैवमेके ॥ १३ ॥

अपि चैके शाखिन एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थं परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च स्व-शब्देनाधीयते "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशी"ति इति । अथ स्यात् अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वं चास्ति, ततश्च ब्राह्मणो यजेतेत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति तत्राह-

टी० "वस्तुस्वरूपे"ति, तादूप्ये सुखादिहेतुत्व इत्यर्थः, न ह्येकस्य विरुद्धस्वभावद्वयान्वय उपपन्न इति भावः । न केवलं सुखादिहेतुतायाः कर्मकृतत्वमुपपत्त्या कल्प्यं कण्ठोक्तमपीत्याह "तथा चोक्त"मिति, पुरुषभेदेनैकस्य वस्तुनः सुखादिहेतुत्वमाह "नरकस्वर्गे"ति नरकस्वर्गत्वं प्राप्ताप्राप्तविवेकेन पापपुण्यकृतमित्यर्थः । एकस्यैव वस्तुन एकपुरुषं प्रति कालभेदेन सुखादिहेतुत्वमाह "तदेव प्रीतये"इति, तस्मात्परतन्त्रस्य जीवस्य कर्मानुगुणभगवत्सङ्कल्पायत्तोऽपुरुषार्थसम्बन्ध इत्याह "अतः"-इति, स्वतन्त्रस्य स्वयं स्वापुरुषार्थोपादानायोगादीश्वरस्येदं लीलोपकरणतया पुरुषार्थभूतमित्याह "परस्य त्वि"ति, । सू· अपि चैवमेके, पूर्वसूत्रे अनिगदव्याख्याना श्रुतिरुदाहृता, अत्र स्पष्टार्थश्रुतिरुदाह्रियत इत्यभिप्रायेण स्व-शब्देनेत्युक्तं, द्वा सुपर्णौ इत्यत्र पर्ण-शब्देन अप्राकृतविग्रहो ज्ञानं

वाऽभिधीयते । अनन्तरसूत्रमवतारयति "अथ स्यादि"ति, अपुरुषार्थसम्बन्धः कर्माधीनोऽस्तुकर्मवश्यत्वं परमात्मनोऽपि सम्भवतीत्यर्थः ॥

सू० अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

मू० देवादिशरीरानुप्रवेशे तेन तेन रूपेण युक्तमप्यरूपवदेव तद्ब्रह्म रूपरहितमतुल्यमेव जीववच्छरीरित्वानिबन्धनं कर्मवश्यत्वम् अस्य न विद्यते इत्यर्थः । कुतः निर्वाहकत्वेन प्रधानत्वात्, "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म"ति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति । ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसम्बन्धरहिततुल्यत्वमुच्यते इत्थं, यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसम्बन्धः तथा तदभावात् परस्य ब्रह्मणोऽरूपवत्त्वं विधिनिषेधशास्त्राण्यपि कर्मवश्यानेवाधिकुर्वन्ति, तस्मादरूपतुल्यमेव परं ब्रह्म, ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकारत्वरूपोभयलिङ्गमेव ॥

टी० सू० अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ केनाकारेणारूपतुल्यत्वमित्यत्राह "जीववदि"ति, वक्ष्यमाणश्रुत्यभिप्रायेणाह "निर्वाहकत्वेन प्राधान्या"दिति, ते यदन्तरेत्यस्यार्थमाह "नामरूपे"ति, कार्यविशेषबुभुत्सया चोदयति "नन्वि"ति, शरीरत्वेन अनुप्रवेशो हि तन्नियमनादकार्यार्थ एव तत्कथं कार्यास्पर्श इत्यर्थः । यद्वा तत्तद्बुद्धिशब्दपर्यवसानं हि तत्तदनुप्रवेशकार्यं बुद्धिशब्दविषयत्वेन कर्मवश्यत्वं चावश्यं भावि तत्कथं कार्यास्पर्श इत्यर्थः । परिहरति "इत्थमि"ति, सुखदुःखादिकार्यविशेषस्यास्पर्श उच्यते न तु नियमनादेरित्यर्थः । तर्हि ब्राह्मणो यजेते-

त्येवमादीनां कोऽर्थ इत्यत्राह 'विधिनिषेधे"ति, यथा शुक्ल-शब्दस्य गुणि-पर्यन्ताभिधानस्वारस्येऽपि घटस्य शुक्ल इति वाक्येऽर्थानुपपत्त्या शुक्ल-शब्दो धर्ममात्रपरः, तथा ब्राह्मणोजेतेत्यादिष्वप्यर्थानुपपत्त्या जीवमात्र-पर्यन्तत्वमाश्रीयत इत्यर्थः । तथा च यस्य पृथिवी शरीरमित्यादिष्वपि द्रष्टमिति भावः । यद्वा ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वेऽपि ब्रह्मणः शुक्ल इतिवद्विशेषणभूतजीवमात्रे कर्मवश्यत्वान्वयात् ब्रह्मणः सद्वारकं कर्मवश्यत्वमिति अधिकुर्वन्ति अधिकारस्तादर्थ्यबोधनं, तस्मादिति, सूत्रार्थमुपसंहरति, परमप्रकृतार्थेनान्वयमाह "ततश्चे"ति, अनन्तरसूत्रं चोद्येनावतारयति—

सू० ननु च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिभिर्निर्विशेषप्रकाशै-कस्वरूपं ब्रह्मावगम्यते, अन्यत्तु सर्वज्ञत्वसत्यसङ्कल्पत्वज-गत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकं नेति नेती-त्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यं, तत्कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभ-यलिङ्गत्वं ब्रह्मण इति तत्राह—

सू० प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्यावैयर्थ्यात् प्र-काशस्वरूपत्वं ब्रह्मणोऽभ्युपगम्यते तथा सत्यसङ्कल्पत्व-सर्वज्ञत्वसर्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलावि-द्यादिदोषत्वाद्यभिधायिवाक्यार्थावैयर्थ्यादुभयलिङ्गमेव ब्रह्म ॥

सू० आह च तन्मात्रम् ॥ १६ ॥

किञ्च सत्यं ज्ञानमनन्तमित्यादि वाक्यं ब्रह्मणः प्रकाश-

स्वरूपतामात्रं प्रतिपादयति नान्यत् सत्य संकल्पत्वादिकं वाक्यान्तरावगतं निषेधयति नेति नेतीति च निषेधस्य विषयोऽनन्तरमेव वक्ष्यते ॥

टी० "ननु चे"ति, सत्यं ज्ञानमित्यार्थगुणनिषेधः ज्ञानमात्रस्य सङ्कल्पाद्याश्रयत्वायोगात् ज्ञातुरेव हि तदाश्रयत्वम् । श्रौतनिषेधमाह "नेति नेती"ति, सू· प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ ज्ञानस्य सर्वज्ञत्वाद्ययोगः किं व्याप्त्याऽभिधीयते? तर्हि ज्ञानं कस्य चिद्गुणभूतं दृष्टमिति ब्रह्मापि कस्यचिद् गुणभूतं स्यात् प्रधान्येन श्रुतिप्रतिपन्नत्वाच्च गुणभूतमिति चेत् तर्हि श्रुतिप्रतिपन्नत्वादेव सर्वज्ञत्वादयोऽपि स्वीक्रियन्तां व्याप्तिविरोधोऽपि नास्ति गुणभूतज्ञानस्यैव ज्ञानात्मनाश्रयत्वदर्शनात्, अतः सर्वमुपपन्नमिति भावः ॥ सू· आह च तन्मात्रम् ॥ १६ ॥ मात्र-शब्दविवक्षितमाह "नान्यद्वि"ति, इतरनिषेधव्यवच्छेदपरो मात्रशब्द इत्यर्थः । एवं सूत्रद्वयेन आर्थनिषेधः परिहृतः । अथ श्रौतनिषेधमपि परिहरन्नार्थनिषेधपरिहारोपयोगिप्रमाणमुपन्यस्यति-

## सू० दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

भा० दर्शयति च वेदान्तवाक्यगणः कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च "तमीश्वराणां परमं महेश्वरन्तं दैवतानां परमं च दैवतम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ न तस्य कार्यं करणं च विद्यते । न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ यः सर्ववित् यस्य ज्ञानमयन्तपः भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । स एको ब्रह्मण आनन्दः यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्

बिभेति कुतश्चन निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् इत्यादि, स्मर्यते च "यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत । मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्विपरिवर्त्तते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः सर्वज्ञस्सर्वशक्तिर्ज्ञानबलर्द्धिमान् । अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी ॥ क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः । निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरक्रम" इत्यादि, अतः सर्वावस्थावस्थितस्यापि ब्रह्मण उभयलिङ्गत्वात् तत्तत्स्थानप्रयुक्ताः दोषाः परं ब्रह्म स्पृशन्ति ।

**सू० अत एव चोपमा सूर्य्यकादिवत् ॥ १८ ॥**

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मण उभयलिङ्गत्वात् न तत्तत्स्थानप्रयुक्तदोषभाक्त्वम्, अत एव जलदर्पणादिप्रतिबिम्बितसूर्य्यादिवत् परमात्मा तत्रतत्रावस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते "आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलधारेष्विवांशुमान् । एक एव हि भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिषु ॥

टी० सू० दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ वेदान्तगण इति पदेनाथो–शब्दार्थ उक्तः, अथो–शब्दः कार्त्स्न्यपर इत्यर्थः । निष्कलं निष्क्रियं निरवद्यमित्याद्युपादानेन श्रोतनिषेधः, परिहृतः, गुणविशेषविधाने सति

सामान्यनिषेधस्य विहितव्यतिरिक्तविषयत्वात् गुणविशेषनिषेधे सति सामान्यनिषेधस्य तत्पर्यवसायित्वाच्च, सू॰ अत एव चोपमा सूर्यकादिवत्, तथाऽऽत्मैकत्वमेक-शब्दस्यैकस्वभाव इत्यर्थः॥ अनन्तरसूत्रमवतारयति—

सू॰ अत्र चोदयति

**सू॰ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

तु-शब्दश्चोद्यं द्योतयति अम्बुवदिति सप्तम्यन्ताद्वतिः अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते, अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृ[1]ह्यन्ते न परमार्थतस्तत्रस्थाः । इह तु यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन् य आत्मनि तिष्ठन्नित्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते, अतः सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाऽननुषङ्गस्तत्र तत्र स्थित्यभावादेव, अतो न तथात्वं, दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ परिहरति—

**सू॰ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥**

पृथिव्यादिस्थानान्तर्भावात् स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते, कथमिदमवगम्यते, उभयसामञ्जस्यादेवम् उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते. आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।

१ तत्रस्था इति गृह्यन्ते इति पा॰ ।

जलाधारेष्विवांशुमानिति दोषवत्स्वनेकेषु वस्तुषु वस्तुनोऽवस्थितस्याकाशस्य वस्तुनोऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्त्तनमात्रे प्रतिपाद्ये समञ्जसं भवति, घटशरावादिषु यथा वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैर्न संस्पृश्यते, यथा च जलाधारेषु विषमेषु दृश्यमानोऽशुमांस्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते, तथाऽयं परमात्मा पृथिव्यादिषु नानाऽऽकारेष्वचेतनेषु चेतनेषु च स्थितस्तत्तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टः सर्वत्र वर्त्तमानोऽप्येक एवास्पृष्टदोषगन्धः कल्याणगुणाकर एव ।

"अत्र चोदयती"ति, सू॰ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ पृथिव्यादिषु परमार्थतः स्थित्यभ्युपगमे दार्ष्टान्तिकस्य परमात्मनो दृष्टान्ततुल्यत्वाभावात् तुल्यत्वसिद्ध्यर्थं पृथिव्यादिषु स्थितेरपरमार्थत्वमभ्युपेत्यमिति तात्पर्यम् ॥ सिद्धान्तसूत्रमवतारयति "परिहरती"ति, सू॰ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥ सर्वत्र स्थितेरपरमार्थत्वे सति आकाशदृष्टान्तो न घटते, पारमार्थ्ये तु जलसूर्यादिदृष्टान्तो न घटते, तस्मादुभयदृष्टान्तानुयाय्याकारो वृद्धिह्रासादिदोषाभावः स्वीकार्य इत्यर्थः । एवमित्यन्तं सूत्रांशं समञ्जसं भवतीत्यन्तेन भाष्येण योजयित्वा स्मृतिवचनस्यार्थं योजयति घटकरकादिष्वपीत्यादिना, तर्हि जलसूर्यादिदृष्टान्तः किमर्थः दोषाननुषङ्गे परमार्थापरमार्थयोरुभयत्राप्यनुयायी हेतुः क इत्यपेक्षायामाह–

भा॰ एतदुक्तं भवति यथा जलादिषु वस्तुतोऽनवस्थितस्यांशुमतो हेत्वभावाज्जलादिदोषानभिषङ्गः तथा पृथिव्यादि-

१ घटकरकादिष्विति पा॰ ।

ष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोष-
हेत्वभावान्न दोषसम्बन्ध इति, दर्शनाच्च—इष्यते चैवं
सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद् दृष्टा-
न्तोपादानं सिंह इव माणवक इत्यादौ, अतः स्वभावतो
निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणा
करस्य पृथिव्यादिस्थानतोऽपि न दोषसम्भवः । अथ
स्यात् द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्तमेव चेति प्रकृत्य
समस्तस्थूलसूक्ष्मरूपं प्रपञ्चं ब्रह्मणो रूपत्वेन परामृश्य
"तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजनं वासः"
इत्यादिना चाकारविशेषं चाभिधाय अथात आदेशो नेति
नेतीति न ह्येतस्मादिति नेत्यन्यत्परमस्तीति सर्वं प्रकृतं
ब्रह्मणः प्रकारमिति—शब्देन परामृश्य तत्सर्वं प्रतिषिध्य
सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म विशेषास्त्वेवंविधं
स्वस्वरूपमजानता ब्रह्मणा कल्पिता इति दर्शयति, अतः
कथमुभयलिङ्गत्वं ब्रह्मण इत्यत्राह—

**सू० प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥**

नैतदुपपद्यते यद्ब्रह्मणः प्रकृतविशेषवत्त्वं नेति नेतीति प्रति-
षिध्यत इति, तथा सति भ्रान्तजल्पितायमानत्वात् ।

टी० "एतदुक्तं भवती"ति, देशविप्रकर्षः कालविप्रकर्षः स्वभाव-
विप्रकर्षश्चेति त्रेधा विप्रकर्षः, अत्रैकैकविप्रकर्षोऽपि दोषास्पर्शस्य हेतुः
तत्र देशविप्रकर्षस्योदाहरणं जलसूर्यादि, स्वभावविप्रकर्षस्योदाहरणम्
आकाशः, तत्र देशविप्रकर्षवत् स्वभावविप्रकर्षोऽपि दोषास्पर्शहेतुरिति

दर्शयितुं, दृष्टान्तद्वयोपादानमित्यर्थः, दृष्टान्तद्वयेऽपि देशकालस्वभावसन्निकर्षत्रयसमुदायाभावो दोषास्पर्शे अनुयायी हेतुः सन्निकर्षत्रयसमुदायो दोषसंस्पर्शहेतुः । व्याख्येयसूत्रखण्डं व्याचष्टे "दृश्यते चे"ति, अनन्तरसूत्रशङ्कामाह "अथ स्यादि"ति, महारजनमिति महारजनं कुसुम्भः, सू० प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥ भेदस्य लोकसिद्धत्वेन अनूदितत्वात् तन्निषेधो न भ्रान्तजल्पितायत इत्यत्राह—

सू० न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति, यद्यपि निर्दिश्यमानेषु पदार्थाः प्रमाणान्तरप्रसिद्धाः तथाऽपि तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव, इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं चाज्ञातम्, अतस्तेषामनुवादासम्भवाद् वै वोपदिश्यन्ते, अतस्तन्निषेधो नोपपद्यते यस्मादेवं तस्मात् प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधतीदं वाक्यम् । ये तु ब्रह्मणो विशेषाः प्रकृतास्तद्विशिष्टतया ब्रह्मणः प्रतीयमानेयत्ता नेति नेति प्रतिषिध्यते, नेति नेति नैवं नैवम् उक्तप्रकारमात्रविशिष्टं न भवति ब्रह्म, उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता साऽचेति–शब्देन परामृश्यत इत्यर्थः । यतश्च निषेधानन्तरं ब्रह्मणो भूयोगुणजातं ब्रवीति, अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति, ब्रवीति हि भूयोगुणजातं, न ह्येतस्मादिति नेत्यन्यत् परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमित्ययमर्थः इति नेति नेति यद्ब्रह्म प्रतिपादितं तस्मादेतस्मादन्यद्वस्तु परं न ह्यस्ति ब्रह्मणोऽन्य-

स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः । तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयं तस्य च निर्वचनं "प्राणा वै सत्यं तेषामेष सत्य"मिति प्राण-शब्देन प्राणसाहचर्य्याज्जीवाः परामृश्यन्ते ते तावत् सत्यं वियदादिवत्स्वरूपान्यथाभावरूपपरिणामाभावात्, तेषामेष सत्यं तेभ्योऽप्येष परमपुरुषः सत्यं जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते अतस्तेभ्योऽप्येष सत्यं ततश्चैवं वाक्यशेषोदितगुण[1]ज्ञानयोगान्नेति नेतीति ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते अपि तु पूर्वप्रकृतेयत्तामात्रम् ।

टी० "न हि ब्रह्मणः"इति, अतस्तन्निषेधो नोपपद्यत इत्यनेन सूत्रस्य हि-शब्दाभिप्रेतार्थ उक्तः । प्रकृत इत्यादिसूत्रं व्याचष्टे "ये ब्रह्मणः"इति, इति-शब्दो हि प्रकृतप्रकारपरामर्शी तत्कथमियत्तानिषेध इत्यत्राह "नेति नेति नैवं नैव"मिति, उक्तप्रकारमात्रविशिष्टतया ब्रह्मण इयत्ता प्रकृतासाऽपि प्रकार एवेति सा इति-शब्देन परामृश्यत इत्यर्थः । ये तु प्रकारनिषेधं सूत्रार्थमाहुः तत्पक्षे त्वप्रत्यये न घटते, एतावदित्येव वक्तव्यं, सूत्रखण्डान्तरं व्याचष्टे "यतश्चे"ति, अनन्तर-शब्देन ततः-शब्दो व्याख्यातः । भूयः-शब्देन भूयिष्ठत्वमुच्यते, सार्थसङ्ग्रहं वाक्यमुपादत्ते "ब्रवीति हो"ति, तस्यार्थमाह "अयमर्थ"इति, न ह्येतस्मादित्यत्र निषेधपरत्वं प्रतीयते न गुणपरत्वं, स्वरूपस्य सत्यत्वमात्रं चेति शङ्काव्यावृत्त्यर्थम् अयमर्थ इत्यारम्भः । स्वरूपतो गुणतश्चोत्कृष्टमित्यनेन अचेतनजीवव्यावृत्तिः, उत्कर्षानुगुणं नामधेयमाह "तस्य चे"ति, सूत्रार्थमुपसंहरति—

सू० अत उभयलिङ्गमेव परं ब्रह्म ॥ त[2]था च ब्रह्मणः प्रमाणा-

१ गुणज्ञानयोगादिति पा० ।
२ क्वचित्पुस्तके "तथा चे"ति पाठो न दृश्यते ।

न्तरागोचरत्वेन तत्सम्बन्धितया मूर्त्तामूर्त्तादिरूपानुवादेन तन्निषेधार्थमेवात् प्रकृतैतावत्प्रतिषेध उक्तः ॥ तदेव प्रमाणान्तरागोचरत्वं द्रढयति—

सू॰ तदव्यक्तमाह हि ॥ २२ ॥

तद्ब्रह्म प्रमाणान्तरेण नैव व्यज्यते, आह हि शास्त्रं, "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं न चक्षुषा गृह्यते नापि वाचे"त्यादि, ॥ हेत्वन्तरं चाह

सू॰ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

अपि च संराधने सम्यक् प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारो नान्यथेति श्रुतिस्मृतिभ्यामवगम्यते । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान" इति श्रुतिः । स्मृतिरपि "नाहं वेदैर्न तपसा न दानेन न चेज्यया भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन ! । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति भक्तिरूपापन्नमेवोपासनं संराधनं तस्य प्रीणनमिति पूर्वमेवोक्तम्, अतो निदिध्यासनाय ब्रह्मस्वरूपमुपादिशत् द्वे वाव ब्रह्मण इत्यादिशास्त्रं ब्रह्मणो मूर्त्तामूर्त्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम् ॥

## सू० प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

इतश्च प्रकृतैतावत्त्वं प्रतिषेधति न मूर्त्तामूर्त्तादिविशिष्टत्वं यतः साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने प्रकाशादिवत् ज्ञानानन्दादिस्वरूपवन्मूर्त्तामूर्त्तादिप्रपञ्च-विशिष्टताया अपि ब्रह्मगुणत्वावैशेष्यं प्रतीयते । "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्च" इत्यादि ।

टी० "अत" इति, अनन्तरसूत्रमवतारयन् सङ्गतिमाह "ब्रह्मणः प्रमाणान्तरेत्यादिना, सू० तदव्यक्तमाह हि ॥ २२ ॥ प्रधानपरत्वव्यावृत्त्यर्थमव्यक्त—शब्दं व्याचष्टे "तदि"ति, सू० अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥ भक्त्या साक्षात्कारोऽस्तु ततः किं संराधनेन साक्षात्कारस्येत्यत्राह "भक्तिरूपे"ति, सू० प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्याभ्यासात् ॥ २४ ॥ मूर्त्तामूर्त्तादिप्रपञ्चविशिष्टप्रतीतिर्भ्रान्तिरिति शङ्कायां सूत्रस्योत्तरखण्डं व्याचष्टे—

सू० ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधनात्मके कर्मण्याभ्यासात् उपलभ्यते, तद्वदभ्यस्त-संराधनानां तेषां मूर्त्तामूर्त्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः । उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति—

## सू० अतोऽनन्तेन तथा हि लिङ्गम् ॥ २५ ॥

अत उक्तैर्हेतुभिर्ब्रह्मणोऽनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धं, तथा हि सत्युभयलिङ्गं ब्रह्मोपपन्नं भवति ॥
उभयलिङ्गाधिकरणं समाप्तम् ।

अहिकुण्डलाधिकरणम् ।

## सू० उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥

मूर्त्तामूर्त्तात्मकस्याचित्प्रपञ्चस्य ब्रह्मणो रूपत्वं "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपदिश्यते "अथात आदेशो नेति नेती"ति मूर्त्ता मूर्त्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिद्धते न ह्येतस्मादिति नेत्यन्यत्परमस्तीति ब्रह्मणोऽन्यदुत्कृष्टं नास्तीति प्रतिपादितं, तदुपपादनाय नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति, प्राण-शब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति कदाचिदपि ज्ञानादिसङ्कोचाभावादुक्तं, तथा प्रधानक्षेत्रज्ञपतिर्गुणेशः पतिं विश्वस्यात्मेश्वरं नित्योनित्यानां चेतनश्चेतनानामित्यादिश्रुतेश्चायमर्थोऽवगम्यते तस्याचिद्वस्तुनोब्रह्म-

टी० "ब्रह्मस्वरूपभूति"ति, उपासनेन साक्षात्कृतत्वादेव हि प्रकाशानन्दादेः पारमार्थ्यं न तु भ्रान्तिसिद्धत्वं तद्वन्मूर्तामूर्तप्रपञ्चविशिष्टताऽऽदेरप्युपासनेन साक्षात्कृतत्वात्पारमार्थ्यमित्यर्थः, अनन्तरसूत्रमवतारयति "उक्तमि"ति, सू· अतोऽनन्तेन तथा हि लिङ्गम् ॥ २५ ॥ अस्मिन्नधिकरणेऽवान्तरशङ्कातत्परिहारबाहुल्यात् साध्यप्रतिपत्तिर्व्याकुलिता स्यादिति परमसाध्योपसंहारेण तद्विशदयन् सूत्रमभिप्रयन् व्याचष्टे "अत"-इति, तथा हि सतीति इयत्तानिषेधपरत्वे सति न केवलमुभयलिङ्गत्वाबाधः अपि तूभयलिङ्गत्वमुपपादितं भवति हीत्यर्थः । ये तूभयलिङ्गत्वं पूर्वपक्षीकुर्वन्ति तन्मते इदं सूत्रं न घटते उभयलिङ्गत्वसमर्थनेनोपसंहारात्, उभयलिङ्गाधिकरणं समाप्तम् ॥ सू· उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥ अवान्तरसङ्गतिमाह "मूर्तामूर्त्ते"ति, अचित्प्रपञ्चस्य चिदचिदात्मप्रपञ्चक-

यते अचित्प्रपञ्चोऽपि कथितः स्यादित्यर्थः । न त्वन्ययोगव्यवच्छेदः सङ्गत्युपयोगित्वेनाचित्प्रपञ्चोपादानं कृतं, न हि रूपविधिः किन्तु निषेधार्थमनुवाद इत्यत्राह "अथात"इति, तथा प्रधानतेजत्रेत्यादिना रूपत्वं विवृतं भवति, ईश्वरत्वादिकथनाचियाम्यत्वलक्षणविभूतित्वमेव

सू० रूपत्वप्रकार इदानीं चिन्त्यते—ब्रह्मणो निर्दोषत्वसिद्ध्यर्थं किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन? उत प्रभाप्रभवतोरिवैकजातियोगेन? उत जीवस्येव विशेषणविशेष्यतयांऽशांशिभावेनेतीह स्थाप्यमानं विशेषणविशेष्यभावमङ्गीकृत्य प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्, तदनन्यत्वमारम्भण—शब्दादिभ्य इत्यत्र सूक्ष्मचिदचिद्वस्तुविशिष्टाद्ब्रह्मणः स्थूलचिदचिद्विशिष्टस्योत्पत्तिरनन्यत्वं चोक्तं, किं युक्तम् अहिकुण्डलवदिति कुतः, उभयव्यपदेशात्, ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमिति तादात्म्यव्यपदेशात् "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति भेदव्यपदेशाच्चाहेः कुण्डलभावद्रज्जुभाववत्तस्यैव ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनि ॥

सू० प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

वा—शब्दः पक्षद्वयव्यावृत्त्यर्थः ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयोब्रह्मणोऽपरिणामित्ववादिन्योऽपिबाधिता भवेयुः, अतोयथातेजस्त्वेन प्रभातदाश्रययोर्भिन्नयोरपि तादात्म्यम्, एवमचित्प्रपञ्चस्य ब्रह्मणोरूपत्वमित्यर्थः ॥

भिधेयइति' । अमनुष्यशब्दो यौगिकोऽत्र गृह्यते न तु रक्षःपिशाचादिषु रूढ इति दर्शयत्युदाहरणेन । 'पर्वतीयानि फलानीति' ॥

"कृकणपर्णाद् भारद्वाजे" ॥ 'न गोत्रशब्द इति' । कुत इत्याह । 'प्रकृतिविशेषणं चैतदिति' । चशब्दो हिशब्दार्थे ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

"युष्मदस्मदोरन्यतरस्यां खञ्च" ॥ षष्ठीनिर्देश उत्तरार्थः । 'एते त्रयः प्रत्यया भवन्तीति' । ननु चान्यतरस्यांग्रहणेन खञ्छयोः पक्षेनुत्पत्तिः प्रतिपाद्यते तदनुत्पत्तावपवादाभावात्स्वशास्त्रेण प्राग्दीव्यतइत्यनेनैवाण् भवति तत्कुतोनेन प्रत्ययत्रयस्य विधानं, छोपि तर्हि नैवानेन विधीयते तस्यापि हि चकारोऽभ्यनुज्ञापक एव, यद्यन्योपि कश्चित्प्राप्नोति सोपि भवतीति, ततश्छोपि स्वशास्त्रेण वृद्धाच्छ इत्यनेनैव भवति, एक एव त्वपूर्वः खञ् विधीयते, अथ यस्य प्रवृत्तावस्य तात्पर्यं स सर्वोनेन विधीयतइति छस्यानेन विधानं, यद्येवमणोप्यनेनैव विधानं न खञ्छयोरनुत्पत्तिमात्रेऽन्यतरस्यांग्रहणस्य तात्पर्यं तस्य महाविभाषयैव सिद्धत्वात्, किं तर्हि अणः प्रवृत्तावपि, तस्मात्तात्पर्यतस्त्रय एते प्रत्यया भवन्तीत्युक्तं प्रत्येकं प्रत्ययत्रयं विधीयतइति च, तत्र खञ्प्रत्ययो भवतीत्यनेन खञ एवापूर्वस्य विधानमिति दर्शितम्, अन्यतरस्यांग्रहणाद्यथाप्राप्तं चेत्यनेनाणोऽभ्यनुज्ञानं; त्यदादित्वाद्युष्मदस्मदोश्छे प्राप्तइत्यनेनापि छस्याभ्यनुज्ञानं, भाष्ये तु योगविभागेन यथासंख्याभावः प्रतिपादितः, युष्मदस्मदोरित्येको योगः, अत्र गर्त्तोत्तरपदाच्छ इत्यतश्छोनुवर्त्तते, ततः खञ्चेति द्वितीयो योगः ॥

"तस्मिन्नणि च युष्माकास्माकौ" ॥ 'साक्षादिति' । प्रत्यक्षेण विहितः, स्वरूपोपादानेन विहित इत्यर्थः, हेतुगर्भं चेदं विशेषणं, यतः साक्षाद्विहितः ततः खञेव निर्दिश्यतइति, तस्मिन्नित्युक्ते तत्रैव झटिति प्रत्ययो भवति न चानुकृष्टश्छ इति, चकारो हि समीपवर्त्तिनः खञः स

सहायतामात्रमभिधाय निवर्त्तते, तत्र सहायस्यानिर्द्देशात्प्रकृतान्वेषणं, तत्र गर्त्तोत्तरपदाच्छ इति यावदन्वेषणे छस्य प्रतीतिश्चिरेण भवति तेन च नासौ प्रत्यवमर्शार्हः, यदा तु यथासंख्यनिरासाय पूर्वसूत्रे योगविभागस्तदा नैव चकारेण छस्यानुकर्षणमिति न तस्य परामर्शशङ्का । 'निमित्तयोरित्यादि' । द्वे हि निमित्ते खञणौ निमित्तिनावपि द्वावेवादेशौ, ततश्च साम्याद्यथासंख्येन भवितव्यमिति मत्वा प्रश्नः । 'योगविभागः करिष्यतइति' । खञणोर्युष्माकास्माकाविति वक्तव्ये तस्मिन्नणि चेति वचनाच्चकारेण वाक्यभेदस्य सूचनादादेशयोर्निमित्ताभ्यां प्रत्येकमनभिसम्बन्ध इत्यर्थः ॥

"तवकममकावेकवचने" ॥ कृत्रिमाकृत्रिमयोः कृत्रिमस्यैकवचनस्य ग्रहणं, तस्य च कृताकृतप्रसङ्गित्वेन सुपो धातुप्रातिपदिकयोरिति लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलक्षणेन समर्थयितव्या, तदपि प्रत्ययलक्षणं विघटयन्नाह । 'ननु चेति' 'वचनादिति'। यदि पुनरेकवचनपरत्वेनाणखञौ विशेष्येयातां को दोषः, इह च स्यातां युष्माकं छात्रो यौष्माकीणः आस्माकीनं इति, इह च न स्यातां तव छात्रास्तावकीना मामकीना इति, तस्मात्पूर्वसूत्रे खञणपरतया विशेष्येते युष्मदस्मदी, एकवचनपरतयापि ते एवात्र विशेष्येते, ततश्च वचनाद् आस्माकीनः प्रत्ययलक्षणं भवतीत्येषैव गतिः । 'अन्वर्थग्रहणमिति' । एकोऽर्थ उच्यते येन तदेकवचनम् । अत्र च पक्षे एकवचने इति प्रथमाद्विवचनान्तं न सप्तम्यन्तम् ।

"अर्द्धाद्यत्" ॥ वल्यर्थं वस्तु वालेयं, तस्यार्द्धमेकदेशः, तत्र भवं वालेयार्द्धिकम् ।

"परावराधमोत्तमपूर्वाच्च" ॥ सपूर्वपदाट्ठञ् वक्तव्य इत्यौपसङ्ख्यानिके ठञि प्राप्ते वचनम् । 'अर्द्धादिति वर्त्ततइति' । ततश्च परावराधमोत्तमेभ्यः परो योऽर्द्धशब्द इत्येवं विशेषणसामर्थ्यादेवार्द्धशब्दस्य परावरादिपूर्वता विज्ञास्यते तत्किं पूर्वग्रहणेनेति, एवमनन्तरोक्तस्य चोद्य-

ह्येवैतत्समर्थनं परिहरति । 'पराबरशब्दाविति' । 'अस्मात्तु पूर्वग्रहणा-त्यमत्यय एव भवतीति' । पूर्वविप्रतिषेधसूचनद्वारेणेति भावः ।

"दिक्पूर्वपदाट्ठञ्च" ॥ 'अणोपवाद इति' । सौत्रीं प्राप्तिम-भिप्रेत्यैतदुक्तं, सपूर्वपदाट्ठञ् वक्तव्य इत्युक्तत्वात् । 'पदग्रहणमित्यादि' । दिक्पूर्वादित्युच्यमाने स्वरूपविधिः स्यात् ततश्च दिगर्द्धे जात इत्य-त्रैव स्यात्, पदग्रहणे तु सति पद्यतेनेनेति पदं, दिशः पदं पूर्वमस्मा-दिति निपातनात्समासः ॥

"ग्रामजनपदैकदेशादञ्ठञौ" ॥ 'पौर्वार्द्धा इति' । ग्रामस्य पूर्व-स्मिन्नर्द्धे भवा इति तद्धितार्थे समासः, ततः प्रत्ययः, यद्यप्यर्द्धशब्दो ग्राममपेक्षते तथाप्यस्य नित्यसापेक्षत्वात्प्रधानत्वाच्च वृत्तिद्वयमप्यविरुद्धं समासवृत्तिस्तद्धितवृत्तिश्च, ठञ्ग्रहणं किमर्थं, नाञ् चेत्येवोच्येत, न चैवमुच्यमाने यतोऽपि समुच्चयप्रसङ्गः पूर्वसूत्रे चानुकृष्टत्वात्, तस्माद्विस्प-ष्टार्थं ठञ्ग्रहणम् ॥

"अ साम्प्रतिके" ॥ 'साम्प्रतिकं युक्तं न्याय्यमुचितं सममुच्यत इति' । कस्य चित्कश्चित्समिद्ध इत्यनेकशब्दोपादानं, सम्प्रतिशब्द इदा-नीमित्यत्रार्थे प्रसिद्धोऽपि न्याय्येऽपि वर्त्तते, दृश्यते हि अनाप्तश्चतूरात्रो-तिरिक्तः षड्रात्रोथ वा एष सम्प्रति यज्ञो यत्पञ्चरात्र इति, न न्यूनो नातिरिक्तः सम इत्यर्थः, स च प्रज्ञादौ पठ्यते, तेन साम्प्रतं सम्प्रतीति च पर्यायौ ॥

"द्वीपादनुसमुद्रं यञ्" ॥ 'अनुसमुद्रमिति' । अनुर्यत्समयेत्य-व्ययीभावः, सप्तम्यन्तं चैतद् तद्द्वीपस्य विशेषणं तदाह । 'समुद्रसमीपे योद्वीप इति' ॥

"कालाट्ठञ्" ॥ 'कालविशेषवाचिन इति' । स्वरूपस्य च पर्या-याणां च ग्रहणं न भवति सन्धिवेलादिसूत्रेण सन्धिवेलाद्यर्थेऽशीप्र भृ-तिभ्योऽवृद्धेभ्यो ऽणविधानात्, तद्धि ठञो बाधनार्थः, अर्थग्रहणे च तेभ्यष्ठञ् प्रसङ्गः, इह गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायान्मुख्यया वृत्त्या ये

काले वर्त्तन्ते मासोऽर्द्धमास इति तत एवायं प्रत्ययः स्यात् न तु गौण-वृत्त्या कालवृत्तेः, कदम्बपुष्पसाहचर्यात्कदम्ब कालः, व्रीहिपलालसाहच-र्याद्व्रीहिपलालं काल इत्यादेरित्याशङ्क्याह। 'यथाकथञ्चिदिति'। येन केन चित्प्रकारेण, एतदेव स्पष्टयति। 'गुणवृत्त्यापीति'। परत्र परशब्दप्रवृत्ति-र्यन्निबन्धनं स गुणः, तन्निबन्धना वृत्तिर्गुणवृत्तिः, एतच्च सन्धिवेलादिसूत्रेनेन कालग्रहणेन नक्षत्राणि यद्विशिनष्टि ततो लभ्यते, नहि मुख्यार्थः काल-शब्दोऽस्ति नक्षत्राणां सम्भवति पुष्यादिसमीपस्थेन हि चन्द्रमसा योगा-ल्लक्षितलक्षणया पुष्यादिशब्दानां काले वृत्तिः सैव च लुबविशेषइति लुब्विधानेनाप्यन्वाख्यायते पौषादिनिवृत्त्यर्थं न त्वेतावता कालस्तेषां मुख्योऽर्थः ॥

"श्राद्धे शरदः" ॥ 'श्राद्धइति कर्म गृह्यतइति'। श्रद्धास्मिन्विद्यत-इति प्रज्ञाश्रद्धार्चेति मत्वर्थीयो णः, श्रद्धया सम्पाद्यं पित्र्यङ्कर्म श्राद्धशब्देन उच्यतइत्यर्थः। 'न श्रद्धावान् पुरुष इति'। यदा स एव णः षष्ठ्यर्थे भवति तदा पुरुषवृत्तिः श्राद्धशब्दः, कथं पुनः शब्दसाधारण्येऽप्ययं विशेषो लभ्यतइत्याह। 'अनभिधानादिति'। 'शारदिकं श्राद्धमिति'। यद्यत्र विहितं तत्तत्र भवमिति भवे प्रत्ययः ॥

"श्वसस्तुट् च" ॥ 'तस्य चेति'। ठञः न तु श्वःशब्दस्य, कुत एतट्ठञो विधेयत्वेन प्राधान्यात्, स च तुडागम इकादेशे कृते भवतीति वेदितव्यं, ननु चान्तरङ्गत्वादिकादेशात्प्राक् ठञस्तुट् प्राप्नोति इकादे-शस्त्वङ्गाधिकारे विधानादङ्गसंज्ञायामभिनिर्वृत्तायां पश्चाद् भवन्बहिरङ्गः, तुटि च कृते प्रत्ययादेष्ठस्येकादेशविधानाद्यथा कर्मठ इत्यत्र न भवति एवमत्रापि न स्यात्, यदि पुनरयं तुक् पूर्वान्तः क्रियते, नैवं शक्यम्, इसु-सुक्तान्तात्क इति कादेशः स्यात्, तस्मादस्तु परादिरेव, कथमिकादेशः, ज्ञापकात्सिद्धं, यदयं वुञ्छणादिषु ठचश्चित्करणं करोति तज्ज्ञापयति अन्त-रङ्गेभ्योऽपि पूर्वमिकादेश एव भवतीति, यदि न स्यात्प्रत्ययसंज्ञासन्नियोग-शिष्टे प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वं स्यात्। 'ट्युट्युलावपि भवत इति'। सायंचिरमित्यादिना श्वःशब्दोऽप्ययं काल-

वाची चेति कृत्वा। 'शौवस्तिकमिति'। द्वारादित्वाद्वृद्धिप्रतिषेध ऐजागमश्च॥

"सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्"॥ 'अण्ग्रहणं वृद्धाच्छस्य बाधनार्थमिति'। असत्यणग्रहणे सन्धिवेलादिभ्यो यथाविहितमित्युच्यमाने यद्यप्यारम्भसामर्थ्यात्कालाट्ठञ् न भवति तथापि सन्धिवेलादिषु पठितात्पौर्णमासीशब्दात्स्वात्यादेश्च वृद्धाच्छः स्याद्वचनं तु कालाट्ठञो बाधनार्थं स्यात्तस्मादण्ग्रहणं कर्त्तव्यं वृद्धाच्छस्य बाधनार्थम्। 'सैाप्रातमिति'। अत सातत्यगमने सुपूर्वादज्यतिभ्यां चेतीण् प्रत्ययः, स्वात्या युक्तः काल इत्यण्, तस्य लुबविशेष इति लुप्, ततो भवाद्यर्थेऽनेनाण्, नय्वाभ्यामिति वृद्धिप्रतिषेध ऐजागमश्च, जातार्थे तु श्रविष्ठाफल्गुनीति लुकि स्वातिरिति भवति। 'तैषमिति'। अत्रापि जातार्थे पूर्ववल्लुका भवितव्यमिति भवादौ प्रत्ययः, तिष्यपुष्ययोर्नक्षत्राणि यलोप इति यलोपः। 'संवत्सरात्फलपर्वणोरिति'। सांवत्सरं फलं पर्व वा सांवत्सरिकमन्यत्॥

"प्रावृष एण्यः"॥ प्रवर्षतीति प्रावृट्, क्विपि नहिवृतीत्यादिना दीर्घः। 'प्रावृषेण्य इति'। भवार्थे प्रत्ययः, जाते तु प्रावृषष्ठपं वक्ष्यति। एषाभ्यामित्येव सिद्धे प्रत्यये णकारोच्चारणं प्रावृषेण्यमाचष्टे प्रावृषेण्यतेः क्विप् णिलोपः, लोपोव्योर्वलीति यलोपः, प्रावृषेणित्यत्र णत्वार्थम्, अन्यथा पदान्तस्येति प्रतिषेधः स्यात्॥

"वर्षाभ्यष्ठक्"॥ 'वार्षिकं वास इति'। कालात्साधुपुष्प्यत्पच्यमानेष्विति साध्वर्थे ठक्॥

"छन्दसि ठञ्"॥ 'नभश्च नभस्यश्च वार्षिकावृतू इति'। तस्येदमित्यत्रार्थे प्रत्ययः, ऋतुशब्दश्च ऋत्ववयवयोर्मासयोर्वर्त्तते, वर्षर्त्तोरेतौ मासाववयवावित्यर्थः॥

"सर्वत्राण् च तलोपश्च"॥ 'हैमनमिति'। यदा तशब्दस्य समुदायस्य लोपस्तदा ऽर्वेति प्रकृतिभावाभावस्तद्धितइति टिलोपो न भवति, यदा तु तकारस्यानेन लोपोऽकारस्य तु यस्येति लोपस्तदा तस्या-

सिद्धवदत्राभादित्यसिद्धत्वात्स्यानिवद्भावाच्च टिलोपाभावः। 'ननु च छन्दसीति नानुवर्त्तिष्यतइति'। अस्वरितत्वात्। 'सैवेत्यादि'। यासाव स्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते, किमर्थमित्याह। 'प्रपञ्चाधिक्येनेति'। ननु च तत एवास्वरितत्वात्पूर्वसूत्रेपि छन्दसीति नानुवर्त्तिष्यते तस्माद्विस्पष्टार्थमेव सर्वत्रग्रहणम्। 'भाषायामपि ठञं स्मरन्तीति'। भाष्ये तु नैतदिष्यते, तथा हि, सूत्रमिदं प्रत्याख्यातं,कथं, हेमन्तपर्यायो हेमन् शब्दोस्ति हेमवागनीगन्ति कर्णा, तस्मादेतौ हेमन्त्रशुष्यतः, यदि हेमन् प्रमीयते हेमन्तो भवतीति दर्शनात्, तत्र भाषायां हेमन्हेमन्तशब्दयोरुत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धं, छन्दसि तु हेम्नो हैमनं हेमन्तस्य हेमन्ताच्चेति ठञि हैमन्तिकं, सर्वे विधयश्छन्दसि विकल्प्यन्तइति हेमन्तशब्दादेवाणि हैमन्तमिति रूपत्रयं सिद्धमिति, सूत्रकारेण तु भाषायामेतद्वृत्तिविषयादन्यत्रर्तुवाचिनो हेमञ्छब्दस्य प्रयोगाभावात् नलोपो विहितः, यथाप्राप्तं च ऋत्वणिति, अनन्तरस्तु ठञ् सर्वत्रग्रहणस्य पूर्वत्रान्वयेनैव सर्वत्र सिद्धिरिति नासौ समुच्चीयते। 'कः पुनरनयोर्विशेष इति'। न कश्चिदिति भावः। 'त्रीणि रूपाणि भवन्तीति'। पूर्वेण ठञि एकम्, अनेनाणतलोपयोर्द्वितीयम्, ऋत्वणि यस्येति लोपे परमिति त्रीणि रूपाणि॥

"सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च"॥ इह युवोरनाकावित्यङ्गाधिकारे विहितत्वादनादेशो बहिरङ्गः, तुडागमस्तु प्रत्ययसन्नियोगेन विधानादन्तरङ्ग इति तेनैव तावद्भवितव्यं, तत्र कृते ऽनादेशो न प्राप्नोति, किं कारणम्, अङ्गस्य निमित्तं यो युस्तस्यानादेशः, तुटि त्वत्र सति त्युशब्दोङ्गस्य निमित्तं न युशब्दमात्रं, ततश्च यथा मृत्युरित्यत्रानादेशो न भवति तथात्रापि न स्यात्, यदि पुनरयं तुक् पूर्वान्तः क्रियते, नैवं शक्यं प्रातस्तनमित्यत्र हि विसर्जनीयो न स्यात्, अपदान्तत्वात्, तस्मात्परादिरेवायं कर्त्तव्यः, तत्र चानादेशो न प्राप्नोति तत्राह। 'तयोश्चादिष्टयोस्तुडागमो भवतीति'। आदिष्टयोरिति कृतादेशयोरित्यर्थः, एष चार्थ आदिष्टशब्दस्य अर्शआद्यच्प्रत्ययान्तत्वेन लभ्यते, आदिश्यतइत्यादिष्टः, स ययोरस्ति तावादिष्टौ, तयोरादिष्टयोरिति, एतच्च घकालतनेष्विति

निर्देशाल्लभ्यते, नक्तमनादिष्टयोस्तुद्विधाने तनशब्द उपपद्यते, प्रातस्तन मित्यत्र वृद्धाच्छं परत्वाद्बाधत इति नोक्तं, छस्य बाधकमपि ठञं बाधमानयोष्ट्युट्युलोरुत्कृष्टबलयोर्दुर्बलेन छेन सह सम्प्रधारणाभावात्। 'मकारान्तं पदमपर्यमिति'। स्वरादिषु पठितम्। 'अन्तकर्मण इति'। अन्तक्रियस्य, योऽन्तकर्मणीत्यस्येत्यर्थः, यद्यप्यसाववसानमात्रवाची घञन्तस्तु सायशब्दो दिवसान्तवचन इति न कालाधिकारस्य बाधशङ्का। 'प्रत्ययसन्नियोगेनेति'। अन्यत्र त्वकारान्त एव यथा सायाह्नः सायतर इति, आह च संख्याविसायपूर्वस्याह्नस्येति, । 'एकारान्तत्वमिति। निपात्यतइत्यनुषङ्गः, यत्र सप्तम्यर्थो नास्ति प्राह्णः सोऽढोम्येत्यादौ तदर्थं निपातनं जातादिके त्वर्थे घकालतनेष्वित्यलुका सिद्धम्। 'चिरपरुत्परारिभ्य इति'। चिरशब्दस्य सूत्रउपादानात् ट्युट्युलावपि भवतः, न तु क्रियत्तद्वहुषु कृञोऽज्विधानमितिवत्सत्रस्य बाधः परुत्पूर्वस्मिन्, संवत्सरे, परारि पूर्वतरे, प्रनशब्दः पुराणवचनः । 'अग्रपश्चाड्डिमजिति'। के चिदत्रादिशब्दमपि पठन्ति अग्रादिपश्चादिति, ते मध्यान्म इत्यत्रादेश्चेति वक्तव्यमिति न पठन्ति, डित्करणं पश्चादित्यत्र टिलोपार्थम्, अव्ययानां भमात्रे टिलोप इत्यस्यैवायं प्रपञ्चार्थः ॥

"विभाषा पूर्वाह्णापराह्णाभ्याम्" ॥ 'सप्तम्या अलुगिति'। ङ्याप्प्रातिपदिकादित्यत्र निरणायि सुबन्तात्तद्धितोत्पत्तिरिति तत्तत्रैव द्रष्टव्यं, यदि सुबन्तात्तद्धित उत्पद्यते कथं पूर्वाह्णतन इत्यत्र भवति तत्राह। 'यदा त्विति' ॥

"तत्र जातः" ॥ 'तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्देश्यन्तइति'। तदिदमुभयमनिर्देश्यं, कथं शेष इति लक्षणं चाधिकारश्चेत्युक्तं तत्र लक्षणतया चातुर्थं रूपमित्यादाविव जातादिष्वप्यर्थेष्वणादयः सिद्धाः, अधिकारतया च घादय इत्यर्थास्तावन्न निर्देश्याः प्रत्यपार्थेन चाभिधानस्वाभाव्येन समर्थविभक्तयोपि लभ्यन्तइति तन्निर्देशोपि न कर्त्तव्य एव, नियमार्थमिति चेन्नानिष्टत्वात्, तत्रैतस्यात्, जातादिष्वेव तद्धिता यथा स्युस्तत्रास्ते तत्र शेतइत्यादौ मा भूवन्निति जाता-

द्वयोर्वा अनुक्रम्यन्तइति, तच्च नैवम्, अनिष्टत्वात्, अन्यत्रापि हि तद्धिता दृश्यन्ते चातुर्थं रूपं श्रावणः शब्दः चातुर्दशं रक्षः दार्षदः सक्तव इति, यत्र तु नेष्यन्ते तत्रास्तइत्यादौ तत्रानभिधानान्न भविष्यन्ति, यथाङ्गुल्या खनतीत्यादौ तस्माच्चार्थो ज्ञाताद्यनुक्रमणेन, अपवादविधानार्थं तु, प्राग्वहतेष्ठगित्यादौ ठगादीनपवादांस्तत्र तत्रासङ्करेण वक्ष्यामीति अवश्यानुक्रमितव्या अर्थास्तेन्यार्थाः सन्तो योगविभागेनाणादीनामप्यर्था निर्दिश्यन्ते, विस्पष्टार्थं, यानि पुनरनपवादान्यर्थादर्शनानि यथा कृतलब्धक्रीतकुशला इति तानि शक्यान्यवक्तुम् ॥

"संज्ञायां शरदो वुञ्" ॥ 'समुदायेन चेदिति'। प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा भवतीत्यर्थः,। 'कृतलब्धक्रीतकुशला इति यावदिति'। यावच्छब्दोवधिद्योतको निपातः ॥

"अमावास्याया वा" ॥ 'एकदेशविकृतस्यानन्यत्वादिति'। अमावस्यदन्यतरस्यामित्यत्र अमापूर्वस्य वसेर्ण्यति पक्षे वृद्ध्यभावो निपात्यतइत्युक्तं, ण्यति चात उपधाया इति सामान्येन वृद्धिविधानात्, अमावास्याशब्दस्य न्याय्यत्वादवृद्ध्युपधस्तस्यैवैकदेशविकार इति भावः, ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधमधीयते तेषां दीर्घोपधस्य न स्यात्, अतद्विकारत्वात् ॥

"अ च" ॥ किमर्थो योगविभागः, न चामावास्याया वेत्युच्येत चकाराद्वुञ् वावचनादुभयोरभावे ऽणपि भविष्यति, सत्यम्, उत्तरत्र तु विकल्पानुवृत्तिः शङ्क्येत योगविभागे तु सन्धिवेलाद्यणोऽभ्यनुज्ञानाय पूर्वसूत्रे वाग्रहणसामर्थ्यादस्यापि विकल्पसिद्धेरिह वाग्रहणं नानुवर्त्यमिति व्यवधानादुत्तरत्र विकल्पस्य निवृत्तिः सिद्धा भवति ॥

"अणञौ च" ॥ योगविभागो यथासंख्यार्थः ॥

"श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्" ॥ कृत्तिकापर्यायस्य बहुलाशब्दस्यात्र द्वन्द्वैकवद्भावेन नपुंसकह्रस्वत्वेन निर्देशः, न बहूर्थोदाननिमित्तस्य बहुलाशब्दस्य श्रविष्ठा-

दिभिः साहचर्यात् । 'चित्रेति'। लुक्ङ्किलुकीति लुकि कृते पुनष्टाप् । 'गौरादिपाठान्ङीषिति'। रेवती नक्षत्रे रोहिणी नक्षत्र इति तत्र पठ्यते, न चेमौ नक्षत्रवाचिनौ जातार्थवृत्तित्वात्, तस्माद्गौरादिषु पिप्पल्यादयश्चेति पाठात्तेषां चावृत्कृतत्वादत्र ङीषित्यर्थः । 'टाबो वक्तव्याविति'। स्त्रियामित्यपेक्ष्यते, टकारो ङीबर्थः, नकारः स्वरार्थः, विधानसामर्थ्याच्चानयोर्लुङ् न भवति । 'कृत्यापि वक्तव्य इति'। अत्र च स्त्रियामिति नापेक्ष्यते ॥

"स्थानान्तगोशालखरशालाच्च" ॥ 'गोशालेति'। विभाषा सेनेति नपुंसकत्वे ह्रस्वत्वं, तत्साहचर्यात्खरशालस्यापि नपुंसकस्य ग्रहणं न तु द्वन्द्वैकवद्भावेन ह्रस्वत्वम्, एकादेशस्य पूर्वं प्रत्यन्तवद्भावाल्लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव, यद्यपि टाबन्तयोरपि पाठे एकदेशविकृतस्यानन्यत्वान्नपुंसकाभ्यामपि लुक् सिद्ध्यति, लाघवार्थं तु ह्रस्वस्य पाठः ॥

"वत्सशालाभिजिदश्वयुक्छतभिषजो वा" ॥ 'वत्सशालेति'। ह्रस्वान्तस्य दीर्घान्तस्य वा ग्रहणम् । 'बहुलग्रहणस्यैवायं प्रपञ्च इति'। अश्वयुक्शतभिषक्शब्दावभिप्रेत्यैतदुक्तम् अन्ययोरनक्षत्रवाचित्वात् । 'अभिजिदिति'। यद्यपि नक्षत्रमप्यस्ति अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामिति मुहूर्त्तमप्यस्ति ॥

"नक्षत्रेभ्यो बहुलम्" ॥ वाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लुग्व्यवस्थायां सिद्धायां बहुलवचनं क्वचिदन्यदेवेत्येतदर्थं, तेन टाबो वक्तव्यावित्यादि सिद्धं भवति । 'रोहिण इति'। चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानमित्येतत्तु स्त्रियां नियमेन लुगर्थेन तु स्त्रियावमे लुगर्थम् ।

"कृतलब्धक्रीतकुशलाः" । 'यदत्र कृतं जातमपि तत्तत्र भवतीति'। यद्यपि जातं सर्वं कृतं न भवति स्वयं जातस्यापि भावात्, कृतं तु सर्वं जातं भवति, नह्यजननस्वभावं क्रियते यथा व्योमेति भावः । 'यच्च क्रीतं लब्धमपि तत्तत्र भवतीति'। अत्रापि लब्धं सर्वं क्रीतं न भवति दाना-

द्विनापि लाभसम्भवात् क्रीतं तु लब्धमेव क्रयस्यापि लाभहेतुत्वादित्यर्थः । 'तत्किमर्थं भेदेनोपादानं क्रियतइति' । जातलब्धाभ्यामेव गतमिति प्रश्नः । 'शब्दार्थस्य भिन्नत्वादिति' । परव्यापारोपहितं रूपं कृतमित्युच्यते तद्रहितं तु जातमिति, तथा मूल्यप्रदानरूपो यः स्वीकर्त्तृव्यापारस्तदुपहितं रूपं क्रीतमित्युच्यते तद्रहितं तु लब्धमिति, तत्र यथा विक्लिन्न ओदनःपक्व ओदन इति शब्दार्थाभेदस्तथात्रापीत्यर्थः । एतदेवस्पष्टयति । 'वस्तुमात्रेणेति' । वस्तुत इत्यर्थः, एतदुक्तं भवति, क्रीतं वस्तुतो लब्धं भवतीत्येतावत्, शब्देन तु रूपान्तरमभिधीयते, एवं कृतमपि वस्तुतो जातं भवति शब्देन तु रूपान्तरमभिधीयतइति द्रष्टव्यम् । उपसंहरति 'शब्दार्थस्तु भिन्नत एवेति' । तत्राक्रियमाणे कृतक्रीतयोरुपादाने यथा क्वायं घटः कृतः क्रीतो वेति पृष्टे स्रुघ्ने जातो लब्ध इति चोत्तरं न प्रयुज्यते, तथा तद्धितोपि न स्यात्, तस्मात्कृतक्रीतयोस्तद्धितेनाभिधानाय भेदेनोपादानमिति ॥

"प्रायभवः" ॥ प्रायेण भव', कर्तृकरणे कृता बहुलमिति समासः । 'तत्र भवेन कृतत्वादिति' । यत्प्रायभव इत्यस्य साध्यं तस्य तत्र भव इत्यनेनैव साधितत्वादित्यर्थः, यो हि राष्ट्रे प्रायेण भवति तत्रैवासौ भवतीति तत्र भव इत्येव सिद्धं, शङ्कते । 'अनित्यभवः प्रायभव इति चेदिति' । यस्तत्र कदाचिद्भवति कदाचिन्न स प्रायभवः, यस्य तु नियत आधाराधेयभावः स तत्र भव इति पृथगुपादानसामर्थ्याद्भेद आश्रीयतइति यदुच्येतेत्यर्थः, निराकरोति । 'मुक्तसंशयेन तुल्यमिति' । यं भवान्मुक्तसंशयं न्याय्यं तत्र भव उदाहरणं मन्यते, स्रौघ्नो देवदत्त इति तेनैव तुल्यं सोपि हि कदाचित्तस्मादुदकदेशादभिनिष्क्रामति तत्र चेद्युक्ता तत्र भवता इहापि युक्ता दृश्यताम् । अथैतदपि प्रायभवस्योदाहरणं स्रौघ्नो देवदत्त इति तत्र भवनस्य किमुदाहरणं तत्र नित्यभवः स्रौघ्नः प्राकार इति यद्येवं तत्र भव इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते स तस्मिन्दृष्टोपचारे न स्यात्, दृश्यते च ॥

वानरोहं महाभागे दूतो रामस्य धर्मतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥

इति। तस्मात्तत्र भवे सामान्ये प्रायभवस्य विशेषस्यान्तर्भावादनर्थकं प्रायग्रहणम्। इदं तर्हि प्रयोजनम् उपजानूपकर्णोपनीवेष्टक् प्रायभवे यथा स्याचित्यभवे मा भूत्, उपजानु भवं गच्छति, अथेदानीं जानुसमीपस्थशरीरावयववाचिन उपजानुशब्दात्तत्र भव इति प्रकृत्य शरीरावयवाच्चेति यत्कस्मान्न भवति, अनभिधानात्, ठगपि तर्ह्यनभिधानादेव न भविष्यति, तदेवं स्थितमेतत्प्रायग्रहणमनर्थकं तत्र भवेन कृतत्वादिति॥

"उपजानूपकर्णोपनीवेष्टक्"॥ उपजान्वादयः सामीप्येऽव्ययीभावाः, समाहारद्वन्द्वस्य सौत्रः पुंल्लिङ्गनिर्देशः॥

"सम्भूते"॥ 'अवक्लृप्तिः प्रमाणानतिरेकश्चेति'। सकृत्प्रयुक्तस्याप्यनेकार्थत्वमविरुद्धं तन्त्राद्याश्रयणादिति भावः, तत्रावक्लृप्तिः सम्भावना, इदमेवं भवेदिति बुद्धिः, प्रमाणानतिरेक आधारपरिमाणादाधेयपरिमाणस्यानतिरेकता, यस्यां सत्यां सर्वमाधेयमाधारेऽनुप्रविशति। 'स्रौघ्न इति'। देवदत्त इदानीं स्रुघ्ने सम्भाव्यत इत्यर्थः, स्रुघ्नप्रमाणाद्वानतिरिच्यते सेनादिकोऽर्थ इत्यर्थः॥

"कोशाड्ढञ्"॥ 'कौशेयं वस्त्रमिति'। ननु च न वस्त्रं कोशे सम्भवति वस्त्रदशायां तत्कारणस्य कोशस्य परावृत्तत्वात्, न च कोशान्तरे वस्त्रस्य सम्भवो, न च तत्रेष्यते, तस्माद्विकारे कोशाड्ढञ् सम्भूते ह्यर्थानुपपत्तिरिति वार्त्तिकमेव शरणं, तस्य विकार इत्यत्र प्रकरणे एतया ढञित्यस्यानन्तरं कोशाच्चेति वक्तव्यमित्यर्थः। 'अर्थानुपपत्तिरिति'। कौशेयशब्दस्य योऽर्थो लौकिकः सूत्रवस्त्रलक्षणस्तस्यानुपपत्तिः स्यात्, लौकिकोऽर्थः शास्त्रेण नानुसृतः स्यात्, कृमिरेव त्वभिधेयः प्राप्नोति स हि कोशे सम्भवति, किं चाविशेषाभिधानात्खड्गकोशादपि प्रत्ययः प्रसज्येत इत्यत आह। 'रूढिरेषेति'। रूढिशब्देषु नावश्यमवयवार्थोऽन्वेष्यः, यथा तैलपायिकादिष्विति मन्यते। सूत्रकारेण तु सत्कार्यवादाश्रयेण सम्भूते प्रत्ययो विहितः, तत्र हि कारणदशायामपि कार्यस्य सत्त्वात् तत्र तत्सम्भवति तदनुपपन्नं, कार्यकारणयोर्हि तादात्म्यमभिसम्बन्धो न त्वाधाराधेयभावः॥

"कालात्साधुपुष्प्यत्पच्यमानेषु" ॥ 'कालविशेषवाचिभ्य इति' स्वरूपग्रहणं तु न भवति उत्तरत्राश्वयुज्यादीनामनेन कालशब्देन विशेषणात् ॥

"उप्ते च" ॥ सूत्रे भूतकालस्याविवक्षां दर्शयति। 'हेमन्ते उप्यन्त इति'। 'योगविभाग उत्तरार्थ इति'। उत्तरयोगयोरुप्त एव प्रत्ययो यथा स्यात् साध्वादिषु मा भूत् ॥

"आश्वयुज्या वुञ्" ॥ वुञो ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च, अश्वयुग्भ्यां युक्तेति पाठः, अश्वयुजोर्द्वित्वात् नमोऽश्विभ्यामश्वयुग्भ्यामिति दर्शनात्, अश्विनीपर्याय इति पाठः, तारा अश्वयुगश्विनी-त्यमरसिंहः, अश्वनीपर्याय इति प्रसिद्धः पाठः, तत्राशुपूर्वादश्नोतेरौणादिक इन् प्रत्ययः, पृषोदरादित्वादादेर्ह्रस्वः ॥

"कलाप्यश्वत्थयवबुसाद्वुन्" ॥ मयूरादिषु प्रसिद्धानां कलाप्यादीनां शब्दानां काले वृत्तेर्न सम्भवति तत्कथं कालविशेषवाचिभ्य इत्युक्तमत आह। 'कलाप्यादयः शब्दा इति'। अश्वत्थेन वृक्षेण कालस्य सम्बन्धोऽव्यभिचारादविशेषणमिति फले लुगिति लुगन्तोऽश्वत्थशब्द इत्याह। 'यस्मिन्नश्वत्थाः फलन्तीति'। अपकृष्टो यवो यवबुसं जात्यन्तरं वा यवादिवत्, यवानामेव वा बुसं यवबुसम् ॥

"ग्रीष्मावरसमाद्वुञ्" ॥ 'अवरसममिति'। विशेषणसमासः, न चावरशब्दो दिग्वाची येन दिक्संख्ये सञ्ज्ञायामिति नियमात्समासो न स्यात्। 'अवरसकमिति'। आगामिनां संवत्सराणामाद्यवत्सरे देयमित्यर्थः। अपर आह। अतीते वत्सरे देयं यदद्यापि न दत्तं तदवरसकमिति ॥

"संवत्सराग्रहायणीभ्यां ठञ्च" ॥ 'वेति वक्तव्यमिति'। वुञि विकल्पिते पक्षे यथा प्राग्दीव्यतोऽण् भविष्यतीति मन्यते। 'ठञ्ग्रहणमित्यादि'। अमति ठञ्ग्रहणे सन्धिवेलादिषु संवत्सरात्फलपर्वणोरिति पाठात्फले ऋणत्वेन विवक्षिते वुञा मुक्ते ऽणेव स्यात् ठञ्ग्रहणात्तु ठञेव भवति ॥

"व्याहरति मृगः" ॥ व्याहरति शब्दायते ॥

"तदस्य सोढम्" ॥ अस्येति नेयं सोढापेक्षया कर्त्तरि षष्ठी न

लोकाव्ययेति प्रतिषेधात्, किं तर्हि कर्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी । 'निशासहचरितमध्ययनमिति' । कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्तेरत्र सूत्रे ग्रहणमिति दर्शयति ॥

"तत्र भवः" ॥ 'कालादिति निवृत्तमिति' । तत्र जात इति प्रकृतं तत्रग्रहणं कालाधिकारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह तत्रग्रहणं कृतं सप्तम्यर्थमात्रं यथा गृह्येत कालसम्बन्धविशिष्टः सप्तम्यर्थो मा ग्राहीत्येवमर्थमिति भावः । ननु च प्रकृतं तत्रग्रहणं पूर्वसूत्रे तदिति प्रथमया समर्थविभक्त्या व्यवहितं, नेत्याह, शक्यं हि तदन्यत्रापि पठितुम् ॥

"दिगादिभ्यो यत्" ॥ 'सेनामुख्यमिति' । यदन्तस्य सेनाशब्देन षष्ठीसमासो न तु सेनामुख्यशब्दात्प्रत्ययः, तदन्तविध्यभावात् ॥

"शरीरावयवाच्च" ॥ 'शरीरं प्राणिकाय इति' । व्याकरणस्य शरीरमित्यादिकस्तु प्रयोगो गौणः । 'अणोपवाद इति' । वृद्धात्तु छं परत्वाद्बाधते, पादे भवं पद्यं, पद्यत्यतदर्थ इति पद्भावः, नासिकायां भवं नस्यं नस् नासिकाया यत्तस्क्षुद्रेष्विति नस्भावः, कथं वेगो जङ्घोरस्य इति, कथं च न स्यात्, न शरीरावयवसमुदायः शरीरावयवग्रहणेन गृह्यते न च तदन्तविधिरस्ति, निरङ्कुशाः कवयः ॥

"दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" ॥ दृतिश्चर्मविकारः शरीरावयवश्च, कुक्षिशब्दो धूमादिः वस्तिर्नाभेरधःशरीरावयवः, आहेयं विषादि । 'अस्तिशब्दः प्रातिपदिकमिति' । विभक्तिप्रतिरूपं निपातसञ्ज्ञकं तच्च तिङन्तेन समानार्थम् अस्तिक्षीरा गौरिति, धनवचनं च अस्तिमानिति ॥

"ग्रीवाभ्योऽण्च" ॥ 'धमनीवचन इति' । धमनीसङ्घातवचन इत्यर्थः, स च यदोद्भूतावयवभेदे सङ्घाते वर्तते तदा बहुवचनं, यदा तु तिरोहितावयवभेदे सङ्घाते वर्तते तदैकवचनान्तः प्रयोगः ॥

"गम्भीराञ्ञ्यः" ॥ 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यमिति' । प्राग्दीव्यतइत्यत्रोक्तं देवस्य यञञौ, बहिषष्टिलोपश्चेति, तच्चावश्यं वक्त-

व्यम् अर्थान्तरेष्वपि यथा स्यादिति तस्यैव प्रपञ्चार्थमिह तु बहिर्देव योर्ग्रहणम् ॥

"अव्ययीभावाच्च" ॥ 'किं तर्हि परिमुखादेरिति'। कथं पुनः सामान्योक्तावयं विशेषो लभ्यतइत्याह। 'परिमुखादीनां चेति'। चशब्दो हेतौ, दिगादेरनन्तरं परिमुखादिगणः पठ्यते, तस्य नान्यत्प्रयोजनं सम्भवति अव्ययीभावग्रहणस्य, परिमुखादिविशेषणतयान्वयसम्भवात्, तस्मात्परिमुखादेरेव भविष्यति न सर्वस्मादव्ययीभावात्, यद्येवं परिमुखादेरित्येव वक्तव्यमत आह। 'तेषामेवेति'। परिमुखादेरित्युच्यमाने बहुव्रीहितत्पुरुषेभ्योपि ञ्यप्रत्ययः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योणेव भवति, उत्तरार्थं चावश्यमव्ययीभावग्रहणं कर्त्तव्यं तत्र ये परिपूर्वास्तत्र यदि वर्जनं गम्यते ततोऽपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः, अथ सर्वतो भावस्ततोस्मादेव निपातनादव्ययीभावः, उपपूर्वेषु सामीप्ये ऽनुपूर्वेष्वनुर्यत्समया यस्य चायामः पश्चादर्थे यदव्ययमिति च यथाभिधानं समासः ॥

"अन्तःपूर्वपदाट्ठञ्" ॥ 'आध्यात्मिकमिति'। अनश्चेति टच् समासान्तः। 'अधिदैविकमाधिभौतिकमिति'। अनुशतिकादित्वादुभयपदवृद्धिः। 'अध्यात्मादिराकृतिगण इति'। एवं च समनशब्दादित्यादिरस्यैव प्रपञ्चः। 'ऊर्ध्वशब्देन समानार्थ ऊर्ध्वंशब्द इति'। स चैतद्वृत्तिविषयएव, अपर आह, ठञ्सन्नियोगेन दमशब्द उत्तरे ऊर्ध्वशब्दस्यैव मान्तत्वं निपात्यतइति। 'उर्ध्वदैहाच्चेति'। 'नात्र मान्तत्वम्'। 'ऐहलौकिक इति'। पूर्ववदुभयपदवृद्धिः। 'मुखतीयं पार्श्वतीयमिति'। मुखपार्श्वशब्दाभ्यां सप्तम्यान्ताभ्यामाद्यादित्वात्तसिः, ततश्छः, अव्ययत्वा ट्टिलोपः अयं गहादिपाठस्यैव प्रपञ्चः, एतेन परं व्याख्यातम्। 'मध्यमीयाविति'। गहादिषु मध्यमध्यमं चाण चरणइति यत्पठितं तत्र पृथिवीमध्यवाची मध्यशब्दो गृह्यतइत्युक्तं, भवार्थे तु ततोन्यत्रापि मध्यमीयमिति यथा स्यादिति मीयप्रत्ययवचनं जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति भवति न मध्यान्तरवाचिनः, तथा गहादिपाठेन पृथिवीमध्यं निवास एषामित्यस्मिन्नेवार्थे माध्यमा इति सिध्यति मध्यान्तरवाचिनो भवार्थेपि यथा

स्यादिति मण्प्रत्यय उक्तः । 'मध्यो मध्यन्दिनञ् चास्मादिति' । मध्यशब्द-मध्यभावमापद्यते दिनञ् चास्मात्प्रत्ययो भवतीत्यर्थः । 'स्याम्न इति' । स्यामन्शब्दान्तादित्यर्थः । "अश्वत्थामेति' । अश्वस्येव स्याम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, ततो भवार्थे स्याम्नोकार इत्य-कारः, तस्यानेन लुक् । 'वृकाजिन इति' । अणो लुक् । 'समानस्य तदा-देश्चेति' । आनन्तर्यलक्षणा षष्ठी । 'अध्यात्मादिष्विति' । विषयस-प्तमी । 'ऊर्ध्वं दमाच्च देहाच्चेति' । ऊर्ध्वशब्दाद्दमशब्दान्ताच्चेत्यर्थः । ऊर्ध्वपूर्वादेव च देहान्तादिष्यते । उक्तं हि प्राक् उर्ध्वदेहाच्च और्ध्वदेहि-कमिति, स्याम्नो लुगजिनात्तथेति पाठे उभयत्रापि तदन्तविधिः ॥

"अशब्दे यत्खावन्यतरस्याम्" ॥ 'वासुदेववर्गीय इति' । वृद्धा-च्छ इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः ॥

"तस्य व्याख्यानइति च व्याख्यातव्यनाम्नः" ॥ 'तस्येति षष्ठी समर्थादिति' । ननु चाधिकारार्थीयमिति वक्ष्यति, भवव्याख्यानयोर्युगपदधि-कारापवादविधानार्थः, कृतनिर्देशौ हि ताविति, तत्किमित्यत्र यथा-विहितविधानार्थत्वं व्याख्यायते, उच्यते, तात्पर्यतोपवादविधानायाधिका-रस्यानुषङ्गिकेऽणादिविधानार्थत्वे को दोष इति मन्यते, अगतिकगतिर्हि विशेषविवक्षायां सामान्याश्रयः प्रत्ययः, अत एव कृतलब्धक्रीतकुशला इत्यादीन्यनपवादान्यर्थादेशनानि भवन्ति । 'तत्र भवे चेति' । अयमनुवादः, एतस्मिन्नेव विशेषे तत्र भव इति विहितत्वात् । ननु च व्याख्यानस्य प्रत्य-यार्थस्य समीपे श्रूयमाणश्चशब्दस्तत्समानजातीयस्यैव प्रत्ययार्थस्य समु-च्चयं करोति न समर्थविभक्तेः, यथा केदाराद्यञ् चेति प्रत्ययसमीपवर्तिना प्रत्यय एव समुच्चीयते न प्रकृतिः, ठञ्कवचिनश्चेति प्रकृतिरेव न प्रत्ययः, ततश्चेह तस्येत्युपादानाद्भवार्थेपि षष्ठी समर्थादेव प्रत्ययो युक्त-स्तत्राह । 'वाक्यार्थसमीप इति' । इहेतिकरणः क्रियते, प्रकृतं वाक्यार्थं प्रत्यवमर्शामीति, प्रत्यवमर्शस्य च प्रयोजनं तत्तुल्यजातियस्यैव समुच्चयो यथा स्यादित्येतदेवेति भावः, एतमेव च न्यायं निरूपयितुं पूर्वं तत्र भवे-चेत्यनुवादः कृतः । 'व्याख्यातव्यनाम्न इति किमिति' । व्याख्यानशब्दस्य

सम्बन्धिशब्दत्वाद्गम्यत इति व्याख्यानं, तदेव तस्येत्यनेन निर्दिष्टमिति गम्यत इति मत्वा प्रश्नः। 'पाटलिपुत्रं सुकोशलया व्याख्याय इति'। नेयं कर्त्तरि तृतीया किं तर्हि करणे सुकोशलया करणभूतया पुरुषैर्व्याख्यायत इत्यर्थः। कथमित्याह। 'एवं सन्निवेशमिति'। तादृशो हि पाटलिपुत्रे प्राकारादिसन्निवेशो यादृशः सुकोशलायां तेन तया तद्व्याख्यायते, यद्येवं तस्य व्याख्यातव्यस्य पाटलिपुत्रशब्दो नामापि भवति तत्कथं प्रत्युदाहरणमत आह। 'न त्विति'। यदिह व्याख्यातव्यमभिप्रेतं न तस्य नाम भवतीत्यर्थः। किं पुनरिहाभिप्रेतं यद्व्याख्यातव्यतया लोके प्रसिद्धं ग्रन्थात्मकम्, एतदर्थमेव हि व्याख्यातव्यनामग्रहणं कृतं, व्याख्यातव्यमात्रस्य व्याख्यानशब्दस्य सम्बन्धिशब्दत्वेनैवाक्षेपसिद्धेः। ननु च भवार्थमेतत्स्यात् नहि तत्राक्षेपतो व्याख्यातव्यस्य लाभ एवं तर्हि नामग्रहणं प्रसिद्धयुपसंग्रहार्थं भविष्यति। 'भवव्याख्यानयोरिति'। नात्रायमर्थः, योयं भवव्याख्यानयोर्युगपदधिकारः सोऽपवादविधानार्थ इति, पूर्वमधिकारत्वस्याव्याख्यातत्वात्तस्माद्भवव्याख्यानयोर्युगपदधिकारोयं न त्वणादीनामर्थनिर्देश इत्यर्थः। किमर्थोधिकारस्तत्राह। 'अपवादविधानार्थ इति'। अणादीनां चायमर्थनिर्देशः कस्मान्न भवति तत्राह। 'कृतनिर्देशौ हि ताविति'। एकस्तत्र भव इति अपरस्तस्येदमित्येवं कृतनिर्देशौ हि तावर्थौ, तस्मात्तदर्थमेतन्न भवति पूर्वं त्वधिकारार्थतयावश्यकर्त्तव्यस्यानुषङ्गिकमर्थनिर्देशार्थमिदमिति व्याख्यातम् ॥

"बह्वचोऽन्तोदात्ताट्ठञ्" ॥ 'अणोपवाद इति'। छट्ठाच्छं तु परत्वाद्बाधते, सामस्तं नाम शास्त्रं तस्य व्याख्यानं सामस्तिकं षत्वादिविधायकं शास्त्रं षत्वादिशब्देनोच्यते नतो ऽनुदात्तः, अनत उदात्तः। 'अन्तोदात्ताः प्रकृतय इति'। उदाहृतयोर्द्वित्वेप्येवं जातीयापरप्रकृत्यपेक्षं, बहुवचनं ताश्च कृत्स्वरत्वादयः। 'गतिस्वरेणेति'। गतिरनन्तर इत्यनेन। उदात्त इति वर्णग्रहणं तेन सिद्धस्तदन्तविधिः, यथा वर्णादनुदात्तादित्यत्र, तस्मादन्तग्रहणं विस्पष्टार्थम् ॥

मनविधिपरत्वम् । एवं स्वपक्षसाधनत्वेन कारणवाक्यानि श्रीपुरुषसूक्तं नारायणानुवाकवाक्यं चोदाहृतम् । अयं क्रमो भगवद्यामुनाचार्यानुरोधेन कृतः, तत्प्रणीते *स्तोत्रे वांविदमे इत्यादिना कारणवाक्यानि विवक्षितानि, वैदिकः क इत्यनेन श्रीपुरुषसूक्तं विवक्षितं, वैदिको–वेदाध्यायी–इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते इति वचनात्, न हि कश्चिदपि वैदिकः श्रीपुरुषसूक्तानध्यायीति वैदिक–शब्दाभिप्रायः, एवं–ब्रह्मा† शिवः शतमख इति नारायणानुवाकोपसंहारवाक्यस्मरणेन नारायणानुवाको विवक्षितः, नारायणेति संबुद्ध्या नारायणानुवाकं स्मारयन् कारणवाक्यानां श्रीपुरुषसूक्तस्य च नारायणपरत्वं सूचयति, अतस्तदनुरोधेन अयं क्रम उक्तः । अत्र कठवल्ल्यादिश्रुतयो ऽप्यनुसन्धेयाः, कठवल्ल्यां सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये‡ इत्यारभ्य सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति ह्युक्तम्

अस्मिन्वाक्ये प्रतिपादितस्य सर्वस्मात्परत्वेनावस्थितस्य ब्रह्मणो वाक्यान्तरेषु ब्रह्मविदाप्नोति परमित्यादिषूपासनादि विधीयते, अतः प्राणं मनसि सह करणैरित्यादिवाक्यं सर्वकारणे परमात्मनि करणप्राणादि सर्वं विकारजातमुपसंहृत्य तमेव परमात्मानं सर्वस्येशानं ध्यायीतेति परब्रह्मभूतनारायणस्यैव ध्यानं विदधाति ।

एवं सर्वे वेदा यत्पदमामनन्तीति सर्ववेदवेद्यवस्तुकथनोपक्रमेण अनन्यपरं हि तत्प्रकरणम् । तथा मैत्रा§यणीयोपनिषदि च–एवं सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धामेति ध्रुवत्वाचलत्वादि-

* आलुवन्दारस्तवे ।

† अयमपि आलुवन्दारस्तवस्थः श्लोकः ।

‡ ब्रवीम्योम् इति पा० ।

§ मैत्रावरुणीयोपनिषदीति पा०

विशिष्टतया वेदान्तोदितस्य वस्तुनो विष्णुसंज्ञत्वं विधीयते । अथ पूर्वपक्षे उदाहृतश्रुतीर्व्याचष्टे अत इत्यादिना, अतः कारणवाक्यैः श्रीपुरुषसूक्तेन अनन्यार्थनारायणानुवाकादिभिश्च नारायणस्य परमकारणत्वेन प्रतिपन्नत्वाद् ब्रह्मशिवयोस्तत्सृज्यत्व–तत्संहार्यत्वादिश्रवणाच्चेत्यर्थः । प्राणमित्यादिश्रुतेरर्थं संग्रहेणाह सर्वकारणेति, उपसंहृत्य परमात्मनि विकारजातोपसंहारमनुसन्धायेत्यर्थः । सर्वस्येशानं ध्यायीतेति सर्वस्य वशीति पूरकवाक्यान्वयप्रदर्शनं, तदर्थमाह परेति, ईशानत्वादिकं नारायणस्यैव मुख्यमितीशानादिशब्दास्तस्यैव वाचका इत्याह पतिमिति, सर्वैश्वर्य इत्यादिवाक्यस्यार्थमाह अत इति, विश्वाख्यं विश्वशम्भुवमिति नारायणवाचित्वेन शम्भु–शब्दस्य प्रयोगदर्शनाच्छम्भुः स्वयंभूर्द्रुहिण इत्यर्थान्तरविषयत्वेन निघण्टुदर्शनाच्चेति भावः । शम्भुराकाशमध्ये ध्येय इति वाक्ये कारणत्वमपि विधेयं स्यादित्यत्राह–

**पतिं विश्वस्येति, न तस्येशे कश्चन, इति च तस्यैव सर्वस्येशानता प्रतिपादिता, अत एव सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येय इति**

कश्चेति, कारणत्वानुवादेन ध्येयताविधिपरमिदं वाक्यं प्रतीयते कश्च ध्येयः कारणं तु ध्येय इति प्रश्नप्रतिवचनाभ्यां, न हि किं कारणत्यत्र प्रश्नस्येदङ्कारणमिति प्रतिवचनं श्रूयते, तस्मात् कारणत्वानुवादेन ध्येयत्वं विधीयत इति निश्चीयते, कारणत्वानुवादश्च तत्प्रतिपादकवाक्यान्तरसापेक्षः अतस्तदानुगुण्येन अनुवादः कर्तव्य इति अनुवादरूपत्वात् कारण*स्यैव ध्येयत्वविधिरित्यर्थः । अनुवादरूपत्वमस्तु तथाऽपि शिव एव कारणत्वेनानूद्यतामित्यत्राह तस्यैवेति, परमकारणता शम्भुशब्दवाच्यता चेति, अयमभिप्रायः अनुवादरूपत्वेन वाक्यान्तरसापेक्षत्वात् तद्विरुद्धार्थप्रतिपादनायोगात्, नारायणस्यैव ध्येयत्वविधिः । कारणत्व विधीयतां नाम तथाऽपि सद्ब्रह्मात्मादिशब्दवच्छम्भु–शब्दस्य सा-

* नारायणस्यैवेति पा· ।

मान्यशब्दत्वान्नारायण एव पर्यवसानं न्याय्यमिति शिवादिशब्दानां नारायण-शब्दापेक्षया साधारणत्वाद्बहुरूपनियमस्तु नारायणादिशब्दनिर्देशात् तत्राप्येकैकत्र नारायण-शब्दाभ्यासाच्च तदानुगुण्येनार्थो वर्णनीय इति चात्रानुसन्धेयम् । ततो यदुत्तरतरमित्यादिश्रुतेरर्थमाह यदपीत्यादिना, तदपि प्रत्युक्तमित्यन्वयः ततो यदुत्तरमिति वाक्यात्पूर्वं यस्मात्परमित्यादिवाक्यान्तरस्यार्थं वक्तुमन्वयमाह यस्मादपरमिति, यस्मादिति पञ्चम्यन्तपदेन पर-शब्दस्यान्वये सति समनिषेधो-

**नारायणस्यैव परमकारणस्य शम्भु-शब्दवाच्यस्य ध्यानं विधीयते, कश्च ध्येय इत्यारभ्य कारणं तु ध्येय इति कार्यस्याध्येयतापूर्वककारणैकध्येयतापरत्वाद्वाक्यस्य, तस्यैव नारायणस्य परमकारणता शम्भु-शब्दवाच्यता च परमकारणप्रतिपादनैकपरे नारायणानुवाक एव प्रतिपन्नेति तद्विरोध्यर्थान्तरपरिकल्पनं कारणस्यैव**

न कृतः स्यात्, अपर-शब्देन पञ्चम्यन्तपदस्यान्वये सति समाभ्यधिकोभयनिषेधः कृतः स्यात्, तथा सति नान्यः पन्था इति पुरुषवेदनस्यैव मोक्षोपायत्वप्रतिज्ञानस्य प्राकरणिकस्याप्यानुगुण्यं पञ्चम्यन्तपदस्यान्य-शब्देनान्वयश्च श्रुतिस्मृतिषु दृश्यत इति नेत्येतस्मादन्यत्परमस्ति तस्मा द्वान्यच परं किञ्चनास एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यदित्यादिषु न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुत्यैकार्थ्यं च । यस्मात्परमित्यन्वयेऽपि पुरुषादन्यस्य परत्वशङ्कोऽनुपपन्न एव । केश्चिदेवं व्याख्यातं परमित्युत्कृष्टनिषेधः अपरम् इति समनिषेध इति, तदयुक्तम् अन्यपर्यायस्यापर-शब्दस्य समवाचित्वा*भावात् समानविभक्त्यन्तपदयोः स्वतःप्राप्तसामानाधिकरण्यभङ्गात् व्यधिकरणत्वसूचकशब्दाद्यभावाच्च तस्माद्यथोक्त एवार्थः । यस्मान्नाणीयो न ज्यायोऽस्ति

* समवाचित्वास्वारस्यादिति पा० ।

कश्चिदित्येतद्व्याचष्टे अणीयस्त्वमिति, ज्यायस्त्वमिति, ज्यायस्त्वं धारकत्वं नियन्तृत्वादिगुणैरुत्कृष्टत्वमत्र च नियन्तृत्वेन ज्यायस्त्वं विवक्षितं प्रशासितारं सर्वेषामणीयांसमणीयसामित्यादिवचनानुसारात् यस्मात्परं नापरमित्यादिवाक्ये

ध्येयत्वेन* विधिवाक्ये न युज्यते । यदपि ततो यदुत्तरतरमित्यत्र पुरुषादन्यस्य परतरत्वं प्रतीयत इत्यभ्यधायि तदपि यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् यस्मादपरं यस्मादन्यत् किञ्चिदपि परं नास्ति केनापि प्रकारेण पुरुषव्यतिरिक्तस्य परत्वं नास्तीत्यर्थः, अणीयस्त्वं सूक्ष्मत्वं, ज्यायस्त्वं—सर्वेश्वरत्वं सर्वव्यापित्वात् सर्वेश्वरत्वादस्य, एतद्व्यतिरिक्तस्य वा कस्याप्यणीयस्त्वं ज्यायस्त्वं च नास्तीत्यर्थः । यस्मान्नाणीयो न ज्यायोऽस्ति कश्चिदिति पुरुषादन्यस्य कस्यापि ज्यायस्त्वं निषिद्धमिति

पुरुषादन्यस्य परत्वनिषेधात् तद्विरुद्धं तदन्यस्याधिकत्वप्रतिपादनपरत्वं व्याहतमित्यर्थः । यस्मात्परमिति वाक्ये परत्वनिषेधो वक्ष्यमाणपरव्यतिरिक्तविषयः गोबलीवर्दन्यायादिति शङ्कायाम् अनन्यथासिद्धस्यैव सङ्कोचकत्वात् ततो यदुत्तरतरमिति वाक्यस्य चान्यथासिद्धत्वाद् यस्मात्परमिति वाक्ये पर-शब्दो न सङ्कोचयितव्य इति सिद्धान्तिनो मतमभिप्रेत्य अस्य वाक्यस्य अन्यथा निर्वाहः कथमित्याह कस्तर्हीति, अस्यार्थं वक्तुं प्रकरणं योजयति अस्येति, उक्तप्रकरणवाक्यानुगुण्येन ततो यदुत्तरतरमिति वाक्यस्यार्थमाह यत इति, अरूपं—कर्मकृतप्रकृतिसम्बन्धरहितम् । अनामयं—तत्कृतसुखदुःखादिरहितमित्यर्थः । तत इति पञ्चम्यन्तपदं हेत्वर्थपरत्वेन योजितम् । अन्यथा दूषणमाह अन्यथेति,

* ध्येयत्वविधिवाक्ये इति पा० ।

तस्मादन्यस्य परत्वं न युज्यते इति प्रत्युक्तं, कस्तर्ह्यस्य वाक्यस्यार्थः—अस्य प्रकरणस्योपक्रमे तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनायेति पुरुषवेदनस्यामृतत्वे* हेतुतां तद्व्यतिरिक्तस्यापथतां च प्रतिज्ञाय—यस्मात् परं नापरमस्ति किञ्चित्तेनेदं पूर्णं पुरुषेण सर्वमित्येतदन्तेन पुरुषस्य सर्वस्मात् परत्वं प्रतिपादितं, यतः पुरुषतत्त्वमेवोत्तरतरं ततो यदुत्तरतरं पुरुषतत्त्वं तदेवारूपमनामयं ये एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्तीति पुरुषवेदनस्यामृतत्वहेतुत्वं तदितरस्य चापथत्वं प्रतिज्ञातं सहेतुकमुपसंहृतम्, अन्यथोपक्रमगतप्रतिज्ञाभ्यां विरुध्यते पुरुषस्यैव शुद्धिगुणयोगेन शिव-शब्दाभिधेयत्वं शाश्वतं शिवमच्युतमित्यादिना ज्ञातमेव पुरुष एव शिवशब्दाभिधेय इत्यनन्तरमेव वदति—महान्

उपक्रमगतप्रतिज्ञाभ्यां पुरुषवेदनस्य मुक्तिहेतुत्वप्रतिज्ञया तदन्यस्यानुपायत्वप्रतिज्ञया चेत्यर्थः। हेत्वर्थत्वाभावेऽपि न पुरुषादन्यत्वसिद्धिः प्रथमादिर्निर्दिष्टस्य शाब्दप्राधान्यं वैयाकरणन्यायसिद्धमिति पुरुषेण सर्वमिति सर्व-शब्दार्थस्य जगतः प्रथमानिर्दिष्टत्वादव्यवहितत्वाच्च तच्छब्दस्य तत्परामर्शित्वस्यैव युक्तत्वात्तत इति पदेन तेनेदं पूर्णं पुरुषेण सर्वमिति प्रथमानिर्दिष्टं जगद् गृहीतम् इति जगत उत्तरः परः पुरुष एवाभिधीयते इति केचिदाचार्याः, तच्चोपपन्नम् एवमुपक्रमगतप्रतिज्ञाऽनुरोधेन यस्मात्परमित्यादिवाक्यकृताधिकनिषेधानुरोधेन च ततो यदुत्तरतरमिति वाक्यं पुरुषस्यैव परत्वपरमुक्तम्। सर्वाननशिरोग्रीव इत्यादिवाक्यावगतस्य शिव-शब्दस्य अर्थमाह पुरुषस्यैवेति, आदि-शब्देन सर्वः शर्वः शिवः

* अमृतत्वहेतुतामिति पा० ।

स्थाणुः, शिवं कर्म्मास्त्वित्यादिप्रयोगो विवक्षितः, सर्वाननशिरोग्रीवत्वं च सहस्रशीर्षा पुरुष इत्यस्य प्रत्यभिज्ञापकं, भगवच्छब्दस्तु पुरुषज्ञापक इति अनुसन्धेयम् । उत्तरत्रापि पुरुषप्रतिपादनाच्छिव-शब्दः पुरुषपर इत्याह पुरुष इति, महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तक इत्यत्र एष-इति पदेन शिव-शब्दाभिहितः प्रत्यभिज्ञापितः, एवं कारणवाक्यबलादुपास्यविशेष-निर्णयपरनारायणानुवाकेन च नारायणस्यैव परत्वमुक्तम् । एवं देवतान्त-रस्यापि परत्वे न सच्च चासदिति कारणवाक्यं यः परः स महेश्वर इत्यु-पास्यविशेषणनिर्णयपरवाक्यं चास्तीत्यत्राह उक्तेनैवेति, उक्तेनैव न्यायेन, कारणवाक्यैर्नारायणस्यैव परमकारणत्वप्रतिपादनादनन्यपरनारायणानु-वाकादिभिस्तस्यैव सर्वस्मात्परत्वनिश्चयाद्ब्रह्मरुद्रादीनां तत्सृज्यत्व-संहार्यत्वश्रवणाच्चार्थान्तरेषु दृष्टप्रयोगाणां शिवमहेश्वरादिशब्दानां सा-धारणत्वात्तेषां नारायणपरत्वेन प्रयोगदर्शनाद्बह्वीषूपनिषत्सु नारायणादि-शब्दनिर्देशादेकैकत्रैवोपनिषदि नारायणादिशब्दाभ्यासाच्च शिवादिश-ब्दोऽपि सद्ब्रह्मादिशब्दवत् नारायणपर्यवसायीत्यर्थः । तत्र यद्वेदादौ स्वर इत्यादिवाक्यस्य न केवलं प्रकरणान्तरवाक्यैर्नारायणपरत्वनिश्चयः अपि तु तस्यैव पूर्व्वापरपर्यालोचनया च नारायणपरत्वं गम्यत इत्याह किञ्चेति, अस्य वाक्यस्य पुरुषादन्यस्योत्कर्षपरत्वं प्रथमानुवाकोक्तपुरुष-व्यतिरिक्तपरत्वनिषेधव्याहतमिति दर्शयितुं न तस्येशे इत्याद्युक्तं, यद्वेदा-दावित्यस्यार्थमाह वेदाद्यन्तेति, वेदस्य प्रणव उत्पादकत्वादादिस्तल्लय-स्थानत्वादन्तश्चेत्यभिप्रायेण वेदाद्यन्तरूपतयेत्युक्तम्, अत एव वेदबीजभूतः प्रणवः । तस्य प्रकृतिलीनस्येति पदं व्याचष्टे प्रकृतिभूताकारवाच्यतयेति, प्रकृतिलीनत्वं नाम प्रकृतिभूताकारावस्थत्वम् ।

**प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः । इति, उक्तेनैव न्यायेन न सन्न चासच्छिव एव केवल इत्यादि सर्वं नेयं, किञ्च न तस्येशे कश्चनेति निरस्तसमाभ्यधिकस-म्भावनस्य पुरुषस्याणोरणीयानित्यस्मिन्ननुवाके वेदा-**

द्यन्तरूपतया वेदबीजभूतप्रणवस्य प्रकृतिभूताकार-वाच्यतया महेश्वरत्वं प्रतिपाद्य दहरपुण्डरीकमध्यस्थाकाशान्तरवर्तितयोपास्यत्वमुक्तम् ।

अकारावस्यप्रणववाच्यत्वं नामाकारवाच्यत्वमेवेत्यर्थः । अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः । अकारो विष्णुवाचक इति श्रुतिस्मृतिवचनादकारवाच्यस्य नारायणस्यैव महेश्वरत्वमुक्तमित्यर्थः । दहरेति यद्वेदाविति वाक्ये देवतान्तरस्य परत्वकथनात्तदेव दहरपुण्डरीकाक्षरुपास्यमिति चेत् तत्रापि नारायणस्यैव महेश्वरत्वप्रतिपादनात्स एव दहरपुण्डरीकेऽप्युपास्य इत्यर्थः । अस्मिन् वाक्ये प्रणववेदयोरकारप्रणवयोश्च प्रकृतिविकृतिभावः कथमवगतः अकारप्रसङ्गश्च कः, तद्वाच्यत्वपरः शब्दः क इत्यपेक्षायामाह अयमर्थ इति, यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इत्यनेनैव प्रकृतिविकृतिभावः सिद्धः, प्रकृतिलीनस्येत्यनेन अकारत्वावगतः, यः पर इति पर–शब्देन वाच्यत्वं चावगतम्, इदं परस्तात् पर इत्यादिषु पर–शब्दस्य वाच्यत्वार्थत्वादित्यर्थः । तर्ह्यकारस्य पर इति वक्तव्यं प्रकृतिलीनस्येति वचनव्यक्तेः कोऽभिप्रायः । अकारवाच्यस्यैव महेश्वरत्वे कथं नारायणस्य परत्वसिद्धिरित्यत्राह सर्ववाचकेति,

अयमर्थः सर्वस्य वेदजातस्य प्रकृतिः प्रणवः उक्तः, प्रणवस्य च प्रकृतिरकारः, प्रणवविकारो वेदः स्वप्रकृतिभूते प्रणवे लीनः, प्रणवोऽप्यकारविकारभूतः स्वप्रकृतावकारे लीनस्तस्य प्रणवप्रकृतिभूतस्याकारस्य यः परो वाच्यः स एव महेश्वर इति सर्ववाचकजातप्रकृतिभूताकारवाच्यः सर्ववाच्यजातप्रकृतिभूतनारायणोयः स महेश्वर इत्यर्थः ।

वाच्यजातप्रकृतिभूतो वाचकजातप्रकृतिभूतेन वाच्य इति ज्ञापनं

प्रकृतिलीनस्येति वचनव्यक्तेः प्रयोजनं वाच्यजातप्रकृतिभूतस्य नारायणत्वं वाक्यान्तरावगतमिति भावः । भगवतो नारायणस्य वाच्यजातप्रकृतित्वे अकारस्य वाचकजातप्रकृतित्वे च भगवद्वचनमाह यथोक्तमिति, अक्षराणामकारोऽस्मीत्यनेन वाच्यवाचकभावसम्बन्धश्च लब्धः । नारायणस्य अकारवाच्यत्वे श्रुतिमाह अ इति ब्रह्मेति, अकारस्य वाचकजातप्रकृतित्वेऽपि श्रुतिमाह अकारो वै इति, वाचकजातस्य अकारप्रकृतित्वमिति ज्ञायत इत्यर्थः । ब्रह्मणो वाच्यजातप्रकृतित्वं श्रुतिसिद्धमित्याह वाच्येति, उक्तं निगमयति अत इति, एवं महेश्वर-शब्दस्य साधारणत्वात्तत्प्रकरणपर्यालोचनया च नारायणपरत्वमुक्तं नारायणस्यैव तत्तच्छब्दवाच्यस्य परत्वमुत्तरानुवाके कण्ठोक्तमपीत्याह तस्यैवेति, विश्वाधिको रुद्रो महर्षिः प्रजापतिः प्रजा असृजतेत्यादिष्वन्येष्वपि वाक्येषु शिवादेः कारणत्वमाशङ्क्याह अनेनेति, विश्वाधिको रुद्र इत्यादिवाक्यान्यपि अन्यपरत्वादुक्तार्थानुगुणत्वेन वर्णनीयानीत्यर्थः । केनापि शब्देन प्रतीयमानं तदेवास्तु ततः किमित्यत्राह तदेतदिति,

यथोक्तं भगवता—अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! अक्षराणामकारोऽस्मि इति, अ इति ब्रह्मेति च श्रुतेः, अकारो वै सर्वा वागिति च वाचकजातस्याकारप्रकृतित्वं, वाच्यजातस्य ब्रह्मप्रकृतित्वं सुस्पष्टम् । अतो ब्रह्मणोऽकारवाच्यताप्रतिपादनादकारवाच्यो नारायण एव महेश्वर इति सिद्धं, तस्यैव सहस्रशीर्षं देवमिति केवलपरतत्त्वविशेषप्रतिपादनपरेण नारायणानुवाकेन सर्वस्मात्परत्वं प्रपञ्चितम्, अनेनानन्यपरेण प्रतिपादितमेव परतत्त्वमन्यपरेषु सर्ववाक्येषु

इन्द्रादितुल्यतयेति आदि-शब्देन विश्वमुक्तात्मविवक्षाऽस्ति । प्रसिद्ध-ब्रह्मशिवयोः परत्वाभावे दृष्टान्तमाह क्वचिदिति, विश्वाधिको रुद्र इत्यस्यायमर्थः-अत्र स नो देवः शुभया स्मृत्या संयुनक्तु इति स्वाभिमत-प्रार्थनातात्पर्याद्धिरण्यगर्भं प्रति कारणत्वमनूद्यते एव अनुवादस्य च वाक्यान्तरसापेक्षस्य तदानुगुण्येन वर्णनीयत्वात्केनचिद्गुणयोगेन रुद्र-शब्दो नारायणपरः चतुर्मुखकारणत्वं च तस्यैवेति स्पष्टं पश्यत, । अपश्यत्स्व-स्माज्जायमानम् इत्यध्याहारः । एवं वा योजना रुद्र-शब्दः प्रसिद्धरुद्रपर एव स च महर्षिः त्रिकालज्ञानवत्तया सर्वोत्कृष्टः स स्वकारणभूतं हिरण्यगर्भमपि कालत्रयज्ञानवत्तया जायमानात्स्वस्मादपश्यत् । य एव-मपश्यत्स शुभया स्मृत्या भगवत्स्मरणेन मां संयुनक्त्वित्यर्थः, ईश्वराज्ज्ञानमन्विच्छेत्, उपास्योऽहं सदा विप्राः, उपायोऽस्मि हरेः स्मृतौ, । शङ्करस्य तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन विष्णुभक्तः स जायते ॥ इत्यादिभीरुद्रस्य भगवज्ज्ञानप्रदत्वप्रतिपादनात् ॥

केनापि शब्देन प्रतीयमानं तदेवेत्यवगम्यत इति शास्त्रदृष्ट्या तूपदेशो वामदेववदिति सूत्रकारेण निर्णीतं, तदेतत्परं ब्रह्म क्वचिद् ब्रह्मशिवादिशब्दादवगतमिति केवलब्रह्म-शिवयोर्न परतत्त्वत्वप्रसङ्गः । अस्मिन्ननन्यपरेऽनुवाके तयोरिन्द्रादितुल्यतया तद्विभूतित्वप्रतिपादनात्, क्वचिदाकाशप्राणादिशब्देन परं ब्रह्माभिहितमिति भूताकाशप्राणादेर्यथा न परत्वम् । यत्पुनरिदमाशङ्कितम् अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर-

हिरण्यगर्भकारणत्ववादिनः प्रष्टव्याः किमण्डान्तर्वर्तिसृष्टिः प्रजापतिः प्रजा असृजतेत्युच्यते उत परमकारणत्वमुच्यत इति प्रथम-कल्पोऽभ्युपेतः, द्वितीयस्तु प्रजापत्यादिशब्दानां साधारणत्वादन्यत्र च

चतुर्मुखादेः सृज्यत्वादिश्रवणाच्च बहुकारणवाक्याविरोधेन नेय इति प्रत्युक्त इति । अथ व्योमातीतवादं हृदि निधाय तं समूलमुन्मूलयितुं तत्परिपाटीमुपन्यस्यति यत्पुनरिति, आकाशान्तर्वर्त्तिनः कस्यचिदन्वेष्टव्यता स्यात् ततः किमित्यत्राह अस्येति, एतत्प्रतिक्षिपति अनधीतेति, अनधीतवेदानाम् अदृष्ट*शास्त्रविदामिदं चोद्यमिति दहरविद्यायाः पूर्व्वापरवाक्यमप्यनधीतं, वाक्यकारग्रन्थादयश्चादृष्टास्तैरिति भावः । कथमित्यत्राह यत इति, कथं श्रुतिरेव परिहरतीत्यत्राह दहरोऽस्मिन्निति, अस्याकाश-शब्दवाच्यस्येति,

**आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति, अत्राकाश-शब्देन जगदुपादानकारणं प्रतिपाद्य तदन्तर्वर्त्तिनः कस्यचित्तत्त्वविशेषस्यान्वेष्टव्यता प्रतिपाद्यते। अस्याकाशस्य नामरूपयोर्निर्वाहकत्वश्रवणात्पुरुषसूक्ते पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्चाकाशपर्यायभूतात्पुरुषादन्यस्यान्वेष्टव्यतयोपास्यत्वं प्रतीयत इति, अनधीतवेदानामदृष्टशास्त्रविदामिदं चोद्यं यतस्तत्र श्रुतिरेवास्य परिहारमाह, वाक्यकारश्च दहरोऽस्मिन्नन्तर आकाशः किं तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति चोदिते यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्यादिना**

वक्ष्यमाणगुणजातमाकाशान्तर्वर्तिस्वतन्त्रवस्त्वन्तर्गतमिति शङ्काशमनाय यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति वाक्यस्याकाश-शब्देन पूर्वोक्त आकाश-शब्दः स्मारितः स्पष्टम् । ननु किं तत्र

* शास्त्रविदोऽपि यैर्न दृष्टास्तेषां शास्त्राध्ययनकथा तु दूरनिरस्तेति भावः ।

विद्यत इति चोद्यानन्तरमुभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यादिना इत्यादिना द्यावापृथिवीविद्युन्नक्षत्रादीनामाकाशवर्तित्वं प्रतीयत इति न गुणजातस्य प्रतीतिरिति शङ्कायामाह एतदुक्तं भवतीति, उक्तद्युपृथिव्यादीनां स्रष्टृत्वधारकत्वादिगुणगणोऽपहतपाप्मत्वादिगुणगणश्च विवक्षित इत्यर्थः । कथं वाक्यकारेण परिहृतमित्यत्राह तथा चेति, काम्यस्पृहास्मराः कामा इति निघण्टुः । गुणिव्यतिरेकेण कथं गुणानामुपास्यत्वमिति शङ्कायामाह एतदुक्तमिति, उभयमप्यन्वेष्टव्यं तच्छब्दनिर्दिष्टस्यैवान्वेष्टव्यत्वान्नोभयमिति चेन्न तच्छब्द उभयपरो नेयः । यच्छब्दनिर्दिष्टं गुणाष्टकमेवेति तच्छब्दो गुणमात्रपर इति चेन्न

अस्याकाश-शब्दवाच्यस्य परमपुरुषस्यानवधिकमहत्त्वं सकलजगत्कारणतया सकलजगदाधारत्वं च प्रतिपाद्य-तस्मिन्कामास्समाहिता इति अपहतपाप्मत्वादि सत्यकाम-शब्देन सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकं निहितमिति परमपुरुषवत्परमपुरुषगुणाष्टकस्यापि पृथग् विजिज्ञासितव्यत्वप्रतिपिपादयिषया तस्मिन् यदन्तस्तदन्वेष्टव्यमित्युक्तमिति श्रुत्यैव सर्वं परिहृतम्, एतदुक्तं भवति किं तदत्र विद्यते यदन्वेष्टव्यमित्यस्य चोद्यस्यास्मिन्सर्वस्य जगतः स्रष्टृत्त्वमाधारत्वम्

तच्छब्द एवोभयपरः । ननु यः आकाशः यद्गुणजातमिति पुँल्लिङ्गनपुंसकलिङ्गरूपयच्छब्दद्वयं स्यात्तदत्र नास्तीति चेत् त्यदादीनि सर्वैर्नित्यमिति त्यदादीनामेकशेषत्वविधानात्तदन्यतम-यच्छब्दस्यैकशेषत्वमवगम्यते, नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति सूत्रेण नपुंसकानपुंसकसन्निपाते नपुंसकस्यैकशेषत्वमेकवद्भावश्च विधीयत इति अत्र योयदिति पुँल्लिङ्गनपुंसकरूपयच्छब्दद्वयोपनिपाते यदिति नपुंसकस्यैकस्यैक-

शेष्यमेकवद्भावश्चेति निश्चीयते, तस्माद्यच्छब्देनोभयं विवक्षितमिति निखिलजगदुदयेत्यादिविशेषणमाकाशो ह वै नामरूपयोर्निर्वहितेति श्रुत्युक्तस्मारणम् । ननूभयस्यान्वेष्टव्यत्वे प्रामाणिके सति हि यच्छब्दस्यैव निर्वाहः कार्य इत्यत्राह यथाऽऽहेति, छान्दोग्ये आकाश–शब्दस्य परमात्मपरत्वमाश्रित्य हि सर्वत्राकाश–शब्दानां परमात्मपरत्वमापाद्य तदन्तर्वर्तिनः स्वतन्त्रवस्त्वन्तरत्वं व्योमातीतवादिभिरुच्यते अत्र छान्दोग्यश्रुतिनिर्वाहात्तेषां मूलघातः कृत इत्यभिप्रायेणैतावता विरतिः, यत्राकाशशब्दनिर्दिष्टस्य परमात्मासाधारणगुणश्रवणं तत्र स्वारस्यभङ्गेनाकाश–शब्दस्य परमात्मपरत्वमाश्रीयते ।

**नियन्तृत्वं शेषित्वमपहतपाप्मत्वादयो गुणाश्च विद्यन्त इति परिहार इति, तथा च वाक्यकारवचनं– तस्मिन् यदन्तरिति कामव्यपदेश इति, काम्यन्त इति कामाः अपहतपाप्मत्वादयो गुणा इत्यर्थः । एतदुक्तं भवति–**

अन्यत्र तु प्रसिद्धिप्राचुर्यात्स्वतः प्राप्त एवार्थः स्वीकृत इत्यर्थः, अनेन तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यमित्यत्र विशोकशब्देन विशोको विजिघत्सोऽपिपिपास इत्यादिसमानप्रकरणोक्तगुणस्मरणात्तदन्तर्वर्तिनो गुणजातस्यान्वेष्टव्यत्वं प्रसिद्धं तस्याकाश–शब्दनिर्दिष्टस्याकारवाच्यत्वान्नारायणस्य महेश्वरत्वमुक्तं यद्वेदादाविति यत्र त्वाकाश–शब्दनिर्दिष्टस्य परमात्मासाधारणगुणश्रवणं तत्राकाश–शब्दस्य प्रसिद्धार्थपरत्वात्तदन्तर्वर्तिनो नारायणत्वं स्यादिति च स्थितम् । अथ ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते इति विष्णोः कार्यत्वश्रवणात् परत्वत्रैकाल्यशङ्कां व्युदस्यति यः पुनरिति, कारणस्य ध्येयताप्रतिपादनपरे वाक्ये इति कश्च ध्येय इति कारणं तु ध्येय इति कारणत्वानुवादेन ध्येयताविध्यन्यपरत्वाद्वाक्यान्तरसापेक्षोऽनुवादः तदानुगुण्येन स्यादित्यनन्यपरवाक्योक्तं नारायणस्यैव परत्वं स्थितं, तस्य स्वेच्छया लोकरक्षणार्थमवतार इति

यदेतद्दहराकाशपदवाच्यं निखिलजगदुदयविभवलयलीलं परं ब्रह्म तस्मिन् यदन्तर्निहितमनवधिकातिशयमपहतपाप्मत्वादिगुणाष्टकं तदुभयमप्यन्वेष्टव्यं विजिज्ञासितव्यमिति, यथाऽऽह—अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीति, यः पुनः कारणस्यैव ध्येयताप्रतिपादनपरे वाक्ये विष्णोरनन्यपरवाक्यप्रतिपादितपरतत्त्वभूतस्य कार्यमध्ये निवेशः स स्वकार्यभूततत्त्वसंख्यापूरणं कुर्वतः स्वलीलया जगदुपकाराय स्वेच्छावतार इत्यवगन्तव्यः, यथा लीलया देवसंख्यापूरणं कुर्वत उपेन्द्रत्वं परस्यैव, यथा च सूर्यवंशोद्भवराजसंख्यापूरणं कुर्वतः परस्यैव ब्रह्मणो दाशरथिरूपेण स्वेच्छावतारः, यथा च सोमवंशसंख्यापूरणं कुर्वतो भगवतो भूभारणावतारणाय स्वेच्छया वसुदेवगृहे अवतारः, सृष्टिप्रलयप्रकरणेषु नारायण एव परमकारणतया प्रतिपाद्यत इति पूर्वमेवोक्तम् । यत्पुनरथर्वशिरसि

श्रुतिस्मृतिपूक्तः,. तत्र बहूनि मे व्यतीतानि जन्मानि तव चार्जुनेति वचनादुत्पत्तिसद्भावो ब्रह्मरुद्रादेर्भगवतश्चाभ्युपगम्यते, तत्र भगवज्जन्मनो हेतुः प्रयोजनं विलक्षणं प्रमाणान्तरेण प्रतिपन्नमिति तदविरोधेनात्रापि प्रतिपाद्यमानं भगवतो जन्म विलक्षणहेतुमद्विलक्षणप्रयोजनवच्चाभ्युपगम्यमन्येषां जन्मनो हेतुफले कर्म्म—तत्फलानुभवौ, तस्माद्रामादिवदवतार इत्यर्थः त्रिमूर्तिसंख्यान्तर्भावमात्रं न साम्ये प्रयोजकमित्यभिप्रायेण संख्यापूरणं कुर्वत इति मुहुरुक्तं, स्वलीलया जगदुपकारायेति हेतुप्रयोजनवैलक्षण्यमुक्तं,

न तु कर्म्मणा तत्फलानुभवायेत्यर्थः, जगतामुपकाराय न सा कर्म्मनिमित्तजेति वचनात् । मनुष्यादिषु ह्यवतारः कथं देवेष्विति शङ्काव्यावृत्त्यर्थमाह यथा लीलयेति, तर्हि देवेष्ववतारद्वयं कथमित्यत्राह यथा चेति, स्वसमानगणनागण्यत्वरूपोत्कर्षं परेषां ददातीत्यभिप्रायेण सोमवंशसङ्ख्यापूरणं राजसङ्ख्यापूरणमित्युक्तं, तद्वत् त्रिमूर्त्त्यन्तर्भावो न तत्साम्यायेत्यभिप्रायः । परत्वे प्रामाणिके सति ह्येवं निर्वाह इत्यत्राह शृणोति,

## रुद्रेण स्वसर्वैश्वर्यं प्रपञ्चितं तत्सोऽन्तरादन्तरं प्राविशदिति

अथाऽथर्वशिरोनिर्वहति यत्पुनरिति, देवा ह वै स्वर्गं लोकमवगमन् तं देवा रुद्रमपृच्छन् कोभवानिति सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्योब्रह्माहं ब्रह्मेत्यादि सोऽन्तरादन्तरं प्राविशत् इत्यतः पूर्वं सोऽब्रवीदिति प्रक्रम्य रुद्रवचः अस्य वाक्यस्योपर्यपि सोऽहमित्यादिकं रुद्रवचः, अतो मध्येऽपि रुद्रवाक्यं न समाप्तमित्यभिप्रायेण प्रपञ्चितमित्युक्तम्, अत्रेदं विचार्यते सोऽन्तरादन्तरम्प्राविशत् दिशश्चान्तरं सम्प्राविशदिति इतीदं किं रुद्रवाक्यम् उत केवलं श्रुतिवाक्यं पूर्वमितिकरणेन रुद्रवचसः समाप्तत्वादिदं श्रुतिवाक्यमिति चेत् न, सोऽहमित्यादेरुपर्यपि रुद्रवाक्यस्य दर्शनादिदमपि रुद्रवाक्यमेव नो चेत्सोऽब्रवीदित्युत्तरत्र अध्याहारः स्यात्, न स दोष इति करणवैयर्थ्यादर्थवत्त्वादिति चेत् न न हीतिकरणस्य समाप्तिरेवार्थः अपि तु हेतुः प्रकारोऽप्यर्थः–इति–हेतुप्रकरणप्रकारादिसमाप्तिष्विति निघण्टुदर्शनात्, तस्मात्यदान्तरानध्याहारेणैव निर्वाहेसम्भवत्यध्याहारसापेक्षार्थस्वीकारोऽनुपपन्नः, तस्मादयमर्थः रुद्रेण को भवानिति पृष्टेन प्रथममहमेकः प्रथममासं वर्तामीत्यादिना स्वस्य सर्वात्मकत्वे उक्ते परमात्मनोहि सर्वात्मकत्वं कथं सङ्घटत इत्यपेक्षायामित्थमिति प्रकारार्थोऽयमिति–शब्दः सोऽन्तरादन्तरमिति वक्ष्यमाणप्रकारेणेत्यर्थः । यद्वा अत्रेतिरहेतो सोऽन्तरादन्तरम्प्राविशत् दिशश्चान्तरं सम्प्राविशत् इति पर-

मात्माऽनुप्रवेशात् सर्वात्मकत्वमित्यर्थः, इति-शब्दस्य हेतुपरत्वमभिप्रेत्य परमात्मप्रवेशादित्युक्तं, यद्यपीति-शब्दस्य समाप्तिरेवार्थः । अर्थान्तरं न स्यात् तथाऽपि धर्मिकल्पनातो वरं धर्म्मकल्पनेति न्यायात् प्रयुक्तस्येति-शब्दस्य रुद्रवाक्यावसानेऽन्वयक*ल्पनं न्याय्यं न त्वप्रयुक्तपदान्तराध्याहार इति, तस्माद्रुद्रवाक्यमेवेदं स इति परमात्मोच्यते बुद्धिस्थत्वात्परमात्मनः, सोऽन्तरादन्तरं शरीरादन्तरस्य प्राणादेरप्यन्तरं जीवम्प्राविशत् दिशश्चान्तरं दिक्शब्देन समस्तजगद्वृत्तिवस्तुजातं लक्ष्यते, सर्वपदार्थानामन्तरं जीवात्मकवर्गं प्राविशत्सर्वसामानाधिकरण्यस्य वक्ष्यमाणत्वात्, तदुपपत्तये स्वस्य सर्वजीवानां च परमात्मानुप्रवेश उक्तः । एवं रुद्रवाक्यत्वमेव युक्तम् । यद्वा श्रुतिवाक्ययस्तु तदाऽयमर्थः-सः-रुद्रः-अन्तरादन्तरं जीवादन्तरं परमात्मानं प्राविशद् बुद्ध्याऽगाहत, अनुप्रवेश-शब्दस्यसम्यग्बोधनार्थत्वं लोकसिद्धं तथा बाणक्यप्रयोगश्च-यस्य यस्य हि यो भावस्तेन तेन तेन हि तं नरम्† । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ इति, स रुद्रः स्वान्तर्यामिणं सर्वपदार्थान्तर्यामिणं च परमात्मानं तच्छरीरकं बुद्ध्या ऽनुसंहितवानित्यर्थः । एवं निर्वाहकद्वयमभिप्रेत्य परमात्मप्रवेशादित्युक्तं, परमात्मनः प्रवेशादिति षष्ठीसमासः परमात्मकर्तृकप्रवेशात्परमात्मकर्म्मकप्रवेशाच्चेति भावः । श्रुत्यैवेति प्रतर्दनविद्यादिष्विव न केवलन्यायेन परमात्माऽनुप्रवेशः कल्प्यते अपि तु कण्ठोक्त इत्यर्थः । अस्यार्थस्य सूत्रकारोक्तिन्दर्शयति शास्त्रेति, परमात्माऽनुप्रवेशकण्ठोक्तिरहितेषु प्रतर्दनविद्यादिष्वपीन्द्रादीनां परमात्मात्मकत्वे सिद्धे परमात्मानुप्रवेशकण्ठोक्तिमत्स्वथर्वशिरःप्रभृतिषु कैमुत्यरीत्या‡ परमात्मानुप्रवेशः सिद्ध्यतीत्यभिप्रायेण सूत्रकारः प्रतर्दनविद्याविषयसूत्रं प्रणीतवानित्यभिप्रायः । सर्वसामानाधिकरण्यस्य परमात्मानुप्रवेशकृतत्वैशद्याय उपबृंहणं दर्शयति-

**परमात्मप्रवेशादुक्तमिति श्रुत्यैव व्यक्तं, शास्त्रदृष्ट्या तूपदेशो वामदेववदिति-**

* कल्पनमिति पा० । † तेन तेन तदन्तरमिति पा० ।
‡ कैमुत्यनीत्येति पा० ।

यथोक्तमिति, उदाहृतश्लोके हेत्वंशं तेन सर्वसामानाधिकरण्यसिद्धिं च दर्शयति अत्रेति, अत इदम्, इत्यादि, इदम्-अहं-ग्रहणोपासनं वाक्यकारेणोच्यते इत्यन्वयः। चेतनानां नित्यत्वात् सर्वस्य तन्निष्पत्तिर्नोपपद्यत इत्यत्राह कार्यावस्थ इति, विशिष्टाद्विशिष्टस्योत्पत्तिः सा च चिदचित्स्वरूपनित्यत्वेऽप्यवस्थाभेदेन उपपद्यते इत्यर्थः। सूत्रं दर्शयति आत्मेति, सामान्येन सर्वजीवानां परमात्मात्मकत्वे सिद्धेऽपि ब्रह्मशिवयोः परमात्मात्मकत्वं विशेषतो दर्शयितुमाह महाभारते चेति, तत्र ममेत्युक्ते ब्रह्मशिवयोरप्रतिपत्तिः स्यादिति तत्प्रतिपत्त्यर्थं ब्रह्मरुद्रसंवाद इत्युक्तं, तद्व्याचष्टे रुद्रस्येति, नारायणस्यात्मान्तरव्यावृत्त्यर्थः परमेश्वर-शब्दः। रुद्रस्यैव नारायणात्मकत्वे वचनमाह तथेति. वचनान्तरमाह तत्रैवेति, अत्र भगवदात्मकत्वं कथं प्रतीतमित्यत्राह अन्तरात्मतयेति, केचिदत्रैदिका भगवत उपादानत्वं रुद्रस्य निमित्तत्वं च वदन्ति-उपादानं तु भगवान् निमित्तं तु महेश्वरः ॥ इति तन्निराकरोति-

सूत्रकारेणैवमादीनामर्थः प्रतिपादितः-यथोक्तं प्रह्लादेनापि-सर्वगत्वादनन्तस्य स एवाहमवस्थितः, मत्तः सर्वमहं सर्वं मयि सर्वं सनातने इत्यादि, अत्र सर्वगत्वादनन्तस्येति हेतुरुक्तः, स्वशरीरभूतस्य सर्वस्य चिदचिद्वस्तुन आत्मत्वेन सर्वगतः परमात्मेति सर्वे शब्दाः सर्वशरीरं परमात्मानमेवाभिदधतीत्युक्तम्, अतोऽहमिति-शब्दः स्वात्मप्रकार†प्रकारिणं परमात्मानमेवाचष्टे, अत इदमुच्यते आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्तेरित्यादिना ऽहं-ग्रहणोपासनं वाक्यकारेण कार्य्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमात्मैवेति सर्वस्य तन्निष्पत्तेरित्युक्तम्, आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति

† स्वात्मप्रकारिणमिति पा.

टी० रूपत्वमिति रूपस्वविशदीकारात्, अहिकुण्डलन्यायेन एकद्रव्यावस्थाविशेषेणेत्यर्थः एकजातियोगस्य खण्डादिदृष्टान्ते सत्यपि प्रभाप्रभावद्दृष्टान्तोपादानं गुणप्रधानभावाभिप्रायेण, अंशोनानाव्यपदेशादित्यत्र जीवब्रह्मणोरंशांशिभाव उक्तः, अत्र त्वचिद्ब्रह्मणोरिति भिदेत्यभिप्रायेण जीवस्येवेत्युक्तं,पौनरुक्त्यशङ्कानिरासार्थमाह "इह स्थाप्यमान"मिति, उभयव्यपदेशात्किमचिद्वस्तुनो ब्रह्मस्वरूपत्वमहिकुण्डलन्यायेन? उत प्रभातदाश्रययोरिवैकजातियोगेन ? उत विशेषणविशेष्यभावरूपेणांशांशित्वेन ?-ति महानज आत्मा इत्यादिषु ब्रह्मण्यचिद्धर्मप्रतिषेधः कृत्स्नोपादानतादिप्रतिपादनं च विशेषणविशेष्यभावेन ब्रह्मरूपत्वं प्रपञ्चस्यावगमयति ने ?-ति न चेत्पूर्वोक्तपक्षद्वयसिद्धिः, अवगमयति चेत्तृतीयपक्षसिद्धिः, अस्य पृथगधिकरणत्वे निदानं श्रोतव्यं प्रकृतेतावत्त्वमित्यादेः पूर्वाधिकरणानुप्रविष्टत्वे हेतुश्च श्रोतव्यः ततो भूय इति पदयोरर्थश्च श्रोतव्यः । सू० प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

## सू० पूर्ववद्वा ॥ २८ ॥

भा० वा-शब्दः पक्षद्वयव्यावृत्त्यर्थः, एकस्यैव द्रव्यस्यावस्थाविशेषयोगेऽपि ब्रह्मस्वरूपस्यैवाचिद्द्रव्यस्वरूपत्वादुक्तदोषाद्निर्मोक्षप्रसङ्गः । अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रं विवक्षितम् एवं तर्ह्यश्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्त्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः पूर्ववदेव अंशोनानाव्यपदेशात्, प्रकाशादिवत्तु नैवं पर, इति जीववत्पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वं विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारोऽपि मुख्यः, ब्रह्म-

णो निर्दोषत्वं रक्षितं, तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः प्रत्यपृथक्सिद्धिलक्षणविशेषणतया यथांऽशत्वं तथैव जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वम्, ॥

## सू० प्रतिषेधाच्च ॥ २९ ॥

"स वा एष महानज आत्माऽजरोऽमरः नास्य जरयै-तज्जीर्यत" इत्यादिभिर्ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशे-षणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः ॥

टी० सू० पूर्ववद्वा ॥ २८ ॥ पूर्ववदित्युक्ते प्रथमपक्षपरिग्रहशङ्का स्यादिति तद्व्यावृत्त्यर्थं पक्षद्वयव्यावृत्त्यर्थं इत्युक्तम्, उक्तदोषादपरिणामित्वभेदश्रुतिबाधादित्यर्थः । अथेत्यादि चिदचिदीश्वरेषु ब्रह्मणि च ब्रह्मत्वं नाम जातिः किमनुवर्तते? उत ब्रह्मैव जातिश्चिदचिदीश्वरेष्वनुवर्तत इति विकल्पः, प्रथमे पक्षे ईश्वरवाचिपदैर्जगत्सामानाधिकरण्यं न स्यात् जातिवाचिपदैर्हि सामानाधिकरण्यं न व्यक्तिवाचिभिः, न हि खण्डो गौरितिवत् खण्डो मुण्ड इति समानाधिकरण्यं तृतीये जगत्कारण स्वतदाधारत्वसर्वज्ञत्वादिगुणाश्रयत्वादि नोपपद्यत इत्यर्थः । सकलश्रुतिस्मृतिव्यवहारविरोध इत्यनेन शिरोद्वयेऽपि दूषणद्वयं विवक्षितं, ब्रह्मजातियोगमात्रमिति पाठे ब्रह्मत्वं जातिरिति विकल्पशिरोऽभिप्रेतं स्यात् ब्रह्मत्वजातियोगमात्रमिति पाठे शिरोऽन्तरमभिप्रेत स्यात्, ब्रह्मापीत्यत्र भावप्रधानो निर्देशः स्यात्, पाठोऽत्र निरीक्ष्यः पूर्ववदेवेत्यादि, अपृथक्सिद्धविशेषणतयांऽशत्वं । किं दृष्टमित्यत्राह "तदेव"मिति, । सू० प्रतिषेधाच्च ॥ २९ ॥ स्वरूपपरिणामाभावे कथं कारणात्कार्यस्यानन्यत्वमित्यादय उपपद्यन्त इत्यत्राह—

सू० अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म स्थूलचि-दचिद्विशिष्टं कार्यभूतं ब्रह्मेति कारणात्कार्यस्यानन्यत्वं, कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नं,

ब्रह्मणो निर्दोषत्वं च रक्षितं ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् । अहिकुण्डलाधिकरणं समाप्तम् ॥

टी० "अतः सूक्ष्मे"ति, ज्ञाततेत्यादीत्यादि-शब्देन समानाधिकरण[1]शब्दोऽपि विवक्षितः । परे तु न स्थानत] इत्यादिसूत्राणि व्याचक्षाणा एवमधिकरणं वर्णयन्ति काश्चित्सर्वकर्मा सर्वकाम इत्यादिश्रुतयः सविशेषलिङ्गाः, अस्थूलमित्यादश्च निर्विशेषलिङ्गाः, तासु किमुभयलिङ्गं ब्रह्म प्रतिपत्तव्यम्? उतान्यतरलिङ्ग? मन्यतरलिङ्गपरिग्रहे च किं सविशेष? मुत निर्विशेष? मिति विचारः श्रुतिबलादुभयलिङ्गे प्राप्ते विरोधात् स्वतस्तावत्तदुभयलिङ्गत्वमयुक्तं पृथिव्यादिस्थानरूपोपाधितोऽपि नोभयरूपत्वं स्वतो निर्विशेषस्याग्निसंपर्काल्लौहित्यवत् सविशेषत्वोक्तौ निर्विकारत्वश्रुतिकोपात्, साकारत्वं प्रतीतिमात्रसिद्धमिति नोभयलिङ्गत्वम्, अन्यतरलिङ्गपरिग्रहे निर्विशेषमेव प्रतिपत्तव्यं सर्वत्र अशब्दमस्पर्शमित्यादिषु निर्विशेषं हि ब्रह्मोपदिश्यते, भेदादिति चेदिति । ननु प्रतिविद्यं ब्रह्मणश्चतुष्पात्त्ववामनीत्व'भामनीत्वत्रैलोक्यरूपवत्त्वाद्याकारभेदोपदेशादुभयलिङ्गत्वमविरुद्धमभ्युपगन्तव्यमन्यथा सविशेषत्वश्रुतेर्निर्विषयत्वप्रसङ्गादिति चेन्न मधुविद्यायां यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः यश्चायमध्यात्मशरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेति प्रत्युपाधिभेदमभेदवचनात्, अपि चैवमेके शाखिनो भेदनिन्दापूर्वकमभेदमामनन्ति "नेह नानास्ति किंचन मृत्योः स मृत्युमाप्नोती"त्यादिष्विति साकारनिराकारश्रुत्योः को विशेषः येन निराकारमेव ब्रह्माङ्गीकार्यं तत्राह "अरूपव"दिति रूपरहितमेव ब्रह्म अस्थूलमित्यादिवाक्यानां निष्प्रपञ्चब्रह्मतत्त्वप्रधानत्वात्, सति विरोधे तत्प्रधानान्यतत्प्रधानेभ्योबलीयांसीति। तर्हि साकारश्रुतेः का गतिरित्यत्राह "प्रकाशवच्चे"ति, व्यापकोऽपि सूर्यादिप्रकाशोऽङ्गुल्याद्युपाधिसम्बन्धादृजुवक्रादि-

1 समानाधिकरणशब्दादिर्विवक्षित इति पा० ।

भावमापद्यते, एवं ब्रह्माऽप्युपाधिना सविशेषमिव भवति तदुपदेशस्तथोपासनार्थं इति साकारश्रुत्यवैयर्थ्यं तर्हि निष्प्रपञ्चं ब्रह्म कीदृशं तत्राह "आह च"ति, स यथा सैन्धवघन इत्यादिश्रुतिः चैतन्यमात्रं ब्रह्म निर्विशेषमाह, दर्शयति चेति "अथात आदेशो नेति नेति अन्यदेव तद्विदितात् न सत्तन्नासदुच्यते इत्यन्यव्यावृत्तिमुखेन बोधनं निर्विशेषत्वगमकम् अन्यथा स्वगतविशेषप्रतिपादनोपपत्तावितरव्यावृत्त्यसामञ्जस्यं स्यात्, विशिष्टदृष्टान्तोपादानाच्च निर्विशेषत्वमुच्यते, अत एव चोपमेति अम्बुवदिति मूर्त्तत्वविप्रकृष्टदेशत्वाभावाच सूर्यादितुल्यत्वमिति शङ्का वृद्धिह्रासभाक्त्वमिति सर्वसाम्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेदः, अत उपाध्यन्तर्भावात् वृद्धिह्रासादीन् सूर्यादिवद् ब्रह्म भजते, अतो दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यमिति दर्शनाच्चेति पृथक् सूत्रमुपाधिष्वन्वयादन्तर्भावं दर्शयति पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः सपक्षीभूत्वा पुरः पुरुष आविशदि"ति श्रुतिः, अतो नोभयलिङ्गं, न च सविशेषलिङ्गमिति प्रकृतैतावत्त्वमित्यादिप्रतिषेधाच्चेत्यन्तमेकमधिकरणान्तरं वर्णयन्ति द्वे वाव ब्रह्मणा इत्यादिश्रुतिर्विषयः रूपद्वयं रूपवद् ब्रह्म च प्रकृतत्वाविशेषान्निषेधतीति । यद्वा ब्रह्मैव निषेधति तस्यानुपलभ्यमानस्य निषेधे प्रमाणाविरोधादिति प्राप्ते प्रकृतं रूपद्वयं निषिध्यते, अन्यथा महता प्रबन्धेन प्रतिपादितस्य ब्रह्मणो निषेधायोगात् प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरं, न चानेनैव न्यायेन रूपद्वयनिषेधानुपपत्तिः प्रतिषेधार्थं लोकसिद्धस्यानूदितत्वात्, अतो ब्रह्म परिशिष्यते ततो ब्रवीति च भूयः न ह्येतस्मादिति नेत्यन्यत् परमस्तीति अन्यस्य नास्तित्वं नेति नेतीति वाक्यस्य. ब्रह्मव्यतिरिक्तनास्तितापरत्वेन व्याख्यानरूपमिदं वाक्यम्।यद्वा निषेधरूपादेशादन्यदादेशनं नास्तीत्यर्थः । तदा भूयोब्रवीतीति सूत्रखण्डमथ नामधेयमिति वाक्यविषयम् । अस्ति चेत् ब्रह्म कस्मान्न गृह्यते अत्राह सू० तदव्यक्तमाह हि, न चक्षुषा गृह्यते इत्यादिवाक्यविषयमिदं, गृह्यते चेत्याह "अपि संराधने"इति, संराधनं भक्तिध्यानादि ततस्तु तं पश्यति निष्कलं ध्यायमानः योगिनस्तं प्रपश्यन्तीत्यादिर्विषयः संराध्यसंराधकभावेन जीवब्रह्मभेद-

प्रसङ्गव्युदासकं प्रकाशादिवदिति सूत्रं, कर्म-शब्दोऽङ्गुल्याद्युपाधिपरस्तेन सूर्यादिप्रकाशः सविशेष इव भाति न तु वस्तुतस्तथाभूतः, ब्रह्मणोऽपि सूर्यप्रकाशाद्यवैशेष्यं तत्तुल्यत्वं जीवप्राज्ञयोरभेदस्याभ्यासेन प्रतिपादनात् अत इति अभेदस्य स्वाभाविकत्वात् भेदस्याविद्यकत्वादनन्तेन प्राज्ञेनैकतां गच्छति जीवः, तथा हि ब्रह्मैव भवतीत्यादिलिङ्गम्, अस्मिन्नेव संराध्यसंराधकभावे मतान्तरं स्वमतविशुद्ध्यर्थमुपन्यस्यति "उभयव्यपदेशा"दिति, अवस्थाभेदादंशभेदाच्चाविरोधः सूत्रद्वयोक्तः पूर्ववदिति प्रकाशादिवच्चावैशेष्यमिति सूत्रार्थसाम्यमर्थः बन्धपारमार्थ्ये ज्ञानानिवर्त्यतया मोक्षशा[1]स्त्रवैयर्थ्यं स्यात्, भेदस्तु लोकसिद्धोऽनूदित इति तात्पर्यं तत्र प्रतिषेधाच्च अथात आदेशो नेति नेतीत्यादिभिः प्रपञ्चप्रतिषेधाच्च निष्प्रपञ्चब्रह्ममात्रपरिशेषणाद्यथोक्तः सिद्धान्त इति, अत्र ब्रूमः सकलविशेषमिथ्यात्वमारम्भणाधिकरणसिद्धं भवति यदि श्रुतिविप्रतिपत्तिशमनार्थमारम्भः सोऽपि त्वदुदाहृतवाक्येषु संशयाभावादनुपपन्नः, न हि सर्वकर्मा सर्वकामः अस्थूलमनणित्यादिविधिनिषेधानां विषयभेदेनाविरोधात् प्राबल्यदौर्बल्यसंशयः, यदि निर्गुणमित्यादिवाक्यैर्विरोधः तर्हि सामान्यनिषेधस्य च विहितेतरविषयत्वादपच्छेदन्यायाविषयत्वाच्च न ब्रह्मगुणमिथ्यात्वमिति प्रागेवोपपादितत्वात् सिद्धान्तोऽनुपपन्नः, सर्वगन्धः सर्वरसः अगन्धमरसमित्यादिष्वप्येकस्यैव एकत्र विधिनिषेधविषयत्वायोगादेव विधेयतया निषेध्यतया च प्रतिपन्नानां गन्धरसादीनाम् अर्थान्तरत्वमङ्गीकार्यं, न च निषेधार्थं गुणानुवादः गन्धरसादीनां परमात्मधर्मत्वेन लोकप्रसिद्ध्यभावान्न चोपासनार्थमारोपः सार्वज्ञ्यादीनां स्वरूपपरवाक्यसिद्धत्वात् उपासनप्रकरणानधीतानामप्युपासनार्थत्वे जीवब्रह्मैक्यस्याप्युपासनार्थत्वप्रसङ्गात् प्रकरणाधीतानामपि प्रकरणस्थतामात्रेणोपासनाशेषत्वे सत्येऽस्याप्यात्मेत्येवोपासीतेत्युपासनप्रकरणस्थस्य मिथ्यात्वप्रसङ्गाच्च । किञ्च मिथ्यात्वपक्षे श्रुतिविरोधश्च न शमितः स्यात्, किन्तु विरोधादन्यतराप्रामाण्यमेवोक्तं स्यात् यथार्थविषयत्वाभावात् । किञ्च सूत्रशैलीविरुद्धश्च

[1] मोक्षशास्त्रवैयर्थ्यादिति पा० ।

सिद्धान्तः अदृश्यत्वादिगुणकः सुखविशिष्टत्वाभिधानादेव चेति अदृश्यत्वादीनामपि गुणत्वं सुखादिवाचिशब्दानां तद्विशिष्टविषयत्वं च वदन् सूत्रकारः कथं निर्विशेषत्वं सिद्धान्तयेत्। किञ्च धर्मोक्तेः सर्वधर्मोपपत्तेश्चेति धर्मविशेषैः सार्वज्ञ्यादिभिः परमात्मत्वं प्रसाध्य कथं साधकधर्माणां मिथ्यात्वं वदेत्, न हि धूमाभावेऽग्निवत्साधकाभावे साध्यं सिध्येत् । किञ्च सूत्रयोजनाऽपि क्लिष्टतरा लिङ्ग–शब्दस्तावत् ज्ञाप्यस्वरूपातिरिक्तज्ञापकपरः प्रसिद्धः निर्विशेषस्वधर्मानभ्युपगमात्, तस्य लिङ्गशब्दवाच्यान्तर्गतत्वमयुक्तम्। किञ्च उभयलिङ्गं नेत्येतावदुक्तम् अन्यतरपरिग्रहे सविशेषं न भवतीति त्वशाब्दं सर्वत्र हीत्युक्ते निर्विशेषत्वप्रतिपादनादिति चाध्याहार्यं सविशेषत्वप्रतिपादनादिति चाध्याहारे कोनिवारकः प्रतिज्ञाऽनुगुण्याभाव इति चेन्न अन्यतरपरिग्रहे सविशेषमिति प्रतिज्ञाया अध्याहर्त्तुं शक्यत्वात्, हेत्वानुगुण्याभावाच्चेति चेन्न अन्योन्याश्रयस्य स्फुटत्वात्, उपरितनसूत्रानुगुण्यं न भवत्यत्र इति वक्ष्यामः। अथ स्यात्साकारत्वमेकं लिङ्गं साकार निराकारत्वमप्येकमिति तदुभयमुभय–शब्दवाच्यमित्यतो न द्वितीयप्रतिज्ञाऽध्याहारः प्रतिज्ञानुगुणहेत्वसिद्धौ च नान्योन्याश्रय इति तदयुक्तं सूत्रास्वारस्यात् साकारनिराकारत्वयोः परस्परविरुद्धयोरेकत्वेन निर्देशस्तावत् क्लिष्टः द्वयोरन्यतरविवक्षायां नियामकविशेषाश्रवणेऽपि स्वेच्छया कस्यचिद्विवक्षितत्वकथनमपि क्लिष्टं प्रत्युपाधिभेदमतद्वचनत्वं च त्वदुद्धृतश्रुतौ नास्ति तेजोमयोऽमृतमयः पुरुष इति तेनस्वित्वनिर्विकारत्वानन्दरूपत्वादिबहुविशेषप्रतीतेः आत्म–शब्दश्च देहप्रतिसम्बन्धिनि व्यापिनि नियन्तरि धारके शेषिणि रूढः इति सोऽपि निर्विशेषत्वविरोधी यतो निर्विशेषत्वप्रतिपादनमयुक्तम्, अत एवापि चैवमेक इति सूत्रं च न भेदव्युदासकश्रुतिविषयं, श्रुतिषु च न प्रामाणिकभेदव्युदास इत्युक्तम्, अरूपवदित्यत्र वच्छब्दवैयर्थ्यम्, अतत्प्रधानेभ्यस्तत्प्रधानप्राबल्यनयोऽप्यत्र निर्विषयः साकारश्रुतीनामतत्प्रधानत्वाभावात्तासां च तत्प्रधानत्वमनुवादत्वोपासनार्थत्वव्युदासात् तात्पर्यलिङ्गावगमाच्च स्थितम् उपासनशेषत्वव्युदासादेव प्रकाशवदिति सूत्रे भव-

दुक्तावैयर्थ्यमप्ययुक्तं प्रकाशस्यौपाधिकाकारयोगे दृष्टान्तत्वाद्वैयर्थ्यसमर्थने दृष्टान्ततया ऽन्वयो न घटते, प्रकाशतुल्यं ब्रह्म अतः साकारश्रुतिरौपाधिकाकारोपासनार्था, तस्माद्वैयर्थ्यमिति वाक्यभेदोऽध्याहारश्च, आह चेति सूत्रं च न निर्विशेषसमर्पणक्षमं विषयवाक्ये ज्ञानघनत्वावधारणस्य रसघनत्वावधारणवत् प्रामाणिकविशेषान्तरप्रतिक्षेपासमर्थत्वात्, निर्विशेषत्वप्रतिपादनायोगादेव दर्शयति चेति सूत्रं च न निर्विशेषार्थश्रुतिविषयं, श्रुतौ चान्यव्यावृत्तिमुखेन प्रतिपादनं न निर्विशेषत्वं गमयेत् व्यावृत्तिमात्रस्य शाब्दत्वात्, स्वगतविशेषप्रतिपादने सम्भवत्यपि नेति नेतीत्यन्यव्यावृत्तिकथनं निर्विशेषाभिप्रायमिति चेत् न व्यावर्त्यभूतान्यगतविशेषविरहाभिप्रायतया तदुपपत्तौ प्रामाणिकविशेषबाधकत्वकल्पनायोगात्, अत एव सूर्यादिदृष्टान्तोपन्यासोऽपि निर्दोषतयोपपद्यमानो न प्रामाणिकविशेषबाधकः, अम्बुवदित्यादिसूत्रद्वयस्य दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यशङ्का तद्व्युदासमात्रपरत्वमभिमन्दं तयोः सर्वथा साम्यविरहस्यास्त्रीबालं प्रसिद्धत्वादवश्यनिरसनीयशङ्कान्तरतत्परिहारपरत्वस्य स्वारसिकत्वाच्च परोक्तार्थपरत्वमयुक्तं दर्शनाच्चेति पृथक् सूत्रं कृत्वा तस्य देहाद्युपाध्यन्तरानुप्रवेशदर्शनादिति व्याख्यानमप्यफलं व्यापकस्य परमात्मनः सर्वत्रावस्थाने गुहां प्रविष्टावित्यादिषु बहुश उक्ते विप्रतिपत्त्यभावात्, प्रकृतैतावत्त्वमित्यादेः पृथगधिकरणत्वमप्ययुक्तं तादर्थ्याव्यवधानाभ्यां तदनुपपत्तेः, हि-शब्देन पूर्वप्रतिज्ञोपपादकत्वावगमात्, उभयलिङ्गं सर्वत्र हि तथा हि लिङ्गमिति स्वतःसूत्राणामेकोपक्रमोपसंहारत्वप्रतीतेश्च निषेध्योपस्थापकस्येति-शब्दस्य प्रकारवाचित्वात्प्रकारिणो ब्रह्मणो निषेध्यत्वशङ्का च नोदेति, ततश्च रूपद्वयं प्रतिषेध्यं चेत् त्वप्रत्ययवैयर्थ्यम् । यस्तु ब्रह्मप्रतिषेधबाधकत्वेन प्रक्षालनाद्धि पङ्कस्येति न्याय उक्तः स रूपद्वयप्रतिषेधमपि निरुणद्धि रूपोक्तिर्लोकसिद्धानुवाद इत्यदोष इत्यपि दुरुक्तं प्रपञ्चस्य ब्रह्मकार्यत्वतद्व्याप्यत्वतन्नियाम्यत्वतद्धार्यत्वादिमुखेन ब्रह्मरूपतायाः प्रमाणान्तरप्रसिद्ध्यभावेनानुवाद्यत्वायोगात्, अतस्त्वदुक्तन्यायस्तवैव बाधकः

न ह्येतस्मादिति नेत्यन्यत् परमस्तीति वाक्यं च न ब्रह्मव्यतिरिक्तं निषेधति, नापि प्रतिषेधरूपादेशादन्यदादेशनं प्रतिषेधति परान्यशब्दयोरन्यतरस्य वैयर्थ्यात्, अप्रतिषेधरूपाणां बहूनामुपदेशदर्शनाच्च अत उत्कृष्टान्तरनिषेधस्तस्यार्थः वेद्यत्वमनभ्युपगच्छता अनन्तरसूत्रद्वयस्याग्राह्यत्वग्राह्यत्वपरस्याविरोधो दुर्वचः यतो जीवब्रह्मणोर्व्याप्यव्यापकत्वादिलक्षणोऽन्योन्यभेदः शास्त्रैकगम्यो न प्रतिषेध्यः, अत एव च प्रकाशादिवच्चेति सूत्रस्य च संराध्यसंराधकभावनिमित्तभेदव्युदासपरत्वमयुक्तम् अवरानुगुणत्याच्च कर्म-शब्दस्याकृत्याद्युपाधिपरत्वं क्लिष्टं कर्मण्यभ्यासादित्यन्वयस्वारस्यं च त्यक्तम्, अभ्यासेनामकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यत इति निरङ्कुशाध्याहारसाम्राज्यं वाक्यभेदश्च तदुभयरहितनिर्वाहे सम्भवति तदुभयाश्रयणमयुक्तं यतः पूर्वसूत्राणां त्वदुक्तार्थपरत्वानुपपत्तिः, अत एव अतोऽनन्तेनेति सूत्रं च न ब्रह्मणा जीवैक्यापत्तिविषयं, लिङ्ग-शब्दस्य श्रुतिवाचित्वं चायुक्तं प्रत्यक्षानुमानाभ्यामिति श्रुतेः प्रत्यक्षशब्दनिर्दिष्टत्वात्, लिङ्ग-शब्दस्य चिह्नपर्यायत्वाच्च, उभयव्यपदेशादिति सूत्रद्वयस्य संराध्यसंराधकभावे मतान्तरोपन्यासपरत्वमप्ययुक्तं प्रकाशादिवदिति सूत्रस्य तत्प्रयुक्तजीवभेदव्युदासकत्वाभावात् "प्रकाशाश्रयवद्वे"ति सूत्रं न ब्रह्मैकदेशत्वपरं तेजस्त्वादिति जातियोगस्य हेतुतया प्रतिपादनात्, प्रकाशादिवदिति सूत्रस्य परोक्तार्थपरत्वाभावादेव पूर्ववद्वेति सूत्रं च न तदर्थातिदेशपरम् । नन्वंशो नानेति सूत्रस्य पादान्तरस्थतया विप्रकर्षाच्च तत्परामर्श इति चेन्न उभयव्यपदेशनिर्वहणार्थातिदेशसूत्रेण उभयव्यपदेशनिर्वहणपरसूत्रार्थस्यैव प्रत्यभिज्ञापितत्वात्, अन्यश्रुतेरिति चेतदुक्तमित्यनेन हि पादान्तरस्थमपि हि अर्भकौकस्त्वादिति सूत्रं प्रत्यभिज्ञाप्यते, एवं निर्विशेषप्रतिपादनानुपपत्तेरेव प्रतिषेधाच्चेति सूत्रमपि न भेदनिषेधपरं किन्तु ब्रह्मण्यचिद्धर्मप्रतिषेधवाक्यविषयमिति युक्तम् । अपरे तु प्रतिषेधाच्चेत्यन्तं सूत्रगणमेकाधिकरणं कुर्वन्ति, निर्गुणविद्यासु किं कारणात्मना निराकारं कार्यप्रपञ्चरूपेण साकारं च ब्रह्मोपास्यम्? उत निराकारमेवे? ति विचार्य नोभयलिङ्गमुपास्यम्, अस्थूलमिति प्रपञ्चाकारस्य निरस्तत्वात्, सृष्टिवा-

ख्यानां निराकारप्रतिपत्तावैदम्पर्य्यादिति सिद्धान्तयन्ति, सर्वाणि च भूतानि सर्व एवात्मानः समर्पिता इति नाभिस्थानीये ब्रह्मणि जीवानामरस्थानीयता-श्रवणेन भेदमाशङ्क्य परिहरति "भेदादिति चे"दिति, कारणात्मकं सल्लक्षण-मेव ब्रह्मोपास्यं चेत् न बोधलक्षणमुपास्य स्यादित्याशङ्क्याह "प्रकाशवच्चावै-यर्थ्या"दिति, प्रकाशः—अवभासःसोऽस्यास्तीति प्रकाशवत् सत्यज्ञानादि-वाक्यावैयर्थ्याद् भेदस्योपाधिकत्वे दृष्टान्तः सूर्यकादिवदिति प्रकाशा-दिवच्चावैशेष्यमिति च तदुच्यत इति योजयन्ति तदयुक्तं पादसङ्गत्यभा-वात् विद्याविशेषेषु उपास्याकारनिरूपणं हि तृतीयपादकृत्यं नोभयलिङ्ग-निर्गुणविद्यामूपास्यमित्यध्याहारबाहुल्यं च तत्रान्योन्याश्रयादीन्यनुपपत्त्य-न्तराणि पूर्ववन्नेदशब्दस्य साधारणत्वेऽपि स्वापाद्यवस्थानां प्रकृतत्वादव-वस्थाभेदादिति व्याख्यानमुचितं सल्लक्षणमेवोपास्यमित्यसमर्थितत्वादेव न बोधलक्षणमिति शङ्काऽनुचिता, आनन्दादयः प्रधानस्येति ज्ञानानन्दा-दीनां सर्वब्रह्मविद्यास्वनुवृत्तेर्वक्ष्यमाणत्वाच्च नात्र वक्तव्यता, प्राप्तस्यार्थ-वचनमपि हि पुनरुक्तमिति नीतिवदः। अन्ये तु न स्थानत इत्यारभ्य प्रतिषेधाच्चेत्येवमन्तमधिकरणचतुष्टयं वर्णयन्ति कार्यावस्था निरूपिताः कारणावस्था निरूप्यन्ते उभयलिङ्गं नाम रूपात्मकं रूपं खण्डत्वादि नाम शब्दप्रवृत्तिहेतुर्गोत्वादि अध्यात्ममधिदैवं चासंख्येषु स्थानेष्वन्तःकरणेषु बहिश्च स्थितस्येश्वरस्य स्थानतः स्वरूपपरिणामेन वा स्वरूपभेदोऽस्ति नेति विचारः, य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणीति स्थानभेदात्ताव-न्योन्यस्मिन् प्रतिष्ठिताविति सम्बन्धाम्नानात् एतान्यष्टावायतनानि अष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रमात् तं त्वौपनिषदं पुरुषं पृच्छामीति संख्यामननात् रूपं रूपं प्रति रूपो बभूवे-त्यादिश्रवणात् प्रलयकालेऽपि जीवानामिव सूक्ष्मभेदोपपत्तेर्भोक्ता भोग्यं प्रेरितारमितिवदेकस्तदा सर्वभूतान्तरात्मेत्यादिष्वेकत्वव्यपदेशस्य जात्य-भिप्रायत्वोपपत्तेश्चेश्वरस्य स्थानिनः स्वरूपभेदोऽस्तीति प्राप्ते नेत्युच्यते सर्वत्र ब्रह्मानुगम्य प्रतिपाद्यते "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते

एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्ये तं वायावेतमाकाश एतमप्स्वेतमोषधिष्वेतं वनस्पतिषु एतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत” इति, । ननु येऽचामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च तस्यैतस्य तदेव रूपं यदमुष्य रूपं तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्यध्यात्ममिति ऐश्वर्यनामरूपभेदात्स्वरूपभेद इति चेत् न मधुविद्यावाक्ये प्रत्येकं प्रति स्थानमतद्वचनात् एकत्ववचनात् अपि चैकमेके शाखिनस्तयोः स्थानद्वयवर्त्तिनोः परमभेदमधीयते “यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः स मृत्युमित्यादिना, सतीष्वप्युभयीषु श्रुतिषु हिरण्यश्मश्रुत्वादिरहितमेव परस्वरूपं तद्धि प्रधानं नित्यमितरत्तु कार्यार्थमागन्तुकमिति, अतो न परमात्मनि स्वरूपभेद इति सोऽयमारम्भः कृतकरत्वान्निरस्तः अन्तर्याम्यधिकरणेन सिद्धसाध्यत्वात् । तत्र हि “य इमं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयती”ति तत्र तत्रावस्थितस्यैकतयापरमात्मत्वं दर्शितं, न च वाच्यम् अन्तर्यामिणः परमात्मत्वमात्रं तत्र सिद्धं न तु पृथिव्यादिष्ववस्थितस्यैकत्वमिति एकतया विना परत्वासिद्धेः, एकैकस्थानावच्छिन्नमैश्वर्यं हि जीवेष्वपि सम्भवतीति तस्येश्वरत्वानिर्णय एव स्यात्, तत्तत्स्थानावच्छिन्नैश्वर्यभेदसम्बन्धसंख्यादिहेतव इह परिहर्त्तव्या इति चेन्न परिहारादर्शनात्, न हि तत्परिहार एषु सूत्रेषु कण्ठोक्तः साध्योपयिकः कृत्स्नोऽप्यर्थ आभिप्रायिको व्याख्येय इति चेत्तर्हि तत्परिहाराः सर्वे तत्र तत्र समन्वयलक्षणाधिकरणेष्वेवाभिप्रेततया व्याख्येयाः । अन्यथा तेषां वाक्यानां परमात्मनि समन्वयासिद्धेः, यत्र स्वपक्षे साधकयुक्तिरेकत्वावगमरूपा प्रतीता तस्याः स्थेम्ने तत्रैव तद्विरुद्धयुक्तिपरिहारो ह्यभिप्रेतो भवितुमर्हति, यथेक्षणेनागौणेन सतः प्रधानवैलक्षण्ये साधिते दृष्टान्तोक्तिः सम्भवार्थतयाऽप्युपपत्तेरनुमानाकारतात्प्रतिक्षेपोऽभिप्रेतः । आनन्दवल्ल्यां “स यश्चायं पुरुषे यश्चासावादित्ये स एक” इति पुरुषे आदित्ये चावस्थितस्यैकत्वावगमात् आदित्याख्यदेवताविशे-

यस्यैवानन्दमयत्वप्रत्याख्यानार्थमन्तरादित्यविद्यारम्भ इति तैरेव व्याख्यातत्वात्, स्थानभेदेऽपि स्थानिन एकत्वं पूर्वसिद्धं, सूत्राक्षराननुगुणता च सूत्रे नञ्शब्दस्य किं निषेध्यं, नामरूपम्? उत स्वरूपभेदः? नामरूपं चेदनिषेध्यं तत्र विहितत्वात्, स्वरूपभेदश्चेदशाब्दत्वं, जीवावस्थाऽन्वयिनां दोषाणां निषेध्यतया ऽध्याहारस्तु प्रकृतानुसारादुचितः, सर्वत्र हीत्यत्र अनुकृष्य प्रतिपादनादिति चाशब्दम् । अस्माकन्तु हेत्वंशः शाब्द एवा तद्वचनादेकत्ववचनादिति चायुक्तं मधुविद्यावाक्ये यश्चायमिति मुहुर्निर्देशस्य यश्चायं देवदत्तः यश्चायं यज्ञदत्त इतिवद्भेदेऽप्युपपत्तेरात्मत्वव्यपदेशस्य प्रत्येकं युक्तत्वाच्च । ईश्वरैकत्वस्यासमर्थनीयत्वादेव सूत्रान्तरयोरप्यर्थोऽनुपपन्नः प्रकाशवच्चेत्यादिकमधिकरणान्तरं, तत्र आदित्यवर्णं रुक्माभं भारूप इत्यादीनां बोधलक्षणपरत्वं पूर्वपक्षीकृत्य दीप्तिमत्ताप्रतिपादनं सिद्धान्तयन्ति न तेजसि बोधत्वं न बोधे तिमिरापहत्वमतः सादृश्याभावाद्वैयर्थ्यं, तदभावश्चावैयर्थ्यं, तन्मात्रं तेजोमात्रं भारूप इत्युक्तं तेजोरूपस्य परस्य भोक्तृहृदयेऽवस्थानाभिप्राया जलसूर्याद्युपमा दर्पणस्थानीयस्य कस्यचिदभावादम्बुवदग्रहणं नात्र मुख्यप्रतिबिम्बभावः जलस्थानीयमन्तःकरणं तत्र यथा भोक्तॄणां वृद्धिह्रासभाक्त्वमन्तःकरणविसर्पणे हि भोक्तारो विसर्पन्ति आलोमभ्य आनखाग्रेभ्यः तस्मिन् प्रतिह्रासमाने प्रतिह्रासन्ते यावदणुभावः एवं परोऽप्यात्मान्तःकरणेषु वृद्धिह्रासभाक्त्वं भजते, एवं दृष्टान्तदार्ष्टान्तिकसामञ्जस्यं दर्शनाज्जीववदनुप्रवेशदर्शनं पुरुष आविशदिति इदमप्यन्तरादित्यज्योतिरधिकरणादिष्वीश्वरस्य दीप्तिमत्त्वस्य सिद्धतया कृतकरत्वादयुक्तम् ईश्वरस्य स्वरूपविसर्पणे निर्विकारत्वश्रुतिवैयर्थ्यं च प्रकृतैतावत्त्वमित्यत्र चतुर्धा संशय्य रूपद्वयातिरिक्तं ब्रह्मेति सिद्धान्तयन्ति तत्र ब्रह्मप्रतिषेधशङ्काऽनुपपन्नेत्युक्ता इति–शब्दस्य प्रकारवाचितया ब्रह्मोपस्थापकत्वाभावाद्रूपद्वयस्य ब्रह्मणि तादात्म्यं निषेधतीति च न शङ्कनीयं ब्रह्मणो रूपे इति व्यतिरेकनिर्देशेन तादात्म्यप्रसङ्गाभावात्प्रसक्तस्य हि प्रतिषेधशङ्कानिरासपरत्वं युक्तं तादर्थ्यनैरन्तर्यादिभिरधिकरणान्तरत्वमप्ययुक्तमित्युक्तम् एतावत्त्वं च रूपद्वयमा-

त्वं तन्निषेधेन प्रपञ्चादतिरिक्तकारणरूपमस्तीति प्रतिपाद्यत इति चायुक्तं ब्रवीति च भूयोऽपीत्युपपादनादथ नामधेयमिति वाक्यं ह्यत्रा-भिप्रेतमुक्तं प्रपञ्चानतिवर्तत्वेऽपि हि सत्यस्य सत्यमित्युपपद्यते, अत उक्तगुणविभूतविशिष्टतामात्रनिषेध इति युक्तं यतो ब्रह्मनिषेधो न शङ्क्य-अत एव तदव्यक्तमित्यादिसूत्राणि सर्वगतस्यातीन्द्रियत्वाद्भिरनुपल-म्भनिमित्ताभावव्युदासपराणि यथा प्रकाशः प्रकाशान्तरेण जलं शुद्धज-लेन च संसृष्टमेकीभवति एवं संराधयितुः संराध्येन अविभागश्रवणाच्च प्रपञ्चातिरिक्तब्रह्मसद्भावोझटिति ब्रह्मसाक्षात्काराभावश्च न दोषः अभ्याससाध्यत्वात्तस्येति योजनायां प्रकाशश्चेति प्रकाश–शब्दस्य स्वसूत्र-स्थितप्रकाशशब्दसरूपार्थत्वं स्वरमसिद्धं भाष्येत यस्मादणोरण्यस्य जीवस्य संराध्येनावैशेष्यमतोऽस्य ब्रह्मणा सह सोऽश्नुत इति सर्वकामावाप्ति-राम्नायते अणोरण्यस्यानन्त्याय स्वरूपविसर्पणे लिङ्गं बालाग्रेत्यादिश्रुति-रिति योजना चाध्याहारबाहुल्यबहिष्कृतेति स्फुटं प्रपञ्चातिरिक्तस्य पर-मात्मनो भोक्तृभोग्यवर्गयोश्च कार्यकारणभावप्रकार उभयव्यपदेशादित्य-धिकरणे चिन्त्यते असौ द्रव्यतद्रूपस्यारूपेणोपादानोपादेयात्मक इत्यहि-कुण्डलवदित्युक्तं भेदाभेदयोर्मुख्यत्वाय, अनेनेश्वरस्य परिणामः पूर्वपक्षी-कृतः शक्तिमच्छक्तिविक्षेपरूपेणोपादानोपादेयात्मकः कार्यकारणभाव ईश्व-रस्य निर्विकारत्वायेत्युक्तं, प्रकाशाश्रयेति सूर्यकान्तचन्द्रकान्तसप्तायः-पिण्डादीनां हि कारणानां रश्मिदहनसलिलादिनिष्पादने प्रवेशे वा न स्वरूपविकारः, । तर्हि कथमभेदव्यपदेश इत्यत्राह "तेजस्त्वादि" ति भानु-मरीच्योस्तेजस्त्वेनैव सत्त्वद्रव्यत्वादिना परमात्मनोजगतश्चैकत्वमिति अहिकुण्डलपक्षस्य अप्रतिक्षेप्यत्वायाह "पूर्ववद्वे" ति, अहिकुण्डलन्यायेन अत्यन्ताभेदो ब्रह्मापेक्षया जगतोऽभ्युपगतः ईश्वरस्य तु निर्विकारत्वात् तस्य जगतश्च मणिप्रभयोरिव शक्तिविक्षेपरूपेणैव कार्यकारणभाव इति सिद्धान्तमाहुः, तदिदमसम्बद्धं ब्रह्मण ईश्वरातिरिक्तत्वे प्रमाणाभावात् सकलप्रमाणन्यायविरोधाच्च बह्वध्याहारापेक्षत्वाच्च मध्यमसूत्रस्य सूत्र-काराविवक्षितोऽयमर्थ इत्यवगम्यते । अहिकुण्डलाधिकरणं समाप्तम् ॥

पराधिकरणम् ।

**सू० परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३० ॥**

भू० इदानीमस्मात्परस्माज्जगन्निमित्तोपादानरूपपरमकारणात्परब्रह्मणः परमपि किञ्चित्तत्त्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते, अस्योपास्यस्य निर्दोषत्वानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वस्योक्ते, तत्रेयं शङ्का, यदिदं परं ब्रह्मोभयलिङ्गम्, एतस्मान्निखिलजगत्कारणात्परमपि किञ्चित्तत्त्वमस्ति, "कथम् अथ य आत्मा स सेतुर्विधृति"रित्यस्य परस्य सेतुत्वव्यपदेशात्, सेतु-शब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेः, इतोऽन्यदनेन प्राप्यमस्तीति गम्यते ।

टी० सू० परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३० ॥ अवान्तरसङ्गतिमाह "इदानी"मिति, अस्मादिति, अतः-शब्दस्य व्याख्यानं प्रकृतश्च न स्यानतोऽपि परस्येति सूत्रे पर-शब्दनिर्दिष्ट इति ज्ञापयितुं परस्मादित्युक्तं, परमकारणत्वप्रयुक्तोत्कर्षवाची परब्रह्मण इत्यत्र पर-शब्दः । यद्वा परस्मादिति पदेन प्राप्यतया परत्वं विवक्षितं परब्रह्मण इत्यत्र स्वकार्यापेक्षया परत्वमुच्यते, परमकारणादिति कारणान्तराहित्यम् अस्योपास्यस्येत्युभयलिङ्गत्वस्योक्त इत्यर्थः । अन्यथा प्राप्यत्वतदुपयोगिभोग्यगुणजातवैकल्ये सति न ह्युभयलिङ्गत्वपौष्कल्यसिद्धिरिति भावः । पूर्वाधिकरणे उभयलिङ्गकत्वस्योक्तं निर्दोषत्वविषयनिरूपणं कृतम्, अत्र तु कल्याणगुणास्पदत्वविषयनिरूपणमित्युक्तं भवति । उभयलिङ्गाद् ब्रह्मणः किं परमस्ति ने?ति अस्य परत्वे सेतून्मानादिव्यपदेशा उपपन्ना? न वे?ति, अनुपपन्नत्वेपरान्तरमस्मि उपपन्नत्वे परान्तरं नास्तीति

सिध्यति तत्रेयमित्यादि । असङ्करकरत्वाभिप्रायः सेतुव्यपदेशः स्यादिति शङ्कायामाह–

सू० तथा एतं सेतुं तीर्त्वाऽथ सन्नद्धो भवती"ति तरितव्यता चास्याभिधीयते, अतस्तस्मादन्यत्प्राप्यमस्ति, उन्मानव्यपदेशाच्च उन्मितं परिमितम् इदं परं ब्रह्म चतुष्पाद्ब्रह्म षोडशकलमिति उन्मानव्यपदेशात्, स चायमुन्मानव्यपदेशस्तेन सेतुना प्राप्यस्यानुन्मितस्यास्तित्वं द्योतयति, तथा सम्बन्धव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते, "अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् अमृतस्यैष सेतु"रिति अतश्च परात्परमस्ति भेदेन च परात्परं व्यपदिश्यते, परात्परं पुरुषमुपैति परात्परं यन्महतो महान्तमिति च, तथा "तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं तद्रूपमनामयमि"ति, अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति गम्यते, इत्येवं प्राप्तेऽभिधीयते ॥

## सू० सामान्यात्तु ॥ ३१ ॥

तु–शब्दः पक्षं व्यावर्त्तयति, यत्तावदुक्तं सेतुव्यपदेशात् परात्परमस्तीति तन्नोपपद्यते न ह्ययमत्र किञ्चित्प्राप्यं प्रति सेतुरुच्यते एषां लोकानामसम्भेदायेति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः, सिनोति बध्नाति स्वस्मिन्सर्वं चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते, एतं सेतुं तीर्त्वेति तरतिश्च प्राप्तिवचनः, यथा वेदान्तं तरतीति ॥

## सू० बुद्ध्यर्थः पादवत् ॥ ३२ ॥

यो ऽयं चतुष्पाद् ब्रह्म षोडशकलं पादोऽस्य विश्वाभूता-नीत्युन्मानव्यपदेशस्स बुद्ध्यर्थः उपासनार्थः सत्यं ज्ञानम-नन्तंब्रह्मेत्यादिभिर्जगत्कारणस्य ब्रह्मणोऽपरिच्छिन्नित्वा-वगमात् स्वत उन्मितत्वासम्भवात्, जगत्कारणत्वं हि तस्यैव श्रूयते "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः सोऽकामयत बहु स्यां प्रजायेयेतीति ।

टी० "तथा एतं सेतु"मिति, सम्बन्धव्यपदेश इत्यादि पूर्वं केवलं सेतु–शब्दः अत्र प्रतिसम्बन्धिनिर्देशसहितसेतु–शब्दनिर्देशः, भेदे न चेति पराज्जगत्कारणात् श्रुतावपि पञ्चम्यन्तः परशब्दः कारणविषय इति पूर्वपक्षिणो हृदयम् ॥ राद्धान्तसूत्रमुपादत्ते सू· सामान्यात्तु ॥ ३१ ॥ अवयवा-शंनाप्यसङ्करकरत्वं दर्शयति "सिनोति बध्नाती"ति, एतं सेतुं तीर्त्वेत्यस्य कोऽर्थ इत्यत्राह "एतं सेतुमि"ति, सू· बुद्ध्यर्थः पादवत् ॥ ३२ ॥ अपरिच्छेदवाक्यं न जगत्कारणविषयं किन्तु तदतिरिक्तत्वतस्त्वविषयमि-त्यत्राह "जगत्कारणत्वं ही"ति, पादवदिति सूत्रखण्डं व्याचष्टे–

सू० अतो यथा वाक्पादः प्राणः पादश्चक्षुष्पादो मनः पाद इत्यादिना ब्रह्मणो वागादिपादव्यपदेश उपासनार्थः, एवमयमपि स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मा-नसंभवस्तत्राह–

**सू० स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥**

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात्तत्सम्बन्धित-योन्मितत्वानुसन्धानं सम्भवति, यथा प्रकाशादेर्विततस्य वातायनघटादिस्थानभेदैः परिच्छिन्नत्वानुसन्धानसम्भव इत्यर्थः ॥

**सू० उपपत्तेश्च ॥ ३४ ॥**

यदुक्तममृतस्यैष सेतुरिति प्राप्यप्रापकसम्बन्धव्यपदेशात् प्रापकात्परं प्राप्यमन्यदस्तीति तन्न प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः, "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा"मित्यनन्योपायत्वश्रवणात्, ॥

## सू० तथाऽन्यप्रतिषेधात् ॥ ३५ ॥

यत्पुनरुक्तं ततो यदुत्तरतरं परात्परं पुरुषम् अक्षरात्परतः पर इत्यादिभेदव्यपदेशात्परात्परमस्तीति तन्नोपपद्यते तच्चैव ततोऽन्यस्य परस्य प्रतिषेधात्, "यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चि"दिति यस्माद्परं परं नास्ति किञ्चित् ।

टी० "अतो यथे"ति, न हि निखिलजगत्कारणस्येश्वरस्य वाक्प्राणचक्षुरादिकतिपयवस्तुपरिच्छिन्नत्वं सम्भवति, अतस्तस्योपासनार्थत्वं संप्रतिपन्नमिति भावः ॥ अनन्तरसूत्रशङ्कामाह "स्वयमनुन्मितम्ये"ति, सू· स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥ दृष्टान्तभूतवागादिविषयमिदं सूत्रम् ॥ सू· उपपत्तेश्च ॥ ३४ ॥ अनन्योपायत्वश्रवणात्—प्राप्यस्यैवोपायत्वश्रवणादित्यर्थः । विवृणुते तनूं स्वामित्यनेन प्रापकत्वं प्राप्यत्वं च गम्यते ॥ सू· तथाऽन्यप्रतिषेधात् ॥ ३५ ॥ दूष्यांशं दर्शयन् व्याचष्टे "यत्पुनरित्यादिना, तच्चैव श्वेताश्वतरोपनिषदि ॥ उपात्तवाक्यस्यान्वयमाह "यस्माद्परमि"ति, तस्यार्थमाह—

मू० न केनापि प्रकारेण परमस्तीत्यर्थः, तथाऽन्यत्रापि "न ह्येतस्मादिति नेत्यन्यत्परमस्ती"ति नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्परं ह्यस्तीत्यर्थः, तथा "न तस्येशे कश्चन तस्य

नाम महद्यश" इति तद्धि जगदुपादानकारणतयाऽनन्तरमुक्तं "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि स आपः प्रदुघे उभे इमे" इत्यादिना अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टाविति च जगत्कारणं पुरुषमेनं प्रत्यभिज्ञापयति च ।

टी० "न केनापी"ति, यस्मादिति पञ्चम्यन्तपदेनापर-शब्दस्य अन्वये सति समाभ्यधिकनिषेधः कृत स्यात्, परशब्दस्यान्वये सति समनिषेधो न कृतः स्यात्, तच्चानिष्टं तथा सति परमपुरुषवेदनस्यैकस्यैवापवर्गोपायत्वं पूर्वोक्तं न सिध्येत्, समाभ्यधिकनिषेधपरश्रुत्यन्तरविरोधश्च, अपर शब्दवैयर्थ्यं च स्यात् परत्वेन विवक्षितरुद्रव्यतिरिक्तविषयोऽयम् परा शब्द इति चेत् न कार्त्स्न्येन परत्वनिषेधे स्वतः प्राप्ते तस्यानन्यथासिद्धसङ्कोचकाभावात्ततो यदुत्तरतरमित्यादिवाक्यं हेत्वर्थत्वेनान्यथासिद्धमिति भावः ॥ न तस्येश इति वाक्यं जगत्कारणातिरिक्तविषयं स्यादित्यत्राह "तद्धी"ति, "हिरण्यगर्भः समवर्त्तताग्रे प्रजापतिः प्रजा असृजत धाता-यथापूर्वमकल्पय"दित्यादिभिर्हिरण्यगर्भस्यं कारणत्वप्रतिपादना सद्ब्रह्मात्मादिशब्दैरपि स एव कारणतयोच्यते शम्भुराकाशमध्य इत्यादिभिरपि स एवोच्यते शम्भुः स्वयंभूर्द्रुहिण इति नैघण्टुकोक्तेरिति शङ्कायामाह "अद्भ्यः सम्भूत" इति, अत्रैव विद्युतः पुरुषादधीति पुरुष-शब्दाद्विद्युद्वर्णत्वादतिदिष्टेष्वद्भ्यः सम्भूत इत्यादिवाक्येषु लक्ष्मीपतित्वश्रवणात् यमन्तः समुद्रे कवयो वयन्तीति समुद्रशायित्वश्रवणात्तदक्षरे परमे व्योमन्निति परमव्योमसम्बन्धश्रवणाच्चावगतपरमपुरुषभावजगत्कारणप्रतिपादकप्रकरणेनैकप्रकरणं, हिरण्यगर्भः समवर्त्तताग्रे इत्यादिवाक्यमपि परमपुरुषस्यैव जगत्कारणत्वमाहेत्यर्थः । अन्यथा ब्रह्मशिवयोः सृज्यत्वसंहार्यत्वश्रुतिविरोधश्च ॥

सू० ततो यदुत्तरतरमिति किमुच्यत इति चेत् पूर्वं च "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् तमेवं विदा-

नमृत इह भवति नान्यः पन्था विद्यतेऽयनाये"ति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनं नान्योऽमृतत्वस्य पन्था इत्युपदिश्य तदुपपादनाय यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व"मिति पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासम्भवं च प्रतिपाद्य ततो यदुत्तरतरं तद्रूपमनामयं य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ती"ति पूर्वोक्तमर्थं हेतुतो निगमयति यदुत्तरतरं पुरुषतत्त्वं तदेवारूपमानमयं यतस्ततो ये तत्पुरुषतत्त्वं विदुः त एवामृत भवन्त्यथेतरे दुःखमेवापियन्तीति अन्यथोपक्रमविरोधोऽनन्तरोक्तिविरोधश्च परात्परं पुरुषमुपैति दिव्यमित्यपि पूर्वचाक्षरात्परतः पर इत्यक्षराद्व्याकृताद्यः परः समष्टिपुरुषस्तस्मात्परो योऽपहतपाप्मत्वादिगुणकः सर्वज्ञः परमपुरुषः स एवेहापि परात्पर इति समष्टिपुरुषात्परत्वेनोच्यते ॥

टी० ततोयदुत्तरमिति किमुच्यत इति यस्मात्परमित्यादिवाक्यस्य सङ्कोचकत्वेन परोक्तमिदं वाक्यमन्यथासिद्धमिति इममर्थं हृदि निधाय तस्यान्यथासिद्धिः कथमित्याह "किमुच्यत"इति, तस्मात्सर्वगतः शिव इत्यस्य पूर्वपठितं तेनेदं पूर्णं पुरुषेणेति वाक्यं ततः पश्चान्महान् प्रभुर्वै पुरुष इति वाक्यं तदुभयानुरोधेन सर्वाननशिरोग्रीवत्वगुहाशयत्वभगवच्छब्दाद्यनुरोधेन च वर्णनीयं सर्वाननशिरोग्रीवत्वादिकं हि सहस्रशीर्षं देवमित्यादिषु पुरुषोत्तमासाधारणत्वेनावगतमित्यर्थः । ततस्तस्माद्धेतोरित्यर्थः । अरूपमनामयं कर्मकृतदेहतत्कृतदुःखविरोधितापत्रयप्रतिभटमित्यर्थः । उपक्रमविरोधः नान्यः पन्था इति वाक्यविरोधः, य एवं विदुरिति

वाक्यस्य परमपुरुषेतरवेदनपरत्वं हि नान्यः पन्था इत्यनेन विरुद्धम् । अनन्तरोक्तिविरोधश्च, यस्मात्परं नापरमित्यादिवाक्यविरोधश्चेत्यर्थः । परात्परमित्यादि परात्परमित्यादिवाक्येऽपि समष्टिपुरुषात्परत्वेन परमपुरुष उच्यत इति प्रतिज्ञा, पूर्ववाक्ये समष्टिपुरुषविलक्षणतया प्रतिपाद्यत्वेन निश्चितस्यादृश्यत्वादिगुणकस्यपरात्पर-शब्देनात्रप्रतिभिज्ञानादित्यर्थः ॥

**सू० अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥**

**सू०** अनेन ब्रह्मणा सर्वगतत्वं सर्वस्य जगतो व्याप्यत्वमायाम-शब्दादिभ्यः सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानमस्मात्परं नास्तीत्यवगमयति, आयाम-शब्दस्तावत् तेनेदं पूर्णं पुरुषेण सर्वं यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः । आदि-शब्दाद्ब्रह्मैवेदं सर्वम् आत्मैवेदं सर्वमित्यादयो गृह्यन्ते । अत इदं परं ब्रह्मैव सर्वस्मात्परम् ॥ पराधिकरणं समाप्तम् ॥

टी० सू० अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥ पूर्वसूत्रैरधिकवस्तुवादे दूषणमुक्तमिह स्वपक्षे प्रमाणमुच्यते नियन्तृत्वेन व्याप्तिज्ञापनार्थं 'नित्यं विभुमिति श्रुतिरुपात्ता विभुं प्रभुम् इयं श्रुतिः परमपुरुषविषया परात्परं पुरुषमुपैति दिव्यं दिव्यो ह्यमूर्तः पुरुष इति पुरुषविषयप्रकरणस्थत्वात्, सूत्रस्थमादि-शब्दं व्याचष्टे "आदिशब्दादि"ति, इत्यादयो गृह्यन्त इत्यादि-शब्देन व्यतिरिक्ततत्त्वनिषेधपरवाक्यानि धारकत्वनियन्तृत्वादिपूर्वकव्याप्तिपरवाक्यानि समानाधिकरणवाक्यानि च विवक्षितानि सर्वविद्योपास्यविशेषनिर्णयपरनारायणानुवाके नियन्तृतया व्याप्तिरन्तर्बहिश्चेत्यादिना धारकत्वं तद्वि-

श्वमुपजीवतीति शेषित्वं पतिं विश्वस्येति चोक्तं, नियमनार्थव्यापनधा-रणा-शेषित्वैः कृत्स्नप्रपञ्चशरीरकत्वं ब्रह्मणः सिद्धम् । एवमीश्वरस्य कृत्स्न-प्रपञ्चशरीरकत्वसिद्ध्या तदधिकतत्त्वं नास्तीत्यधिकतत्त्वाभावे प्रमाणमुक्तं स्यात्, तत्त्वान्तरसद्भावे सति कृत्स्नशरीरकत्वायोगात् । किञ्च विश्वतः परमं नित्यम् । अन्तर्बहिश्च तत्सर्वं व्याप्य विश्वमेवेदं पुरुष इति त्रिवि-धपरिच्छेदराहित्यमुक्तं, तथा सहस्रशीर्षत्वादिविशिष्टपुरुषप्रतिपादकत-यैतत्समानार्थं च पुरुषनारायणे यद् भूतं यच्च भव्यं स भूमिं विश्वतो वृत्वा पुरुष एवेदं सर्वम्” इति त्रिविधपरिच्छेदराहित्यमुक्तम्, अतश्चाधि कवस्तुनिषेधसिद्धिः, अधिकवस्तुद्भावे सति परिच्छेदाभावायोगात्, अत इदृशानि वाक्यानि अनुसन्धेयानीति भावः ॥ परस्तु सम्बन्धव्यपदेशो नाम सता सोम्य तदा संपन्नो भवति प्राज्ञेनात्मना संपरिष्वक्त इति दर्शितः । भेदव्यपदेशश्च य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते य एषो ऽन्तरक्षिणि पुरुष इति दर्शितः, स्थानविशेषादित्यादिसूत्राणि सम्बन्ध-भेदव्यपदेशपरिहारपराणि व्याख्यातानि उपाधिभेदापेक्षया भेदव्यपदेशो न स्वरूपतः भेदोपशम एव सम्बन्धः ईदृशः सम्बन्ध उपपद्यते, स्वमपीत इति स्वरूपसम्बन्धश्रवणात्, सर्वन्तं परादादित्यादिरन्यप्रतिषेधः, अनेन सेतुत्वादिव्यपदेशनिराकरणे सर्वगतत्वं सिद्धं भवति, अन्यथा वस्त्व-न्तराद्व्यावृत्तत्वेनात्मनः परिच्छेदः स्यात्, सर्वगतत्वं चायामशब्दा-दिभिर्ज्ञायत इति व्याचष्टे तत्र न तावज्जगत्कारणाद्ब्रह्मणो विलक्षणव-स्तुमात्रमिहनिषेध्यं किन्तूत्कृष्टं तत्त्वान्तरं प्रामाणिकस्य प्रधानजीवेश्वर-वैलक्षण्यस्यानिषेध्यत्वात् कार्यकारणभेदनिषेधस्य चारम्भणाधिकरणे कृतत्वात् सेतून्मानभेदव्यपदेशादीनां कार्यकारणभेदसाधकत्वाभावाच्च, न हि कारणमेव स्वकार्यप्राप्तौ सेतुरिति नियमः, सर्वगतत्वस्य सिद्धा न्तहेतुतयोक्तत्वाच्च नान्यमात्रं प्रतिक्षेप्यं तस्य भेदसाधकत्वाद्व्याप्तिर्हि व्याप्यव्यापकभेदमवगमयति, अत उत्कृष्टतत्त्वनिषेधार्थत्वेऽधिक-रणस्य सिद्धे सुषुप्तिवाक्यप्रतिपन्नसम्बन्धो न पूर्वपक्षबीजं भवति कारणात् ब्रह्मणः सुषुप्तस्योत्कर्षाभावात्, अत एवादित्यादिरू-

पस्थानकृतो भेदश्च न पूर्वपक्षयुक्तिः अत एव स्थानविशेषादिति सूत्रं न सम्बन्धभेदव्यपदेशपरिहारपरं कतम आत्मेति योऽयं विज्ञानमय इत्यादिप्रकरणे सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् परमेश्वरो विवक्षित इति समर्थितत्वात् तन्निरासश्चानुपपन्नः यथाऽन्यप्रतिषेधादिति सूत्रं च यस्मात्परमित्यादिवाक्यविषयं न तु सर्वन्तं परादादित्यादिवाक्यविषयम् उत्कृष्टान्यनिषेधस्यैवाधिकरणकृत्यत्वात् अनेन सेत्वादिनिर्देशनिराकरणेन अन्यप्रतिषेधाश्रयणेन च सर्वगतत्वं सिध्यति । तच्चायामशब्दादिभिः सिध्यतीति योजनायां वाक्यभेदः तच्छब्दाध्याहारश्च सर्वगतत्वं च भेदसाधकत्वाद् भवतां विरुद्धं, न च भेदे सति वस्तुतः परिच्छेदः स्यात् तस्य भेदरूपत्वाभावात् । अन्ये तु सम्बन्धभेदव्यपदेशौ वयमिव वर्णयन्त एव स्थानविशेषादिति सूत्रमपि तयोः परिहारपरमाहुः विकारवर्त्तिनो ब्रह्मणो बर्हिविकारमवस्थितं ब्रह्म प्रति सेतुत्वं ततो यदुत्तरतरमिति च परमाकाशवर्त्तिन ईश्वरस्य विकारस्थादीश्वरात् भेदव्यपदेश इति न स्वरूपभेद इति उपपद्यते चैवमन्यथेश्वरद्वयप्रसङ्गात् तस्मात्सर्वगतः शिव इत्युक्त सर्वगतत्वम्, अनेन सेतुत्वादिव्यपदेशनिर्वहणेनोपपादितं भवति, तच्च ज्यायान् पृथिव्या इत्यादिभिरायामशब्दादिभिः सिद्धमिति तदपि न साधीयः, अनवच्छिन्नब्रह्मानुभवस्य ब्रह्मोपासनलभ्यत्वशास्त्राच्च देशभेदापेक्षं सेतुत्वं वाच्यं सर्वं ह पश्यः पश्यति इमान् लोकान् कामान् नीकामरूप्यनुसंचरन्" इति हि श्रूयते विकारावस्थितादीश्वरात्परमाकाशस्यस्योत्तरत्वमिति निर्वाहोऽप्ययुक्तः, वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं ततोयदुत्तरतरमिति परमाकाशस्थात् पुरुषादुत्तरत्वप्रतीतेः, अनेन सेतुत्वादिव्यपदेशान्यपरत्वकथनेन तस्मात्सर्वगतः शिव इत्युत्तरवाक्यस्यसर्वगतत्वमुपपादितं भवतीत्यप्ययुक्तं पूर्वपक्षदृष्ट्या पूर्ववाक्योक्तात् कारणपुरुषात् परत्वेऽप्युत्तरवाक्यप्रतिपाद्यस्य सर्वगतत्वे विरोधाभावात्, अतो वाक्यान्तरसिद्धायाः कारणवस्तुनो व्याप्तेरसङ्कोच एव तत उत्कृष्टस्याभावे हेतुत्वेन विवक्षितः ॥

पराधिकरणं समाप्तम् ॥

फलाधिकरणम् । **सू० फलमत उपपत्तेः ॥ ३७ ॥**

सू० उक्तमुपासिसिषोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वं प्राप्यस्य च परमपुरुषस्य निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मात्परत्वं च, अतः परमुपासनं विवक्षित्नुपासीनानां परस्मादेवाऽस्मात्पुरुषात्तत्प्राप्तिरूपमवर्गाख्यं फलमिति संप्रति ब्रूते तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिककर्मापि फलमत एव परस्मात्पुरुषाद्भवतीति सामान्येन फलमत इत्युच्यते, कुत एतत् उपपत्तेः, स एव हि सर्वज्ञः सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाराधित ऐहिकामुष्मिकभोगजातं स्वस्वरूपप्राप्तिरूपमपवर्गं च दातुमीष्टे, न ह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥

**सू० श्रुतत्वाच्च ॥ ३८ ॥**

"स वा एष महानज आत्माऽन्नादो वसुदानः एष ह्येवानन्दयाती"ति भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ सम्प्रति पूर्वपक्षमाह—

**सू० धर्मं जैमिनिरत एव ॥ ३९ ॥**

अत एवोपपत्तेः शास्त्राच्च यागदानहोमोपासनरूपधर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते, लोके हि कृष्यादिकं कर्म दानादिकं च कर्म साक्षाद्वा परम्परया वा स्वयमेव फलसाधनं दृष्टम्, एवं वेदेऽपि यागदानहोमादीनां साक्षात्फलसाधनत्वाभावेऽपि परम्परया अपूर्वद्वा-

रेण फलसाधनत्वमुपपद्यते, तथा यजेत स्वर्गकाम इत्यादिशास्त्रमपि सिषाधयिषितस्वर्गस्य कर्त्तव्यतया यागाद्यभिदधदन्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्वमेवावगमयति, ।

## सू० पूर्वन्तु वादरायणो हेतुव्यपदेशात् ॥ ४० ॥

तु-शब्दः पक्षव्यावृत्त्यर्थः, पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान् वादरायणो मन्यते, कुतः हेतुव्यपदेशात्, यज देवपूजायामिति देवताराधनभूतयागादाराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात् "वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती"त्यादिषु ।

टी० सू० फलमत उपपत्तेः ॥ ३७ ॥ सिद्धान्तोपक्रममिदमधिकरणम्, अवान्तरसङ्गत्यर्थमनुवदति "उक्त"मिति, सर्वस्मात्परत्वं प्राप्यत्वं तत्कल्याणगुणाकरत्वान्तर्भूतमपि पृथगधिकरणनिरूपितत्वात् पृथगुक्तं.सूत्रमुक्तिरिति न निर्दिष्टमपि तु फलमिति साधारणनिर्देशः कृतः, अतस्तस्य प्रयोजनमाह "तुल्यन्यायतये"ति, त्रिवर्गप्रदकर्माराध्यत्वफलप्रदत्वयोरपि मुमुक्षोरनुसन्धेयत्वात्तदप्यत्र निरूपितम् अत उपासनोपयोग्यर्थविचारानन्तरं तदुपयोग्यर्थान्तरं निरूप्यत इति सङ्गतिरित्यर्थः । फलत्वमुक्तं फलप्रदत्वं निरूप्यत इति च सङ्गतिः, तच्च कल्याणगुण इति पादान्तर्भावः पूर्वमीमांसायाम् अपूर्वाधिकरणे द्वारमात्रं निरूपितम्, अत्र तु द्वारविशेषो निरूप्यत इति भिदा । किं सा पूर्वोक्तकर्मोपासनात् स्वर्गापवर्गफलोत्पत्तिः ? उत कर्मोपासनाराधितात् वाय्वादिरूपात्केवलाच्च ब्रह्मण ? इति, किं स एवैनं भूतिं गमयति यमेवैष वृणुते तेन लभ्य इत्यादिवाक्यशेषोवाय्वादिरूपस्य

केवलस्य च ब्रह्मणः फलप्रदत्वमवगमयति ने? ति किं वाक्यशेषो यथा प्रतीतार्थपरः? उतातत्परः? इति, अतत्पर इति अतत्परत्वे तत्तद्देवतारूपस्य च ब्रह्मणः फलप्रदत्वाभावात् सा पूर्वोक्तकर्मोपासना फलसिद्धिः स्यात्, अनन्यपरत्वे तु देवतारूपस्य केवलस्य चेश्वरस्य फलप्रदत्वावगमकत्वात् कर्मोपासनाराधितात् तत्तद्देवतारूपात् केवलाच्च ब्रह्मणः फलसिद्धिः सर्वज्ञत्वमर्थिनामपेक्षिततद्विरोधितन्निरासादिज्ञानोपयोगि सर्वशक्तित्वं भोग्यभोगोपकरणादिनिष्पादनप्रतिबन्धनिरसनोपयोगि द्वयमपि लुब्धस्याकिञ्चित्करमिति महोदारत्वोक्तिः, ईश्वरस्य योग्यत्वमुक्तं, कर्मणस्त्वयोग्यत्वमाह "न ही"ति, । सू· श्रुतत्वाच्च, ॥ ३८ ॥ केवलकर्मणो योग्यत्वाभावादीश्वरस्यैव योग्यत्वात्तस्यैव फलप्रदत्वं कल्प्यमित्युक्तं तत्कण्ठोक्तं चेत्यस्य सूत्रस्यार्थः । अत्राह:—अत्रदः । अनन्तरसूत्रं पूर्वपक्षपरमित्याह "अप्रती"ति, सू· धर्मं जैमिनिरत एव, ॥ ३९ ॥ उपपत्तिं दर्शयति "लोके चे"ति, शास्त्रं दर्शयति "एवं वेदेऽपी"ति, स्वर्गकामो यजेतेत्यत्र फलसाधनत्वं श्रुतमेव तत्र मद्द्वारकत्वं कल्प्यमिति न विरोधः ॥ सिद्धान्तसूत्रमुपादत्ते "पूर्वं तु बादरायणो हेतुव्यपदेशात्, यज्ञ देवेत्यादि तथा व्यपदेशं दर्शयति "वायव्यमि"ति, मन्त्रार्थवादयोरनुष्ठेयार्थप्रकाशनस्तुत्योरन्यपरत्वाच्च स्वार्थे प्रामाण्यमित्यत्राह—

मू॰ कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षित एवेति नान्यपरत्वशङ्का युक्ता । एवमपेक्षिते ऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतादृष्टादिपरिकल्पनं च प्रामाणिका न सहन्ते, लिङादेरोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधाति, नान्यदलौकिकमिति प्रागेवोक्तं, तदेवं वायुर्वै क्षेपिष्ठा देवतेत्यादिशब्दाद्वाय्वादीनां फलप्रदत्वमवगम्यते, वाय्वा·

"क्रतुयज्ञेभ्यश्च"॥ अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम् । 'अनन्तोदात्तार्थ आरम्भ इति'। तत्र राजसूयवाजपेयशब्दौ कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तौ, राज्ञा सूयते राजा वेह सूयते क्यप्, तत एव निपातनात्समासः षष्ठीसमासो वा । पीयतेस्मिन्निति पेयः कृत्यल्युटो बहुलमित्यधिकरणे यत्, वाजो यवागू- भेदः, तस्य पेयः पायो वाजपेय इति, स्तुतिः स्तोमः अग्नेस्तोमोस्मिन्निति बहुव्रीहिः, परादिश्च परान्तश्चेत्यन्तोदात्तः । नवैर्व्रीहिभिर्यजनं नवयज्ञ आग्रयणं, कर्तृकरणे कृता बहुलमिति समासः, कृदुत्तरपदप्रकृतिभावेन तङ् एव स्वरोत्रनिष्ठेनइत्यन्तोदात्तः । अल्पपर्यायः पाकशब्दः, पाक- श्चासौ यज्ञश्च पाकयज्ञः, समासस्वरेणान्तोदात्तः । सत्यप्यार्थेणतस्य रम्भे ऽन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव ठञ्प्रत्ययो युक्त इत्यन्तो- दात्तानामुपन्यासः । 'क्रतुभ्य इत्येव सिद्धइति' । क्रतुयज्ञयोः पर्याय- त्वादिति भावः । 'असोमयागेभ्योपीति'। अन्यथा क्रतुशब्दस्य सोमयागे रूढत्वादन्यत्र न स्यात्,यज्ञग्रहणात्तु तेभ्योपि भवति। एवं केवलयज्ञग्रहणेपि स एव दोषो यः केवलक्रतुग्रहणे, तस्माद् गौणमुख्यपरिग्रहार्थमुभयोरुपा- दानम् ॥

"अध्यायेष्वेवर्षेः" ॥ 'ऋषिशब्दाः प्रवरनामधेयानीति'। होत्रा- ध्वर्युणा च प्रव्रियन्तइति प्रवराः भृग्वादयः, तद्यथा भार्गवच्यावनाप्रवानौ- र्वजामदग्नेति होता, जमदग्निवदुर्ववदप्रवानवच्च्यवनवद्भृगुवदित्यध्वर्युः, एतेन यद्यपि मन्त्रदर्शिष्वृषिशब्दः प्रसिद्धस्तथापि प्रवराध्यायपठितानामेव ग्रहणमिति दर्शयति । 'वसिष्ठस्य व्याख्यान इति'। वसिष्ठेन दृष्टो मन्त्र उपचाराद् वसिष्ठ इत्युक्तः, वासिष्ठी ऋगिति भवार्थेण, एवकारः सर्व- व्याख्यानां सावधारणत्वज्ञापनार्थः ॥

"पौरोडाशपुरोडाशात्ष्ठन्" ॥ 'पुरोडाशाः पिष्टपिण्डा इति'। दाश दाने कर्मणि घञ्, पुरोदाश्यन्ते दीयन्तइति पुरोडाशाः, पृषोदरादि- त्वात्समासः, दकारस्य च डकारः, एतेनैतदाह व्याकृतिवचनः पुरोडाश- शब्दो न यूपाहवनीयादिवददृष्टनिमित्त इति । 'तेषां संस्कारको मन्त्र

इति'। मखस्य शिरोऽसीत्येवमादिः। 'पुरोडाशसहचरितो मन्त्रः पुरोडाश इति'। मन्त्र एव हि व्याख्यातव्यो न पुरोडाशः ॥

"छन्दसो यदणौ"॥ अत्र भवव्याख्यानयोर्द्वावर्थौ यदणौ प्रत्ययावपि द्वावेव, तथापि यथासंख्यं न भवति, तस्य व्याख्यान इति यदणौ भवतः, तत्र भव इति चेत्येवं समुच्चयात्। 'ऋचि इति ठञि प्राप्त इति'। उत्तरसूत्रे ऋग्ग्रहणेन ठञि प्राप्त इत्यर्थः ॥

"द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्"॥ 'अणादेरपवाद इति'। आदिशब्देन ठञः, तत्र ऋक्शब्दे ऋतु चाणोऽपवादः, पुरश्चरणशब्दोऽपि ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, असिप्रत्ययो हि सप्तम्यन्त इत्युपदातत्इति पुरःशब्दः कारकं, पुरोऽव्ययमिति वा गतिः तेन तस्मादप्यण एवापवादः, ब्राह्मणादिष्वन्तोदात्तेषु ठञोऽपवादः, ऋकारान्तेष्वप्यणोऽपवादः, ये तु तत्र बह्वचोऽन्तोदात्तास्तेषु परत्वादयं ठञं बाधते। 'नामाख्यातग्रहणं सङ्घातविगृहीतार्थमिति'। आख्यातात् विगृहीतग्रहणं नामशब्दात्तु द्व्यच्त्वादेव सिद्धम् ॥

"अणृगयनादिभ्यः"॥ 'ठञ इरिति'। आदिशब्देन ठकः छस्य च ग्रहणं, तत्र विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकोऽपवादः, व्याकरणशब्दाद्वृद्धाच्छस्य, शेषा बह्वचोऽन्तोदात्तास्तेभ्यः ठञः, अथाण्ग्रहणं किमर्थं, न ऋगयनादिभ्यो यथाविहितमेवोच्येत वचनप्रामाण्यादणो विहितो न च प्राप्नोति अन्येन बाधितत्वात्स एवाण् भविष्यत्यत आह। 'अण्ग्रहणमिति'। असत्यण्ग्रहणे यद्वृद्धमन्तोदात्तं बह्वच् यथा वास्तुविद्येति तस्माद्वृद्धाच्छे ठञा बाधिते पुनर्वचनाच्छ एव स्यात् अण्ग्रहणात्त्वणेव भवति। 'ऋगयनमिति'। पूर्वपदात्संज्ञायामग इति णत्वं न भवति अग इति प्रतिषेधात् अयनशब्दश्च भावसाधनोऽभेदोपचाराद्ग्रन्थे वर्तते, अतो भावकर्मवचनत्वादन्तोदात्तः, पदव्याख्यानशब्दो मन्क्तिन्व्याख्यानेत्यन्तोदात्तः, छन्दोमानशब्द ऋगयनशब्देन व्याख्यातः, छन्दो भाषेति कृत्स्वरेणान्तोदात्तः, छन्दोविचितिशब्दो मन्क्तिन्नित्यन्तोदात्तः, पुनरुक्तशब्दस्याथादिस्वरेण, निरुक्तशब्दः संज्ञायामनाचितादीनामिति, निगमशब्दो गोत्र-

रादिसूत्रे धातो निपातितोऽन्तोदात्तः. वास्तुविद्या क्षत्रविद्या अङ्गविद्येति समासस्वरेण, उत्पातोत्पादशब्दो थाथादिस्वरेण. अशेः सरन्, वसेः संपूर्वाच्चिदिति संवत्सरशब्दोऽन्तोदात्तः, मुहूर्तनिमित्तशब्दौ प्रातिपदिकस्वरेण, उपनिपूर्वात्सदेः, क्विप् उपनिषच्छब्दः कृत्स्वरेणान्तोदात्तः ॥

"तत आगतः" ॥ 'तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यत इति'। मुख्यत्वादेव, अपादानसंज्ञा तु नान्तरीयकस्यापि भवति, कारकप्रकरणे हि गौणमुख्यविभागो नाश्रीयते ॥

"ठगायस्थानेभ्यः" ॥ 'आय इति स्वामिग्राह्यो भाग इति'। तस्येदं स्वामी स्वामिनं वायमेतीति कृत्वा ॥

"शुण्डिकादिभ्योऽण्" ॥ 'आयस्थानठकोऽपवाद इति'। उपलक्षणमेतत्। कृकणशब्दात्कृकणपर्णाद्भारद्वाजइति छस्याप्यपवादः, तीर्थशब्दादूर्मादिलक्षणस्य वुञोऽप्यपवादः, उदपानशब्दादुत्साद्यञोऽप्यपवादः। अथाणग्रहणं किमर्थं न शुण्डिकादिभ्यो यथाविहितमेवोच्येत वचनसामर्थ्याद्धि यो विहितो न च प्राप्नोति, अन्येन बाधितस्त्व स एवाण् भविष्यतीत आह। 'अणग्रहणमिति'। उदपानशब्द इह पठ्यते, स चोत्सादिः, तत्रासत्यणग्रहणे आयस्थानठकं बाधित्वा उत्सादिभ्योऽञित्यञेव स्यात्, अणग्रहणात्त्वणेव भवति ॥

"विद्यायोनिसम्बन्धेभ्यो वुञ्" ॥ 'विद्यायोनिकृतइति'। बहुव्रीहौ गतार्थत्वात्कृतशब्दस्याप्रयोगः ॥

"ऋतष्ठञ्" ॥ एषूदाहरणेष्विसुसुक्तान्तात्कः, एव च प्रक्रियालाघवाय कश्चेवायं विधेयः, तथा तु न कृतमित्येव ॥

"पितुर्यच्च" ॥ 'पित्र्यमिति'। रीङृतः, यस्येति च।

"गोत्रादङ्कवत्" ॥ 'अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यतइति'। कथं मुख्ये सम्भवति लक्षणाश्रीयते, व्याख्यानमत्र शरणम्। अपर आह। अङ्के यद् दृष्टं तदतिदिश्यते न त्वङ्कमाहृत्य विहितं गोत्रचरणाद्वुञित्ययमपि वुञ् तस्येदमिति सामान्ये विहितोऽप्यञादिभ्यतिरिक्ते विषयेऽङ्केपि

दृष्ट इति तस्याप्यतिदेश इति । 'श्रौपगवकमिति' । वुञ उदाहरणम्, अणस्तु वैदं गार्ग्यं दात्तमिति, वतिः सर्वसादृश्यार्थः, कालेभ्यो भववत्, चरणेभ्यो धर्मवदिति यथा ॥

"हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः" ॥ 'समाद्‌गतमिति' । समाद्धेतोरागतमित्यर्थः । तत्र हेतौविति तृतीया प्राप्नोति, ज्ञापकात्सिद्धं, यदयं पञ्चम्यन्ताद्धेतोः प्रत्ययमाह तज्ज्ञापयति भवति हेतौ पञ्चमीति, नैतदस्ति ज्ञापकं, यत्र विभाषा गुणइति पञ्चमी तदर्थमेतत्स्यात्, जाड्यादागतइति, तस्माद्विभाषागुणइत्यत्र विभाषेति योगविभागादगुण-वचनादपि पञ्चमी भवति ॥

"मयट् च" ॥ 'योगविभागो यथासंख्यनिरासार्थइति' । विक-ल्पार्थेनान्यतरस्यांग्रहणेन रूप्यमयटोः पक्षे ऽभावः प्रतिपाद्यते तदभावे स्वशास्त्रेणैव प्राप्तः प्रत्ययो भवति, तेन रूप्यमयटोरेवानेन विधाना दमति योगविभागे स्याद्देव यथासंख्यमिति भावः ॥

"प्रभवति" ॥ 'प्रकाशतइति' । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते तत्र जात इत्यनेन गतत्वात् ॥

"विदूराञ्ञ्यः" ॥ अयुक्तोयं निर्देशइत्याह । 'ननु नेति' । 'वालवायो विदूरं चेति' । वालवायशब्दः प्रत्ययमुत्पादयति विदूरं चादेशमापाद्यते, सूत्रे त्वादेश एव निर्दिष्टः, तेनानुरूपः स्थानी वालवा-यशब्द आक्षिप्यते यथा शिवादिषु विश्रवणरवणेत्यादेशाभ्यां पठिताभ्यां विश्रवः शब्दः । 'प्रकृत्यन्तरमेव वेति' । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकः स एवात्र प्रकृतिरित्यर्थः । 'न वै तत्रेति चेद्‌ब्रूयादिति' । चेच्छब्दो ऽसमायां, पर्वतवाची विदूरशब्दो न प्रसिद्ध इति चेद्‌ब्रूयात्स जित्वरीवदु-पाचरेत्, व्यवहरेत्, यथा वणिज एव मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्त्येवं वैयाकरणा एव वालवायं विदूरमुपचरन्ति, नियतपु-रुषापेक्षापि प्रसिद्धिर्भवतीत्यर्थः ।

"तद्गच्छति पथिदूतयोः" ॥ प्राप्तिफले परिस्पन्दे गमिर्वर्तते न च पथः परिस्पन्दोऽस्ति तस्मात्प्रकारान्तरेण गमनं पथ्युपचर्यतइत्याह ।

तत्स्थेष्विति' । 'अथ वेति' । प्राप्तावपि गमिर्वर्तते यथा देवभूयङ्गत इति ॥

"अभिनिष्क्रामति द्वारम्" ॥ 'द्वारमभिनिष्क्रमणक्रियायामिति'। अनेनैतदाह तत्स्थेष्वभिनिष्क्रामत्सु करणभूते द्वारे तदारोपाद् द्वारमेवाभिनिष्क्रामतीत्युच्यतइति, अभिनिष्क्रमणं द्वारमिति नोक्तं तद्धिति द्वितीयाधिकारात् तदा हि कृद्योगलक्षणा षष्ठी प्राप्नोति ॥

"अधिकृत्य कृते ग्रन्थे" ॥ 'आख्यायिकाभ्य इति' । तादर्थ्ये चतुर्थी. आख्यायिका गद्यग्रन्थप्रभेदः, तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः । न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते क्वचिन्न ॥

"शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" ॥ 'इन्द्रजननादिराकृतिगण इति' । तेन विरुद्धभोजनीयमध्यायं व्याख्यास्याम इति सिद्धं भवति ॥

"सोऽस्य निवासः" ॥ इह यस्य स्रुघ्नो निवासः स्रौघ्नः भवति तत्रस्तत्र भव इत्येव सिद्धं शब्दार्थभेदात्तु पृथगुपादानम् ॥

"अभिजनश्च" ॥ 'अभिजनाः पूर्वबान्धवा इति' । अभिजायते तेभ्य इति कृत्वा, पूर्वबान्धवाः पित्रादयः, बन्धुशब्दः प्रज्ञादिः । 'तत्सम्बन्धाद्देशोऽपीति' । यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते तथाभिजनशब्दो देशे, कः पुनरसौ देश इत्याह । 'यस्मिन्निति' । 'तद्धिहेत्यादि' । तदितिवाक्योपन्यासे, कथं पुनर्मुख्ये ऽभिजने सम्भवति गौणात्प्रत्ययो भवतीत्याह । 'निवासप्रत्यासत्तेरिति' । प्रत्यासन्नेनानन्तरसन्निहितेन निवासशब्देनाभिजनस्य विशेषणादित्यर्थः । इह हि निवासे योऽभिजन इति विशेषिते तस्माद्देशवाचिन एव प्रत्ययः । 'निवासाभिजनयोः को विशेष इति' । 'अभिजनस्यापि निवासभूतस्य ग्रहणाच्चास्त्येव विशेष इत्यर्थः । 'यत्रेति' । यत्र स्वयं निवसति स तस्य निवासः । यत्र तु पूर्वैः पित्रादिभिरुषितं सोऽभिजन इत्यर्थः ।

"आयुधजीविभ्यश्छः पर्वते" ॥ 'आयुधजीविभ्य इति तादर्थ्ये चतुर्थीत्यादि'। यदि त्वायुधजीविभ्य इति पञ्चमी स्यात्पर्वतार्दिति ल्यब्लोपे पञ्चमी व्याख्येया स्यात् ततश्चायमर्थः स्यात् आयुधजीविभ्यः पर्वतमुद्दिश्य पर्वतेभिधेये छो भवतीति तत्र सोभिजन इत्यधिकारो बाध्येत ॥

"शण्डिकादिभ्यो ञ्यः" ॥ 'अणादेरपवाद इति'। आदिश-ब्देन छादेः, तत्र यदि शण्डिकादयः पर्वतशब्दास्ततः पूर्वेण छः प्राप्तः, अथ जनपदशब्दास्ततोवृद्धादपि बहुवचनविषयादिति वुञ्, शण्डिका-शब्दात्कोपधादण् प्राप्तः ॥

"सिन्धुतक्षशिलादिभ्योऽणञौ" ॥ 'सिन्धुवर्णुप्रभृतय इति'। प्रभृतिशब्देन मधुमत्कम्बोजसाल्वकश्मीरगन्धारइत्येते गृह्यन्ते, किष्कि-न्धादिभ्यश्चतुर्भ्यो ऽवृद्धादपीति वुञि प्राप्ते वचनं, तक्षशिलादिष्वपि वृद्धेभ्यश्छः प्राप्तः, शेषेभ्यः प्राग्दीव्यतोण् ॥

"अचित्ताददेशकालाट्ठक्" ॥ 'अचित्तवाचिन इति'। स्वरू-पग्रहणं तु न भवति, देशकालप्रतिषेधात् तत्साहचर्याद्देशकालयोरपि स्वरूपग्रहणं न भवति ॥

"वासुदेवार्जुनाभ्यां वुन्" ॥ 'छाणोरपवाद इति'। वासुदेव-शब्दः संज्ञेति वक्ष्यति, तेन तत्रोत्तरस्य वुञोप्राप्तिः, अर्जुनशब्दोपि यो वृ-क्षविशेषवचनो वर्णविशेषवचनो वा न तत्र वुञः प्राप्तिः क्षत्रियवचना-दपि बहुलवचनाद्वुञोप्राप्तिरेवेति भावः। 'ननु चेत्यादि'। वसुदेव-स्यापत्यम्, ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण्। 'न चात्रेति'। न तावद् वृद्धौ विशेषः प्रागेव वृद्धत्वात्, योपि वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः सोस्यापि न कोपधाया इत्यस्येव। 'संज्ञैषा देवताविशेषस्येति'। वस-त्यस्मिन्सर्वमिति व्युत्पत्त्या परमात्मन एषा संज्ञा। 'न क्षत्रियाख्येति'। उपलक्षणमेतत्, नापि गोत्राख्येत्यपि द्रष्टव्यम्। प्रासङ्गिकं प्रयोजनान्तरं वासुदेवग्रहणस्य दर्शयति। 'अज्ञाद्यदन्तम्, अल्पाच्तरमिति चेति'।

इतिकरणः प्रत्येकमभिसंबद्ध्यते, यद्यप्येतज्ज्ञाप्यते तथापि श्वयुवमघोना-मतद्धितइति निर्देशात्क्वचिदन्यथापि भवति ॥

"गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्" ॥ 'गोत्रक्षत्रियाख्येभ्य इति'। आङ्पूर्वात्ख्यातेर्मूलविभुजादित्वात्कः । 'आख्याग्रहणमिति'। आङ्पूर्वस्य ख्यातेर्ग्रहणमित्यर्थः । 'यथाकथंचिदिति'। क्षत्रियशब्दसामाना-धिकरण्याद्येषां क्षत्रिये वृत्तिः यथाशूरः क्षत्रियइति, तेभ्यो मा भूदित्यर्थः ॥

"जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने" ॥ जनपदिनां जनपदिवाचिनां शब्दानां जनपदवत् जनपदवाचिनां शब्दा-नामिव जनपदेन जनपदवाचिना शब्देन समानशब्दानां समानश्रुतीनां बहुवचने बह्वर्थाभिधाने, वृत्तरप्येष एवार्थः । 'प्रत्ययः प्रकृतिश्चेति'। अनेन सर्वशब्दस्यार्थो दर्शितः । 'जनपदिनो जनपदस्वामिन इति'। स्व-स्वामिभावसम्बन्धे मत्वर्थीयं दर्शयति । अङ्गाजनपदाइत्यादिना दृष्टान्ते प्रवृत्तिप्रकारमाह । तद्वदित्यादिना तूदाहरणं, सर्वत्र बहुष्वर्थेषु द्व्यञ्म-गधेत्यादिना विहितस्याणस्तद्राजस्य बहुष्विति लुकि कृते समानशब्दाद-वृद्धादपि बहुवचनेति वुञि विवक्षिते गोत्र्यलुगचीति वचनादाङ्गशब्दाद्वुञ्, । 'पञ्चाला ब्राह्मणा इति'। अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः, तत्रातिदेशाभावादणेव भवति । 'सर्वग्रहणमित्यादि'। असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्याच्च प्रकृतेः, वतिनिर्देशस्तु यैर्जनपदैर्ये जनपदिनस्तेषां तज्जनपदप्रत्यय एव यथा स्यात् जनपदा-न्तरप्रत्ययो माभूदित्येवमर्थं स्यात्, न त्वनेन प्रकृत्यतिदेशो लभ्यते, तस्मात्तदर्थं सर्वग्रहणं क्रियते, स च द्व्येकयोः प्रयोजयतीति पाठः, स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोः प्रयोजयति न बहुषु तत्र रूपस्याभिन्नत्वात्, यदाह, बहुवचने समानशब्दानामिति। द्व्येकयोस्तु जनपदवाचिनो रूपं वृद्धं जनपदवाचिनस्त्ववृद्धमिति तत्रैव सर्वग्रहणस्य प्रयोजनमित्यर्थः । 'अति-देशः प्रयोजयति'। अतिदेशं प्रयोजयतीति वा पाठे न समीचीनमर्थं पश्यामः । 'वृद्धिनिमित्तेष्वित्यादि'। तत्र ह्यतिदिष्टेपि प्रकृतिरूपे पुन-र्वृद्ध्या भाव्यमिति नास्ति विशेषः । 'मद्रवृज्योः कनि विशेष इति'।

तत्र वृद्ध्यसम्भवात् । 'प्रकृतिनिर्ह्रासे कृतइति'। निर्ह्रासोपचयोऽल्पत्व-मित्यर्थः । 'मद्रकः वृजिक इति'। असति तु प्रकृत्यतिदेशे माद्रकवा-र्ज्यक इति स्यात् । 'बहुवचनग्रहणमित्यादि'। समानशब्दताया यो विषयस्तस्य लक्षणं प्रदर्शनं तदर्थम्, 'अन्यथा हीति'। यदि बहुवचन-ग्रहणं न क्रियते । 'यत्रैवेति'। बहुवचने, तत्रैव हि तद्राजस्य लुकि कृते समानशब्दता भवति 'एकवचनद्विवचनयोर्न स्यादिति'। लुगभावेन समानशब्दताया अभावात्, ननु सर्वग्रहणं प्रकृत्यतिदेशार्थं स च वुञ्कयोः प्रयोजयतीत्युक्तं तत्कथं वुञ्कयोर्न स्यात् तस्मात्सर्वग्रहणाद्यत्र क्वचित्स-मानशब्दानां सर्वत्रातिदेशः सिद्धः अस्यैवार्थस्य विस्पष्टप्रतिपत्त्यर्थं बहु-वचनइत्युपलक्षणमुपात्तम् ॥

"तेन प्रोक्तम्" ॥ 'प्रकर्षेणोक्तमिति'। अध्यापनेनार्थव्याख्यानेन वा प्रकर्षेणप्रकाशितमित्यर्थः । प्रकर्षेणेतिवचनाद्ग्रामेग्रामे यद्यपि काठ-कादिकं देवदत्तादिभिः प्रोच्यते तथापि तेभ्यः प्रत्ययो न भवति । 'न तु कृतमिति'। प्रपूर्वो वचिः करणेपि वर्त्तत इति भावः । मथुरायां भवो माथुरः, ततो वृद्धाच्छे प्राप्ते कलापिनोऽणित्यणग्रहणादधिकवि-धानार्थोऽण् प्रत्ययः । 'पाणिनीयमिति'। स्वयमन्येन वा कृतं यत्पा-णिनिना प्रोक्तं तदुच्यते ॥

"तित्तिरिवरतन्तुखण्डिकोखाच्छण्" ॥ 'छन्दसि चायमिष्यत इति'। छन्दस्यभिधेयइत्यर्थः । 'तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवतीति'। न केवलं छणेवापि त्वणपि न भवत्यनभिधानादित्याहुः । कथं पुनरिष्यमाणोपि छन्दसि लभ्य इत्याह । 'शौनकादिभ्य इति'।

"काश्यपकौशिकाभ्यामृषिभ्यां णिनिः" ॥ "णकार उत्तरत्र वृद्ध्यर्थ इति'। इह तु पूर्वमेव वृद्धेः सिद्धत्वात्, योपि वृद्धिनिमित्तस्येति पुंवद्भा-वप्रतिषेधः सोपि न प्रयोजनं णिन्यन्तस्याम्नायवेदितृविषयत्वेन स्त्रिया-मवृत्तेः, वृत्तावपि जातेश्चेति सिद्धत्वात्, चरणत्वेन जातित्वात् । 'तस्यापि चेति'। कथं छन्दोब्राह्मणानामुच्यमाना तद्विषयता कल्पस्य भवति, तत्राह । 'शौनकादिभ्य इति'। ननु च तत्रानुवृत्तौ सत्यामप्यस्ययोगस्य न

कल्पः छन्दो भवति नापि ब्राह्मणमत आह। 'छन्दोऽधिकारविहितानां चेति'। छन्दोब्राह्मणानीत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोऽस्यापि णिनेस्तद्विषयताभवतीत्यर्थः। यत्तु छन्दोब्राह्मणानीत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनं तत्प्रकारान्तरं द्रष्टव्यम्। 'इदानीन्तनेन गोत्रकाश्यपेनेति'। नह्यसावृषिरमन्त्रदर्शित्वात्॥

"कलापिवैशम्पायनान्तेवासिभ्यश्च"॥ 'कलाप्यन्तेवासिनामित्यादि'। सूत्रे त्वभेदोपचाराश्रयो निर्द्देशः। 'कलाप्यन्तेवासिनश्चत्वार इत्यादि'। ननु च शिष्यशिष्येष्वपि शिष्यव्यवहारो लोके दृश्यते तत्कथमियन्त एवेति नियमस्तत्राह। 'प्रत्यक्षकारिण इति'। क्रियासामान्यवचनः करोतिः प्रकरणादिहाध्ययने वर्त्तते। 'कलापिखाण्डायनियहणादिति'। एतदेव विवृणोति। 'तथाहीति'। वैशम्पायनस्यान्तेवासी कलापी, यदि चान्तेवास्यन्तेवासिनोऽपि गृह्येरन् कलापिग्रहणमनर्थकं वैशम्पायनान्तेवासिभ्य इत्येव सिद्धं कलाप्यन्तेवासिनामपि वैशम्पायनान्तेवासित्वात्, तथा वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाण्डायनः, तत्र व्यवहितानामपि ग्रहणे वैशम्पायनान्तेवासित्वादनेनैव सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फलः स्यात्, उदाहरणेषु छन्दोब्राह्मणानीति तद्विषयता, अध्येतृप्रत्ययस्य प्रोक्ताल्लुगिति लुक्। 'उलपेन चतुर्थेनेति'। सहयोगे तृतीया, कलापिन इदं कालापकं. गोत्रचरणाद्वुञ् तत्र धर्माम्नाययोरिति पठ्यते तस्मादिहोपमानाच्छिष्यसमूहे प्रयोगः। 'आलम्बिश्चरकःप्राचामिति'। आलम्बिर्नाम प्राचां देशउत्पन्नश्चरकस्य शिष्यः, एवं पलिङ्गकमलावुभौ प्राचामेव त्रय एते प्राच्या उक्ताः। 'कठकलापिनोरिति'। कठचरकाल्लुगिति कठाल्लुगुक्तः, कलापिशब्दादपि कलापिनोऽणित्यणुक्तः॥

"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु"॥ 'भाल्लविन इत्यादि'। भल्लु शाट्यायन ऐतरेय पिङ्ग अरुण पराजि इत्येतेभ्यो णिनिः, यज्ञवल्काश्मरथशब्दौ कण्वादी, ताभ्यां यञन्ताभ्यामप्यापत्यस्येति यलोपः। ननु च

याज्ञवल्क्यादीन्यपि पुराणप्रोक्तान्येव, शाट्यायनकादिभिर्ब्राह्मणान्तरैस्तुल्यकालत्वादित्यत आह । 'याज्ञवल्क्यादयो हीति' । आख्यानानि भारतादीनि । 'तथा व्यवहरतीति' । अर्थस्तु, तथा वा भवत्वन्यथा वेति भावः । 'तद्विषयता कस्मान्न भवतीति' । याज्ञवल्क्यादिविषयः प्रश्नः, छन्दो ब्राह्मणानि चेत्यत्र पुराणप्रोक्तत्वविशेषस्यानाश्रयणात्प्राप्नोतीति भावः । 'प्रतिपदमिति' । एतल्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते, एतदर्थमेव च तत्र ब्राह्मणग्रहणं छन्दस्त्वादेव सिद्धेः, कल्पेषु तर्हि कस्मान्न भवति यथा काश्यपिनः कौशिकिन इत्यत्रेत्यत आह । 'न वायमिति' । युक्तं तत्र छन्दोऽधिकारे तस्य योगस्यानुवृत्तेः, अयं तु न तथेति कल्पेष्वपि तद्विषयता न भवतीत्यर्थः । 'न चात्यन्तबाधैवेति' । सिद्धशुष्कपक्वबन्धेश्चेति निपातनादेव सिद्धे शुषः कः पचो व इति लिङ्गमबाधकान्यपि निपातनानि भवन्तीति, यथा तु सर्वादिसूत्रे भाष्यं तथान्यपराण्यपि निपातनानि बाधकान्येवेति स्थितम् ॥

"कलापिनोऽण्" ॥ 'यथाविहितमेवोच्यतेति' । तत्र वचनसामर्थ्यादणो विहितो न च प्राप्नोति स एवाण् भविष्यतीति भावः । 'एवमादीनीति' । आदिशब्देन मौदाः पैप्पलादाः शाकला इत्येतेषां ग्रहणम् । अत्र मुदपिप्पलादशाकल्य इत्येतेभ्यः पुराणप्रोक्तेष्विति णिनेरपवादोऽण् भवति ॥

"पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" ॥ 'तदर्थं छन्दोग्रहणमनुवर्त्यमिति' । ननु तदनुवृत्तावपि कथं भिक्षुनटसूत्रयोश्छन्दस्त्वं तत्राह । 'गुणकल्पनया चेति' । उपचारस्य निमित्तभूतो धर्मो गुणो गुरुशुश्रूषणादिस्तन्निमित्ता कल्पना गुणकल्पना । 'पाराशरिण इति' । पूर्ववद्यलोपः । 'शैलालिन इति' । शिलामलतीति शिलाली, अल भूषणपर्याप्तिवारणेष्वित्येतस्मात्सुप्यजाताविति णिनिः, ततोऽस्मिन् णिनौ टिलोपः । 'पाराशरमिति' । कण्वादण् । 'शैलालमिति' । औत्सर्गिकेऽणि नान्तस्य टिलोपे सब्रह्मचारीत्यादिना टिलोपः ॥

"तेनैकदिक्" ॥ 'सौदामनीति'। अन्निति प्रकृतिभावः, सुदामादयः पर्वतविशेषाः ॥

"तसिश्च" ॥ 'स्वरादिपाठादव्ययत्वमिति'। तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानमपि स्वाभाविकं वेदितव्यम् ॥

"उपज्ञाते" ॥ 'विनोपदेशेन ज्ञातमुपज्ञातमिति'। उपपूर्वो जानातिस्तत्र प्रसिद्ध इति भावः। 'अकालकमिति'। आन्याय्यादुत्थानादित्यादिकालपरिभाषारहितमित्यर्थः। गुरुलाघवं नामार्थशास्त्रं यत्रोपायानां गौरवं लाघवं चिन्त्यते, दुष्ट इत्ययं सङ्केतशब्दो यत्र क्रियते यथा पाणिनीये वृद्धिति तद्दुष्करणं व्याकरणं कामशास्त्रमित्यन्ये ॥

"कृते ग्रन्थे" ॥ तित्तिरिवरतन्त्विन्यादीनि सूत्राण्यत्र प्रकरणे न पठितानि, तित्तिर्यादयो हि छन्दसां प्रवक्तारो न कर्तारः, नित्यानि हि छन्दांसि न केन चित्क्रियन्ते ॥

"संज्ञायाम्" ॥ अयन्यार्थमिदम् ॥

"तुद्राभ्रमरवटरपादपादञ्" ॥ 'अणोपवाद इति'। बाहुल्यादेवमुक्तं पादपशब्दाद्धि छः प्राप्नोति, अन्ये तु पादपशब्दस्य स्थाने पदपशब्दं पठन्ति ॥

"तस्येदम्" ॥ तस्यापत्यमित्यत्रोक्तमेवार्थं स्मारयति। 'प्रकृतिप्रत्ययार्थयोरित्यादि'। प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितं प्रत्ययार्थेऽपि तत्सम्बन्धिमात्रं यद्योगात्षष्ठी, तस्मिन्नभिधेये प्रत्ययः, मात्रशब्दव्यवच्छेद्यं दर्शयति। 'यदपरमिति'। इदंशब्दः प्रत्यक्षवचनः, तच्छब्दः परोक्षवचनः, आदिशब्देन सामान्याभिधायित्वं गृह्यते। 'तत्सर्वमविवक्षितमिति'। अत्र कारणं तस्यापत्यमित्यत्रैवोक्तम्। 'वहेस्तुरिति'। तृन्तृचोः सामान्येन ग्रहणम्। 'सांवहित्रमिति'। ठत्वादीनामसिद्धत्वात्पूर्वमिडिटि कृते निमित्ताभावात्तेषामभावः। 'आग्नीध्र इति'। अग्निमिन्धे इति क्विप् अग्नीत् ऋत्विग्विशेषः, त्वमग्निद्वृतीयत इत्यत्र तु छान्दसं ह्रस्वत्वं, शरणं गृहं स्थानं यत्राग्नीध्रीयं धिष्ण्यं तदाग्नीध्रं, तात्स्थ्यात्तु मन्त्राःक्रोशन्तीतिवद्दृत्विजि प्रयोगः कल्पसूत्रकाराणां

प्रत्याश्रावयेदाग्नीध्रः आग्नीध्रं पोतारं ब्रह्मणा इति, छप्रत्ययं च ततः शरणे कुर्वन्ति, आग्नीध्रीयसकाशमुत्तरेणाग्नीध्रीयं धिष्ण्यं परीत्येति शरणवचनाच्छः । 'समिदाधानइति' । यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे क्विप्. सा समिदाधीयते यया सा सामिधेनी ऋक्, षित्वान्ङीष्, हलस्तद्धितस्येति यलोपः ॥

"रथाद्यत्" ॥ 'रथाङ्ग एवेष्यतइति' । यस्तु रथस्य वोढा रथ्य इति वोढरि प्रयोगः स तद्वहति रथयुगप्रासङ्गमिति द्रष्टव्यः, स्यादेतत् । अयमेव तद्वोढर्यपीष्यतां तद्वहतीत्यत्र रथग्रहणं मा कारीति, नैवं शक्यम्, इह द्वौ रथौ वहति द्विरथ्य इति द्विगोर्लुगनपत्य इति प्राग्दीव्यतीयो लुक् प्राप्नोति, यत्तु द्वयो रथयोरङ्गं तत्र द्विरथमित्येव भवति ॥

"पत्रपूर्वादञ्" ॥ 'पतन्त्यनेनेति पत्रमिति' । दाम्नीशसेत्यादिना ष्ट्रन्, अश्वयुक्तो रथोऽश्वरथः, षष्ठीसमासे वृत्तिस्वभावाद्युक्तार्थावगतिः । तस्याङ्गमाश्वरथम् ॥

"पत्राध्वर्युपरिषदश्च" पत्रेत्यर्थग्रहणमितरयोः स्वरूपग्रहणं व्याख्यानं चात्र शरणम् ॥

"द्वन्द्वाद्वुन् वैरमैथुनिकयोः" ॥ वैरं विरोधः वीराणामिदमिति कृत्वा, मिथुनकर्म मैथुनिका मनोज्ञादित्वाद्वुञ् मिथुनं दम्पती कर्म, क्रियानिष्पादनम् । 'बाभ्रवशालङ्कायनिकेति' । वुञन्तं स्वभावतः स्त्रियां वर्त्तते ॥

"गोत्रचरणाद्वुञ्" ॥ वुनि प्रकृते वुञो विधानमवृद्धेषु वृद्ध्यर्थं, वृद्धेषु वुनि वुञि च विशेषो नास्ति, तदेव रूपं स एव स्वरः, पुंवद्भावप्रतिषेधोऽपि न कोपधाया वृत्युभयोरस्ति ॥

"संघाङ्कलक्षणेष्वञ्यञिञामण्" ॥ 'पूर्वस्य वुञोपवाद इति' । गोत्रग्रहणानुवृत्तेरञादीनां गोत्रप्रत्ययानामत्र ग्रहणमिति भावः । 'घोषग्रहणमत्र कर्त्तव्यमिति' । घोष आभीरस्थानं तत्रापि प्रत्ययो यथा स्यादित्येवमर्थं घोषग्रहणस्यानुषङ्गिकं प्रयोजनान्तरमाह । 'तेन वैषम्यादिति' ।

'अथाङ्कलक्षणयोः को विशेष इति'। निघण्टुषु पर्यायतया पाठान्नास्त्येव विशेषइत्यर्थः । पृथगुपादानसामर्थ्याद्विशेषोऽत्राश्रीयतामित्याह । 'लक्षणं लक्ष्यस्यैवेति'। स्वमात्मीयं सम्बन्धीत्यर्थः, । 'वैदी विद्या अस्येति'। विदानामसाधारणी या विद्या सा यस्यास्ति स वैदीविद्यः ॥

"शाकलाद्वा" ॥ 'वुञोपवाद इति'। शाकलशब्दस्य चरणशब्दत्वात्, तद्दर्शयति । 'शाकलेन प्रोक्तमिति' ॥

"छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" ॥ 'वुञोऽपवादइति'। चरणशब्देभ्यो वुञोपवादः, नटादौत्सर्गिकस्याणः ॥

"न दण्डमाणवान्तेवासिषु" ॥ 'दण्डप्रधाना माणवा इति'। अर्थकथनमेतत्, समासस्तु कर्मधारयः, सदा दण्डधारणाद्दण्डशब्दो माणवेषु वर्त्तते ॥

"रैवतिकादिभ्यश्छः" ॥ 'पूर्वेणेति'। गोत्रचरणाद्वुञित्यनेन । 'रैवतिकीय इति'। रेवत्या अपत्यं, रेवत्यादिभ्यष्ठक् रैवतिकः, ततश्छः, अन्ये इञन्ताः, तत्रानन्तरसूत्रात्प्रतिषेधोनुवर्त्तिष्यते, रैवतिकादिभ्यो वुञः प्रतिषेधे विज्ञायमाने यत्रापवादो नास्ति रैवतिकीय इति तत्र वृद्धाच्छ इत्येव सिद्धः, क्षेमवृद्धिशब्दादपि गहादित्वाच्छः, अन्येष्विञश्चेत्यण् स्यात्, तस्माच्छग्रहणम् ॥

"कौपिञ्जलहास्तिपदादण्" ॥ 'गोत्रवुञोपवाद इति'। कुत इत्याह । 'गोत्राधिकारादिति'। 'कौपिञ्जल इति'। कुपिञ्जलस्यापत्यम्, अस्मादेव निपातनादण्, तदन्तात्पुनरण् । 'हास्तिपद इति'। हस्तिन इव पादावस्य हस्तिपादः, पादस्य लोपो न भवति अहस्त्यादिभ्यइति वचनात्, हस्तिपादस्यापत्यं तस्यापत्यमिति अस्मादेव निपातनादण् पद्भावश्च, हास्तिपदस्येदं, पुनरण् । अथाण्ग्रहणं किमर्थम्, असत्यण्ग्रहणेऽनन्तरश्छः प्राप्नोति, सिद्धोत्र को वृद्धाच्छ इति, न सिद्ध्यति, गोत्रचरणाद्वुञिति वुञ् प्राप्नोति, एवं तर्हि यद्येताभ्यां छ इष्टः स्याद्रैवतिकादिष्वेवेमौ पठेत्, एवं हि विभक्त्यनुच्चारणाल्लाघवं भवति, तस्मात्पृथगारम्भादेव

क्तो न भविष्यति, अन्यस्तु यो विहितो न च प्राप्नोति स एव भविष्यति, स वाणेव, एवं तर्ह्यसत्यणग्रहणे यत्र वुञ् प्राप्तः प्रतिषिध्यते न दण्डमाणवान्तेवासिषु तत्र वुञो विधानार्थमेतत्स्यात्तस्मादण्ग्रहणं कर्त्तव्यं, णित्करणं ङीबर्थं, पुंवद्भावप्रतिषेधार्थं च, कौपिञ्जली क्रिया अस्य कौपिञ्जलीक्रिय इति ॥

"आथर्वणिकस्येकलोपश्च" ॥ 'चरणवुञोपवाद इति'। अथर्वणा प्रोक्तो वेदो ऽभेदोपचारादथर्वा तमधीते वसन्तादित्वाट्ठक्, आथर्वणिकः, दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः, अथ वा ऽथर्वणा प्रोक्तो वेदस्तेन प्रोक्तमित्यण्, ततश्छन्दोब्राह्मणानीति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्ताल्लुगिति लुङ् भवति, आथर्वणिकः, पूर्वसूत्रमिदञ्च वार्त्तिके दर्शनात्सूत्रेषु प्रक्षिप्तम् ॥

"तस्य विकारः" ॥ 'प्रकृतेरिति'। उपादानकारणस्य। 'अवस्यान्तरमिति'। अन्यथात्वम्, अपवादेनानाक्रान्तस्य विषयस्य दुर्लभत्वात्प्रश्नः। 'किमिहोदाहरणमिति'। 'अप्राणीति'। प्राणिभ्योऽञं वक्ष्यति। 'आद्युदात्तमिति'। अनुदात्तादेरञं वक्ष्यति। 'अवृद्धमिति'। वृद्धान्मयटं वक्ष्यति। 'यस्य च नान्यदिति'। यथा गोपयसोर्यदिति। 'नित्स्वरेणेति'। अश्मभस्मशब्दौ मनिन्प्रत्ययान्तौ, मृदस्तिकन्। मृत्तिका। 'तस्य प्रकरणइति'। तस्येदमित्यस्मिन्। 'पुनर्वचनं शैषिकनिवृत्त्यर्थमिति'। प्रकृतं हि तस्यग्रहणं शैषिकैर्घादिभिः सम्बद्धमतस्तदनुवृत्तौ तेऽप्यनुवर्त्तेरन्, इदं त्वपूर्वं तस्य ग्रहणं क्रियमाणं घादिसम्बद्धस्य तस्यग्रहणस्य निवर्त्तकं घादीनपि निवर्त्तयति। ननु च विधेयतया प्रधानभूता घादयो न ते गुणभूते तस्यग्रहणे निवर्त्तमानेऽपि निवर्त्तितुमर्हन्ति, नहि गुणानुवृत्तिप्रधानं किं तर्हि प्रधानानुवर्त्ती गुणः, सत्यं, तस्य ग्रहणसामर्थ्यात्प्रधानभूतानामपि घादीनां निवृत्तिः, अणादयस्तु न निवर्त्तन्ते प्राग्दीव्यतः प्राग्भवनादिति च विशिष्टावधिपरिच्छेदेनाधिकृतत्वात्। 'विकारावयवयोरिति'। परस्तात्तु प्राग्वहतेः प्राग्घि-

तादिति चाधिकारान्तरेणावष्टब्धस्त्वादेव घादीनां निवृत्तिः सिद्धेति भावः । स्यादेतत् । माभूद्वचनेन घादयस्तस्य ग्रहणेन निवर्त्तितत्वात्, तस्येदमित्यनेन तु प्राप्नुवन्ति, तस्येदंविशेषत्वाद्विकारावयवयोरिति, तत्र । तस्येदमित्येव विकारावयवद्योरणादिषु सिद्धेषु पुनस्तेषां विधानं शैषिकाणां बाधनार्थमेव किं तर्ह्युच्यते तस्येतिपुनर्वचनं शैषिकनिवृत्त्यर्थमिति यावता सूत्रप्रवृत्तिरेव शैषिकनिवृत्त्यर्था, सत्यं, तस्यग्रहणे त्वसति सूत्रप्रवृत्तिः शैषिकानपि विषयीकुर्यादिति तस्यग्रहणस्यैवायं भारः यदुत वै शैषिका निवर्त्तन्ते । 'हालः सैर इति' । हलशब्दो नञ्विषयस्यानिसन्तस्येत्याद्युदात्तः, सीरशब्दः कन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः, नात्र वक्ष्यमाणस्यापवादस्य कस्य चित्प्रसङ्ग इत्यण् भवति, इदं च योगविभागेनाणादिविधानस्य प्रयोजनं दर्शितं, यदि हि तस्य विकारो बिल्वादिभ्योणित्येवापवादविधानार्थमुच्येत ततो हलस्य विकार इत्यत्र तस्येदमित्यनेन प्रत्ययो विधातव्यस्ततश्चाणं बाधित्वा हलसीराट्ठगिति ठक् प्राप्नोति यथान्यस्मिंस्तस्येदं विशेषे, योगविभागेन त्वणादीनां विधानादणेव भवति, तस्यग्रहणे तु घादीनां निवृत्तिः प्रयोजनम् । 'वृजीनां विकारो वार्ज इति' । वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनान्तोदात्तत्वविधानात्पक्षे आद्युदात्तत्वादण्, यदि त्वत्र तस्येदमित्यण् प्रत्ययः स्याद्यदि वानेन घादयो विधीयेरन् ततो मद्रवृज्योः कन्निति कन्स्यात्. तथा त्रिगर्त्तानां विकारः त्रैगर्त्त इति. त्रिगर्त्तशब्दो बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, अत्र प्रथमः प्राग्दीव्यतोण् प्राप्तः, जनपदलक्षणो वुञ् द्वितीयः, गर्त्तोत्तरपदलक्षणश्छस्तृतीयः, तदवधिग्रहणेन विहितो वुञ् चतुर्थः, अनेन त्वणेव भवति, तथा रङ्कूणां विकारो राङ्कवइति अत्र प्राग्दीव्यतोण् प्रथमः, तदपवादयोरवृद्धादपीति ओर्देशेठञिति वुञ्ठञोस्तुल्यकक्षयोरन्यतरो द्वितीयः, कोपधादणिति वा कच्छादिपाठाद्वाण् तृतीयः, मनुष्यतत्स्थयोर्वुञ् चतुर्थः, अनेन त्वण् प्राप्त ओरञा बाधितः कोपधाच्चेति प्रतिप्रसूयते, यदि तर्हि विकारावयवयोर्घादयो न भवन्ति पाटलिपुत्रस्यावयवाः पाटलिपुत्रकाः प्रासादाइति, तस्येदमित्यत्रार्थे रोपधेतोः प्राचामिति वुञ्न

प्राप्नोति, नैव दोषः । प्राण्योषधिवृक्षेभ्यो हि घादीनामवयवे निवृत्तिः, तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्योऽवयवे निवृत्तिः स्यात् ॥

"अवयवे च प्राण्योषधिवृक्षेभ्यः" ॥ 'मौर्वमिति' । मूर्वाशब्दस्तृणधान्यानां च द्व्यषामित्याद्युदात्तः । 'खादिरमिति' । खादेः खदिरशब्दः किरच् प्रत्ययान्तो निपातितस्तेनानुदात्तादिलक्षणो वुञ् प्राप्नोति, यदि त्वणिष्यते बिल्वादिषु पठितव्यः । 'कृतनिवृत्तौ हि ताविति' । तस्येदमित्यनेन, यद्यपि शैषिकनिवृत्त्यर्थत्वं पूर्वयोगस्य प्रयोजनमुक्तं तथापि तदनपेक्ष्य भास्मनं मार्त्तिकमित्यादौ तावदणादयः सिद्धा इत्यभिसन्धायेदमुक्तम् ॥

"बिल्वादिभ्योऽण्" ॥ 'अस्मयटोरपवाद इति' । तत्र काण्डपाटलीशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, बिल्वशब्दस्य बिल्वभिष्ययोर्वान्तः स्वरित इत्यन्तः स्वरित उदात्तो वा, व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ मसूरगोधूमगवीधुकशब्दा लघावन्ते द्वयोश्चेति मध्योदात्ताः, इषेः क्सुः इक्षुः प्रत्ययस्वरेणान्तोदात्तः, वेणुशब्दो विभाषा वेण्विन्धानयोरिति पक्षेऽन्तोदात्तः, कर्पासीशब्दो जातिलक्षणङीषन्तः कर्कन्धूशब्दो ऽल वृकर्कन्धूद्दिधिषूरिति निपातनान्मध्योदात्तः, कुटीशमीशुण्डाभ्यो रः कुटीरशब्दः प्रत्ययस्वरेणान्तोदात्तः, । 'मयड्बाधनार्थमिति' । मयड्वैतयोरित्यादिना प्राप्तस्य मयटो बाधनार्थं, शेषेभ्यस्त्ववृद्धेभ्यः शब्देभ्यः पक्षे मयड् भवत्येव, अण्ग्रहणं बाधकबाधनार्थं, बिल्वादिभ्यो यथाविहितमित्युच्यमानेऽपि हि पाटलीशब्दाल्ङीषन्तादनुदात्तादिलक्षणस्याञो मयटा बाधे प्राप्ते पुनर्वचनादञेव स्यादण्ग्रहणात्त्वणेव भवति ॥

"कोपधाच्च" ॥ 'अञोऽपवाद इति' । ओरञ् अनुदात्तादेश्चेति प्राप्तस्य, तिसिड्कोकादयो लघावन्त इत्यादिना मध्योदात्ताः ॥

"त्रपुजतुनोः षुक्" ॥ 'अप्राण्यादित्वादिति' । प्राण्योषधिवृक्षेभ्यन्यतमत्वस्याभावादित्यर्थः ॥

निमित्तोपादानयोरिति, सूत्रश्रुतिविरोधाभ्यां वेदबाह्यत्वमुपपादयति जन्मादीति, सदेवेत्युपादानत्वम्, अद्वितीयं तदैक्षतेत्यादिना तस्यैव निमित्तत्वं ब्रह्म स वृक्ष आसीदिति उपादानता ब्रह्माध्यतिष्ठदिति तस्यैव निमित्तत्वं, सर्वे निमेषा इति कालविशिष्टस्य निमेषादीन् प्रत्युपादानत्वं न तस्येशे इति निमित्तत्वं, नेह नास्तीत्युपादानत्वम्

**सूत्रकारेण च महाभारते च ब्रह्मरुद्रसंवादे ब्रह्मा रुद्रं प्रत्याह—तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । इति रुद्रस्य ब्रह्मणश्चान्येषां च देहिनां च परमेश्वरो नारायणोऽन्तरात्मतयाऽवस्थित इति, तथा तत्रैव—विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः । इति,**

सर्वस्य ब्रह्मकार्यत्वेन अब्रह्मात्मकत्वनिषेधात् सर्वस्य वशीति निमित्तत्वं, पुरुष एवेदं सर्वमिति निमित्तत्वमुपादानत्वं च उतामृतत्वस्येशान इति तस्यैव मुक्तिदत्वं, नान्य इति व्यतिरिक्तोपायनिषेधः । नारायणस्यैव परमकारणत्वे उपबृंहणवचनानि दर्शयति इतिहासेति, तत्र रजस्तमोमूलत्वात् श्रुतिविरोधाच्च कारणदोषबाधकप्रत्ययवतः प्रबन्धान् विहाय सात्त्विकेषु प्रबन्धेषु सर्वलोकाविगानपरिगृहीते महाभारते वचनानि दर्शयति यथेति, श्रीविष्णुपुराणे नारायणस्यैव परमकारणत्वपराणि उपबृंहणवचनानि वक्ष्यंस्तदाप्तिं दर्शयति प्राच्येति, क्वचित्पारिग्रहव्यावृत्त्यर्थं

**तत्रैव—एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ इति अन्तरात्मतयाऽवस्थितनारायण*दर्शितपन्थानौ ब्रह्मरुद्रौ**

* दर्शितपथाविति द्राविडपुस्तकपाठो युक्तः ऋक्पूरब्धूःपथामानक्षे इति पाणिनीयानुशासनेन सामासिके प्रत्यये दर्शितपन्थानावित्यस्यायुक्तत्वात्, वैष्णवपुराणपाठस्त्वार्ष इति न स लौकिकप्रयोगसाधुभावायालमिति तज्ज्ञा एव विदाङ्कुर्वन्तु ।

सृष्टिसंहारकार्यकरावित्यर्थः, निमित्तोपादानयोस्तु भेदं वदन्तो वेदबाह्या एव स्युः, जन्माद्यस्य यतः, प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधादित्यादिवेदवित्प्रणीतसूत्रविरोधात्, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म स ऐक्षत बहु स्यां प्रजायेयेति ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ब्रह्माध्यतिष्ठद्भुवनानि

प्राच्यादिग्रहणं, कतिपयपरिग्रहव्यावृत्त्यर्थः सर्व-शब्दः, अनुष्ठाने तत्त्वस्थितौ च प्रमाणतया परिगृहीतमित्याह सर्वधर्म्मसर्वतत्त्वव्यवस्थायामिति, श्रुतवेदान्तस्य अनधीतशास्त्रार्थबुभुत्सया प्रश्न इत्याह जन्मादीति, अस्यानन्यपरताख्यापनार्थमाह जन्मादिकारणं किमिति, प्रश्नपूर्वकमिति अयमभिप्रायः—सामान्यविषयप्रश्नस्य विशेषविषयोत्तरमुखेन प्रवृत्तत्वं च प्रामाण्यहेतुः अनन्यपरत्वं हि तद् विशेषप्रश्नपूर्व्वकं चेत्

धारयन्, सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि, न तस्येशे कश्चन तस्य नाम महद्यशः, नेह नानाऽस्ति किंचन, सर्वस्य वशी सर्वस्येशानः, पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् उतामृतत्वस्येशानः, नान्यः पन्था अयनाय विद्यत इत्यादिसर्वश्रुतिगणविरोधाच्च, इतिहासपुराणेषु च स्थिति*प्रलयकरणयोरिदमेव परतत्त्वमित्यवगम्यते यथा महाभारते—केन सृ†ष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ प्रलये च कमभ्येति तन्नो ब्रूहि

* सृष्टिप्रलयप्रकरणयोरिति पुस्तकान्तरपाठो युक्तः ।
† कुतः सृष्टमिति पाः ।

पितामह !। इति पृष्टो नारायणो जगन्मूर्त्तिरनन्तात्मा सनातन इत्यादि च वदन्—ऋषयः पितरो देवा महाभूतानि धातवः। जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ इति च प्राच्योदीच्य—दाक्षिणात्य—पाश्चात्यसर्वशिष्टैः सर्वधर्म्मसर्वतत्त्वव्यवस्थायामिदमेव पर्याप्तमित्यवि*गीतपरिगृहीतवैष्णवं च पुराणं, जन्माद्यस्य यत इति जगज्जन्मादिकारणम्

प्रष्टुरभिमतार्थे उक्तः स्यात्, सामान्यविषयप्रश्नपूर्व्वकत्वेन तत्त्वस्थितिः प्रतिपादिता भवति, तस्मादत्रापि सामान्यविषयप्रश्नपूर्व्वकत्वात् प्रामाण्यं स्पष्टमिति सामान्यविषयप्रश्नपूर्व्वकविशेषविषयत्वप्रदर्शनाय उदाहृतेन विष्णोः सकाशादित्यादिश्लोकेन प्रबन्धोपक्रमस्य भगवत्परत्वमुक्तम्भवति। उपसंहारस्य भगवत्परत्वमाह तथेति, परमकारणत्वमुक्तं प्रकृतिर्यंतीति, स च परमात्मा नारायण इति वदति परमात्मेति, आधार इति शरीरात्मभावः, परमेश्वर इति परमात्मन ईश्वरानतिरिक्तत्वं स चक इत्यत्राह—

ब्रह्मेत्यवगम्यते, तज्जन्मादिकारणं किमिति प्रश्नपूर्व्वकं विष्णोः सकाशादुद्भूतमित्यादिना ब्रह्मस्वरूपविशेषप्रतिपादनैकपरतया प्रवृत्तमिति सर्वसम्मतं, तथा तत्रैव—प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः परमेश्वरः। विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ इति, सर्ववेदवेदान्तेषु सर्वैः शब्दैः परम-

* अविगानपरिगृहीतमिति पा०।

**कारणतयाऽयमेव गीयत इत्यर्थः । यथा सर्वासु श्रुतिषु केवलपरब्रह्मस्वरूपविशेषप्रतिपादनायैव प्रवृत्तोनारायणानुवाकस्तथेदं वैष्णवं च पुराणं सोऽहमिच्छामि धर्म्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।**

विष्णुनामा स देवेषु वेदान्तेषु च गीयत इति, वेदेषु इति वेदान्तेषु च कथं विष्णोरेव वाच्यत्वम् अग्न्यादीनामपि प्रतिपाद्यमानत्वादिति शङ्कायां तद्व्याचष्टे सर्वेति, अग्न्यादिशब्दा अपि परमात्मभूतभगवत्पर्यन्ता इत्यर्थः । एवं संग्रहेणोक्तमनन्यपरत्वं विवृणोति यथेति, सामान्यविषयप्रश्नपूर्वकत्वं प्रश्नश्लोकेन दर्शयति सोऽहमिति, यत इति निमित्तोपादानयोः सह प्रश्नः श्रुतवेदान्तस्य प्रश्नत्वात्तुच्छत्व-विवर्तत्व-परिणामत्व-सद्वारकत्वाद्वारकत्वादिप्रकारज्ञापनार्थं यथेति, प्रश्नः, तत्र कालभेदेन सृष्टिकारणप्रकारभेदोऽनधीतश्रुत्यन्तरोक्तः किमित्यभिप्रायेण बभूव भविष्यतीति प्रश्नः, यतो बभूव यथा बभूव यतो भविष्यति यथा भविष्यतीति प्रश्नः, लयेऽप्येवम् उत्पत्तिकारणतत्प्रकारविषयप्रश्नानां मध्ये यन्मयमित्यनेन व्यवधानमुत्पत्तिकारणतत्प्रकारयोः पृथग्ज्ञातव्यत्वादन्तराकृतं, यन्मयमिति स्थितिकारणप्रश्नः, मयट् प्राचुर्यार्थः, विकारार्थत्वमनपेक्षितं यत इत्युपादानस्यापि पृष्टत्वात्, न च तत्सङ्कोचोऽपेक्षितः स्थितिप्रश्नवचनमनपेक्षितवचनं च यथा भवति तथा सङ्कोचानुपपत्तेः

**बभूव भूयश्च यथा महाभाग ! भविष्यति । यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ॥ लीनमासीद्यथा यत्र* लयमेष्यति यत्र च । इति,**

तस्मात् प्राचुर्यार्थोमयट्, आन्तरस्थितिकारणप्रश्नोऽयम् अन्तःप्रविश्य धारकतया हि स्थितिः प्रतीयते, यन्मयंचेति-च-शब्देन बाह्यस्थितिकारणप्रश्नो विवक्षितः, लयमेष्यति यत्र चेति चकारेण भूतभविष्यल्लयकर्तृप्र-

* तथा तत्रेति पा० ।

श्नद्वयमभिप्रेतम् । एवं सामान्यविषयप्रश्न इत्याह परं ब्रह्म किमितीति, प्रक्रम्य प्रवृत्तमिति उत्तरत्रान्वयः, विशेषविषयोत्तरसङ्क्षेपश्लोकमाह विष्णोरिति, विष्णोः सकाशात्–सकाश–शब्दः पञ्चम्यनतिरिक्तार्थः, चतुर्थ्यर्थे कृते इतिवत्, गुरुसकाशादितिवच्च । यद्वा सकाशात् काशः–प्रकाशः सङ्कल्परूपज्ञानसहितादित्यर्थः । यद्वा सकाशः पार्श्वः शरीरैकदेशादित्यर्थः, विष्णु–शब्दस्य रूढ्या देवताविशेषनिर्णयः, देवतापारमार्थ्यं च यथावद् ज्ञा*स्यते भवानिति हि वरप्रदानं पारमार्थ्य–शब्देन धर्मिविपर्यासाभावः, यथावच्छब्देन प्रकारविपर्यासाभावश्च विवक्षितः, रजस्तमःकालुष्यराहित्यं फलितमनेन, एवं वरप्रदानानुगुणादेवताविशेषनिर्णयो रूढ्या विष्णुशब्दस्य अवयवशक्त्या प्रकारप्रश्नोत्तरमुक्तम्, अनेनोपादानत्वं हि सद्वारकमित्युक्तं भवति, यत्रेति लयस्थानप्रश्नस्योत्तरमाह तत्रेति, तत्रैव–विष्णावेव, अत्रापि विष्णु–शब्देन लयस्थानत्वं सद्वारकमिति सिद्धम्–

**परं ब्रह्म किमिति प्रक्रम्य–विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्त्ताऽसौ जगतोऽस्य जगच्च सः ॥ परः पराणाम्परमः परमात्मात्मसंस्थितः । रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ अपक्षयविनाशाभ्याम्–**

अविशेषेणोक्तत्वात् कालविशेषप्रश्नोऽपि दत्तोत्तरः, लयकर्तृप्रश्नस्य च–शब्दाव†गतस्योत्तरं बाह्यस्थितिकर्तृत्वं चाह स्थितिसंयमेति, आन्तरस्थितिकारणप्रश्नोत्तरं–जगच्च स इति, अनेन सामानाधिकरण्येन धार्यधारकत्वादि सिद्धम् । अथ नमस्कारश्लोकानामनन्तरस्थानि वचनान्याह पर इति, तत्र ब्रह्मणो निखिलजगत्कारणत्वोपपत्तये अपरिच्छिन्नत्वमुच्यते, परिच्छिन्नं हि परिमितकार्यकारणं तस्मात्कृत्स्नकारणत्वोपपत्त्यर्थमपरिच्छिन्नत्वमुच्यते, श्रुतिभिश्च 'सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिभिस्त्रि-

* वेत्स्यते इति पा ।

† च–शब्दगतस्येति पा· ।

विधापरिच्छेद उक्तः, तत्र त्रिविधपरिच्छेदं विस्तरेण वक्ष्यन् प्रथमं संक्षेपेणाह परः पराणामित्यर्द्धेन, ब्रह्मादीनामपि परः परमः, अनेन कालपरिच्छिन्नेभ्यः परत्वादस्य कालानवच्छेदः फलितः, परमात्मेति देशापरिच्छेदः आप्नोतीति ह्यात्मा । वस्त्वनवच्छेदमाह आत्मसंस्थित इति, आत्मनि संस्थितः–स्वनिष्ठः, अनेनान्येषामेतन्निष्ठत्वात्तद्वाचिशब्दा एतत्पर्यन्ताः, सर्ववस्तुसामानाधिकरण्याहत्वं वस्त्वनवच्छेदः, इदमत्र नान्यत्रेति देशावच्छेदः, इदमिदानीमेव नान्यदेति कालावच्छेदः, इदमिदं न भवतीति वस्त्ववच्छेदतत्तद्विपर्ययस्तत्तदनवच्छेदः स यथोक्तप्रकार एव, तत्र प्रथमं कालापरिच्छेदं विस्तरेण वदन् कालपरिच्छिन्नत्वव्यावृत्तिमाह रूपेति, रूपं जातिः जातिगुणौ च रूपिणां रूपे इति वचनात्, वर्णा गुणाः, आदि–शब्देन क्रिया दण्डकुण्डलादिद्रव्यं विवक्षितं तद्वाचिशब्दोरूपवर्णादिर्निर्देशः, विशेषणानि रूपादीनि तान्येव रूपवर्णादिवाचिशब्दैस्तद्वाच्यरूपवर्णादिभिश्च वर्ज्जित इत्यर्थः । रूपवर्गादीति पाठे रूपं गुणः, वर्गो जातिः देववर्गो मनुष्यवर्ग इति वर्गरूपत्वात् तस्याः । यद्वा रूपवर्णादिलक्षणैः तन्निर्देशलक्षणैश्च विशेषणैर्विवर्जितः, अन्यत्तुल्यं षड्भावविकाररहित्यमाह अपक्षयेति, जन्म–शब्दो जायतेऽस्तीति विकारद्वयस्योपलक्षणार्थः, अपक्षयादिवर्जितत्वात्तद्वाचिशब्दागोच*रत्वं चेति सिद्धम् । तर्हि कथम् वक्तुं शक्यत इत्याह–शक्यते वक्तुं यः सदाऽस्तीति केवलमिति, केवल–शब्देनापक्षयादिवाचकशब्दव्यावृत्तिः, सदा–शब्देन कादाचित्कास्तित्वव्यावृत्तिः, एवं कालपरिच्छेदवतां जात्यादिकल्पनान्वयोऽपक्षयाद्यन्वयश्च तदुभयवाचिशब्दगोचरत्वं च दृष्टं तदभावाद्ब्रह्म कालापरिच्छिन्नमित्युक्तं, नामनिर्वचनमुखेन देशापरिच्छेदमाह सर्वत्रेति, ब्रह्मणो हि त्रिविधापरिच्छेदः कथमत्र वासुदेवस्य त्रिविधापरिच्छेदः उच्यते इत्यत्राह तद्ब्रह्मेति, वासुदेवपरामर्शिनस्तच्छब्दस्य नपुंसकत्वं ब्रह्मविशेषणत्वात् अजमक्षयमव्ययमित्यनेन विकारान्तरराहित्यमप्युपलक्षितं, तस्मान्नित्यमिति†चिदचिद्व्यावृत्तिः

* शब्दागोचरश्चेति सिद्धम् पा० । † एवमचिद्व्यावृत्तिः ।

परिणामर्द्धिजन्मभिः ॥ वर्जितः शक्यते वक्तुं यस्स-दाऽस्तीति केवलम् । सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतस्ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ *सदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ।

हेयाभावाच्च निर्मलमिति बद्धव्यावृत्तिः सदा निर्मलमिति मुक्तव्यावृत्तिः एकस्वरूपं चेति नित्यसिद्धव्यावृत्तिः, ते हि बहवः ब्रह्म तु समाभ्यधिकरहितं वासुदेव एवैवंविधं परं ब्रह्मेत्यर्थः । यद्वा अजं जायतेऽस्तीति विकारद्वयव्युदासः, अक्षयमव्ययमित्यपक्षयविनाश निषेधः, एकस्वरूपमिति विपरिणमते विवर्द्धते इति मध्यमविकारद्वयनिवृत्तिः, परममिति नित्यसूरिव्यावृत्तिः, अन्यत्तुल्यम्, एवं देशापरिच्छेदमुखेन देवताविशेषनिर्णयश्च कृतः, तथा श्रुतिश्चानन्त्यं वदति देवताविशेषनिर्णयञ्चाह सत्यं ज्ञानमनन्तं ब्रह्मेति, अनन्त-शब्दस्यावयवशक्त्या त्रिविधापरिच्छेदः सिद्धः । रूढ्या देवताविशेषनिर्णयः, तर्हि पुँल्लिङ्गत्वं पुंल्लिङ्ग एवानन्त-शब्दो द्वितीयाविभक्त्यन्तः यो वेद निहितं गुहायामिति वेदेति पदेनान्वयात्, एवं श्रुत्यनुसाराद्च वासुदेवस्य परब्रह्मत्वमुक्तम् । अथ वस्त्वनवच्छेदमाह तदेवेति, व्यक्ताव्यक्तस्वरूपवदित्यत्र स्वरूप-शब्दो वस्त्वनतिरिक्तार्थवाची व्यक्ताव्यक्तस्वरूपवत् पुरुषरूपेण कालरूपेण च स्थितं सर्वमेवैतत् जगत्तद्ब्रह्मैवेत्यर्थः । अनेन वस्त्वपरिच्छेद उक्तः, सर्वसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः, एवमुपक्रमगतवचनजातमुक्तम् । उपसंहारगतवचनजातान्याह स सर्वेति,

तथा पुरुषरूपेण कालरूपेण च स्थितम् । स सर्वभूतप्रकृतिं विकारान् गुणादिदोषाँश्च मुने व्यतीतः ।

* तदेवेति पा० ।

अतीतसर्वावरणोऽखिलात्मा । तेनास्तृतं यद्भुवनान्तराले ।

सर्वभूतानां प्रकृतिः प्रधानं विकारा महदादयः गुणाः सत्त्वरजस्तमांसि, आदि-शब्देन तत्प्रयुक्तरागद्वेषदुःखादयो विवक्षिताः, आवरणं-ज्ञानसङ्कोचः सर्वविषयज्ञानावरणं हि तत्, अखिलात्मेति पदं विवृणोति तेनास्तृतमिति । एवं धर्म्मिस्वरूपस्य हेयप्रत्यनीकत्वमुक्तम् । अथ दिव्यात्मस्वरूपस्य कल्याणगुणत्वमाह समस्तेति, कल्याणगुण-शब्दो धर्म्मपरः, द्व्येकयोर्द्विवचनैकवचने इत्यत्र द्व्येक-शब्दवत्, द्वित्वैकत्वयोरर्थयोरिति हि वृत्तिः, समस्तकल्याणत्वं गुणो यस्य स समस्तकल्याणगुणः, एवं विधं दिव्यात्मस्वरूपं यस्य स समस्तकल्याणगुणात्मकः, दिव्यात्मस्वरूपमनायासेन संधारकमित्याह स्वशक्तीति, विग्रहवैलक्षण्यमाह इच्छेति, तत्प्रयोजनमाह संसाधितेति, षाड्गुण्यमाह तेज इति, गुणादिदोषानिति पूर्वोक्तं विवृणोति सकला इति, आदि-शब्देन कर्म्मविपाकाशया विवक्षिताः । अत एव परः पराणाम् एवमुभयलिङ्गत्वेन विलक्षणस्य कथं जगत्सामानाधिकरण्यमित्यत्राह स ईश्वर इति, जगच्छरीरकत्वादित्यर्थः । व्यष्टि-समष्टिशब्दौ कार्यकारणावस्थजीवविषयौ अव्यक्तव्यक्तशब्दावुभयावस्थाचिद्विषयौ ईश्वरातिरिक्त*ब्रह्मशङ्कानिरासार्थः

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतवर्गः ॥ इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहावबोधस्ववीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टिसमष्टि-

* जगन्मिथ्यात्ववादिनो हि श्रीराम-कृष्णाद्यवतारानवतारिणं भगवन्तं च न ब्रह्मस्वरूपमाचक्षते किन्त्वतिरिक्तमिति तन्मतव्यावृत्तये प्रथम ईश्वर-शब्द इति भावः, । यथा चेदं मतं न साधीयस्तथा समर्थितं साधु पराक्रम्य रश्यावतारभाष्ये इति विशेषस्तत एवाधिगम्यो धिकं जिज्ञासमानैः ॥

रूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ संज्ञायते येन

प्रथम ईश्वर-शब्दः, सर्वेश्वरः-सर्वनियन्ता अनेन जगच्छरीरत्वमुपपादितं भवति तदेकनियाम्यद्रव्यं हि शरीरं सर्वदृक् सर्ववेत्ता सर्वपदार्थस्वरूपं तत्प्रकारांश्च जानातीत्यर्थः, सर्वतोदृक् सर्वेषां चक्षुर्भूत इति वा ज्ञानप्रद इत्यर्थः । ईश्वरान्तरनिषेधपरं परमेश्वराख्य इति पदं, संज्ञायत इति अस्तदोषं विकाररूपदोषरहितम्, अनेन प्रकृतिव्यावृत्तिः, शुद्धं-कर्म्मवश्यत्वादिदोषरहितमनेन बद्धव्यावृत्तिः, निर्मलं कर्म्मसम्बद्धार्हत्वदोषरहितम्, अनेन मुक्तव्यावृत्तिः, एकरूपं समाभ्यधिकरहितम्, अनेन नित्यसिद्धव्यावृत्तिः, एवंविधं तत्परं ब्रह्म येनागमोत्थज्ञानेन ज्ञायते येन साक्षात्काररूपेण ज्ञानेन दृश्यते येन परभक्तिरूपदशापन्नेन गम्यते अनुभूयते साक्षात्कृतस्य अनुभवाभिनिवेशः परमभक्तिः । एवंविधत्वात्परमुत्कृष्टं यत् ज्ञानं तदेव ज्ञानम् अन्यदज्ञानमित्यर्थः । संज्ञायत इति पाठेऽयमर्थः स ईश्वरो येन तत्तद्दशापन्नेन ज्ञानेन ज्ञायते साक्षात्क्रियते गम्यते तत् ज्ञानम् अस्तदोषं शुद्धं निर्म्मलम् एकरूपम् अयंनैव विशेषो हि निराकारतया धियामिति न्यायात् ज्ञानस्यास्तदोषत्वादिकं

तदस्तदोषं शुद्धं परं निर्म्मलमेकरूपम् । संदृश्यते वाप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥ इति परब्रह्मस्वरूपविशेषनिर्णयायैव प्रवृत्तम्, अन्यानि सर्वाणि पुराणान्यन्यपराण्येतदविरोधेन नेयानि ।

विषयविशेषकृतं विकाररूपदोषास्पदप्रकृतिविषयज्ञानविलक्षणत्वादस्तदोषं प्रकृतिसम्बन्धदोषवद्विषयत्वाभावाच्छुद्धं-प्रकृतिसम्बन्धार्हतादोषवद्विषयत्वरहितत्वान्निर्मलम्, एकरूपम् अनेकरूपनित्यसिद्धविषयज्ञानव्यावृत्तमेकरूपमित्यर्थः । एवं सामान्यविषयप्रश्नपूर्व्वकं विशेषविषयोत्तरवचनप्रवृत्तत्वादनन्यपरमित्याह परेति, अन्येषां पुराणानामन्यपरत्वादेतदवि-

रोधेन वा नेयानीत्याहुः अन्यानीति, कथमन्यपरत्वमित्यत्राह अन्यपरत्वं चेति, तत्तदारम्भप्रकारैः विशेषविषयत्वशङ्काख्वैरित्यर्थः अविरोधेन नेतुमशक्यं चेत्कथं स्यादित्यत्राह सर्वात्मनेति, विरोधे त्वनपेक्षं स्यादिति न्यायात् त्याज्यानीत्यर्थः । तामसत्वादिति रजस्तमोमूलत्वाच्छ्रुतिविरोधाच्च कारणदोषबाधकप्रत्ययवत्त्वादयाथार्थ्यादित्यभिप्रायः । साम्यशङ्कया चोदयति नन्विति, त्रिमूर्तिसाम्यप्रतीतेर्विष्णोरेव सर्वस्मात् परत्वम् अनुपपन्नमित्यर्थः । परिहरति नैतदेवमिति, कस्तर्ह्यर्थ इत्यत्राह एक एवेति, अस्मिन्प्रकरणे इत्यर्थः । तादात्म्यकथनं किमत्रापेक्षितमित्यत्राह जगच्चेति, पूर्वं संग्रहेणोक्तस्य तादात्म्यस्य विवरणमपेक्षितमित्यभिप्रायेण विवृणोतीत्युक्तं, कृत्स्नप्रपञ्चतादात्म्यं कथमत्र प्रतीयत इत्यत्राह स्रष्टा सृजतीति,

**अन्यपरत्वं च तैस्तदारम्भप्रकारैरवगम्यते सर्वात्मना विरुद्धांशस्तामसत्वादनादरणीयः । नन्वस्मिन्नपि—सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः ॥ इति त्रिमूर्त्तिसाम्यं प्रतीयते, नैतदेवम् एक एव जनार्दन इति जनार्दनस्यैव ब्रह्मविष्णुशिवादिकृत्स्नप्रपञ्चतादात्म्यं विधीयते । जगच्च स इति पूर्वोक्तमेव**

व्याहतिशङ्कापरिहारार्थं तद्व्याचष्टे स्रष्टृत्वेनेति, सर्वस्य विष्णुतादात्म्यस्योपदेशाज्जगच्च स इत्यस्य विवरणमत्र क्रियत इत्यर्थः । विष्णुः सृजति स्रष्टा ब्रह्मा विष्णुरित्यर्थः । आत्मानं विष्णुः सृजति सृज्यं वस्तु जातं विष्णु—शब्दार्थः । ततः किं प्रस्तुतः साम्यपरिहारायेत्यत्राह सृज्यसंहार्येति, सृज्यसामानाधिकरण्यात् सृज्यस्येव स्रष्टृसामानाधिकरण्यात् स्रष्टुरपि विभूतित्वमित्यर्थः । एवं संहार्यसंहर्त्तोरपि विभूतित्वं तर्हि विष्णोरपि विभूतित्वप्रसङ्ग इत्यत्राह जनार्दनेति, ब्रह्मशिवादिप्रपञ्चस्य परब्रह्मविभूतित्वे तत्रैव वचनान्तरं दर्शयति, यथेदमिति, यथोक्तमन.

न्तरमेवोच्यत इत्यर्थः । सामानाधिकरण्येन स्वरूपैक्यप्रतीतिव्यावृत्त्यर्थमाह अत्रेति, उपपाद्यांशः कः कश्चोपपादकांश इत्यपेक्षायाम्

विवृणोति—स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च । उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः ॥ इति च स्रष्टृत्वेनावस्थितं ब्रह्माणं सृज्यं च संहर्तारं संहार्य्यं च युगपन्निर्दिश्य सर्वस्य विष्णुतादात्म्योपदेशात्सृज्यसंहार्यभूताद्वस्तुनः स्रष्टृसंहर्त्रोर्जनार्दनविभूतित्वेन विशेषो दृश्यते जनार्दनविष्णुशब्दयोः पर्यायत्वेन ब्रह्मविष्णुशिवात्मिकामिति विभूतिमत एव स्वेच्छया लीलार्थं विभूत्यन्तर्भाव उच्यते, यथेदमनन्तरमेव उच्यते—पृथिव्यापस्तथा तेजो वायुराकाशमेव च सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् । स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः । सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम् ॥ स एव सृज्यः स च सर्गकर्त्ता स एव पात्यत्ति च पाल्यते च । इति, ब्रह्माद्यवस्थाभिरशेषमूर्त्तिः विष्णुर्वरिष्ठोवरदो वरेण्य इति,

उक्तं विवृणोति सर्वेश्वरेश्वर इति, । हेत्वंशं व्याचष्टे सर्वभूतानामयमिति, रूप-शब्दस्य शरीरपरत्वनिश्चयाय वचनान्तरमाह वक्ष्यतीति, विश्वरूपोयतोऽव्यय इत्यत्र अव्यय-शब्दः किमर्थमित्यत्राह एतदुक्तमिति, अव्यय-शब्दो विरोधशङ्का ऽनुवादपर इत्यर्थः । भगवतो निरवद्यत्वाद्युपपत्त्यर्थम.ह आत्मेति, सर्गादिकमित्यादिश्लोकार्थ उच्यते भूतस्थं सर्गादिकं सर्वप्राणिगतसर्गादिव्यापारजातम् अस्यैवोपकारकं परमात्मनो लीलारसनिष्पादकत्वात्तस्यैव शेषभूतमित्यर्थः । तत्र हेतुस्तत इति विवक्षित इति विश्वरूपत्वादित्यर्थः

अत्र सामानाधिकरण्यनिर्दिष्टं हेयमिश्रप्रपञ्चतादात्म्यं निरवद्यस्य निर्विकारस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणः कथमुपपद्यत इत्याशङ्क्य स एव सर्वभूतात्मा विश्वरूपो यतोऽव्यय इति स्वयमेवोपपादयति स एव सर्वेश्वरेश्वरः परब्रह्मभूतो विष्णुरेव सर्वं जगदिति प्रतिज्ञाय सर्वभूतात्मा विश्वरूपो यतोऽव्यय इति हेतुरुक्तः, सर्वभूतानामयमात्मा वि*श्वरूपो यतोऽव्यय इत्यर्थः, वक्ष्यति च तत्सर्वं वै हरेस्तनुरिति,—एतदुक्तं भवति अस्याव्ययस्यापि परस्य ब्रह्मणो विष्णोर्विश्वशरीरतया तादात्म्यमविरुद्धमिति, आत्मशरीरयोश्च स्वभावा व्यवस्थिता एव, एवंभूतस्य सर्वेश्वरस्य विष्णोः प्रपञ्चान्तर्भूतनियाम्यकोटिनिविष्टब्रह्मादिदेव—

एवं शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यमाह स एवेति, सृज्यो मनुष्यादिः सर्गकर्ता ब्रह्मा च स एव तदुभयशरीरकः परमात्मेत्यर्थः पाल्यते चेति चकारेणावते चेति विवक्षितम् । ब्रह्माद्यवस्थाभिः—ब्रह्मत्वाद्यवस्थाभिः । अवस्थायोगः सद्वारक इत्याह अशेषमूर्तिरिति, वरद इत्युपायत्वं, वरेण्य इत्युपेयत्वं, वरिष्ठ इति तदुपयोगिगुणवत्त्वं चाभिप्रेतम्, एवंभूतस्येति पूर्व्वोक्तब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्त इति एतदर्थोपपादने प्रोक्त इत्यर्थः । अत्रैव प्रबन्धेऽयमर्थः स्पष्ट इत्याह तदेतदिति,—हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिरित्यारभ्याशुद्धास्ते समस्तास्तु देवाद्याः कर्म्मयोनय इत्यन्तेन कर्म्मवश्यत्वमुक्तमित्यर्थः । समस्ताशक्त-

* विश्वशरीर इति पा० ।

यश्चैता इत्यारभ्य जगतामुपकाराय न सा कर्म्मनिमित्तिकेत्यन्तेन स्वेच्छावतार उक्त इत्यर्थः ।

तिर्यङ्मनुष्येषु तत्तत्समाश्रयणीयत्वाय स्वेच्छाऽवतारः पूर्वोक्तः, तदेतद्ब्रह्मादीनां भावनात्रयान्वयेन कर्म्मवश्यत्वं भगवतः परब्रह्मभूतस्य वासुदेवस्य निखिलजगदुपकाराय स्वेच्छया स्वेनैव रूपेण देवादिष्ववतार इति च षष्ठेंऽशे शुभाश्रयप्रकरणे सुव्यक्तमुक्तम्, अस्य देवादिरूपेणावतारेष्वपि न प्राकृतो देह इति महाभारते—न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः । इति प्रतिपादितः, श्रुतिश्च अजायमानो बहुधा विजायते, तस्य धीराः परिजानन्ति योनिमिति, कर्म्मवश्यानां ब्रह्मादीनामनिच्छतामपि

विग्रहवैलक्षण्ये प्रमाणं महाभारते दर्शयति—अस्येति, उक्तार्थविषयां श्रुतिमाह श्रुतिश्चेति, अपाततोव्याहतेति शङ्कापरिहारार्थं तद्व्याचष्टे कर्म्मवश्यानामिति, शुभेतरजन्माकुर्वेवपीत्यन्तेन अजायमान इति पदं व्याख्यातं, स्वेच्छयेत्यादिना बहुधा विजायत इत्येतद् व्याख्यातं ब्रह्मादीनां जन्महेतुतत्फलवपूंषि यानि न तान्यस्येत्यजायमानशब्दस्यार्थः हेतुः कर्म्म, तत्फलं तदनुभवः, प्राकृतं च वपुस्तेषां तद्विलक्षणहेतुफलवपुरन्वितोऽवतार इति बहुधा विजायत इत्यस्यार्थः हेतुः स्वेच्छा, फलं जगदुपकारः, वपुरप्राकृतं चेति तस्य धीराः परिजानन्ति योनिमित्येतद्व्याचष्टे तस्येति, योनि—शब्दस्योपादानकारणपरत्वव्यावृत्त्यर्थं जन्मेत्युक्तं, धीरशब्दस्य धैर्यगुणान्वितपरत्वव्यावृत्त्यर्थं तद्व्याचष्टे धीमताग्रेसरा इति, धियमीरयन्तीति व्युत्पत्तो धीर—शब्दः, अतो यथोक्त एवार्थः ।

तत्तत्कर्म्मानुगुणप्रकृतिपरिणामरूपभूतसंघसं-

स्थानविशेषदेवादिशरीरप्रवेशरूपं जन्मावर्जनीयम्, अयं तु सर्वेश्वरः सत्यसङ्कल्पो भगवानेवंभूताशुभेतरजन्माकुर्वन्नपि स्वेच्छया स्वेनैव निरतिशयकल्याणरूपेण देवादिषु जगदुपकाराय बहुधा जायते, तस्यैतस्य शुभेतरजन्माकुर्वतोऽपि स्वकल्याणगुणानन्त्येन बहुधा योनिं बहुविधजन्म धीरा—धीमतामग्रेसरा जानन्तीत्यर्थः, तदेतन्निखिलजगन्निमित्तोपादानभूतात् जन्माद्यस्य यतः,

न च स्वरूपेण च नित्यत्वमजायमानत्वं विग्रहद्वारकं जायमानत्वमिति वाच्यम् अस्मदादीनामपि तुल्यत्वाद्धीराः परिजानन्तीति वक्तुमयोगात्, अत एवाजायमानत्वं परमार्थः जन्म तु काल्पनिकमित्यपि परास्तम् अतो यथोक्त एवार्थः । अवैदिकप्रतिपत्तेः पर्वत्रयं दृश्यते प्रकृतिरुपादानं रुद्रो निमित्तमित्येकं, नारायणकारणत्वे श्रुतिभिरुपपादिते नारायण उपादानं रुद्रो निमित्तमित्येकं मतं, तत्र निमित्तोपादानयोरैक्ये दर्शिते जगत्कारणं मुक्तिदं मुक्तप्राप्यमन्यत् परमस्तीत्येकं, तत्र पूर्वोक्तं मतद्वयं पूर्वमेव निरस्तम् । अथ कारणादन्यस्य प्राप्यत्वं निरस्यति तदेतदिति, तदेतच्छब्दौ शब्दान्तरैः समस्तौ तस्मादेतस्मादित्यर्थः । पूर्वपक्षशङ्कापरमत इत्यादिसूत्रम् अन्यानि सिद्धान्तसूत्राणि तेषामर्थो भाष्ये विस्तरेणानुसन्धेयः । एष सेतुर्विधरण इत्यादौ सेतु—शब्दोऽसङ्करकरत्वार्थः । अमृतस्यैष सेतुरित्यपि स्वयमेव स्वस्य प्रापक इत्यर्थः । चतुष्पाद् ब्रह्म षोडशकलमित्यादिपरिच्छेदोऽनुसन्धानार्थः । व्यापिन आलोकस्य विनियोगाय वातायनादिपरिच्छेदवत् ततो यदुत्तरतरमित्यादयः पूर्वमेव व्याख्याता इति न जगत्कारणादन्यस्य प्राप्यत्वमित्यर्थः ।

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यादिसूत्रैः प्रतिपादितात् परस्माद्ब्रह्मणः परमपुरुषादन्यस्य कस्य-

चित्परतरत्वं परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्य इत्याशङ्क्य सामान्यात्तु बुद्ध्यर्थः पादवत्, स्थानविशेषात् प्रकाशादिवत्, उपपत्तेश्च, तथाऽन्यप्रतिषेधात्, अनेन सर्वगतत्वमायामशब्दादिभ्य इति सूत्रकारः स्वयमेव निराकरोति,

एवं श्रुतौ चतुर्मुखस्य परमकारणत्वशङ्का परास्ता । अथोपबृंहणे चतुर्मुखकारणत्वशङ्का निराक्रियते मानवे चेति, प्रादुरासीत्तमोऽनुद इति यत्तं प्रोक्तं गुणसाम्यं प्रधानं तद्वै विप्राः प्रवदन्त्यनिरुद्धमित्यनिरुद्धोऽस्याधिष्ठाता प्रादुरासीदिति दर्शयितुं चतुर्मुखोत्पत्तेः पूर्वमण्डकारणत्व तत्प्रेरकत्वं च चतुर्मुखस्यानुपपन्नमिति दर्शयितुं च प्रादुरासीत्तमोनुद इति वाक्यमुपात्तं सिसृक्षुर्विविधाः प्रजाः सृज्यस्य चतुर्मुखस्य स्वसृष्टौ सिसृक्षुत्वानुपपत्त्या न तस्य परमकारणत्वमित्यभिप्रायः । अप एव ससर्जादौ, तस्मिन् जज्ञे स्वयं ब्रह्मेति वचनद्वयमण्डोत्पन्नचतुर्मुखस्याण्डकारणत्वस्रष्टृत्वानुपपत्त्या पूर्वश्लोकस्थस्वयंभू-शब्दोऽपि नारायणपर इत्यभिप्रायेणोपात्तं जन्मश्रवणादिति क्षेत्रज्ञत्वापवादकस्यावतारुपत्वस्याश्रवणे सत्युच्यमानं जन्म स्वव्यापककर्मसंबन्धापेक्षकत्वात् क्षेत्रज्ञत्वसाधकमित्यभिप्रायः । ईश्वरेण स्वरूपैक्याद्ब्रह्मणो जन्मपरध्यानादिकर्म्म च लीलेति चेत् इन्द्रेऽपि तथा किं न स्यात्, जन्मकर्म्मणोर्लीलारूपत्वात् स्वरूपैक्यं स्वरूपैक्याज्जन्मकर्म्मणोर्लीलात्वमिति

मानवे च शास्त्रे-प्रादुरासीत्तमोनुदः, सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत्, तस्मिन् जज्ञे स्वयं ब्रह्मेति ब्रह्मणो जन्मश्रवणात्तस्य क्षेत्रज्ञत्वमेवावगम्यते, तथा च स्रष्टुः परमपुरुषस्य तद्विसृष्टस्य च ब्रह्मणः-अयनं तस्य ताः पूर्व्वं तेन

**नारायणः स्मृतः तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥ इति नामनिर्देशाच्च**

अन्योन्याश्रयणं स्यादिति चेत् चतुर्मुखादीनामपि तुल्यं परमपुरुषस्योत्तरनारायणेऽवताररूपं जन्मेति प्रतिपादितं तदेव चतुर्मुखजन्मनोऽवताररूपत्वे प्रमाणमिति चेत् इन्द्रजन्मनस्तथात्वे तदेव प्रमाणं किं न स्यात् प्रागुक्तान्योन्याश्रयणाद्विति चेत् चतुर्मुखेऽपि तुल्यमित्याद्यनुसन्धेयम् । चतुर्मुखस्य परमकारणत्वानुपपत्तिं तत्प्राकरणिकयन्थेनोपपादयति तथा चेति, मानवश्लोकार्थनिर्णायकत्वेन श्रीविष्णुपुराणवचनमाह तथा चेति, भावनात्रयान्वयादिति अनुष्ठेयविषय आन्तरः प्रयत्नो भावना, सा त्रिविधा यथा–त्रिविधा भावना भूप! विश्वमेतन्निबोध ताम् । कर्म्माख्या ब्रह्मसंज्ञा च तथा चैवोभयात्मिका ॥ कर्म्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥ सनन्दनादयो ब्रह्मभावभावनया युताः । कर्म्मभावनया चान्ये देवाद्याः स्थावरावराः ॥ हिरण्यगर्भादिषु च ब्रह्मकर्म्मात्मिका द्विधा । अधिकारबोधयुक्तेषु विद्यते भावभावना ॥ अक्षीणेषु समस्तेषु विशेषज्ञानकर्म्मसु ॥ इति, विश्वमेतत् त्रिविधा भावना भावनात्रयान्वितमित्यर्थः, तां त्रिविधां भावनां निबोध भावनामवच्छेदकसञ्ज्ञया निर्दिशति कर्म्माख्येति, कर्म्माख्या कर्म्मभावनेत्यर्थः, एकस्यैव सञ्ज्ञात्रयक्लृप्तिशङ्काव्यावृत्त्यर्थमाह कर्म्मभावात्मिकेति,

**तथा च वैष्णवे पुराणे हिरण्यगर्भादीनां भावनात्रयान्वयादशुद्धत्वेन शुभाश्रयत्वानर्हतोपपादनात् क्षेत्रज्ञत्वं निश्चीयते ॥**

भावभावना भावार्थाः कर्म्मशब्दास्तेभ्यः क्रियाः प्रतीयेरन्निति वचनात्, भावोऽनुष्ठेयः, अतोऽनुष्ठेयविषयभावना आन्तर उद्योगोभावभावना सा कर्म्मभावात्मिका कर्म्मरूपानुष्ठेयविषया, ब्रह्मभावात्मिका–उपासनरूपानुष्ठेयविषया, उभयात्मिका कर्म्मोपासनरूपोभयानुष्ठेयविषयेति त्रिविधेत्यर्थः । सनन्दनादय इति ब्रह्मभावभावनया युताः उपासनारूपानुष्ठेय-

ह्यात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते "इष्टापूर्त्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इति अन्तर्यामिब्राह्मणे च "यो वायौ तिष्ठन् यस्य वायुः शरीरं योऽग्नौ तिष्ठन् य आदित्ये तिष्ठन्नि"त्यादि श्रूयते, संस्मर्यते च "यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धान्तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते लभते च ततः कामान्मयैव विहितान् हि तान्" इति । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेति, प्रभुरिति फलप्रदायीत्यर्थः । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि । यान्ति मद्याजिनोऽपि मामिति च, लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् संपाद्य तैराजानं भृत्यद्वारेण साक्षाद्वाऽर्चयन्ति, अर्चितश्च राजा तत्तदाराधनानुगुणं फलं च प्रयच्छन् दृश्यते, वेदान्तास्त्वनिपतितसकलेतरप्रमाणसम्भावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य तदाराधनरूपाणि च यागदानहोमात्मकानि स्तुतिनमस्कारकीर्त्तनार्चनध्यानानि च तदाराधनानि च, तदाराधितात्परस्मात्पुरुषाद्भोगापवर्गरूपं फलं च वदन्तीति सर्वं समञ्जसम् ॥ फलाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

टी० "विध्यपेक्षित एवे"ति, मन्त्रार्थवादयोः प्रतीयमानार्थे तात्पर्याभावेऽपि रात्रिसत्रप्रतिष्ठापगोरणशतयातनासाध्यसाधनभावशर्कराञ्जनद्रव्यपशुविशेषादिरर्थवादाद्युक्तोऽप्यर्थो विध्यपेक्षिततया भवद्भिरेव स्वीकृत इति भावः ॥ देवतानामपि फलदत्वमस्तु ततः किमपूर्वस्य फलप्रदत्वानभ्युपगम इत्यत्राह "एवमि"ति, श्रुतहानमश्रुतकल्पनं चानुपपन्नमित्यर्थः । अश्रुतकल्पनं हि कल्प्यापूर्ववादे वाच्यापूर्ववादे तु तन्नास्तीत्यत्राह "लिङादयोऽपी"ति, पूर्वस्मिन् पक्षे अपूर्वमेव कल्प्यम् अन्यत्र त्वपूर्वं तस्य लिङादिवाच्यत्वं कल्प्यमित्यर्थः प्रागेव–प्रथमाधिकरण एवेत्यर्थः । ततः किमित्यत्राह "तदेवमि"ति, । ततः किं परमपुरुषस्य फलप्रदत्व इत्यत्राह "वाय्वाद्यात्मना चे"ति, अयमर्थः सम्भवतीति दर्शयति "लोके चे"ति, विग्रहाद्यभावं ये त्वनुमानादिभिः साधयन्ति तन्मते तदुक्तानुमानं कालात्ययापदिष्टमित्यभिप्रायेणाह "वेदान्तास्त्वि"ति, स्तुतिनमस्कारादीनामुपबृंहणसिद्धत्वात्तेषां ध्यानेन सह कीर्त्तनं सर्वं समञ्जसं विध्यर्थवादमन्त्राणां सर्वेषां सामञ्जस्यमित्यर्थः ॥ फलाधिकरणं समाप्तम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतश्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीमत्सुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयस्याध्यायस्य द्वितीयः पादः ॥ समुदिताधिकरणसंख्या ॥ ८२ ॥ समुदितसूत्रसंख्या च ॥ ३५४ ॥ द्वितीयपादीयाधिकरणसंख्या ॥ ८ ॥ सूत्राणि तु ॥ ४० ॥

——o——

श्रीमते परमगुरवे रामानुजाय नमः ॥

## अथ तृतीयाध्याये तृतीयः पाद आरभ्यते ॥

सर्ववेदान्तप्रत्यया-धिकरणम् ।

### सू० सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

भू० उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायितापर्यन्तम्, इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते, प्रथमं तावदेकस्या वैश्वानरविद्यादिकाया अनेकशाखासु श्रूयमाणाया किमेकविद्यात्वम्? उत विद्याभेद? इति चिन्त्यते, अविशेषपुनःश्रवणस्य प्रकरणान्तरस्य च भेदकत्वाच्छाखाऽन्तरे चोभयोरवर्ज्जनीयत्वाद्विद्याभेद इति प्राप्तम्, अत एव "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्ण"मिति शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उपपद्यते, विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तेर्नियमो नोपपद्यते, एवं प्राप्त उच्यते सर्ववेदान्तप्रत्ययमेकमुपासनमिति, कुतः ।

टी० सू· सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्, ॥ १ ॥ पादसङ्गत्यर्थमनुवदति "उक्तमि"ति, अन्यत्रोपयोगार्थं स्वीकार उपसंहारः, तत्र तत्रोक्तस्य तत्र तत्रैवोपयोगो विकल्पः, तयोर्निर्णयायेत्यर्थः, विद्यानामभेदे उपसंहारः, भेदे विकल्पः । प्रथमाधिकरणसङ्गत्यमाह "प्रथमं तावदि"ति, अनेकशाखासु संश्रूयमाणायाः एकसंज्ञत्वेनैकफलत्वेन श्रूयमाणाया इत्यर्थः । पूर्वमीमांसायां शाखान्तराधिकरणे शाखान्तरे कर्मभेद इति सूत्रेण पूर्वपक्षमुक्त्वा 'एकं वा संयोगरूपचोदनाख्याविशेषादि"ति सिद्धान्तितम्, अत्र तु शाखा-

न्तराधिकरणोक्तन्यायो वेदान्तवाक्येषु किं प्रवर्त्तते? उत ने? ति संशय्य प्रवर्त्तत? इति निर्णीयते नानाशाखाम्नाताया वैश्वानरविद्यादिकायाः किं प्रतिशाखं भेदः? उतैकत्व? मिति, किं शाखान्तरे प्रत्यभिज्ञानमैक्यमवगमयति? ने? ति, किं शिरोव्रतवतामाथर्वणिकानां विद्योपदेशनियमो वेदान्तविहितविद्यासु शाखान्तराधिकरणन्यायावतारं निरुणद्धि ने? ति किं शिरोव्रतं विद्याङ्गम्? उताध्ययनाङ्ग? मिति, विद्याङ्गत्वे शाखान्तरनयावतारप्रतिबन्धकत्वात् प्रत्यभिज्ञानस्यैक्यानवगमकतया विद्याभेदः, अध्ययनाङ्गत्वे शिरोव्रतस्य विद्यासु शाखान्तरनयाप्रतिबन्धकतया प्रत्यभिज्ञानस्यैक्यावगमकत्वाद्विद्यैकत्वमिति, तत्र पूर्वपक्षयुक्तिमाह "अविशेषे"ति, अग्निहोत्रं जुहोति दध्ना जुहोतीत्यादिषु जुहोतिपदस्य पुनःश्रवणेऽपि दध्नेति विशेषः श्रूयते तद्गुणानुस्त्यर्थमविशेषपुनःश्रवणस्येत्युक्तम् इडो यजति बर्हिर्यजति तनूनपातं यजतीत्यादिषु हि यजति-शब्दादेः पुनःश्रवणं भेदकं दृश्यते, एकस्यामपि शाखायाम् अनयोर्भेदहेतुत्वमस्तु ततः किमित्यत्राह "शाखान्तरे चे"ति, शाखान्तरत्वादेव शाखान्तराधिकरणे या सिद्धान्तयुक्तिः सैवात्रापि स्यादिति तयैवालमिति शङ्कायामधिकं पूर्वपक्षहेतुमाह "अत एवे"ति, अत एव विद्याभेदादेवेत्यर्थः। कथमन्यथा नियमानुपपत्तिरित्यत्राह "विद्यैक्य"इति, ब्रह्मविद्याऽङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तिरनिष्टा विद्यैक्ये तदङ्गस्य शिरोव्रतस्यान्येषामपि प्राप्तेर्न नियमोपपत्तिस्तस्मान्न विद्यैक्यमित्यर्थः। राद्धान्तमारभते "एवं प्राप्त"इति, सूत्रे प्रतिज्ञाखण्डं सपूरकपदमुपादत्ते "सर्वे"ति, सर्ववेदान्तप्रत्ययं सर्वेषु वेदान्तेषु प्रतीयमानमित्यर्थः कर्मकाण्डसूत्रस्मारणपरत्वात्तरस्यमेकमिति पदमध्याहृतम्। ऐक्यहेतुषु संयोगनिर्देशस्याप्राथम्येऽपि चोदनायाः प्राधान्यात्।

सू० चोदनाद्यविशेषात् चोदना तावदुपासीत विद्यादित्येवंजातीयको धात्वर्थविशेषविधिः, आदि-शब्देन "एकं वा संयोगरूपचोदनाख्याऽविशेषादि"ति कर्मकाण्डशाखान्तराधिकरणसूत्रोक्ताः संयोगरूपाख्या गृह्यन्ते, एषां चोद-

नादीनामविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते, तथा हि छान्दोग्यवाजसनेयकयोर्वैश्वानरमुपास्त" इति चोदना तावदेकरूपा, वेद्यैकनिरूपणीयस्वरूपस्य विदिपर्यायस्योपासेर्वेद्यभूतवैश्वानरैक्याद्रूपमप्यविशिष्टम् । आख्या च वैश्वानरविद्येत्यविशिष्टा, फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः, अत एभिः प्रत्यभिज्ञानाच्छाखान्तरेऽपि विद्यैक्यम् । तत्तूक्तमविशेषपुनःश्रवणात्प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमिति तदनुभाष्य परिहरति—

**सू० भेदान्नेति चेदेकस्यामपि ॥ २ ॥**

अविशेषपुनःश्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विद्यैक्यमिति चेत् एकस्यामपि विद्यायां प्रतिपत्तृभेदात्पुनः श्रुतिः प्रकरणान्तरं चोपपद्यते, यच्च ह्येकस्मिन् प्रतिपत्तरि पुनःश्रुतिः प्रकरणान्तरं च विद्यते तत्राऽन्यथानुपपत्त्या विधेयभेदाद्विद्याभेदः, प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनःश्रुत्याद्युपपत्तेस्तत्र न विधेयान्तरसम्भवः ।

टी० चोदनाद्यविशेषादित्युक्तं, कर्मव्यावृत्तोपासनवाचिधात्वभिप्रायेण धात्वर्थविशेषेत्युक्तम्, एकस्यां शाखायां विद्यादिति शाखान्तरे उपासीतेति विधिपदे सति तत्राप्यैक्यसिद्धिरित्यभिप्रायेण विधिपर्यायस्योपासेरित्युक्तं, द्रव्यदेवते कर्मणो रूपं विद्यायास्तूपास्यैकनिरूपणीयत्वात् तदेव रूपम् ॥ अनन्तरसूत्रमवतारयति "यत्तूक्तमि"ति,सू. भेदान्नेति चेदेकस्यामपि ॥ २ ॥ शाखान्तराऽधिकरणसिद्धान्तसाधकहेतुः संक्षिप्तः प्रथमसूत्रे, तत्र पूर्वपक्षशङ्कापरिहारः संक्षिप्तो द्वितीये, विधेयभेदान्न विद्यैक्यमिति विधेयं सामान्यं विधेयविशेष उपासनं प्रतिपत्तृभेदादिति

प्रकरणभेदाभ्युपगमेन प्रतिपत्तृभेदात् परिहारः प्रकरणभेदो नास्तीति च परिहार्ये प्रतिपत्तृभेदादुपपत्तिं व्यतिरेकपूर्वकमुपपादयति "यत्र ही"ति, अन्यथाऽनुपपत्त्येति प्रतिपत्तृभेदाभावे अविशेषपुनश्श्रवणप्रकरणभेदयोर्वैयर्थ्यरूपानुपपत्तिः । अनन्तरसूत्रं शङ्कामुखेनावतारयति—

सू० यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शनाद्विद्याभेदः प्रतीयत इत्यत्राह—

**सू० स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

नैतदस्ति शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयतीति, शिरोव्रतस्य विद्याङ्गत्वाभावात्, स्वाध्यायस्य तथात्वे हि तन्नियमः स्वाध्यायस्य तथात्वसिद्ध्यर्थं तज्जन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि शिरोव्रतोपदेशनियमः न विद्यायाः, कुत एतत्, "नैतदचीर्णव्रतोऽधीयीते"ति तस्याध्ययनसंयोगात्, समाचारेऽधिकाराच्च, समाचाराख्ये ग्रन्थे इदमपि वेदव्रत[1]त्वेन व्याख्यातमित्यतिदेशात् तेषामेवैतां ब्रह्मविद्यां वदेत—वेदविद्यामित्यर्थः, सववच्च तन्नियमः यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसम्बन्धिनः तत्रैव भवन्ति न चेताग्निषु ॥

**सू० दर्शयति च ॥ ४ ॥**

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वं, तथा हि छान्दोग्ये "तस्मिन् यदन्तस्तदन्वेष्टव्यमित्युक्त्वा किं तच विद्यते यदन्वेष्टव्यमिति प्रश्नपूर्वकमपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम् ॥

१ इदमपि वेदव्रतेन व्याख्यातमिति पा० ।

टी० "यच्चोक्तमि"ति, सू॰ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः, ॥ ३ ॥ शिरोव्रतस्य विद्याङ्गत्वे सति हि विद्यैक्यात् सर्वशाखिनां शिरोव्रतप्राप्तिः, विद्याङ्गत्वमेव नास्ति अध्ययनाङ्गत्वादित्यर्थः । इदमपि वेदव्रतेन व्याख्यातमिति वेदव्रतेन शिरोव्रतेनेदमपि व्याख्यातमित्यर्थः । शिरोव्रते पुष्कलोपदेशं कृत्वा व्रतान्तरं प्रस्तुत्य तत्र शिरोव्रतोक्तक्रममतिदिशद्वाक्यं शिरोव्रतं वेदव्रत–शब्देन निर्दिदेश, शरोव्रतमध्ययनाङ्गं चेत्तेषामेवैतां ब्रह्मविद्यां वदेतेत्यस्य कोऽर्थ इत्यत्राह "तेषामि"ति, अध्ययनाङ्गं शिरोव्रतं तेषामेवेति कथं नियम इत्याह "सववच्चे"ति, कस्यचित् कर्मविशेषस्य शाखाविशेषवतामसाधारणत्वं युक्तमित्यर्थः सप्तसूर्यादय इति आरोगो भ्राजः पटरः पतङ्गः स्वर्नरो ज्योतिषीमान् विभास इत्युक्तसप्तसूर्यदेवताकं कर्म शतौदनाख्यं च कर्म सप्तसूर्योपक्रमाः शतौदनपर्यन्ता होमा आथर्वणिकानामेकस्मिन्नग्नावेव क्रियन्ते न त्रेतादिषु तद्वन्नियम इत्यर्थः ॥ सू॰ दर्शयति च ॥ ४ ॥

सू॰ तैत्तिरीयके तु छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य "तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यमि"ति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते, तदुभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते, । तदेवं शाखान्तरधिकरणन्यायसिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनमाह ।

## सू॰ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

एवं सर्ववेदान्तेषु समाने सत्युपासने वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तरे उपसंहारः कर्त्तव्यः, कुतः विधिशेषवदर्थाभेदात्, यथैकस्मिन्वेदान्ते श्रुतो वैश्वानरदहरादिविधिशेषगुणस्तद्विद्यासम्बन्धात्तदुपकाररूपप्रयोजन-

सिद्ध्यर्थमनुष्ठीयते, तथा वेदान्तान्तरोदितोऽपि तद्विद्यासम्बन्धित्वेन तदुपकाराविशेषादुपसंहर्त्तव्य इत्यर्थः । चशब्दोऽवधारणे । सर्ववेदान्तप्रत्ययाधिकरणं समाप्तम् ॥

अन्यथात्वाधिकरणम् ।

## सू० अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

टी० तैत्तिरीयकेऽपेक्षिताकथनाच्छान्दोग्योक्तार्थोपजीवनं सिद्धं, तच्च विज्ञानां सर्ववेदान्तप्रत्ययन्यायविषयत्वं द्योतयतीत्यर्थः । अनन्तरसूत्रसङ्गतिमाह "तदेवमि"ति, । सू० उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च, ॥५॥ समाने सत्युपासने एकसंज्ञके एकफले चोपासने समाने इत्यर्थः, गुणशब्देनाङ्गमुच्यते स्वशाखोक्तगुणास्तद्विद्योपकारकत्वादेव ह्यङ्गीक्रियते, तथा शाखान्तरोक्तेऽपि गुणास्तद्विद्योपकारकत्वादङ्गीकार्य इत्यर्थः । परे त्वाख्याभेदं रूपभेदं भूमिभोजनादिवच्छिरोव्रतादि[1]कर्मभेदं पुनःश्रुतिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनानि शाखारन्तसंख्याप्रक्रियाश्च पूर्वपक्षहेतुतया वर्णयन्ति, तैत्तिरीयकं वाजसनेयकं शाट्यायनकमित्याख्याभेदाश्च प्रदर्शिताः, भेदाच्चेति चेदिति 'गुणभेदाच्चेति चेदिति व्याचक्षते, वाजिनः पञ्चाग्निविद्यायां षष्ठमप्यग्निमामनन्ति, प्राणसंवादे वाक्चक्षुःश्रोत्रमनोभ्यश्छान्दोग्यसिद्धेभ्यश्चतुर्भ्यः प्राणेभ्योऽधिकं पञ्चमं "रेतोह वै प्रजापति"रित्यादिना आमनन्ति, अतोगुणभेदः साम्यादिकान्यभिप्राया पञ्चसंख्या, षष्ठस्तु छन्दोगैरप्युपसंहार्यः प्राणसंवादे चाधिकस्योपसंहारो न विरुद्ध इति परिहरन्ति दर्शयति चेति सूत्रमपि सर्वे वेदा यत्पदमामनन्तीति सर्वश्रुतिषु वेद्यब्रह्मैकत्वोपदेशान्महद्भयं वज्रमुद्यतम् इति काठकोक्तभयहेतुत्वस्य अथ तस्य भयं भवतीति तैत्तिरीयके भेदनिन्दयैव परामर्शाद्वाजसनेयकोक्तस्य वैश्वानरस्य यस्त्वेतमेवं प्रादेशमात्रमिति छान्दोग्ये सिद्धवदुपादानाच्च वेदोऽध्ययनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिं दर्शयतीति व्याचक्षते, विधिशेषवदिति विधिशेष—शब्दश्चाग्निहो-

१ धर्मभेदमिति ।

त्वादिधर्मपरत्वेन व्याख्यातः तत्र तावत् कार्त्स्न्येनायं पादो ब्रह्माज्ञानपक्षे न सङ्गच्छते प्रत्युत विरुध्यते[1] एव शास्त्रस्य निर्विशेषवस्तुनि तात्पर्याभ्युपगमात्, गुणोपसंहारस्य च तद्विरुद्धत्वात्, गुणानामतात्त्विकत्वान्नासङ्गतिरिति चेदत एव ह्यसङ्गतिः, न हि तत्त्वप्रधानशास्त्रस्यातात्त्विकगुणप्रतिपादनपरत्वं युक्तं क्रममुक्त्युपायत्वादुचितमिति चेत् क्रममुक्तिर्नाम किं सगुणप्राप्तिपूर्विका निर्गुणब्रह्मप्राप्तिः तदयुक्तं प्रमाणाभावात्, गुणविशिष्टदहरोपासनेन परञ्ज्योतिःप्राप्तिस्तत्प्राप्तस्य निरङ्कुशैश्वर्यं च श्रुतं, न हि परञ्ज्योतिःप्राप्तेरन्यो मोक्षोऽस्ति सगुणोपासनेन निर्गुणविद्योत्पत्त्या मुक्तिः क्रममुक्तिरिति चेत् न सगुणोपासनस्य विपरीतवासनाजनकत्वेन निर्गुणविद्योत्पादनप्रत्यनीकत्वात्, अदृष्टद्वारा निर्गुणविद्योत्पादकत्वमिति चेत् न सगुणोपासनस्यैव परब्रह्मप्राप्तिं प्रत्यव्यवहितोपायत्वप्रतिपादकप्रमाणविरोधात्, आनन्दादीनां सर्वत्रानुवृत्तेर्निर्गुणविद्याया अभावाच्च, अतः पादोऽयं तत्पक्षानुपयुक्तो विरुद्धश्च, आद्ये तु शाखान्तरीयगुणोपसंहारफलसमर्पकप्रयोजनसूत्रवशाच्चिन्तायाः सर्वविद्यासाधारणतावगतेरत्र पूर्वपक्षस्य शाखान्तरीयसर्वविद्यासाधारणतया तद्धेतुना ऽपि साधारणेन भवितुं युक्तम् अतोऽविशेषपुनः श्रुतिः प्रकरणान्तरं चेत्युभयमपि भाष्ये निर्दिष्टं, न त्वाख्यारूपभेदादयः तेषां विद्याविशेषासाधारणत्वात्साधारणपूर्वपक्षानुपयोगात्, अत एव भेदादिति चेदिति सूत्रे ऽपि ताभ्यामेव भेदः शङ्कितः न तु गुणभेदात् गुणभेदाद्यधीनभेदचिन्ताया उपरितनाधिकरणकार्यत्वात्, भाष्ये तु द्वितीयसूत्रस्थपूर्वपक्षहेतोराद्यसूत्र उपन्यासः प्रतिपत्तिसौकर्यार्थः पूर्वपक्षयुक्तिप्रतिपत्त्यनन्तरं सिद्धान्तयुक्तिप्रतिपत्तिर्हि सुकरा । किञ्च तैत्तिरीयकं वाजसनेयकमित्यादिराख्याभेदः परैर्दर्शितः न तु भाष्ये वैश्वानरविद्या. दहरविद्येतिवत् तैत्तिरीयकविद्या वाजसनेयकविद्येति तत्तद्विप्रवचननिमित्तनामधेयानां विद्यानामत्वेन प्रसिद्ध्यभावात्, प्रसिद्ध्यभ्युपगमे ऽपि प्रवचननिमित्तनामधेयानां विद्याभेदाभेदयोरप्रयोजकत्वाच्च तित्तिरिताण्डिप्रवचननिमित्ते संज्ञाभेदे ऽपि हि दहरोपासनमभिन्नं तैत्तिरीय-

[1] तद्विरुद्ध एवेति ।

कमिति नाम्न एकत्वेऽपि गुहरविद्यादहरविद्ययोर्भेदश्च दृश्यते, वेदान्तानां ब्रह्मविद्याप्रधानत्वात्पादाद्ये साधारणेऽधिकरणेऽपि वैश्वानरादिविद्योदाहृता न तु प्राणविद्यादिः, दर्शयति चेत्यत्र सर्वत्र सर्ववेदान्तप्रत्ययत्वे वेद्यब्रह्मैकत्वोपदेशो हेतुत्वेन वक्तुमयुक्तः दहरवैश्वानरादिज्ञानामव्यभिचत्वप्रसङ्गात् काठकतैत्तिरीयकयोर्भयहेतुत्वस्य गुणस्योपन्यासश्च न विद्यैक्यसाधकः काठके ईश्वरस्य नियन्तृत्वप्रतिपादनात्, अथ तस्य भयं भवतीत्युपासनविच्छेदस्य भयहेतुत्वप्रतिपादनाच्च वाक्ययोर्भिन्नार्थत्वात्, भीषाऽस्मादित्याद्युक्तेर्भयहेतुत्वेन विवक्षितेऽपि तैत्तिरीयककठवल्लीवाक्ययोर्मिथः साकाङ्क्षत्वविरहि[1]णोरुपजीव्योपजीवकभावाभावेन तत्कृतैक्यज्ञापनस्य विफलत्वाच्च, वैश्वानरविद्यायां च यस्त्वेतमिति न वाजसनेयकोक्तानुवादः स्वशाखावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वसम्भवात् तस्य वाक्यस्य, अतः क्वचिदपुष्कलोपदेशः शाखान्तरसाकाङ्क्षतया तदेकवाक्यत्वे लिङ्गमिति सूत्रार्थो युक्तः, विधिशेषशब्दस्य स्वशाखासमर्पितवेद्यगुणपरत्वं युक्तम् उपकारकत्वमात्रादपि तद्विद्योपकारकत्वे दृष्टान्तस्यौचित्यातिरेकात् ॥ अन्ये तु प्रयोजनसूत्रं पृथगधिकरणमाहुः श्रुतिषु कस्यचिदङ्गस्यानुक्तेरज्ञानमूलत्वायोगादुपदेशे सति कार्यस्यावश्यम्भावेन कार्याभावायोगाच्च परिशेषात् क्वचिदनुक्तेः स्वरूपाभावनिबन्धनत्वादनन्तानां धर्माणामुपसंहारायोग्यत्वात् च सत्यपि विद्यैकत्वेनान्यत्र श्रुता धर्माः अन्यत्रोपसंहार्या इति पूर्वपक्षं कृत्वा तच्छाखोक्ताङ्गवदङ्गान्तरमप्यर्थाभेदादुपसंहार्यं क्वचिदवचनमस्य शाखान्तरीयाङ्गोपसंहारस्य वैकल्पिकत्वसूचनार्थं प्रतिकल्पं समानेऽपि कर्मणि प्रयोगभेददर्शनात् तलवकारादपि ताण्डकेऽधिकमशिशिषादिषु दीक्षादिसम्पादनं पुरुषविद्यायां कृतं तदत्रोदाहरणमिति वर्णयन्ति कर्मैकत्वे स्थिते सत्यङ्गानामुपसंहर्तव्यत्वं शाखान्तराधिकरण एव सिद्धमिति तत्स्मरणमात्रस्य कृतत्वात् पूर्वपक्षोत्थानहेत्वाधिक्याभावाच्च पृथगधिकरणत्वमयुक्तम्, आनन्त्यादिकमपि हि तत्रापि वक्तुं शक्यते तत्र सिद्धमप्यत्रोपजीव्यत्वात् सोक्षायोग चिन्त-

[1] साकाङ्क्षत्वविरहेणोपजीव्योपजीवकभावाभावेनेति पा० ।

नीयमिति चेत् न श्रुतिलिङ्गादिस्वरूपस्यापि चिन्तनीयत्वप्रसङ्गात्, न च शाखान्तरोक्तानां सर्वेषां विकल्पः किन्तु तुल्योपकाराणामेव तलवकारता-णिडकस्यपुरुषविद्यामात्रमिह नोदाहार्यं सर्वविद्यासाधारणत्वाभावात् प्रदर्शनार्थमुदाहृतमिति चेत् उदाह्रियतां संशयभावात्तु पृथग्विचारो न युक्त इति ॥ सर्ववेदान्तप्रत्ययाधिकरणं समाप्तम् ॥ सू॰ अन्यथात्वं शब्दा-दिति चेन्नाविशेषात्, ॥ ६ ॥ अवान्तरसङ्गतिमाह ।

सू॰ एवं चोदनाद्यविशेषाद्विद्यैकत्वमेकत्वे च गुणोपसंहारः कर्त्तव्य इत्युक्तम्, अतः परं काश्चन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति नेतीति निरूप्य निर्णीयते, अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च, वा-जीनां तावत् "द्वया ह प्राजापत्या देवाश्चासुराश्चेत्यारभ्य "ते ह वा देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्यया-मेत्युद्गीथेनासुरविध्वंसं प्रतिज्ञायोद्गीथे वागादिमनःपर्य-न्तदृष्टावसुरैरभिभवमुक्त्वा "अथ हेममासन्यं प्राणमूचु-रित्यादिनोद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा भवत्या-त्मना पराऽस्य द्विषन् भ्रातृव्योभवति य एवं वेदेति शत्रु-पराजयफलायोद्गीथे प्राणदृष्टिर्विहिता, एवं छन्दोगा-नामपि देवासुरा ह वै यत्र संयेतिर इत्यारभ्य "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्याम इत्युद्गीथेना-सुरपराभवं प्रतिज्ञाय तद्देवोद्गीथे वागादिदृष्टौ दोषम-भिधाय "अथ एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिर"-इत्यादिनोद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा यथा-श्मानमाखणमृत्वा विध्वंसते एवं चैव स विध्वंसते य एवं

षिद्द पाप्मं कामयत" इति शत्रुपराभवायोद्गीथे प्राणदृष्टिर्विहिता, वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणाद्वेदनविषयो विधिः कल्प्य ।

टी० "एवमि"ति, सामान्येनोपासनशास्त्रेषु सर्वशाखाप्रत्ययन्यायस्यावतीर्णत्वमुक्तं, तत्र भेदाभेदहेतुसद्भावासद्भावौ विद्याविशेषेषु निरूप्येते इति सङ्गतिः, वैश्वानरविद्यादिकायाश्चोदनाद्यविशेषाद्विद्यैक्यमुक्तमत्रापि तथा स्यादिति शङ्कायां अवान्तरसङ्गतिः अस्तीत्यादि द्वयाः द्विविधाः उद्गीथेनात्ययाम उद्गीथेन जयामेत्यर्थः, आसन्यमासन्नं मुख्यमित्यर्थः, भवत्यात्मनेति अस्य द्विषन् भ्रातृव्यः अरातिः पराभवतीत्यर्थः संयेतिरे-युद्धं चक्रुः यथा श्मानमित्यादि आखन्यत इत्याखनं मृत्पिण्डः यथा मृत्पिण्डोऽश्मानं प्राप्य विध्वंसते इत्यर्थः, । नात्र वेदनविधिः श्रूयत इत्यत्राह "वेदनविषये"ति, फलसाधनत्वश्रवणे सति हि विधिकल्पनं फलसाधनत्वमेव नास्ति, उद्गीथविद्यायाः क्रतुसाद्गुण्यमेव फलमित्यर्थवादोक्तशत्रुपराभवादौ तात्पर्याभावादित्यत्राह-

सू० उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽप्यार्थवादिकमपि फलं तद्विरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितं, तत्र संशय्यते किमत्र विद्यैकम् ? उत ने ? ति किं युक्तं विद्यैक्यमिति कुतः, उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्वश्रवणाच्चोदनाद्यविशेषात्, फलसंयोगस्तावच्छत्रुपरिभवरूपो न विशिष्यते, रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादविशिष्टं, चोदना च विद्धिधात्वर्थगता ऽविशिष्टा, आख्या चोद्गीथविद्येत्यविशिष्टा, अत्र राद्धान्तिच्छायया परिचोद्य परिहरति अन्यथात्वं

शब्दादिति चेन्नाविशेषादिति, यदुक्तं विद्यैक्यमिति तन्नोपपद्यते रूपभेदात् रूपान्यथात्वं हि शब्दादेव प्रतीयते वाजसनयके हि अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायदित्युद्गानस्य कर्त्तरि प्राणदृष्ट्या ऽसुरपराभवमुक्त्वा य एवं वेदेति कर्तृविषय प्राणदृष्टिरेवं—शब्दादवगम्यते, छान्दोग्ये "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्युद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्याऽसुरपराभवमुक्त्वा "य एवं विदि पापं कामयत इत्येवं शब्दात् कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता, अत एकत्र कर्त्तरि प्राणदृष्टिशब्दादन्यत्र कर्मणि प्राणदृष्टि—शब्दाच्च रूपान्यथात्वं स्पष्टं, रूपान्यथात्वे च विधेयभेदे सति.

टी० "उद्गीथविद्यायाः"इति, अर्थवादो हि स्तावकत्वेन रुचिजनकः असता गुणेन रुचिर्न जायत इति तत्रापि तात्पर्यमस्त्येवेति "तदुपर्यपि बादरायणः" इत्यत्र प्रतिपादितमित्यर्थः, एवं विषयशुद्धिः कृता । अथ संशयमाह "तत्रे"ति, किम् उभयत्र विद्यैक्यम्? उत विद्याभेदः? किमुभयत्र विद्या प्रत्यभिज्ञायते ने? ति किमुभयत्रोद्गीथस्यैवोपास्यत्व? मुत क्वचित् उद्गीथावयवः प्रणवः? क्वचित् उद्गाता चोपास्यः? ऊमित्येतदक्षरमुद्गीथमुपासित तेभ्य एष प्राण उद्गायतीति वाक्यद्वयं किमुभयत्र विहितस्योपासनस्योद्गीथावयवविषयतामुद्गातृविषयतां चावगमयति ने? ति यदा नावगमयति तदोभयत्रोद्गीथस्यैवोपास्यत्वेन विद्याप्रत्यभिज्ञानाद्विद्यैकत्वं स्यात्, यदा तु वाक्यद्वयमुद्गीथावयवस्य प्रणवस्योद्गातुश्चोपास्यतामवगमयति तदा रूपभेदेन छान्दोग्ये वाजसनेयके च एकविद्याप्रत्यभि-

ज्ञानाभावाद्विद्याभेदः स्यादिति सूत्रमवतारयति "अत्रे"ति, त्वं न उद्गायेति तेभ्य एव प्राण उद्गातरि प्राणदृष्टिं कृतवन्त इत्यर्थः, एवं वेद एवं विदीत्यत्रैवं शब्दाभ्यां कर्त्तरि प्राणदृष्टिः कर्मणि प्राणदृष्टिश्च कथ्यत इत्यर्थः ।

सू० केवलचोदनाद्यविशेषेऽकिञ्चित्कर इति विद्याभेद इति चेत्तन्न अविशेषात् अविशेषेण ह्युभयत्रोद्गीथसाधनकपरपरिभव उपक्रमे प्रतीयते, वाजसनेयके "ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामे"त्युपक्रमे श्रूयते, छान्दोग्येऽपि "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम" इति, अत उपक्रमाविरोधाय तेभ्य एष प्राण उद्गायदित्यध्यस्तप्राणभाव उद्गीथ उद्गानकर्मभूत एव पाकादिचोदनादिवत्सौकर्यातिशयविवक्षया कर्त्तृत्वेनोच्यते, अन्यथोपक्रमगत उद्गीथ-शब्दः कर्त्तरि लाक्षणिकः स्यात्, अतो विद्यैक्यमिति प्राप्ते प्रचक्ष्महे-

## सू० न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

न वेति पक्षं व्यावर्तयति, न चैतदस्ति यद्विद्यैक्यमिति कुतः प्रकरणभेदात् "ओमित्येतदक्षरमुद्गीथमुपासीतेति प्रकृतमुद्गीथावयवं प्रभूतं प्रणवं प्रस्तुत्यैतस्य वा अक्षरस्योपव्याख्यानं भवति देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्युद्गीथावयवभूतप्रणवविषयमुपासनं छन्दोगा अधीयते, वाजिनस्तु-

टी० केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति चोदनाद्यविशेषसमुच्चय एवैक्ये प्रमाणं शब्दान्तरादिष्वन्यतमं भेदकमित्यर्थः । पूर्वपक्षी सिद्धान्तिच्छायया कृतं चोद्यं परिहरति "तच्चे"ति, उपक्रमाविरोधाय उपसंहारगतः कर्तृवाचिशब्द औपचारिक इत्यर्थे । सू० न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्, ॥ ७ ॥ उद्गीथ–शब्दस्य कृत्स्नोद्गीथपरत्वमोमित्येतदक्षरमित्यनेन व्यावर्त्तितं पञ्चभागस्य हि साम्नो द्वितीयभाग उद्गीथः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः पञ्चभागाः तेषु द्वितीयस्योद्गीथस्यावयवभूतः प्रणवः तस्योद्गीथशब्देनाभिधानं स्वरविशेषसिद्ध्यर्थम् ॥

भू० तादृशप्राचीनप्रकरणाभावात् "हन्तासुरान् यज्ञ उद्गीथेनात्ययामे"ति कृत्स्नमुद्गीथं प्रस्तुत्या "थ हेममासन्यंप्राणमूचुस्त्वं न उद्गाये"त्यादिकृत्स्नोद्गीथविषयमधीयते, अतः प्रकरणभेदेन विधेयभेदः, विधेयभेदे च रूपभेद इति न विद्यैक्यम् । किञ्च अथ ह एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिर इति पूर्वप्रकृतोद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावश्छन्दोगानामुपास्यः, वाजिनान्तु कृत्स्नस्योद्गीथस्य कर्त्तोद्गाता प्राणदृष्ट्योपास्य इति । अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायदित्युद्गातरि प्राणाध्यासं निर्दिश्य "य एवं वेदे"त्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते, अतश्च रूपभेदः, न चोद्गातर्युपास्य विहित उद्गीथेनात्ययामेत्याख्यायकोपक्रमविरोधः शङ्कनीयः उद्गातृरूपासने उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात्तस्यापि पर

परिभवाख्यं फलं प्रति हेतुत्वात्, अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम् ॥

टी० तादृशप्राचीनप्रकरणाभावादिति, उद्गीथावयवभूतप्रणवस्यैवोद्गीथशब्देनाभिधानं न प्रकृतं वाजसनेयके ओमित्येतदक्षरमुद्गीथमुपासीतेति ईदृशवाक्याश्रवणात् उद्गीथ-शब्दस्य स्वतोऽसंकुचितवृत्तित्वात् कृत्स्नोद्गीथपरत्वमुद्गीथसम्बन्धित्वेऽध्यस्तप्राणाभावत्वे च समानेऽप्युद्गीथावयवकृत्स्नोद्गीथविषयत्वभेदाद्विद्याभेदः अतः प्रकरणभेदेनेति प्रकरणं विधेयार्थप्रतिपादकप्रदेशविशेषः, तद्भेदेन विधयभेदः विधेयभेदे च रूपभेदः इतीति विधेयभेदे रूपभेदःफलित इत्यर्थः, नेत्येतावता पूर्वपक्षव्यावृत्तिसिद्धावपि वा-शब्दप्रयोगाभिप्रेतमर्थमाह "किञ्चे"ति, यत्तु पूर्वपक्षिणाऽऽशङ्क्य परिहृतं सोऽपि सिद्धान्तहेतुरेवेत्यर्थः । अध्यस्तप्राणाभावस्योद्गातृरूपास्यत्वे उपक्रमविरोध इत्यत्राह "न चे"ति, न ह्युपक्रमाधिकरणे उपक्रमानवगतम् उपसंहारावगतं त्याज्यमित्युक्तम् अपि तु उपक्रमावगतस्य न भङ्गः कार्य इति, अत्र तु उपक्रमावगतं तदधिकं च स्वीक्रियते उद्गीथेनात्ययामेत्यस्योद्गातृगीयमानोद्गीथे तात्पर्यमिति भावः ॥

सू० परोवरीयस्त्वादिवत् यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम् ॥

सू० सञ्ज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

उद्गीथविद्येति संज्ञैक्यात्तद्विद्यैक्यमुक्तं चेत्तत् संज्ञैक्यं विधेयभेदेऽप्यस्त्येव यथाऽग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च यथा चोद्गीथविद्येति छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥

## सू० व्याप्तेश्च समञ्जसम् ॥ ९ ॥

छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य "तद्ध देवा उद्गीथमाजह्रु"रित्युद्गीथ–शब्दस्य प्रणवविषयत्वमेव समञ्जसम ।

टी० परोवरीयस्त्वादिवदिति सौत्रं पदम् उपास्यैकत्वे दृष्टिविशेषणैकत्वे च सत्यपि दृष्टिविशेषणभूतपरमात्मनो हिरण्मयत्वपरोवरीयस्त्वादिधर्ममात्रभेदात्तत्र विद्याभेदः कृतः किं पुनरुपास्यभेदे सतीत्यर्थः । परोरज्जा इति वत् परोवरीयान् वरीयसां परः तस्य भावः परोवरीयस्त्वम् एवं कर्मकर्तृवैषम्यमुक्तं सू० संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ कुण्डपायिनामयनाग्निहोत्रं मासमात्रहोमसमाप्तिकं ज्योतिष्टोमेन यजेत वाजपेयेन यजेतेतिवद्विद्यानामधेयानां स्ववाक्यस्थत्वाभावेऽप्यविच्छिन्नसंप्रदायक्रम एव विद्यानां तत्तन्नामत्वे प्रमाणं प्रणवमात्रस्योद्गीथ-शब्दाभिधानं पूर्वमेव पर्यवसितम् अत्र तूद्गीथशब्दस्य कृत्स्नोद्गीथविषयत्वाद्विद्यैक्यमिति शङ्कायामाह सू० व्याप्तेश्च समञ्जसम् ॥ ९ ॥ उत्तरास्वपीति ओमित्येतदक्षरमुद्गीथमुपासीतेत्यारभ्य ते इति त्वोद्गीथं अवस्तान्नोयजुषः स्वरमेव प्राविशन् यदा वा ऋचमाप्नोति ओमित्येवातिस्वरतीति तथा असौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरं नेतीति तथा "अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत ओमिति ह्येष स्वरं नेतीत्यादिषूद्गीथ–शब्दस्य प्रणवविषयत्वं स्फुटम् । अवयवमात्रे समुदायवाचिशब्दप्रयोगः कथमित्यत्राह–

सू० अवयवे च समुदायशब्दः पटो दग्ध इत्यादिषु दृश्यते, अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्द–निर्दिष्ट इति स एव प्राणदृष्ट्योपास्यः छन्दोग्ये प्रतिपत्तव्यः। वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथ–शब्द इति कृत्स्नो-

द्गीथस्य कर्त्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥ अन्यथात्वाधिकरणं समाप्तम् ॥

टी० "अवयवे चे"ति, पटो दग्ध इति, इदमुदाहरणं व्याकरणोक्तं पटैकदेशे दग्धेऽपि हि पटो दग्ध इति हि प्रयोगः । हेतुं संक्षिपन्विगमयति "अत" इति, परैस्तु पूर्वपक्षे विद्यै[1]क्यं वदद्भिरेव छान्दोग्येऽप्युद्गीथ-शब्देन कर्त्तृत्वं लक्ष्यमिति रूपभेदः परिहृतः, सिद्धान्ते च कर्त्तृपरत्वं लक्षणया निरस्तम् । भाष्ये तु वाजिभिरुक्तं कर्त्तृत्वं सौकर्याभिप्रायेणाचार्यैरङ्गमिति पूर्वपक्षे रूपैक्यमभिहितं तत्तु साधिष्ठं फलनिर्देशवदुपक्रमगतानेकोद्गीथ-शब्दस्य स्वारस्यापरित्यागात् परस्य ह्युद्गीथशब्दद्वयमस्वरसं तच्चोपक्रमस्यमुद्गीथस्य फलसाधनत्वनिर्देशास्वारस्यं च, अतो भाष्योक्तः पूर्वपक्षः उभयत्र उद्गीथसाधनः प्रबल प्रबलस्य पूर्वपक्षस्य निरासश्च सिद्धान्तदृढिम्ने स्यान्न तु मन्दस्य, तस्मिन्निरस्तेऽपि हि तत्रोक्तदोषराहित्यात्प्रबलः पूर्वपक्ष उदेतीति व्याप्तेश्च समञ्जसमिति सूत्रमधिकरणान्तरमाहुः, ओमित्येतदक्षरमुद्गीथमुपासीतेति वाक्यं विषयः अध्यासापवादैक्यविशेषणपक्षेष्वन्यतमनिर्द्धारणकारणाभावादनिर्धारणमिति पूर्वः पक्षः, त्रयाणामाद्यपक्षाणां सावद्यत्वाद्विशेषणपक्षस्य तदभावाच्च स एवोपादेय इति राद्धान्तः, अध्यासे अन्यतरबुद्ध्या नान्यतरबुद्धिनिवृत्तिः, तदानीम् ॐकारम् उद्गीथाध्यासविशिष्टम् उपासीतेति वाक्यस्यार्थः, अपवादे अन्यतरबुद्ध्या अन्यतरबुद्धिर्निवर्त्तेत इति भिदा, यथा सर्पं रज्जुं जानीयादित्युक्ते सर्पबुद्धिनिवृत्तिः ब्राह्मणो भूमिदेव इति वत् अनतिरिक्तार्थत्वमेकत्वम् विशेषणत्वम् नाम सामान्यरूपेण प्रतिपन्नस्यार्थस्य विशेषणावच्छिन्नतया समर्पणं यथा उत्पलस्य नीलिमेति विशेषणम् ॐकारश्च सर्ववेदव्यापी तस्य उद्गीथ-शब्देन विशेषणं नाम उद्गीथावयवभूतस्य तस्य तथात्वेन लक्षणया समर्पणम्, तत्राध्यासपक्षोऽनुपपन्नः लक्षणाप्रसङ्गात्, उद्गीथशब्दो हि ओंकारे लाक्षणिकः उद्गीथाध्यासविशिष्टताया उद्गीथशब्दार्थत्वाभावात्, एवम् ॐकारशब्दस्य

1 विद्याया ऐक्यमेवेदमिति पा० ।

उद्गीथे सार्वत्रिकः फलं च कल्प्यम् "आपयिता ह वै कामानामि"ति फलं चाप्त्यादि दृष्टिफलमिति न तत्र फलम् अपवादेऽपि फलाभावस्तुल्यः, न च मिथ्याज्ञाननिवृत्तिः फलम्, आत्मनि भ्रमनिवृत्तिवत् पुरुषार्थरूपत्वाभावात्, अशक्यश्चापवादः ओंकारोद्गीथबुद्ध्योरन्यतरस्यानिवृत्तेः, अनिवृत्तिश्च पूर्वमेतयोरन्योन्याध्यासाभावात्, रज्जुसर्पभ्रान्तिमत एव पुरुषस्य सर्पं रज्जुं जानीयादित्युक्ते सर्पधीनिवृत्तिः एकत्वपक्षोऽपि न युक्तः एकशब्देन विवक्षितार्थसिद्धौ शब्दान्तरवैयर्थ्यात् संदेहाद्यभावाच्च पिकः कोकिल इतिवत् न सप्रयोजनता । किञ्च उद्गीथ-शब्दः कृत्स्नद्वितीयभक्तिविषयत्वात् ओंकारातिरिक्तवृत्तिः ओंकारशब्देऽपि उद्गीथावयवव्यतिरिक्तप्रणवेऽपि वर्त्तमानत्वात् उद्गीथातिरिक्तवृत्तिरिति नैकत्वपक्षोऽपि न्याय्यः, अतः पारिशेष्यात्सार्वत्रिकमोङ्कारम् उद्गीथशब्दोऽवयवलक्षणया विशिनष्टीति युक्तं, न चाध्यासविशेषणपक्षयोर्लक्षणा तुल्या इति वाच्यम् अर्थान्तरे अर्थान्तरबुद्धिसमर्पणं विप्रकृष्टम् अवयविवाचकशब्देन अवयवसमर्पणं सन्निकृष्टमिति यथा पटादिशब्दानां पटाद्येकदेशसमर्पणमिति वैषम्यात्, अतो व्याप्तेः प्रणवस्य सार्वत्रिकत्वाद्धेतोः प्रणवस्य तद्विशेषणत्वं समञ्जसमिति भत्त्यवयवेोयः प्रणवः तम् उपासीतेति विशेषणत्वं युक्तमिति, एतत्सर्वम् अपरेषां योजनायामपि प्रायेण तुल्यम्, अत्र ब्रूमः व्याप्तेश्चेति च-शब्दस्वारस्यात् पूर्वाधिकरणशेषत्वं प्रतीयते तच्चापेक्षितं तदा कृत्स्नोद्गीथतदेकदेशविषयत्वलक्षणरूपभेदस्य अनेन सूत्रेण स्थापनासिद्धेः । किञ्च प्रणवस्योद्गीथ-शब्दविशेष्यतायां हेतुरोङ्कारशब्दस्योद्गीथावयवव्यतिरिक्तवृत्तित्वं व्याप्तिशब्दविवक्षितमिति इदमपि न साधीयः उत्पलातिरिक्तवृत्तित्वेऽपि नील-शब्दस्य विशेष्यसमर्पकत्वाप्रसिद्धेः, उत्पलविशेषणत्वं हि प्रसिद्धं ततश्चोत्पलस्य नीलविशेष्यत्ववदुद्गीथस्य प्रणवविशेष्यत्वमप्यविरुद्धं स्यात्, अत उत्तरविद्यास्वनुगम एव उद्गीथशब्दस्य प्रणवविषयत्वे समञ्जसो हेतुः । अतः सूत्रस्य यथोक्तार्थपरत्वं पूर्वाधिकरणशेषत्वं च युक्तम् । अन्येषामेकाधिकरणमेवाभिमतं योजनामात्रे वैषम्यम्

१ वाचकशब्देनेति पा० ।

अन्यथात्वं विद्याभेद इति व्याख्यातं तदयुक्तम् अन्यत्वमित्यनुक्तेः, शब्दभेदादिति पाठभेदं कृत्वा त्वच उद्गायस्व उद्गीथ उपासाञ्चक्रिरे इति प्रथमाद्द्वितीयाविभक्तिभेदादिति व्याख्यातं नाविशेषादिति विभक्तिभेदेऽप्यर्थाभेदादित्युक्तं तच्चायुक्तं, रूपभेदाद्विद्याभेदस्य शङ्कासूत्रविवक्षितत्वे सम्भवति विभक्तिभेदादिति शङ्काऽभावात्तद्विषयव्याख्यानस्य मन्दत्वात्, अर्थैकत्वेऽपि तमुपासीत स उपास्य इति विभक्तिभेदसम्भवस्य स्फुटत्वात्, उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधादिति विभक्तिभेदकृतशङ्कायाः पूर्वमेव परिहृतत्वाच्च अतो रूपभेदप्रतिपादकवाक्यादिति व्याख्यानमुचितं प्रकरणभेदात्—प्रकारभेदादिति पातोवास्वरसं प्रकरणशब्दरूढिभङ्गात् भेदशब्दाध्याहाराच्च । अन्यथात्वाधिकरणं समाप्तम् ॥

सर्वाभेदाधिकरणम् । **सू० सर्वाभेदादन्यत्रेमे ॥ १० ॥**

भा० छान्दोग्यवाजसनेयकयोः प्राणविद्याऽऽम्नायते, "यो ह वै ज्येष्ठं श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च"त्यादि, तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य वाक्चक्षुः श्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसंपत्त्वायतनत्वाख्यान् गुणान् प्रतिपाद्य वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्तसत्ताकार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य वागादिसम्बन्धितया एतान् वसिष्ठत्वादीन् गुणांश्च प्राणसम्बन्धितया प्रतिपादयति, एवं छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्यगुणकोवसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते, कौषीतकीनां तु प्राणविद्यायां तथैव श्रैष्ठ्यज्यैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः, न पुनर्वसिष्ठत्वादयो वागादि-

सम्बन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः, तत्र संशयः किमत्र विद्या भिद्यते? उत ने? ति किं युक्तं भिद्यते इति कुतः रूपभेदात् यद्यप्युभयत्र प्राण एव ज्यैष्ठ्यश्रैष्ठ्यगुणक उपास्यः प्रतीयते तथाऽप्येकत्र वशिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते ॥

टी० सू० सर्वाभेदादन्यत्रेमे ॥ १० ॥ पूर्वाधिकरणे दृष्टिविशेषणतया प्राणः प्रस्तुतःतद्विषयस्वतन्त्रोपासनं निरूप्यत इति सङ्गतिः,छान्दोग्ये इत्यादिना विषयः शोध्यते "प्रशस्यस्य श्र इति" प्रशस्य–शब्दस्य श्रादेशः श्रेष्ठं प्रशस्यत्वं "ज्य चे"ति सूत्रेण प्रशस्य शब्दस्य ज्यादेशः, वृद्धस्य चेति सूत्रेण वृद्ध–शब्दस्य ज्यादेशः, तस्मादत्र ज्येष्ठ प्रवृद्धत्व वसिष्टप्रतिष्ठासम्पत्त्यायतनशब्दैर्वाक्चक्षुः श्रोत्रमनसां यथाक्रमं तत्तत्कार्यजननसामर्थ्यानि विवक्षितानि किं कौषीतकीप्राणविद्या छान्दोग्यवाजसनेयकोक्तप्राणविद्यातो भिद्यते? न वे? ति किमुभयत्र वैक्यमुत ने? ति किमुभयत्र वसिष्ठत्वादिगुणकमुपासन? मुत कौषीतकीनां तद्विधुर? मिति यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीत्यनुवादाभावेऽपि वागादीनां प्राणाधीनत्वाभिधानं वसिष्टत्वादिप्राप्तिं प्राणस्यं गमयति ने? ति न चेत् कौषीतकीप्राणविद्यायां वसिष्ठत्वाद्यप्राप्तेरुपासनस्य अतद्विषयत्वात् तद्विषयत्वात[1]द्विषयत्वयोर्विद्याभेद,गमयति चेत् कौषीतकीनामपि वसिष्ठत्वादिप्राप्तेरुपासनस्य तद्विषयत्वेन रूपभेदाभावादैक्यमिति[1] ।

भू० इतरत्र तु तद्विधुर इत्युपास्यरूपभेदाद्विद्याभेद इति प्राप्ते ब्रूमः—सर्वाभेदादन्यत्रेमे, नात्र विद्याभेदः अन्यत्र कौषीतकीनां प्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणा उपास्याः सन्ति कुतः सर्वाभेदात् प्रतिज्ञातप्राणज्यैष्ठ्य-

१ तद्विषयातद्विषयोर्द्विधयोर्भेद इति पा० ।

श्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात्तथा हि छन्दोगवाजसनेयिनां प्राणविद्यायाम् "एता ह वै देवता अहंश्रेयसे व्यूदिरे अहंश्रेयसे विवदमाना" इति चोपक्रम्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यं चाविकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषां विस्रंसनमकार्यकरत्वं चाभिधाय सर्वेषां प्राणाधीनस्थितित्व–तदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्यमुपपादितम्, एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्व"मथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीत्यादिना वागादिभिरनूद्यते, कौषीतकीनां प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः । "अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठ" इत्यादिना वागादिगता गुणा वागादयश्च देहश्च प्राणाधीन इति प्राणस्य ज्यैष्ठ्यमुपपादितं वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न क्वतं नैतावता रूपभेदः वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात्, तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वं यद्वागादिवसिष्ठत्वादिहेतुत्वम्, गुणयोगित्वम्, अतोऽत्रापि वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठःप्रतिपन्न इति नास्ति विद्याभेदः, ॥ सर्वाभेदाधिकरणं समाप्तम् ॥

टी० इतरच्च तु विधुर इति स्वप्रकरणस्थगुणेन नैराकाङ्क्ष्यादिति भावः। व्यूदिर इति छान्दोग्यपाठः विवदमाना इति वाजिनां पाठः, व्यूदिरे–विवादं चक्रुः, यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति अहं यत्स्वकार्यकरणसमर्थोऽस्मि तस्य 'त्वधीनत्वात्तवैव तत्कार्यसामर्थ्यमित्यर्थः। परे तु वागादिगता गुणा वसिष्ठत्वादयः इमे वसिष्ठत्वादयो गुणा अन्यत्रापि भवन्ति सर्वशाखासु प्राणविज्ञानस्याभेदात्, अभेदश्च प्राणसंवादादिसारूप्यादिति व्याचक्षते, न च श्रुतहानिरश्रुतकल्पना वा स्वदेशे प्रसिद्धा देवदत्तगुणा देशान्तरेऽपि ह्यभियोगविशेषात् प्रसिद्धा भवन्तीति च परिहृतं तत्र विज्ञानस्याभेदः शाब्दश्चेत्तदुपपादकसारूप्यकथनं भिन्ने स्यात् अभेद–शब्देन सारूप्यविवक्षायां सर्वप्रकारसारूप्यं विवक्षितं चेद्विज्ञानसारूप्यं ज्ञेयसारूप्यनिबन्धनं, तत्सारूप्यं च न वसिष्ठत्वाद्यनन्वये सिध्यतीति हेत्वसिद्धिः स्यात्, अतस्तत्परिहारार्थमुपपादनप्रकारस्य सर्वस्याभेदादिति व्याख्यानं निराकाङ्क्षत्वान्निःसंशयत्वाच्चात्यन्तमुचितं देवदत्तगुणप्रसिद्धिदृष्टान्तश्चातिप्रसङ्गादनादृतः सर्वत्र प्राणविज्ञानस्य ज्यैष्ठ्यश्रैष्ठ्यगुणयुक्तस्य प्रत्यभिज्ञानादित्यपरे ततोऽप्युपपादनसारूप्यादित्युचितं तत्र वसिष्ठत्वादिप्राप्त्यावसाधारणहेतुत्वात्। न चैकं प्रतिशिष्यत इति नयादश्रुतत्वमकिञ्चित्करमिति चोक्तम्। अतः सर्वसाधारणत्वात् पादाद्याधिकरणाभिप्रेतकित्यत्रानुक्तिः। अन्ये तु फलभेदाद्विद्याभेद इति पूर्वपक्षं वर्णयन्ति "एकत्र हि ज्येष्ठश्च ह वै श्रेष्ठश्च भवती"ति श्रुतम्। अन्यत्र तु 'तयैवैनं विद्वान् सर्वेषां भूतानां प्राणमेव प्रत्यगात्मानममृतमभिसम्भूय सहैतैः सर्वैरस्माँल्लोकादुत्क्रामति स वायुप्रतिष्ठ आकाशात्मा स्वरेति स तद्भवति यत्रैतद्देवतास्तत् प्राप्य तदमृतो भवति यदमृता देवता" इति श्रुतम्। उभयत्र प्राणदेवतासु सायुज्यस्यैव प्रधानफलत्वाज्ज्यैष्ठ्यश्रैष्ठ्यगुणसम्बन्धस्य फलस्य प्रधानफलेऽन्तर्गतत्वाद्विद्यैक्यम्। अतो गुणा वसिष्ठत्वादय उपसंहार्या इति सिद्धान्तयन्ति, फलभेदाद्विद्याभेदवर्णनमेव युक्तम् न तु वसिष्ठत्वादिगुणानन्वयात्, गुणोपसंहारानुपसंहारौ हि भेदाभेदफलभूतौ न तु भेदाभेदोपपादकाविति, अत्र ब्रूमः यत्र स्वरेति स

तद्ब्रवीतीति स्वर्गाधिप्रतिस्त्वमुक्तं स राष्ट्रमभवदितिवत् स्वर्गाधिपत्यं श्रेष्ठ्यान्तर्गतम् । अमृतत्वं चिरकालस्थितिरूपतया ज्यैष्ठ्यान्तर्गतं, वृद्धतमत्वं हि ज्येष्ठ्यम्, इदं च आदरादलोपः उपस्थितेऽतस्तद्वचनादित्यत्र वक्ष्यमाणन्यायसिद्धं, तत्र हि जक्षणादीनां सत्यसंकल्पत्वरूपफलान्तर्भावो वक्ष्यत इति, तेन न्यायेन फलान्तर्भावसम्भवनेन फलभेदाप्रतीतेर्भाष्ये तदुपन्यासाभावः उपस्थितेऽत इति सूत्रस्य योजनान्तरं तु तत्रैव निरसिष्यते, अतः कृतकरत्वस्यावर्जनीयत्वादिह फलभेदावर्णनं तत्परिहारानुक्तिश्च । सर्वाभेदाधिकरणं समाप्तम् ॥ मध्ये सङ्गतिविशेषेण प्रस्तुतमधिकरणान्तरं व्याचिख्यासुः प्राणविद्याङ्गविषयनिरूपणस्य पश्चात् करिष्यमाणत्वमाह "प्राणविद्याङ्गे"ति, अनन्तराधिकरणसङ्गतिमाह "प्राणस्ये"ति, ।

सू० प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते, यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकीप्राणविद्यायां प्राप्तिस्तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते ते ब्रह्मविद्यासु सर्वास्वनुसन्धेया इत्ययमर्थः प्रतिपाद्यते—

आनन्दाद्यधिकरणम् । सू० आनन्दादयः प्रधानस्य ॥११॥

अथ ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति नेति विचार्यते, अप्रकरणाधीनानामुपसंहारे प्रमाणाभावात् प्रकरणश्रुतानामेवोपसंहार इत्येवं प्राप्ते ब्रूमः आनन्दादयः प्रधानस्य, अभेदादिति वर्त्तते, प्रधानस्य गुणिनो ब्रह्मणः सर्वेषूपासनेष्वभेदात् गुण्यपृथग्भावाद्गुणानां सर्वत्रानन्दादयस्तद्गुणा उपसंहर्त्तव्याः, एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत् प्रियशिरस्त्वादयोऽपि तस्य प्रि-

"ओरञ्" ॥ देवदारुभद्रदारुशब्दौ पीतद्रुवर्थानामित्यादिनाद्युदात्तौ, पीतद्रुः सरलो वनस्पतिः, पीतद्रुरर्थो येषां तेषामादिरुदात्तो भवतीत्यर्थः ॥

"अनुदात्तादेश्च" ॥ 'दाधित्थं कापित्थमिति'। दधनि तिष्ठतीति सुपि स्थः, उपपदसमासः, पृषोदरादित्वात्सकारस्य तकारः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्।

"पलाशादिभ्यो वा" ॥ 'उभयत्रविभाषेयमिति'। कथमित्याह। 'पलाशखदिरेत्यादि'। पलाशशब्दो घृतादित्वादन्तोदात्तः, खदिरशब्दोऽजिरशिशिरेत्यादौ किरच्प्रत्ययान्तो निपातितः, शिंशपाशब्दो द्वितीयं प्रागीषादिति वर्त्तमाने पान्तादीनां गुर्वादीनामिति मध्योदात्तः, स्पदि किञ्चिच्चलने, अनुदात्तेतश्च हलादेरिति युच्, किरतेरीरन् करीरं, कृहृभ्यामीषन्, शॄपॄभ्यां किच्च, शिरीषं, शेषे नित्स्वरेणाद्युदात्तावेतौ, विकङ्कतमूलासयवासशब्दा ग्रामादीनां चेत्याद्युदात्ताः ॥

"शम्याष्ट्लञ्" ॥ 'अञोपवाद इति'। शमीशब्दो गौरादिङीषन्तः, । 'शामीली स्रुगिति'। चातुर्मास्ये वरुणप्रघासेषु शमीमय्यः स्रुचो भवन्तीति श्रुतम् ॥

"मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" ॥ 'मौद्गः सूपः कार्पासमाच्छादनमिति'। उभयत्र बिल्वाद्यण्, विकारावयवयोरभक्ष्याच्छादनयोश्च यथासङ्ख्यं न भवति विकारावयवयोरसमासनिर्देशेन प्रत्येकमभिसम्बन्धात्। 'तद्विषयेपि यथा स्यादिति'। यद्येतयोरिति नोच्येत उत्तरैर्विशेषप्रत्ययैरञादिभिः सम्प्रधारणायां [illegible]स्वात्तएव स्युः, पूर्वेषां विशेषप्रत्ययानां मयडभावपक्षे सावकाशत्वान्मयट्पक्षे परत्वान्मयडेव लभ्यतइति प्राणिरजतादिभ्योऽञादय इत्युक्तम्, एतयोरिति वचनं पुनर्विधानार्थं सम्पद्यतइति परेषामपि विषये मयड्भवति ॥

"नित्यं वृद्धशरादिभ्यः" ॥ 'नित्यं मयट्प्रत्ययो भवतीति'। प्राग्दीव्यतीयानामपवादः, अणं तु कोपधलक्षणमञेव परत्वाद्बाधते। 'शा-

कमयमाम्रमयमिति'। आम्रशब्दो ऽमितम्योर्दीर्घश्चेति रन्प्रत्ययान्तः। 'तदनेन क्रियतइति'। नित्यंशब्दोऽतिरिच्यमानः पूर्वाचार्यपठितस्य वाक्यस्य स्मारक इति, एवं च मृच्छब्दस्य शरादिषु पाठोऽप्येवं प्रपञ्चार्थो द्रष्टव्यः ॥

"गोश्च पुरीषे" ॥ 'गव्यं पय इति'। कथं पुनरत्र प्रसङ्गो यावता विकारावयवयोरिति वर्त्तते पयश्च न विकारो नावयवस्तत्राह। 'पुरीषं न विकार इत्यादि'। अक्रियमाणे पुरीषग्रहणे इष्टसिद्ध्यर्थमेव तस्येदमित्यधिकारे गोर्मयडिति सूत्रं कर्त्तव्यं ततश्चात्रापि प्रसङ्ग इत्यर्थः ॥

"पिष्टाच्च" ॥ 'पिष्टमयं भस्मेति' ॥ पैष्टी सुरेति तु सामान्यविवक्षायां तस्येदमित्यण्, प्रदीयतां दाशरथाय मैथिलीतिवत् ॥

"असंज्ञायां तिलयवाभ्याम्" ॥ 'यावक इति'। यवशब्दाद्विकारेण्, तदन्ताद्यावादिभ्य इति स्वार्थे कन् ॥

"नोत्वद्वर्ध्रबिल्वात्" ॥ 'मौञ्जमिति'। मुञ्जशब्दात्तृणधान्यानां च द्व्यषामित्याद्युदात्तत्वादौत्सर्गिकोण्। 'गार्मुतमिति'। गर्मुच्छब्दः मृग्योरुतिः, ग्रोर्मुट् चेत्युतिप्रत्ययान्तत्वादन्तोदात्त इत्यनुदात्तादेश्चेत्यञ्, कथं तर्हि तस्मादेतं गार्मुतं चरुं निर्वपेदित्यन्तोदात्तत्वं, सर्वविधीनां छन्दसि विकल्पितत्वादण् भविष्यति। 'वार्ध्रीति'। वर्ध्रशब्दो लघावन्तइत्याद्युदात्तस्तस्मादण्, टिड्ढाणञिति ङीप्। 'मतुम्बिल्वश्च इत्यादि'। असति तस्मिन्वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिः स्यात्। 'वैणवीति'। बिल्वाद्यण् ॥

"तालादिभ्योण्" ॥ 'मयडादीनामपवाद इति'। आदिशब्देनाञो ग्रहणं, बहुवचनं तु तयोरेव प्रकृतिभेदेन बहुत्वात्, तत्र तालश्यामाकाभ्यां मृद्दुत्वान्मयट् प्राप्तः, बर्हिणस्य विकारो बार्हिणं, प्राणिरजतादिभ्योञ्, तस्माद् ञितश्च तत्प्रत्ययादित्यञ् प्राप्तः, शेषेभ्योनुदात्तादिलक्षणस्य। लिशिवृशिभ्यामिन्द्रशब्दउपपदे मूलविभुजादित्वात्कः, अन्येषामपि दृश्यतइति दीर्घत्वं, चप् सान्त्वने, पचाद्यच्, पीयूक्षाशब्दो लघावन्तइति मध्योदात्तः, तत्र हि फिष इत्यधिकारात्प्रागेव टापः स्वरप्रवृत्तिः,

इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । 'तालाद्धनुषीति' । अन्यत्र तालमयमित्येव भवति । अण्ग्रहणं बाधकबाधनार्थम्, अन्यथा यथाविहितमित्युच्यमाने बार्हणशब्दाद्वृद्धलक्षणो मयट् स्यात्, वचनं तु ञितश्च तत्प्रत्ययादित्यञो बाधनार्थं स्यात् ॥

"जातरूपेभ्यः परिमाणे" ॥ 'मयडादीनामपवाद इति' । आदिशब्देनाञो ग्रहणं, बहुवचनं तु पूर्ववत्, तत्र वृद्धेभ्यो हाटकादिभ्यो मयटोपवादः, तपनीयादिभ्योनुदात्तादिभ्योञः ॥

"प्राणिरजतादिभ्योञ्" ॥ 'अणादीनामिति' । आदिशब्देन मयड् गृह्यते, बहुवचनं तु पूर्ववत्, तत्राद्युदात्तेभ्यः प्राणिशब्देभ्योणोपवादो वृद्धेभ्यो मयटः, रजतादिष्वपि यदाद्युदात्तं तस्मादणोपवादः, अनुदात्तादेस्तु मयटः । 'कापोतं मायूरं तैत्तिरमिति' । तित्तिरिशब्दस्तरतेः सन्वच्चाभ्यासस्येति किप्रत्ययान्तोन्तोदात्तः, शेषौ लघावन्तइति मध्योदात्तौ । परिशिष्टमिहोदाहरणमिति चोक्तं, तस्माच्छुकबकगृध्रादय इहोदाहार्याः । शुकबकशब्दौ प्राणिनां कुपूर्वाणामित्याद्युदात्तौ, गृध्रशब्दोरन्प्रत्ययान्त आद्युदात्तः, कथं तर्हि कापोतमित्याद्युदाहृतं, सत्युदात्तार्थे प्राणिग्रहणेनुदात्तादेरपि प्राणिनः परत्वादनेनैवाञ् भवितुमर्हतीति मन्यते, आह चानुदात्तादेरञः प्राण्यञ्विप्रतिषेधेनेति, कः पुनरत्र विशेषस्तेन वा सत्यनेन वा, सापवादकः स विधिर्मयटा परेण बाध्यते, अयं पुनर्निरपवादो ऽनेनैव हि परत्वान्मयड् बाध्यते, किं सिद्धं भवति, श्वाविधो विकारः शौवाविध इति सिद्धं भवति, कथं सिद्धं भवति, श्वानं विध्यतीति क्विप्, नहिवृतीति दीर्घः, ग्रहिज्यादिसम्प्रसारणं, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वादनुदात्तादिः, तत्रानुदात्तलक्षणस्याञो बाधकं मयटं परत्वादयमञ् बाधते, द्वारादित्वाद्वृद्धिप्रतिषेध ऐजागमश्च ॥

"ञितश्च तत्प्रत्ययात्" ॥ तयोर्वाचकत्वेन यः सम्बन्धी प्रत्ययः स तत्प्रत्ययः, षष्ठीसमासः । 'विकारावयवयोरेवेति' । यदि तु ञित्प्रत्ययान्तः प्राण्योषधिवृक्षवाची सम्भवति ततोवयवेपि भवति, द्वयोः प्रकृतत्वात्, लक्ष्यमनपेक्ष्यैवमुक्तम् । ननु च पूर्वं पञ्चालाः, पटो दाध

इत्यवयवे समुदायशब्दो दृष्टः, विकारे च प्रकृतिशब्दः शालीन्भुङ्क्ते मुद्गैरिति, शालिविकारान्मुद्गविकारैरित्यर्थः, ततश्च देवदार्वोद्यवयवविकारवृत्तेर्देवदार्वादिशब्दात्तद्विकारावयवयोस्तेनतेनाञादयो भविष्यन्ति नार्थोऽनेनेत्याशङ्क्याह । 'मयटोपवाद इति'। सत्यमस्ति यथाकथंचिदिष्टसिद्धिस्तथापि वृद्धलक्षणो मयण्माभूदित्येवमर्थमेवाञ्विधेयः, अन्यथा येनैव हेतुनैतद्वाक्यं भवति दैवदारवस्य विकारः शामलस्य विकारस्तेनैव मयडपि स्यात्, विकार्यात्तेनैव हेतुना मयडपि प्राप्नोति, अनभिधानान्न भविष्यति, तदेव तर्ह्यनभिधानं विधानेन प्रतिपाद्यते, यद्येवं तस्य विकारः, उष्ट्राद्वुञ्, औष्ट्रकश्चर्म, तस्य विकार औष्ट्रिकोपानदिति, टिड्ढाणञिति ङीप्प्राप्नोति, न चेष्यते, एवं हि सौनागाः पठन्ति वुञश्चाञ इतः प्रसङ्ग इति, तस्मादवयवे समुदायशब्दो विकारे च प्रकृतिशब्द इति तेनतेन लक्षणेनाञादयो भविष्यन्ति, अनभिधानात्तु विकारावयवप्रत्ययान्ताच्च मयड्भविष्यतीत्येतदेव साम्प्रतम् । 'बैल्वमयमिति' । ञितो यत्नेन मयटं सूत्रकारो निवर्त्तयन् अन्यतो वष्टि मयटमिति वृत्तिकृतो मतम् । भाष्यवार्त्तिककारौ पुनराहतुस्तच्चानभिधानमाश्रयितव्यम्, अभिधाने ह्यन्यतोऽपि मयटः प्रसङ्गो बैल्वस्य विकार इति ॥

"क्रीतवत्परिमाणात्" ॥ चरणेभ्यो धर्मवदित्यनेन तुल्यमेतत् । 'सङ्ख्या च परिमाणग्रहणेन गृह्यतइति' । चकारादुन्मानं च, परिमीयतेऽनेनेति परिमाणमिति यौगिकः परिमाणशब्द इत्यर्थः । तदाह । 'न रूढिपरिमाणमेवेति' । 'नैष्किक इति' । असमासे निष्कादिभ्य इति ठक् । 'शत्यः शतिक इति' । शताच्च ठन्यतावशते । 'साहस्रमिति' । शतमानविंशतिकसहस्रवसनादण् । 'वतिः सर्वसादृश्यार्थ इति' । किमेवं सति सिद्धं भवति तदाह । 'अध्यर्द्धपूर्वेत्यादि' । आदिशब्देन प्रकृतिप्रत्यययोः प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकीति तदन्तविधेश्च परिग्रहः । एतदुक्तं भवति, याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन तएव प्रत्यया विकारे भवन्ति । 'द्विसाहस्रमिति' । पक्षे लुक्, सङ्ख्यायाः संवत्सरसङ्ख्यस्य चेत्युत्तरपदवृद्धिः ।

'द्वैनैष्किकमिति'। प्राग्वतीयस्य ठञो द्वित्रिपूर्वान्निष्कादिति पक्षे लुक्, परिमाणान्तस्येत्युत्तरपदवृद्धिः ॥

"उमोर्णयोर्वा" ॥ उमाशब्दस्तृणधान्यानां वेत्याद्युदात्तः, ऊर्णाशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां वुञभावे यथाक्रममणञौ ॥

"एण्या ढञ्" ॥ स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह । 'पुंसस्त्वञेव भवतीति' ॥

"गोपयसोर्यत्" ॥ 'मयड्विषये त्विति'। मयड्वैतयोरिति विहितस्य मयटो विषये ॥

"द्रोश्च" ॥ 'अञोपवाद इति'। ओरञित्यस्य, सूत्रप्राप्त्यभिप्रायं चैतत् । एकाचो नित्यं मयटमिच्छन्तीति मयट् त्वस्मात्प्राप्नोति । 'द्रव्यमिति'। गुणैः संद्रूयते प्राप्यतइति गुणसंद्रावः ॥

"माने वयः" ॥ मीयते येन तन्मानं प्रस्थादि ॥

"फले लुक्" ॥ 'तद्विशेष इति'। विकारावयवविशेषे, उदाहरणेषु आमलकीशब्दाद्वृद्धान्मयटो लुक्, इतरयोर्गौरादित्वान्ङीष्, ताभ्यामनुदात्तादिलक्षणस्याञः, सर्वत्र लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक्, ननु च न फलं वृक्षस्य विकारः, स हि द्विविधो भवति यो वा प्रकृतिमुपमृद्नाति खादिरं भस्मेति, यो वा प्रकृतेर्व्यपदेशान्तरं करोति खादिरः स्रुव इति, फलं तु नैवं विधमिति वृक्षे स्थितमपि काकादिवच्च तस्य विकारो नाप्यवयवोनारम्भकत्वात्, उत्पन्ने हि वृक्षे पश्चात्फलमुपजायते तत्कथं विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुग्विधीयतइत्याह । 'फलितस्येति'। फलशब्दस्तारकादिः, प्रकृतेरवस्थान्तरं विकार इत्युक्तम्, अफलितावस्थायाश्च फलिताऽवस्थान्तरं भवत्येव, तत्र वृक्षत्वं तूभयत्रानुवर्तते, सर्वत्र चोत्तरावस्था विकारः, सर्वश्चावयवः स्वोत्पत्तेः प्राङ्नोपस्थितो नास्यारम्भकः, यथा शृङ्गदन्तादिरथ च गवादेरवयवो भवति तदेतत्फलेपि समानं, पल्लवशब्दोर्द्धर्चादिः, फले लुग्विधानमनर्थकं प्रकृत्यन्तरत्वात्, आमलकादिशब्दः फले वर्तते न यौगिक आमलक्याः फलमिति, यथा नामलकयोगाद्वृक्षे आमलकशब्दः, आमलकफलस्येयमामलकीति, यथाङ्गादि

शब्दः क्षत्रिये जनपदे च, प्रत्ययनिवृत्त्यर्थं तु यथैतद्वाक्यं भवति आमलक्या विकारः कुवल्या विकार इति तथा प्रत्ययेनापि स्यात् ॥

"प्लक्षादिभ्योऽण्" ॥ 'अञोऽपवाद इति'। शिग्रुकर्कन्धुशब्दाभ्यामुवर्णान्तलक्षणस्य, शेषेभ्यस्त्वनुदात्तलक्षणस्य, तत्र प्लक्षशब्दः फिषित्यन्तोदात्तः, फिषिति प्रातिपदिकस्य नाम, न्यग्रोधशब्दो लघावन्त इति मध्योदात्तः, अश्वत्थशब्दो घृतादित्वादन्तोदात्तः, इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । 'विधानसामर्थ्यादिति' । यद्यस्य लुक् स्याद्विधानमनर्थकं स्यात्, नह्यणोऽञो वा लुकि कृते कश्चिद्विशेषः । 'नैयग्रोधमिति' । न्यग्रोधस्य च केवलस्येत्यैजागमः ॥

"जम्ब्वा वा" अञस्तु भवत्येव, नह्यञो विधानसामर्थ्यं फलादन्यत्र श्रवणात् । 'जम्बूनीति' । फलस्याभिधेयत्वान्नपुंसकह्रस्वे जश्शसोः शिः, नुम्, सर्वनामस्थाने चेति दीर्घः ॥

"लुप् च" ॥ 'युक्तवद्भावे विशेष इति' । लुपि हि सति लुपि युक्तवद्व्यक्तिवचने इति प्रकृत्यर्थगते लिङ्गवचने भवतः, लुकि त्वभिधेयवल्लिङ्गवचने स्याताम् । 'फलपाकशुषामिति' । फलपाकेन शुष्यन्तीति फलपाकशुषः । 'व्रीहयो मुद्गा इति' । विल्वाद्यणो लुक्, यवमाषतिलशब्दास्तृणधान्यानां च द्व्यषामित्याद्युदात्तास्तेभ्य औत्सर्गिकस्याणो लुक्, मल्लिकाशब्दो मादीनामिति मध्योदात्तः, अस्यार्थः । अत्र द्वितीयः प्रागीषादिति त्र्यषामिति वर्त्तते, मकारादीनां त्र्यषां द्वितीयमक्षरमुदात्तं भवति, नवमालिकाशब्दो लघावन्त इति मध्योदात्तो जातिशब्दः, विदारीबृहतीशब्दौ गौरादिङीषन्तौ, अंशुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ततो मतुप्, ह्रस्वनुड्भ्यां मतुबिति मतुबाद्युदात्तः, ङीबनुदात्तः, तदेवमंशुमतीशब्दे मतुबकार उदात्तः । 'पाटलानीति' । बिल्वादित्वादण्, साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'क्वचिदन्यदपि भवतीति' । लुपोऽन्यदपि क्वचित्कार्यं भवति, तत्पुनर्लुग्लुपोरभावश्च, कदम्बमित्यादावनुदात्तादिलक्षणस्याञो लुक्, कदम्बादयः शब्दा लघावन्त इति मध्योदात्ताः । 'बैल्वानीति' । अत्रोभयाभावः, बिल्वाद्यण् ॥

"हरीतक्यादिभ्यश्च"॥ हरीतक्यादिषु द्राक्षाप्रभृतिभ्यो मयटो लुप्, उदात्तादिभ्योऽणः, अनुदात्तादिभ्योऽञः॥

"कंसीयपरशव्ययोर्यञञौ लुक् च"॥ 'प्राक् क्रीताच्छेन कंसीय इति'। प्राक् क्रीताच्छ इत्यधिकारे तस्मै हितमिति च्छप्रत्ययेन कंसीयशब्दो व्युत्पाद्यत इत्यर्थः। एतेनोगवादिभ्यो यता परशव्यशब्द इति व्याख्यातम्। 'तत्सन्नियोगेन कंसीयपरशव्ययोर्लुग्भवतीति'। प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्तदवयवयोः प्रत्यययोर्लुग्भवतीत्यर्थः। अथ वृतृहनिकमिकमिभ्यः स इति सः, कंसशब्दे सप्रत्ययो, यश्च परान् शृणोतीति परशुः, आङ्परयोः खनिशॄभ्यां डिच्चेति कुप्रत्ययस्तयोर्लुक्कस्मान्न भवति, तत्राह। 'प्रातिपदिकाधिकारादिति'। प्रातिपदिकाधिकारे हि ततः परयोश्छयतोर्लुग्भवति न धातुप्रत्ययस्य, आह, ङ्याप्प्रातिपदिकग्रहणमङ्गपदसंज्ञार्थं यच्छयोश्च लुगर्थमिति, ननु चातः कृकमिकंसेत्यत्र कंसग्रहणं लिङ्गं नावश्यमुणादिषु व्युत्पत्तिकार्यं भवतीति, तेनोकारसकारयोर्लुग्न भविष्यति, सत्यं, वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थमवश्यकर्तव्यस्य ङ्याप्प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम्, अत एव च ङ्याप्प्रातिपदिकादित्यत्र नेदं वृत्तिकृता दर्शितम्॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य तृतीयश्चरणः॥

"प्राग्वहतेष्ठक्"॥ 'तद्वहेति'। वाक्यादेतत्प्रत्ययविधानमिति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवत्यप्रातिपदिकत्वात्, तेन तदिति कर्ममात्रं निर्दिश्यते न तु द्वितीयासमर्थविभक्तिः। 'माशब्द इत्याहेति'। शब्दो माकारीत्याहेत्यर्थः। संसर्गरूपस्य वाक्यार्थस्येति करणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं संभवति नान्यथेति मत्वैष विग्रहः। 'वाक्यादेतत्प्रत्ययविधानमिति'। एतच्चाहौ प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु किं पृथग्वचनेन। 'आहाविति'। आहेति पदे प्रकृतिभागस्यागन्तुकेनेकारेणेदम

नुकरणं, तत्र शब्दे कार्यस्यासम्भवादर्थेप्रत्ययविधिः। 'क्रियाविशेषणा- विति'। तदन्ताभिधायिन इत्यर्थः। 'पृच्छताविति'। तिङन्तानुकर- णमेतत्। एवं गच्छताविति, तिङन्तार्थे तु प्रत्ययः। 'सुस्नातं पृच्छ- तीति'। सुस्नातं भवता सुस्नातो भवानित्येवं वा पृच्छतीत्यर्थः। 'सौख- रात्रिक इति'। सुखरात्रिं पृच्छति, एवं यः पृच्छति स एवमुच्यते, एतेन सौखशायनिको व्याख्यातः, अनुशतिकादित्वादुभयपदवृद्धिः। 'गौरुतल्पिक इति'। तल्पशब्देन भार्या लक्ष्यते॥

"तेन दीव्यति खनति जयति जितम्"॥ 'सर्वत्र करणे तृतीयेति'। दीव्यत्यादावभिहितत्वात्कर्त्तरि तृतीया नोपपद्यतइति तत्साहचर्याज्जितमित्यनेनापि योगे करणएव तृतीयेति सर्वशब्दार्थः, तेन देवदत्तेन जितमित्यत्र न भवति, हेतुतृतीया तु नाशङ्किता, ऽनभिधानात्, नहि हेतुतृतीयान्तादुत्पद्यमानेन ठका विग्रहवाक्यार्थ- स्याभिधानमस्ति। 'प्रत्ययार्थइति'। निर्द्धारणएषा सप्तमी, सामान्या- पेक्षमेकवचनम्, इह दीव्यत्यादौ तिपो बहवोऽर्थाः, एकत्वसङ्ख्या वर्त्तमानकाले-युष्मदस्मद्व्यतिरेक इति, तेषु मध्यइत्यर्थः। तदेव दर्शितं। 'सङ्ख्याकालयोरविवक्षेति'। नान्तरीयकत्वात्, अवश्यं हि यया कया चित्सङ्ख्यया येन केन चित्कालेन निर्देशइति तयोरुपादानं न तु तयोर्विवक्षा, तत आक्षिकौ आक्षिका इति द्विबह्वोरपि भवति, अक्षैरदीव्यदित्यादौ कालान्तरे चाक्षिक इति भवति, न्यायस्य तुल्यत्वा- त्पुरुषस्याप्यविवक्षा, तेनाक्षिकस्त्वमाक्षिकोऽहमित्यत्रापि भवति, यद्येवं तर्हि सङ्ख्याकालपुरुषाणामविवक्षा तथा कर्त्तुरपि प्राप्नोति, एकप्रत्यय- वाच्यत्वात्, नैष दोषः कर्त्तुरविवक्षायामाख्यातोपादानमकिंचित्करं स्यात्, विपर्ययस्तु न भवति कर्त्तुरविवक्षा कालादीनां विवक्षेति, कर्त्तुः प्रधा- नत्वात्, सङ्ख्यादिविशिष्टो हि कर्त्ताऽऽख्यातानां प्रधानभूतोऽर्थस्तेन स तावद्विवक्ष्यते, इतरेषां नान्तरीयकत्वादविवक्षा, किं च साधन- स्याप्यविवक्षायां जितमित्यस्योपादानमनर्थं स्यात्, इहाख्यातेषु क्रिया प्रधानभूता गुणभूतः कर्त्ता, अत एव किं करोति देवदत्त इति

क्रियाप्रश्ने पचतीत्याख्यातेनोत्तरं दीयते, न तु कृदन्तेन पाचक इति, तस्य सत्त्वप्रधानत्वात्, किं च यदि कृदन्तेष्विवाख्यातेष्वपि कर्ता प्रधानभूतः स्यात् यथा पाचकस्यापत्यमित्यपत्यादिभिर्योगो भवति तथाऽऽख्यातवाच्यस्यापि स्यात् पचत्ययमिति, क्रियावेशः स्यात् यथा पाचकस्तिष्ठतीति, तस्मात्क्रियाप्रधानमाख्यातं ततश्च तदर्थे विधीयमानः प्रत्ययोऽपि क्रियाप्रधानः स्यादिति तदन्तस्यापत्यादिभिर्योगः क्रियावेशश्च न स्यात्, आक्षिकस्यापत्यमाक्षिकं पश्येति, तत्राह । 'क्रियाप्रधानत्वेऽपि चाख्यातस्येति' । आख्यायतेऽनेन क्रिया प्रधानभूतेत्याख्यातस्तिङन्तः, कृत्यल्युटो बहुलमिति करणे क्तः, स्वनिकायप्रसिद्धिरेषा । 'स्वभावादिति' । यथा तेनैकदिक्,तसिश्चेत्येतस्मिन्नर्थे विधीयमानयोरणतसोरसत्त्वभूतार्थाभिधायित्वं, विपर्ययश्च, सौदामनी विद्युत्सुदामतो विद्युदिति, तथात्रापि, नहि स्वभावः पर्यनुयोगमर्हति ॥

"संस्कृतम्" ॥ 'योगविभाग उत्तरार्थ इति' । उत्तरोपवादः संस्कृतएव यथा स्यात् ॥

"कुलत्थकोपधादण्" ॥ कुले तिष्ठति कुलत्थः, अस्मादेव निपातनात्सकारस्य तकारः, के चित्पुनः सकारमेवाधीयते ॥

"नौद्व्यचष्ठन्" ॥ इह ठगधिकारे सूत्रे क्व चित्प्रत्ययस्यानुबन्धो ह्रीषर्थः किं सांहितिकः, किं वानुबन्ध इति तत्र सन्देहे विषयपरिगणनं करिष्यन्श्लोकवार्त्तिककारः सर्वानेव षितः परिगणयति । 'आकर्षादिति' । यदि तु यत्र सन्देहस्तानेवोपादायैतावन्तष्ठगधिकारे षित इत्युच्येत तदा आकर्षादिषु प्रत्ययस्याषित्त्वमनार्षमाशङ्क्येत । 'कुसीदसूत्रादिति' । कुसीदादिकं सूत्रं यस्य तत्कुसीदसूत्रं कुसीदशब्दस्य, दशैकादशशब्दस्य, ननु सप्तैते भवन्ति, कुसीदादिसूत्रेण द्वयोः षितोर्विधानादित्यत आह । 'विधिवाक्यापेक्षं च सप्तत्वमिति' । सप्तानां प्रत्ययानां विधिवाक्यापेक्षमौपचारिकं सप्तत्वमाश्रित्य षितः सप्तैतइत्युक्तम् ॥

"आकर्षात् ष्ठल्" ॥ 'आकर्षेति'। पुंसि सञ्ज्ञायां घः प्रायेणेति अधिकरणे घः ॥

"पर्पादिभ्यः ष्ठन्" ॥ पर्पादिषु पादः पदिति पठ्यते, पादाभ्यां चरति पदिकः पठ्यत्यतदर्थेइत्यत्र वक्ष्यति पैद्भाव इके चरतावुपसङ्ख्यानमिति, सोऽस्यैव प्रपञ्चार्थः ॥

"श्वगणाट्ठञ् च" ॥ 'श्वागणिकइति'। ननु च श्वशब्दो द्वारादिषु पठ्यते तदादिविधिश्च तत्रेष्यते तत्कथं श्वागणिक इति, तत्राह। 'श्वादेरिञीत्यत्रेति' ॥

"वेतनादिभ्यो जीवति" ॥ 'धनुर्दण्डग्रहणं सङ्घातविगृहीतार्थमिति'। तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् ।

वस्नक्रयविक्रयाट्ठन्" ॥ वसेर्वस्नं मूल्यम् । 'क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थमिति'। उक्तोऽत्र हेतुः । क्रयविक्रयेणेति समाहारद्वन्द्वः ॥

"आयुधाच्छ च" ॥ आयुध्यतेऽनेनेत्यायुधं घञर्थे कविधानमिति कप्रत्ययः ॥

"हरत्युत्सङ्गादिभ्यः" ॥ हरति नयत्युपादत्ते वा ॥

"भस्त्रादिभ्यः ष्ठन्" ॥ भस्त्रं चर्मविकारः, येन लोहादि ध्मायते येन वा धान्यादिकं नीयते, हूयामाश्रुभसिभ्यस्त्रन्निति करणे त्रन् । शीर्षभारः शीर्षभारइति पठ्यते, निपातनाच्छीर्षभावः सप्तमीसमासश्च, तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् ॥

"विभाषा विवधवीवधात्" ॥ 'पर्याहारं चेति'। परित आह्रियतेऽनेन तण्डुलादिकोऽर्थ इति पर्याहारः, उभयतो बद्धशिक्यांसवाह्यः काष्ठविशेष उच्यते, वीवधशब्दो वार्तिके दर्शनात्सूत्रे प्रक्षिप्तः ॥

"अण् कुटिलिकायाः" ॥ कुटिलव्याधानामुपरमणं कुटिलिका, सञ्ज्ञायां कन् ॥

"त्रेर्मम्नित्यम्" ॥ 'ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यतइति'। सङ्ख्यावचनस्त्वनभिधानान्न गृह्यते । 'उप्त्रिममिति' । वच्यादिसूत्रेण

संप्रसारणम् । 'नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति' । प्रत्ययरहितस्य त्र्यन्तस्य प्रयोगः स्वातन्त्र्यं, स्वातन्त्र्यनिवृत्तौ सत्यां यो गुणस्तं दर्शयति । 'त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवतीति' । एवकारव्यवच्छेद्यं दर्शयति । 'विषयान्तरे न प्रयोक्तव्यमिति' । ननु विभाषया वाक्ये प्रसक्ते नित्यग्रहणं क्रियमाणं निर्वृत्ताधिकारे तद्विषयमेव वाक्यं निवर्त्तयितुमर्हति पक्त्रिणा निर्वृत्तमिति, यथा अन उपधालोपिनोन्यतरस्यां, नित्यं सञ्ज्ञाच्छन्दसो-रिति, ततश्च विषयान्तरगतत्र्यन्तस्य स्वातन्त्र्यं स्यादेव क्त्रिमर्हत्सुवि-हितमिति, एवं मन्यते, योगविभागोत्र कर्त्तव्यः, त्रेमब् भवति, निर्वृत्त-इत्येको योगः, ततो नित्यम्, अत्र त्रेमबित्येवापेक्ष्यते न निर्वृत्तइति, योग-विभागसामर्थ्यात्, तेन सर्वविषयस्वातन्त्र्यस्य नित्यग्रहणेन निवृत्तिः क्रियतइति । नन्वेवमपि नित्यमित्यत्र निर्वृत्तमित्यस्यानपेक्षणात्स्वात-न्त्र्यान्तरे नित्यमुपाधिः प्राप्नोति, सत्यम्, अनभिधानात्तु तथानाश्रीयते, 'भावप्रत्ययान्तादिमब् वक्तव्यइति' । तेन निर्वृत्तमित्येतस्मिन्नर्थे । 'पाकेन निर्वृत्तं पाकिममिति' । एवं च त्र्यन्तादपि भावाभिधायिनइमपिक्त्रते यस्येति लोपे च क्त्रिममित्यादिसिद्धं भवति, स्वरेपि नास्ति विशेषः, उदात्तनिवृत्तिस्वरेणैवोदात्तत्वं, सूत्रारम्भस्तु नित्यग्रहणेन स्वातन्त्र्यं निव-र्त्तयिष्यामीत्येवमर्थोवेदितव्यः ॥

"अपमित्ययाचिताभ्यां कक्कनौ" ॥ 'अपमित्येति' । उदीचां माङो व्यतिहारइति क्त्वाप्रत्यये ऽपशब्देन समासे क्त्वो ल्यप्, मयतेरिदन्य-तरस्यामितीत्वं, क्त्वातोसुन्कसुन इत्यव्ययसञ्ज्ञा, तेन नात्र तृतीयासम-र्थात्प्रत्ययः ॥

"संसृष्टे" ॥ ननु यद्येन संसृष्टं तत्तेन संस्कृतं भवति, ततश्च संस्कृतमित्येव संसृष्टेपि प्रत्ययः सिद्धः, न सिध्यति, सत उत्कर्षाधानं संस्कारः, एकीभावस्तु संसर्गः, न च यत्रासौ तत्रावश्यमुत्कर्षोस्ति, अशु-चिद्रव्यसंसर्गे हि प्रत्युतापकर्ष एव भवति, तस्मात्संसृष्टइति वक्तव्यं, यद्यस्य निबन्धनमस्त्येतदेवास्तु माभूत्संस्कृतमित्येतत्, तदवश्यं कर्त्त-व्यम्, इहापि यथा स्यात् विद्यया संस्कृतो वैद्यक इति, नह्यत्र संसर्गोस्ति

मूर्त्तिधर्मत्वात्, किं च कुलत्थकोपधादण् संस्कृतएव यथा स्यात्संसृष्टे मा भूदित्येवमर्थं संस्कृतमित्येतद्ब्रवीति वक्तव्यम् ॥

"चूर्णादिनिः" ॥ चूर्णेन ये संसृष्टास्तेषां चूर्णमस्तीति मत्वर्थीयेनैवेनिना सिद्धं, सत्यं, तद्रूपविवक्षायां सिद्धं, संसर्गविवक्षायां तु ठक् प्राप्नोति, अनभिधानं तु दुर्ज्ञानम् ॥

"लवणाल्लुक्" ॥ 'लवणद्रव्यवाचीत्यादि'। लवणशब्दोयमस्त्येव गुणवचनः षण्णां रसानामन्यतमस्य वाचकः, अस्ति च द्रव्यवचनो यः सैन्धवादिषु वर्त्तते, तत्र यो गुणवचनः स न लुकं प्रयोजयति मधुरादिशब्दवदभेदोपचारादेव द्रव्ये वृत्तिसिद्धेः, द्रव्यशब्दस्तु सोयमित्यभिसम्बन्धाद् द्रव्ये वर्त्तमानः, यद्यपि प्रष्ठी प्रचरी यष्टीः प्रवेशयेत्यादौ द्रव्यशब्दस्यापि क्वचिदभेदोपचारो दृष्टस्तथापि भेदविवक्षायां तत्स्योपि दृश्यते प्रष्ठस्येयं प्राष्ठी यष्टिमतः पुरुषानिति । तस्माद् द्रव्यवाच्येव लवणशब्दो लुकं प्रयोजयति, स च प्रयोजयत्येव ॥

"व्यञ्जनैरुपसिक्ते" ॥ ओदनादिषु रसो येन व्यज्यते तद्व्यञ्जनं, बहुवचननिर्द्देशः स्वरूपविधिनिरासार्थः, उपसिक्तः सेचनेन मृदूकृतः, इह यद्येनोपसिक्तं तत्तेन संसृष्टं भवति तत्र संसृष्टइत्येव सिद्धं नियमार्थं वचनं, व्यञ्जनेभ्य उपसिक्तएव संसृष्टे यथा स्यात्संसृष्टमात्रे माभूत्, दध्ना संसृष्टा स्थालीति ॥

"तत्प्रत्यनुपूर्वमीपलोमकूलम्" ॥ 'क्रियाविशेषणमित्यादि' । आख्यातं हि धात्वर्थस्य कर्त्तव्यतामाचष्टे वर्त्तते वर्त्तनं करोति, सुप्यते स्वापः क्रियते, शोभनमोदनं पच्यते ओदनकर्मकः पाकः शोभनः क्रियतइति, पचिधात्वर्थः कर्त्तव्यएव सम्बध्यमानः कर्म संपद्यते तस्य यत्समानाधिकरणं, विशेषणं तदपि कर्मैव भवति । 'प्रातीपिक आन्वीपिक इति' । प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः, ऋक्पूरब्धूरित्यकारः समासान्तः, द्व्यन्तरुपसर्गेभ्योप ईदितीत्वं, व्युत्पत्तिमात्रं चैतत्, प्रतिकूलानुकूलपर्यायौ त्वेतौ, ऊदनोर्द्देशइत्यूत्वमत्र न भवति अदेशत्वात्, देशत्वे क्रियाविशेषणत्वासम्भवात्, सूत्रे ईप्शब्दस्य निर्द्देशात् । 'प्रातिलोमिक आनु-

लोमिक इति' । पूर्ववद्बहुव्रीहिः, अच् प्रत्यन्ववपूर्वादित्यच् समासान्तः, अत्रापि व्युत्पत्तिमात्रमर्थस्तु पूर्वोक्त एव । 'प्रातिकूलिक इति' । पूर्ववद्बहुव्रीहिः, अत्रापि कूलार्थो नास्ति प्रतिसरणं चेतयोरर्थः ॥

"परिमुखं च" ॥ 'पारिमुखिक इति' । परिरिह वर्त्तते तस्य चापपरीवर्जनइति कर्मप्रवचनीयसञ्ज्ञा, पञ्चम्यपाङ्परिभिरिति पञ्चमी, अपपरिबहिरञ्चवः पञ्चम्या इत्यव्ययीभावः, अनेन ठक्, स्वामिनो मुखं वर्जयित्वा यः सेवको वर्त्तते स पारिमुखिकः, सर्वतो भावे वा परिशब्दः परितो मुखं प्रादिसमासः, यतो यतः स्वामिनो मुखं ततस्ततो वर्त्तत इत्यर्थः, एवं पारिपार्श्विकः ॥

"प्रयच्छति गर्ह्यम्" ॥ 'द्विगुणार्थं द्विगुणमिति' । द्वैगुणिक उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति किं तर्ह्येकगुणं दत्त्वा द्विगुणं गृह्णाति अत एव तद्गर्ह्यं भवतीति, तस्माद् द्विगुणार्थे द्विगुणशब्दो वर्त्तयितव्यः । 'वार्द्धुषिक इति' । वृद्ध्यर्थे धने वृद्धिशब्दः । 'प्रकृत्यन्तरमेवेति' । एतच्च वार्द्धुषिक इत्येतद्वृत्तिविषयमेव, नियतविषया अपि हि शब्दा भवन्ति, वृद्धिशब्दात्तु अनभिधानादेव भविष्यति, तेन वार्द्धिक इत्यनिष्टप्रसङ्गो नोद्भावनीयः, अथ कथं वार्द्धुदासमकम्पत ववा न्यस्य च वार्द्धुषेरिति, स्वच्छन्दवाच ऋषयः ॥

"कुसीददशैकादशात् ष्ठन्ष्ठचौ" ॥ 'तदर्थं द्रव्यं कुसीदमिति' । अत्रापि कुसीदिक इत्युत्तमर्णस्याभिधानमिष्यते, न चोत्तमर्णः कुसीदं प्रयच्छति किं तर्ह्यधमर्णः, न च तस्य वृद्धिप्रदानं गर्ह्यं तस्मात्तादर्थ्यात्ताच्छब्द्यमिति भावः, एकादशार्थे दश दशैकादशशब्देनोच्यन्त इति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, संख्याया अल्पीयस्या इति दशशब्दस्य पूर्वनिपातः । दशैकादशादिति निर्देशादकारः समासान्तः, एवं वाक्यमप्यकारान्तेनैव भवति दशैकादशान्प्रयच्छतीति ॥

"रक्षति" ॥ 'सामाजिक इति' समाजः समूहः समजन्त्यस्मिन्निति कृत्वा, एवं सांनिवेशः ॥

"शब्ददर्दुरं करोति" ॥ 'शब्दं करोतीति'। करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः, एतच्चाभिधानस्वाभाव्याल्लभ्यते, इह न भवति शब्दं करोति खर इति, पात्रविशेषवाची दर्दुरशब्दः, अनुकरणशब्द इत्यन्ये ॥

"पक्षिमत्स्यमृगान्हन्ति" ॥ 'स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यतइति'। अत्र हेतुः स्वंरूपमित्यत्रैवोक्तः। 'मात्स्यिक इति'। सूर्यतिष्येति लोपो न भवति मत्स्यस्य ङ्यामितिपरिगणनात्। 'हारिणिकः सौकरिक इति'। अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितं, यथा पूर्वयोः द्वावपि ह्येतस्माद्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यते, हरिणपर्यायोपि मृगशब्दोस्ति तदपेक्षया हारिणिक इति पर्यायोदाहरणम् ॥

"परिपन्थं च तिष्ठति" ॥ 'तदिति द्वितीयासमर्थादिति'। परिपन्थशब्दः परिमुखशब्दवदव्ययीभावस्तत्पुरुषो वा, तत्राप्यव्ययीभावपक्षे क्रियाविशेषणात्तिष्ठतेरकर्मकत्वेपि परिपन्थस्य कर्मत्वं, तत्पुरुषे तु परितः पन्थाः परिपन्थइति कालभावाध्वगन्तव्या इतिवचनात्कर्म, तदित्यधिकारसामर्थ्यादित्यन्ये। 'पारिपन्थिकश्चोर इति'। यः पन्थानं वर्जयित्वा तिष्ठति यो वा पन्थानं व्याप्य तिष्ठति स एवमुच्यते। 'लौकिकवाक्यप्रदर्शनार्थमिति'। परिपन्थं तिष्ठतीत्येतल्लौकिकवाक्यं तस्य प्रदर्शनार्थं द्वितीयोच्चारणम्' अथैवमर्थे द्वितीयोच्चारणे किं सिद्धं भवतीत्याह। 'परिपथपर्याय इत्यादि'। किमेतस्य ज्ञापने प्रयोजनमित्याह। स विषयान्तरेपीति। असति तु ज्ञापने प्रत्ययसंनियोगेन परिपन्थशब्दस्य निपातनं विज्ञायेत ततश्च ततोन्यत्र प्रयोगो न स्यात् ॥

"माथोत्तरपदपदव्यनुपदं धावति" ॥ 'माथशब्दः पथिपर्यायइति'। मथ्यते प्रशाख्यते गन्तृभिरिति कृत्वा, दण्डाकारो माथो दण्डमाथः ॥

"आक्रन्दाट्ठञ्च" ॥ 'आक्रन्दो देश इति,। दुःखितानां रोदन-

स्थानमार्त्तायनमुच्यते, आर्त्तैरीयते प्राप्यतइति कृत्वा, आर्त्तायनमार्त्तानां त्राता आक्रन्द इत्युच्यते, आक्रन्द्यते आर्त्तैराहूयतइति कृत्वा ॥

"पदोत्तरपदं गृह्णाति" ॥ पदग्रहणेन स्वरूपं गृह्यते न सुप्तिङ्न्तमुत्तरपदस्य पदत्वाव्यभिचाराद्, अत एवाह । 'पदशब्द उत्तरपदं यस्येति' ॥

"प्रतिकण्ठार्थललामं च" ॥ कण्ठं कण्ठं प्रति प्रतिकण्ठं, यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः, आभिमुख्ये वा, लक्षणेनाभिप्रती आभिमुख्यइति, यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासस्तस्य ग्रहणं न भवत्यनभिधानात् ॥

"धर्मं चरति" ॥ 'अधर्माच्चेति वक्तव्यमिति' । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाद्वचनम् । 'आधर्मिक इति' । नञत्र विरोधिवचनः, पापाचार इत्यर्थः ॥

"प्रतिपथमेति ठंश्च" ॥ 'प्रतिपथमिति' । पूर्ववद्वीप्सायामव्ययीभावः, ऋक्पूरब्धूरित्यकारः समासान्तः ॥

"समवायान् समवैति" ॥ 'समवायः समूह उच्यतइति' । समवयन्ति तस्मिन्निति कृत्वा । 'न संप्रधारणेति' । समयपूर्वस्येणः सम्प्रधारणायामपि प्रयोगोस्तीति मन्यते । 'समागत्यतदेकदेशीभवतीत्यर्थ इति' । तत्र गुणभूतसमागमापेक्षया समवायमिति द्वितीयानिर्द्देशः, लोके तु प्रायेण सप्तमी प्रयुज्यते द्रव्ये गुणाः समवयन्तीति ॥

"परिषदोण्यः" ॥ परितः सीदन्त्यस्यामिति परिषत्, सम्पदादित्वादधिकरणे क्विप्, सदिरप्रतेरिति षत्वम् ॥

"सञ्ज्ञायां ललाटकुक्कुट्यौ पश्यति" ॥ सञ्ज्ञानं सञ्ज्ञा प्रतीतिः, प्रसिद्धिरित्यर्थः । 'अभिधेयनियमार्थमिति' । अभिधेये सेवकविशेषे भिक्षुविशेषे च नियमस्तत्रैव वृत्तिर्यथा स्यादित्येवमर्थमित्यर्थः । 'न रूढ्यर्थमिति' । लालाटिककौक्कुटिकशब्दयोर्डित्यादिवद्रूढत्वात् तद्वियोगेन वर्त्ततेयावद्योगे च वर्त्तते, योगेपि ललाटकुक्कुटीदर्शनमात्रेण

ठञ् न भवतीत्येतावत्सञ्ज्ञाग्रहणेन प्रसिद्धमुपसंग्रहार्थं न क्रियते, यावद्वस्तु योगेऽत्र विवक्षितमस्तं दर्शयति। 'सर्वावयवेभ्य इत्यादि'। अनुपश्लेषस्य विवरणं कार्येष्वनुपस्थायित्वमिति, दूरे स्थितो ललाटमेव पश्यति न पुनः कार्येषूपतिष्ठत इत्यर्थः। 'कुक्कुटीपातो लक्ष्यत इति'। यावति देशे कुक्कुटी पतति यावन्तं देशं समतीत्य निपतितुं समर्था स देशो लक्ष्यत इत्यर्थः। अनेनापि प्रकारेण देशस्याल्पत्वं लक्ष्यते, कुक्कुटी पततु मा वा ऽपतदित्याह। 'देशस्याल्पतेति'। एतदेव स्पष्टयति। 'यो हि भिक्षुरिति'। भिक्षुःसन्यासी॥

"तस्य धर्म्यम्"॥ धर्मानुवृत्त आचारस्तेनानपेतं धर्म्यं धर्मपथ्यर्थन्यायादनपेत इतिवचनात्। 'दौवारिकमिति'। द्वारादीनां चेति वृद्धिप्रतिषेध ऐजागमश्च॥

"ऋतोऽञ्"॥ 'होतुर्धर्म्यं हौत्रमिति'। होतृशब्दस्य महिष्यादिषु पाठादपपाठोऽयं, पोतुर्धर्म्यमिति तु पाठः, अपर आह। यजमानसाहचर्यादृत्विग्वचनस्य होतृशब्दस्य महिष्यादिषु पाठः, अयं तु क्रियाशब्द उदाहृत इति। 'नराच्चेति वक्तव्यमिति'। नृशब्दात्सञ्चेयौवाञि नारमिति सिद्धे नरशब्दाट्ठको निवृत्त्यर्थं वचनमनभिधानं तु दुर्ज्ञानम्॥

"अवक्रयः"॥ 'अवक्रीयतेनेनेत्यवक्रय इति'। क्रयो नाम स्वद्रव्यत्यागेन परद्रव्यस्वीकरणं, तस्यावमत्वमवशब्दो द्योतयति, वाणिज्यार्थं तैलधान्यादिकं देशान्तरं नयता ऽस्मिन् शुल्कस्थाने प्रतिभारमेतावद्देयमिति तद्देशाधिपतिना यत्कल्पितं सोऽवक्रयः पिण्डक इति चोच्यते, तत्र स्वद्रव्यमेव दत्वा स्वद्रव्यमेव स्वीक्रियत इत्ययमवक्रयो भवति, न तु मुख्यः। 'नन्वित्यादि'। अवक्रयस्याप्यनादिप्रवृत्तत्वादिति भावः। 'लोकपीडयेति'। अर्थलोभेन धर्मातिक्रमेण धर्मापेतत्वं दर्शयति॥

"तदस्य पण्यम्"॥ 'पण्यमितिविशेषणमित्यादि'। इह यो विशेषणमुपाधिर्वोपादीयते द्योत्ये तस्मिंस्तेन भवितव्यं,तद्यथा सास्य

विषयभावनान्विता इत्यर्थः । अत्र ब्रह्म-शब्द उपासनरूपज्ञानपर्यायः-आगमोत्थं विवेकाच्च द्वेधा ज्ञानं तथोच्यते । शब्दब्रह्मागममयं परं ब्रह्मविवेकजम् । द्वे ब्रह्मणी वेदितव्ये द्वे विद्ये वेदितव्ये वै इति चेति, ब्रह्म-शब्दस्य ज्ञानविद्याशब्दनिर्दिष्टागमजन्योपासनरूपज्ञानद्वयपर्यायत्वेन भगवता पराशरेणैव व्याख्यातत्वात्स्थावरावरा इति स्थावर-शब्देन तदभिमानिदेवता विवक्षिता, सनन्दनादीनां समाधिना विरोधिसकलकर्म्मक्षयात्समाधिनिष्पत्तिपौष्कल्येनानवरतब्रह्मानुसन्धानैकतानत्वात् कर्म्मानुष्ठानावसरः, प्रधानाविरोधेन ह्यङ्गानुष्ठानं, तस्मात्ते ब्रह्मभावनया युताः, हिरण्यगर्भादयोजगन्निर्वाहाधिकृतत्वात्कदाचित्कर्म्मानुष्ठानं कदाचिदुपासनं चेति उभयभावनयाऽन्विताः । इतरे देवमनुष्याद्याः कर्म्मभावनयाऽन्विताः, सनन्दनादयो हिरण्यगर्भादयः देवाद्या इत्यादि-शब्दस्य को विषय आदि-शब्दस्यासङ्कोचान्मुक्तेष्वपि भावनाद्वयप्रसङ्ग इति शङ्काव्यावृत्त्यर्थं प्रयोजकमाह अधिकार इति, कर्म्मण्यैश्वर्यबोधो ऽधिकार इति अधिकारलक्षणं स्वप्रयोजनसाधनत्वात् कर्म्मणि स्वकीयत्वबुद्धिरधिकार इत्यर्थः, अधिकारबोधयुक्तेषु-अधिकाररूपबोधयुक्तेषु अनुष्ठेयविषयस्वकीयत्वबुद्धियुक्तेष्वित्यर्थः । मुमुक्षोरुपासने स्वकीयत्वबुद्धिर्बुभुक्षोः कर्म्मणि स्वकीयत्वबुद्धिः । अधिकारबोधश्च केष्वित्यत्राह अतीतेष्विति, विशेषज्ञानकर्म्मसु विशेषज्ञानं देवोऽहं मनुष्योऽहमित्यादिज्ञानं विशेषज्ञाने तद्धेतुषु च कर्म्मसु विद्यमानेष्वधिकारबोधः सम्भवति तद्युक्तेषु भावनात्रयान्वय इति न मुक्तेषु प्रसङ्ग इत्यर्थः । एवं हिरण्यगर्भादीनां भावनात्रयान्वयेनाशुद्धत्वात् मुमुक्षुभिस्ते अनुपास्या इति श्रीविष्णुपुराणे प्रतिपादनात् क्षेत्रज्ञस्वनिश्चय इत्यर्थः । एवं श्रुतिवाक्येषु स्वपक्षसाधनप्रमाणोपन्यास-परमतशङ्कानिरासौ कृतौ, तथोपबृंहणेष्वपि पूर्वं स्वपक्षसाधनवचनान्युपन्यस्य परमतशङ्कानिरासश्च कृतः, एवं प्रथमश्लोकोक्तं विष्णवे इति पदं विवृतं भवति ॥ उक्तार्थस्यैव सिद्धार्थे व्युत्पत्त्यभाववादं व्युदस्यति तन्निरासश्च सर्ववेदान्ताभिमतः । तत्र पूर्वपक्षमाह यद्पीत्यादीना, अर्थवादादिषु सिद्धार्थपरत्वव्यावृत्त्यर्थं सर्वस्येत्युक्तं, विधिभागस्य तावत् कार्यपरत्वं सुव्यक्तम्, अर्थवादभा-

गस्य विधेयस्तुतिपरत्वेन मन्त्रभागस्यानुष्ठेयार्थप्रकाशनपरत्वेन च तयोः कार्यपरत्वमित्यभिप्रायः। कुत इत्याह व्यवहारादिति, व्यवहारः प्रवृत्तिः—गामानयेति प्रयोजकवृद्धप्रयुक्तवाक्यश्रवणसमनन्तरभाविनी प्रयोज्यवृद्धस्य प्रवृत्तिरित्यर्थः। सामान्येन शब्दस्य कार्यरूपोऽर्थ इति निश्चिते आवापोद्वापभेदेनानुवृत्तशब्दस्यानुवृत्तमर्थं, व्यावृत्तस्य च व्यावृत्तमर्थं च जानातीति प्रातिस्विकव्युत्पत्तिः स्यात्, विभक्त्यर्थव्युत्पत्तिश्च तथा पुत्रस्ते जातः, नायं सर्पो रज्जुरेवैषेत्यादिवाक्येषु हर्षभयनिवृत्तिहेतुवाचित्वावगमेऽपि हेतुविशेषनिर्द्धारणायोगाच्च तत्र सिद्धार्थविषया व्युत्पत्तिः।

**यदपि कैश्चिदुक्तं सर्वस्य शब्दजातस्य विध्यर्थवादमन्त्ररूपस्य कार्याभिधायित्वेनैव प्रामाण्यं वर्णनीयं व्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवाद्व्यवहारस्य च कार्यबुद्धिमूलत्वात् कार्यरूप एव वेदार्थः, न परिनिष्पन्ने वस्तुनि शब्दः प्रमाणमिति, अत्रोच्यते प्रवर्त्तकवाक्यव्यवहार एव शब्दानामर्थबोधकत्वशक्त्यवधारणम्—**

अस्य शब्दस्यायमर्थ इति वुत्पत्तिश्च न प्रथमं सम्भवतीति व्युत्पन्नकतिपयशब्दस्यैव हि सा, तस्मात्प्रथमव्युत्पत्तिर्व्यवहारादेवेति सा कार्यार्थविषया, तत्र वाक्यान्तरेष्वपि प्रथमव्युत्पत्तौ कार्यपरतयाऽवगतकतिपयशब्दसमाभिव्याहृतपदान्तरेषु तत्समभिव्याहारबलात्कार्यपरत्वं निश्चिनोतीत्याद्यभिप्रेतं विस्तरादनुक्तं, परिहरति अत्रोच्यत इति, कथं राजाज्ञेति न हि प्रामाणिकमित्यभिप्रायः। अत्यन्तसुकरमिति यादृच्छिकव्युत्पत्तौ वृद्धपूर्वकव्युत्पत्तौ च सुकरमिति भावः। तदुपपादयति तथा हीति, प्रथमं यादृच्छिकव्युत्पत्तेः सिद्धार्थविषयत्वं दर्शयति केनचिदिति, हस्तचेष्टादिकृत् तज्ज्ञश्च द्वौ पुरुषौ, चेष्टाभिज्ञो व्युत्पित्सुरेकः दण्डापेक्षी चैक इति चत्वारः पुरुषाः, तत्र व्युत्पत्तिर्हस्तचेष्टादिज्ञानस्य कतिपयव्युत्पत्त्यपेक्षा नास्तीति

दर्शयितुं मूकवदित्युक्तम्, आवापोद्वापभेदेन शब्दविशेषाणामर्थविशेषव्युत्पत्तिरत्रापि तुल्या । अथ बुद्धिपूर्व्वकव्युत्पत्तिरेव लोके प्रचुरेति तां दर्शयति तथेति, तातादयः सम्बन्धिशब्दाः मनुष्यादयस्संबन्धिशब्दा बालानां प्रथमं सम्बन्धिशब्दव्युत्पत्तिर्जायत इति लोकसिद्धं, सा च बुद्धिपूर्व्वकशिक्षयैवोपपद्यते

कर्त्तव्यमिति किमियं राजाज्ञा, सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणमत्यन्तसुकरं तथा हि केन चिद्धस्तचेष्टादिना अपवरके दण्डः स्थित इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित्तज्ज्ञापने प्रवृत्तोऽपवरके दण्डः स्थित इति शब्दं प्रयुङ्क्ते मूकवद्धस्तचेष्टामिमां जानन् पार्श्वस्थोऽन्यः प्रागव्युत्पन्नोऽप्येतस्यार्थस्य बोधनायापवरके दण्डःस्थित इति शब्दस्य प्रयोगदर्शनादस्यार्थस्यायं शब्दो बोधक इति जानातीति किमत्र दुष्करं, तथा बालस्तातोऽयमियं माताऽयं मातुलोऽयं मनुष्योऽयं मृगश्चन्द्रोऽयमयं च सर्प इति मातापितृप्रभृभिः शब्दैः शनैः शनैरङ्गुलीनिर्द्देशेन तत्र तत्र बहुशः शिक्षितस्तैरेव शब्दैस्तेष्वर्थेषु स्वात्मनश्च बुद्ध्युत्पत्तिं दृष्ट्वा तेष्वर्थेषु

न हि प्रयोजकवृद्धो व्युत्पित्सुप्रतियोगिकमातुलादिविषये मातुलादिशब्दं प्रयुङ्क्ते अपि तु स्वप्रतियोगिकविषय एव प्रयुङ्क्ते, अतो बालस्य स्वप्रतियोगिकमातुलादिविषये व्युत्पत्तिर्जायमाना वृद्धव्यवहाराद्बोपपद्यत इति बुद्धिपूर्व्वकव्युत्पत्तेः प्रथमभावित्वमभ्युपेत्यमिति सम्बन्धिशब्दप्रयोगाभिप्रायः, तस्मिन्नेवार्थे तस्यैव शब्दस्याङ्गुलिनिर्द्देशपूर्व्वकं बहुशः प्रयोगेन

बुद्धौ वासितत्वात्तत्तच्छब्दप्रयोगे तत्तदर्थबुद्धिर्जायते तस्मादस्यार्थस्यायं बोधक इत्यभिप्रायेण अङ्गुलिनिर्देशः कृत इति बालो जानातीत्यर्थः । सम्बन्धान्तराभावादिति प्रत्यक्षं सम्बन्धसत्तया ज्ञापकं लिङ्गशब्दौ ज्ञाततया ज्ञापकौ, तत्र लिङ्गं जन्यजनकभावादिसम्बन्धान्तरज्ञानसापेक्षं ज्ञापकं शब्दस्य तु बोध्यबोधकभावसम्बन्धो ज्ञातव्यः, अतो बोध्यबोधकभावातिरेकेण सम्बन्धाभावादित्यर्थः, एतस्य व्युत्पादकोऽपि पुरुषः कार्यार्थेषु व्युत्पत्तिमानिति न वक्तव्यं सिद्धार्थे व्युत्पत्तिमद्भिर्बालैः शब्दप्रयोगदर्शनात्, तद्व्युत्पादको वाक्यप्रयोक्ता पुरुषो ऽपि सिद्धार्थे व्युत्पत्तिमानिति दृष्टप्रकारेणाभ्युपगम्यतामित्यभिप्रायेण स्वयमपि सर्ववाक्यजातं प्रयुङ्क्ते इत्युक्तम्, एवं व्युत्पत्तौ न ह्यभिहितान्वयप्रसङ्गः प्रातिस्विकव्युत्पत्तेरन्विताभिधानव्युत्पत्त्युपयोगित्वात्, यथा कार्यार्थव्युत्पत्तिपक्षे आवापोद्वापरूपेण पाश्चात्यप्रातिस्विकपदव्युत्पत्तिर्नान्विताभिधानविरोधिनी

**तेषां शब्दानामङ्गुलिनिर्देशपूर्व्वकः प्रयोगः संबन्धान्तराभावात् सङ्केतयितृपुरुषाज्ञानाच्च बोधकत्वनिबन्धन इति क्रमेण नि*श्चित्य पुनरप्यस्य शब्दस्यायमर्थ इति पूर्व्ववृद्धैः शिक्षितः सर्वशब्दानामर्थमवगम्य स्वयमपि सर्ववाक्यजातं प्रयुङ्क्ते ।**

अपि तु तदुपयोगिन्येव तथेत्यर्थः । अन्विताभिधानपक्षाभ्युपगमश्च कल्पनालाघवार्थः अभिहितान्वयपक्षे पदानां स्वार्थभिधानशक्तिः तत्रापि यथा पदार्थानां परस्परान्वयबोधनार्हत्वं भवति तथा स्वार्थबोधनशक्तिः तत्तत्पदार्थानां च परस्परान्वयबोधनशक्तिश्च कल्पनीया । अन्विताभिधानपक्षे तु पदानां स्वार्थबोधनशक्तेरेवान्वयपर्यन्तत्वमात्रमेवेति न कल्पनागौरवमिति, एवं यादृच्छिकी वा बुद्धिपूर्विका वा आद्या व्युत्पत्तिः सिद्धार्थविषयाऽस्तु ततः किमित्यत्राह एवमेवेति, सर्वपदानां लौकिकवैदिकावि-

* निश्चिता इति पा० ।

भागेनेत्यर्थः । यथाऽवस्थितसंसर्गविशेषबोधकत्वं चेति सिद्धार्थपरं वाक्यं सिद्धपरमेव स्यात् कार्याभिधायि वाक्यं कार्यपरं स्यात् न तु सिद्धार्थपराणां कार्यार्थपरत्वं कल्पनीयमिति भावः । इत्यादिनिर्बन्ध इति, आदि-शब्देन सर्वशब्दानां कार्यपरत्वं कृत्स्नस्य वेदस्य कार्याभिधायित्वं च गृह्यते सिद्धार्थे व्युत्पत्तिसम्भवात् कार्यार्थ एव व्युत्पत्तिरित्यादिनिर्बन्धोऽनुपपन्न इत्युक्तं, ततः किमित्यत्राह अत इति, एवं सिद्धार्थे आद्या व्युत्पत्तिरुक्ता तदभावेऽपि ब्रह्मणः सिद्धिमुपपादयति अपि चेति, विशिंषन् विषयः अवच्छेदकः कार्यस्यावच्छेदका यागदानादयः अत्रोपासनं विषयः उपासनावच्छिन्नकार्याधिकृतः तत्राधिकारी तत्र तादर्थ्यबोधवान् तस्य विशेषणं फलं फलत्वेन सिद्धौ

**एवमेव सर्वपदानां स्वार्थाभिधायित्वं, संघातविशेषाणां च यथाऽवस्थितसंसर्गविशेषवाचित्वं च जानातीति कार्यार्थ एव व्युत्पत्तिरित्यादिनिर्बन्धो निर्निबन्धनः, अतः परिनिष्पन्ने वस्तुनि शब्दस्य बोधकत्वशक्त्यवधारणात्सर्वाणि वेदान्तवाक्यानि सकलजगत्कारणं सर्वकल्याणगुणाकरमुक्तलक्षणं ब्रह्म बोधयन्त्येव । अपि च कार्यार्थ एव व्युत्पत्तिरस्तु वेदान्तवाक्यान्यप्युपासनविषयकार्याधिकृतविशेषणभूतफलत्वेन**

उदाहरणत्रयं दर्शयति विधिवाक्यप्रतिपन्नस्वरूपस्य फलस्याप्यर्थवादोक्तविशेषणत्वाभ्युपगमे उदाहरणं दुःखासम्भिन्न इत्यादि फलरूपस्यैवार्थवादप्रतिपन्नस्याभ्युपगमे उदाहरणं रात्रिसत्रप्रतिष्ठा न केवलं विहितफलस्यैव विधेयविरोधिफलस्याप्यर्थवादोक्तस्याङ्गीकारे उदाहरणम् अपगोरणशतयातनासाध्यसाधनभावः । उपासनवाक्यं किं तत्र ब्रह्मणः फलत्वं कथमित्यत्राह तथा हीति, अस्मिन्वाक्ये न विधिश्रवणमिति शङ्कायां फलितमर्थमाह परप्राप्नोतीति, फलसम्बन्धश्रवणे विधिकल्पनस्य न्याय्यत्वादिति-

भावः स्वर्गविशेषणदुःखासम्भिन्नत्वादिवत् ब्रह्मस्वरूपेण सह तद्विशेषणस्यापि सिद्धिरित्याह अत्रेति, ब्रह्मस्वरूपं तद्विशेषणं च सिद्ध्यतु ततः किमित्यत्राह तदन्तर्गतमिति, तदन्तर्गतं ब्रह्म तद्विशेषणान्तर्गतमित्यर्थः एवमौपनिषदोपासनविधीनां फलत्वेन ब्रह्मार्थः सिद्धिरुक्ता । अथ सर्वविधिसाधारणोक्तिरुच्यते एवं चेति, अर्थवादानां स्तावकत्वसिद्ध्यर्थं स्वार्थे तात्पर्यमत्रोच्यते, एवं च सति विध्युपयोग्यर्थेष्वभ्युगन्तव्येषु सत्स्वित्यर्थः

दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवद्रात्रिसत्रप्रतिष्ठावदपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सर्वं बोधयन्ति—तथा हि ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मोपासनविषयकार्याधिकृतविशेषणभूतफलत्वेन ब्रह्मप्राप्तिः श्रूयते, परप्राप्तिकामो ब्रह्म विद्यादिति, अत्र प्राप्यतया प्रतीयमानं ब्रह्मस्वरूपं तद्विशेषणं च सर्वं कार्योपयोगितयैव सिद्धं भवति तदन्तर्गतमेव जगत्स्रष्टृत्वं संहर्तृत्वमाधारत्वमन्तरात्मत्वम् इत्याद्युक्तमनुक्तं च सर्वमिति न किंचिदनुपपन्नम् ।

प्रमाणान्तरविरुद्धत्वे तत्प्रतिपादयितुं न शक्नोति शास्त्रमित्यविरुद्धा इत्युक्तं, प्रमाणान्तरसिद्धत्वेऽप्यनुवादः स्यादित्यपूर्व्वाश्चेत्युक्तम् । विध्युपयोगित्वेनार्थवादानामपि स्वार्थे प्रामाण्ये द्रमिडाचार्यग्रन्थमाह यथोक्तमिति, असद्गुणकथनं हि स्तुतिः तत्कथमसता स्तुत्यनुपपत्तिरित्याह एतदुक्तमिति, अयं न्यायो न केवलमवदानस्तुतिमात्रविषयः अपि तु सर्वार्थवादसाधारण इति च दर्शयितुमेतदुक्तं भवतीत्यारम्भः, अदृष्टरूपानुगुणानित्यनेनानुवादरूपत्वं बाधितत्वं च व्यावृत्तम्, आराध्यदेवतास्तुतिद्वारा कर्म्मणः स्तुत्या च कर्म्मणि प्ररोचनां कुर्वन्तोऽर्थवादास्तद्गुणासद्भावे तत्कृतोत्कर्षोऽपि नास्तीति कर्म्मणि प्ररोचनां जनयितुं न शक्ताः स्युरित्यर्थः । अनयैव दिशेति विध्यपेक्षितार्थसिद्धिन्यायाच्चासता स्तुतिरुपपद्यते

एवं च सति मन्त्रार्थवादगता ह्यविरुद्धा अपूर्व्वाश्चार्थाः सर्वे विधिशेषतयैव सिद्धा भवन्ति। यथोक्तं द्रमिडभाष्ये—ऋणं हि वै जायते इति श्रुतेरिति उपक्रम्य यद्यप्यवदानस्तुतिपरं वाक्यं तथाऽपि नासता स्तुतिरुपपद्यत इति, एतदुक्तं भवति सर्वो ह्यर्थवादभागो देवताराधनभूतयागादेः साङ्गस्याराध्यदेवतायाश्चादृष्टरूपान् गुणान् सहस्रशो वदन् सहस्रशः कर्म्मणि प्राशस्त्यबुद्धिमुत्पादयति तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्म्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयतीति अनयैव दिशा सर्वे मन्त्रार्थवादावगता ह्यर्थाः सिद्धाः। अपि च कार्यवाक्यार्थवादिभिः किमिदं कार्यत्वं नामेति वक्तव्यं कृतिभावभाविता कृत्युद्देश्यतेति चेत् किमिदं कृत्युद्देश्यत्वं यदधिकृत्य कृतिर्वर्तते तत्कृत्युद्देश्यत्वमिति चेत्

इति न्यायाच्चेत्यर्थः। मन्त्रार्थवादगता इति अर्थवादवन्मन्त्रगता अर्था अपि सिद्धा इत्यर्थः। छागस्य वपाया मेदस इति मन्त्रोक्तच्छागः पशुना यजेतेति विधेरपेक्षितत्वात्तदभ्युपगतो हि धात्वर्थः। स्तुतिपराणामपि मन्त्राणां स्वार्थे तात्पर्यं न चेत्स्तावकत्वं न सिद्ध्यति अनुष्ठेयार्थप्रकाशकत्वमपि मन्त्राणां स्वार्थे तात्पर्याभावे न सिद्ध्यति ईदृशदेवताकङ्कर्म्मेति हि तत्प्रकाशनं, तच्च देवतास्वरूपादौ तात्पर्यादेव सिद्ध्यतीत्यर्थः। एवं सिद्धार्थे व्युत्पत्तिस्तदभावे ऽपि विधिशेषतया ब्रह्मणः सिद्धिश्चोक्ता। अथ परोक्तं कार्यमनुपपन्नमित्याह अपि चेति, भावार्थस्य कर्म्मणोऽपि कृतिसाध्यत्वमस्ति स्वर्गादेरिष्टत्वमस्तीति तदुभयव्यावर्तकं कृतिप्राधान्यं कृत्युद्देश्यत्वमिति तृतीयाकारः, कार्यस्याभ्युपगम्यते परैस्तस्य

प्राधान्यादेव कृत्स्नवेदतात्पर्यभूमित्वं चोच्यते, उक्तं कार्यमर्थं प्रतिपादयता वेदस्य प्रामाण्यमिति टीका, कार्यमर्थं प्रधानतया प्रतिपादयत इति च पञ्जिका, कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते इति

पुरुषव्यापाररूपायाः कृतेः कोऽयधिकारो नाम यत् प्राप्तीच्छया कृतिमुत्पादयति पुरुषः तत्कृत्युद्देश्यत्वमिति चेत् हन्त तर्हि इष्टत्वमेव कृत्युद्देश्यत्वम् ।

अथैवं मनुषे इष्टस्यैव रूपद्वयमस्ति इच्छाविषयतया स्थितिः, पुरुषप्रेरकत्वं च, तत्र प्रेरकत्वाकारः कृत्युद्देश्यत्वमिति, सोऽयं स्वपक्षाभिनिवेशकारितो वृथाश्रमः, तथा हि इच्छाविषयतया प्रतीतस्य

च, तत्प्रकारणं स तृतीयाकारोऽत्र दूष्यते, किमित्यादिस्पष्टं साध्यत्वदर्शनाय कृतिभावभावितेत्युक्तं, सा स्वर्गादेरप्यस्तीति तद्व्यावृत्त्यर्थं कृत्युद्देश्यतेत्युक्तं, तां दूषयितुं पृच्छति किमिदमिति, परिहरति यदधिकृत्येति, स्वप्रयोजनसाधनत्वात्स्वकीयत्वबुद्धिर्ह्यधिकारः, यदधिकृत्येति यत्साध्यतयाऽवलम्ब्येत्यर्थः । पुरुषबुद्धिरूपोऽधिकारः पुरुषव्यापाररूपकृतेर्न सम्भवतीत्यभिप्रायेणाह पुरुषेति, अत्राह यत्प्राप्तीति, कृतिमत्पुरुषेष्टत्वमिति फलितं दूषयति हन्त तर्हीति, एवं तृतीयाकारस्य परोक्तस्य तयोरन्यतरात्मकत्वे पर्यवसानमुक्तम् । पुनः परमतं शङ्कते अथैवमिति, सोपालम्भं परिहर्तुमुपक्रमते सोऽयमिति, कथं वृथाश्रम इत्यत्राह तथा हीति, यदेष्टस्योपायान्तरेण सिद्धिः तदा न स्वयं प्रवर्तते यदा स्वप्रयत्नादपि न सिद्ध्यति तदाऽपि न प्रवर्तते यदा स्वप्रयत्नादेव सिद्ध्यति तदा प्रवर्तते इति प्रेरकत्वं नाम कृतिसाध्यत्वान्तर्भूतमित्यर्थः । ननु स्वकृतिसाध्यत्वसत्तया न प्रवृत्तिः अपि तु तज्ज्ञानादेव प्रवृत्तिरिति तज्ज्ञातत्वमेव तृतीयाकार इत्यत्राह इच्छायामिति, त्रेयमेवाकारत्रयमभ्युपेतं भवता अस्माकं त्वाकारद्वयमेव ज्ञेयं तत्र कृतिसाध्यत्वम्

स्वप्रयत्नोपपत्तिमन्तरेणासिद्धिरेव प्रेरकत्वं तत एव प्रवृत्तेः, इच्छायां जातायामिष्टस्य स्वप्रयत्नोत्पत्तिमन्तरेणासिद्धिः प्रतीयते चेत् ततश्चिचकीर्षा जायते ततः प्रवर्तते पुरुष इति तत्त्वविदां प्रक्रिया । तस्मादिष्टस्य कृत्यधीनात्मलाभत्वातिरेकिकृत्युद्देश्यत्वं नाम किमपि न दृश्यते—अथोच्येत इष्टताहेतुभूत पुरुषानुकूलता, तत्पुरुषानुकूलत्वं कृत्युद्देश्यमिति चेत् नैवम्—पुरुषानुकूलं सुखमित्यनर्थान्तरं तथा पुरुषाननुकूलं दुःखपर्यायम्, अतः सुखव्यतिरिक्तस्य कस्यापि पुरुषानुकूलत्वं न सम्भवति

ज्ञाततया प्रवृत्तिहेतुः, यस्तृतीयाकारो ज्ञाततया प्रवृत्तिहेतुरुक्तस्त्वया स एवाकारद्वयान्तर्भूत इत्युक्तमित्यर्थः। तत्त्वविदां प्रक्रियेति न त्वभिनिविष्टानामित्यर्थः । तस्मादिति निगमयति, परमतं शङ्कते अथोच्येतेति, इष्टत्वे हेतुः पुरुषानुकूलत्वं नाम तृतीयाकारः स एव कृत्युद्देश्यत्वमित्यर्थः । परिहरति नैवमिति, दृष्टान्तार्थं तथेत्यादिकमुच्यते कार्यं यथा दुःखव्यतिरिक्तत्वात्पुरुषप्रतिकूलं न भवति तथा सुखव्यतिरिक्तत्वादनुकूलत्वमपि तस्य नास्तीत्यर्थः । अत्र चोदयति ननु चेति, सुखव्यतिरिक्तदुःखनिवृत्तावनुकूलत्वदर्शनात्सुखव्यतिरिक्तकार्यस्याप्यनुकूलत्वमुपपद्यत इत्यर्थः । परिहरति नैतदिति, दुःखनिवृत्तावनुकूलत्वबुद्धिर्भ्रान्तिरिति वक्ष्यन्सुखदुःखयोर्विवेकं दर्शयति आत्मेति, ततः किमित्यत्राह तत्रेति, अनुकूलत्वात्सुखमिष्टं दुःखस्य प्रतिकूलत्वात्तन्निवृत्तिरपीष्टा । एवमिष्टतासाम्यादानुकूल्यभ्रम इत्यर्थः । दुःखनिवृत्तेरपीष्टत्ववदनुकूलत्वमप्यस्तीत्यनुकूलताबुद्धिर्न भ्रमः स्यादित्यत्राह तथा हीति,

ननु च दुःखनिवृत्तेरपि सुखव्यतिरिक्तायाः पुरु-

षानुकूलता दृष्टा, नैतत् आत्मानुकूलं सुखम् आत्मप्रतिकूलं दुःखम् इति हि सुखदुःखयोर्विवेकः, तत्रात्मानुकूलं सुखमिष्टं भवति तत्प्रतिकूलं दुःखं चानिष्टम्, अतो दुःखसंयोगस्यासह्यतया तन्निवृत्तिरपीष्टा भवति, तत एवेष्टतासाम्यादनुकूलताभ्रमः—तथा हि प्रकृतिसंस्पृष्टसंसारिणः पुरुषस्यानुकूलसंयोगः प्रतिकूलसंयोगः स्वरूपेणावस्थितिरिति च तिस्रोऽवस्थाः, तत्र प्रतिकूलसंबन्धनिवृत्तिश्च अनुकूलसम्बन्धनिवृत्तिश्च स्वरूपेणावस्थितिरेव ।

मुक्तस्यानुकूलसंयोग एवेति तद्व्यावृत्त्यथ संसारिण इत्युक्तं, प्रतिकूलनिवृत्तेरनुकूलत्वेऽन्यतरनिवृत्तिरन्यतरसंयोग इत्युक्तं स्यात् तदा सुषुप्तौ सुखदुःखयोर्द्वयोरपि प्रसङ्गः प्रतिकूलनिवृत्तिरनुकूलसंयोगः, अनुकूलनिवृत्तिः प्रतिकूलसंयोगश्च भवतीति तस्माद्दुःखनिवृत्तेरनुकूलत्वं नास्तीत्यर्थः । अत इष्टतासाम्यादनुकूल वबुद्धिर्भ्रम एवेति निगमयति तस्मादिति, तस्मात्सुखव्यतिरिक्तस्य नियोगस्य अनुकूलत्वमनुपपन्नमित्याह अत इति, नियोगस्य सुखव्यतिरिक्तत्वेन ह्यनुकूलत्वं दूषितं नियोगः सुखविशेष एवेति, तस्यानुकूलत्वं नाम तृतीयाकारः सम्भवतीति शङ्कायां सुखविशेषत्वं निराकरोति इष्टस्येत्यादिना, अत्र तृतीयाकारदूषणे क्रियमाणे अर्थाद् द्वितीयाकारश्च दूषितो भवति इष्टत्वनिरासात्, इष्टस्य-स्वत इष्टस्येत्यभिप्रायः । स्वत इष्टत्वं च सुखस्य स्वतःशब्देन साधनतयाइष्टत्वव्यावृत्तिः नियोगत्वं-प्रेरकत्वं स्थिरत्वं स्थायित्वमपूर्व्वत्वं प्रमाणान्तरागोचरत्वम्, एतत्सर्वमिष्टस्यार्थस्य निर्वर्तकतयैव सिद्ध्यति इष्टसाधनत्वज्ञानात् प्रवृत्तिहेतुत्वं कालान्तरभाविस्वर्गसाधनत्वात् स्थिरत्वं, लौकिकप्रत्यक्षसिद्धचलनक्रधात्वर्थातिरिक्तस्थिरसाधनत्वादपूर्व्वत्वं चेत्यर्थ. ।

तस्मात्प्रतिकूलसंयोगे वर्तमाने तन्निवृत्तिरूपा स्वरूपेणावस्थितिरपीष्टा भवति, तत्रेष्टतासाम्यादनुकूलताभ्रमः। अतः सुखरूपत्वादनुकूलतायाः नियोगस्यानुकूलतां वदन्तं प्रामाणिकाः परिहसन्ति, इष्टस्यार्थविशेषस्य निर्वर्तकतयैव हि नियोगस्य नियोगत्वं, स्थिरत्वमपूर्वत्वं च प्रतीयते, स्वर्गकामो यजेतेत्यत्र कार्यस्य क्रियातिरिक्तता स्वर्गकामपदसमभिव्याहारेण स्वर्गसाधनत्वनिश्चयादेव भवति, न च वाच्यं यजेतेत्यत्र

इष्टसाधनतयैव नियोगत्वस्थिरत्वापूर्वत्वप्रतीतिः कथमित्यत्राह स्वर्गकाम इति, ननु भृत्यादीनामिष्टप्रदस्यापि राज्ञो यथा प्राधान्यं तथा स्वप्रधानभूत एव नियोगः प्रतीयते स्वस्यानुष्ठातुरिष्टप्रदश्च स्याद्राजवदिति प्रथमं स्वप्रधानतयैव प्रतीतत्वाच्च स्वत इष्टत्वानुपपत्तिः यथोक्तम्—आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये । कुर्वन् स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥ इति, इमां शङ्कामनुभाष्य परिहरति न च वाच्यमिति, कुत इत्यत्राह यजेतेति हीति, धात्वर्थस्य प्रथमप्रतिपन्नस्यापि वाक्यार्थानुपयोगिनः परित्यागे दृष्टान्तत्वं गर्भितं तत्कथमिति शङ्कायां स्वर्गकामपदसमभिव्याहारादेव धात्वर्थातिरिक्तसिद्धिरित्याह स्वर्गेति, आदि-शब्देन प्राधान्यादि विवक्षितं, ततःकिमित्यत्राह तच्चेति, तच्च धात्वर्थातिरिक्तत्वम् अतिरिक्तस्य कार्यस्य स्वर्गसाधनत्वप्रतीतिनिबन्धनं, न हि कामी अकामसाधने नियोक्तुं शक्यत इति न्यायादित्यर्थः। स्वर्गसाधनत्वप्रतीतिनिबन्धनत्वं च कुत इत्यत्राह समभिव्याहृतेति, इतरपदार्थान्वययोग्यस्यैव पदान्तरप्रतिपाद्यत्वमिति हि लोकव्युत्पत्तिभङ्गेनापूर्वस्य वाच्यत्वं कल्पितमित्यर्थः।

प्रथमं नियोगः स्वप्रधानतयैव प्रतीयते स्वर्गका-

मपदसमभिव्याहारात्स्वसिद्धये स्वर्गसिद्ध्यानुकूलता च नियोगस्येति यजेतेति हि धात्वर्थस्य पुरुषप्रयत्नसाध्यतैव प्रतीयते, स्वर्गकामपदसमभिव्याहारादेव धात्वर्थातिरेकिणो नियोगत्वं स्थिरत्वमपूर्व्वत्वं चेत्यादि ह्यवगम्यते, तच्च स्वर्गसाधनत्वप्रतीतिनिबन्धनं समभिव्याहृतस्वर्गकामपदार्थान्वययोग्यं स्वर्गसाधनमेव कार्यं लिङादयोऽभिदधतीति हि लोकव्युत्पत्तिरपि तिरस्कृता । एतदुक्तं भवति

इतरपदार्थान्वययोग्यस्यैव पदान्तरप्रतिपाद्यत्वं तत्कुतः धात्वर्थस्य प्रथमप्रतिपन्नत्वकथने किं प्रयोजनमित्यत्राह एतदुक्तं भवतीति, पदार्थान्वययोग्यस्यैवेतरपदप्रतिपाद्यत्वं युक्तम् अन्विताभिधायित्वाद्वाक्यस्येत्यर्थः । योग्यं च किमित्यत्राह तच्चेति, प्रथममनन्यार्थतया कार्यं प्रतिपन्नमस्तु तथाऽपि तदनुपपन्नमित्याह अत इति, अतः साधनस्यैव वाक्यार्थान्वयार्हत्वादित्यर्थः । यथा प्रथमप्रतिपन्नाऽपि धात्वर्थभूता क्रिया वाक्यार्थान्वयायोग्यत्वात्परित्यक्ता तथा स्वप्रधानतया प्रथमप्रतिपन्नमपि वाक्यार्थान्वयायोग्यत्वात्तस्त्याज्यमित्यर्थः । उदाहरणं दर्शयति अत एवेति, अत एव प्रथमं प्रतिपन्नस्यापि वाक्यार्थान्वयानर्हस्य त्याज्यत्वादित्यर्थः । एवमित्यादि स्पष्टम् । एकपदश्रवणवेलायामनन्यार्थतया प्रथमप्रतिपत्तिरेव नास्तीत्याह कार्येति, न कार्यमनन्यार्थं प्रतीयते इति गुरुवचनं सङ्गच्छते । कुत इत्यत्राह व्युत्पत्तीति, नियोगस्यानुकूलत्वे प्रमाणाभावमुपसंहरति अत इति, अतः सुखस्यैव पुरुषानुकूलत्वान्नियोगस्य च सुखनिमित्तत्वाच्चेत्यर्थः । यद्वा केवलविधिपदेन दुःखरूपधात्वर्थमात्रप्रतीतेः पदान्तरसमभिव्याहृतार्थविशेषस्य साधनतया प्रतीतेश्चेत्यर्थः ।

समभिव्याहृतपदान्तरवाच्यार्थान्वययोग्यमेवेयतरपदप्रतिपाद्यमित्यन्विताविधायिपदसंघातरूपवा-

क्यश्रवणसमनन्तरमेव प्रतीयते, तच्च स्वर्गसाधनरूपम्, अतः क्रियावदनन्यार्थता ऽपि विरोधादेव परित्यक्तेति, अत एव गङ्गायां घोषइत्यादौ घोषप्रति वासयोग्यार्थावस्थापनपरत्वं गङ्गापदस्याश्रीयते, प्रथमं गङ्गापदेन गङ्गार्थः स्मृत इति गङ्गापदार्थस्यैवोपेयत्वान्न वाक्यार्थान्वयीभवति, एवमत्रापि यजेतेत्येतावन्मात्रश्रवणे कार्यमनन्यार्थं स्मृतमिति वाक्यार्थान्वयसमये कार्यस्यानन्यार्थता नावतिष्ठते, कार्याभिधायिपदश्रवणवेलायां प्रथमं कार्यमनन्यार्थं प्रतीतमित्येतदपि न सङ्गच्छते व्युत्पत्तिकाले गवानयनादिक्रियाया दुःखरूपाया इष्टविशेषसाधनतयैव कार्यताप्रतीतेः, अतो नियोगस्य पुरुषानुकूलत्वं सर्वलोकविरुद्धं नियोगस्य सुखरूपपुरुषानुकूलसुखरूपतां वदतः स्वानुभवविरोधश्च

योग्यानुपलम्भं दूषणमाह नियोगस्येति, यागादिजन्यपरमापूर्वस्यान्त्येष्ट्यनन्तरभावित्वात्तद्व्यावृत्त्यर्थं कारीर्या वृष्टिकामो यजेतेत्युक्तं, यद्यपीति वृष्ट्यादिसिद्ध्यनियमान्नियोगोऽनुपपन्न इति तदनुकूलत्वाननुभव इति चेन्न वृष्ट्याद्यसिद्धिरपि नियमेन नास्तीति कदाचित् नियोगः सिध्यतीति तदानीं नियोगसुखाननुभव इति योग्यानुपलम्भ इत्यर्थः तस्मिन्निति, तस्मिन्नियोगे अनुकूलतापर्यायसुखत्वानुभूतिर्न विद्यत इत्यर्थः । एवमिति स्पष्टम् । अत्रायमर्थ उक्तो भवति किं केवलेन कार्याभिधायिपदेन स्वप्रधानतया कार्यप्रतीतिः, उत पदान्तरसमभिव्याहृतेन, न तावत्केवलेन तत्र दुःखरूपधात्वर्थमात्रप्रतीतेः, एवं स्वप्रधानतया प्रथमं कार्यपदेन प्रतिपन्नमस्तु तथाऽपि वाक्यार्थानुपयोगित्वात् न तावत् प्रतिपाद्यं क्रियावत् न च पदान्तरसमभिव्याहृतेन इष्टस्यार्थान्तरस्य

साधनतयैव प्रतीतेः । एवं स्वप्रधानतायां प्रमाणाभावान्नियोगस्य सुखस्वरूपत्वं न सम्भवति । किञ्च योग्यानुपलम्भरूपबाधकप्रमाणबाधितं चेति कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति लक्षणवाक्यं दूषयति कृतिमित्यादिना किमित्यादि स्पष्टम् । शेषशेषित्वं लक्षणं पराभिमतमाशङ्कते कार्येति, कृत्युद्देश्यत्वं दूषयति—

**कारीर्या वृष्टिकामो यजेतेत्यादिषु सिद्धेऽपि नियोगे सृष्ट्यादिसिद्धिनिमित्तस्य वृष्टिव्यतिरेकेण नियोगस्यानुकूलता नानुभूयते । यद्यप्यस्मिन् जन्मनि वृष्ट्यादिसिद्धेरनियमः, तथाऽप्यनियमादेव नियोगसिद्धिरवश्याश्रयणीया तस्मिन्ननुकूलतापर्यायसुखानुभूतिर्न विद्यते, एवमुक्तरीत्या कृतिसाध्येष्टत्वातिरेकिकृत्युद्देश्यत्वं न विद्यते, कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति चेत् किमिदं शेषित्वं किञ्च शेषत्वमिति वक्तव्यं, कार्यप्रतिसम्बन्धी शेषः ।**

एवमिति, कार्यप्रतिसम्बन्धिप्रतिसम्बन्धित्वं हि कार्यत्वमेवेत्यर्थः । ततः किमित्यत्राह कार्यत्वमेवेति, कार्यत्वं नाम कृत्युद्देश्यत्वं, कृत्युद्देश्यत्वं च कृतिशेषित्वं कृतिशेषित्वं च कार्यत्वमित्युक्तं भवति, कृत्युद्देश्यत्वं कृतिशेषित्वमित्युक्ते कृत्युद्देश्यत्वमेव कृत्युद्देश्यत्वमित्युक्तं भवतीत्यर्थः । परोद्देशप्रवृत्तकृतिव्याप्यर्हत्वं शेषत्वमित्य पक्षे ऽप्ययमेव दूषणप्रकारः । किञ्च कृतेरशेषत्वप्रसङ्ग इति भाष्येऽभिहितम्, उद्देश्यत्वं नामेति स्पष्टं, पुरुषस्येति न हि कृतेः पुरुषव्यापाररूपायाः प्रयोजनं नामास्ति, तस्मात् कृतिप्रयोजनं नाम कृतिमत्पुरुषस्य कृत्यारम्भप्रयोजनमेव, तच्चेष्टत्वकृतिसाध्यत्वान्तरभूतमित्यर्थः कस्तर्हि शेषशेषिभाव इत्याकाङ्क्षायां शेषः परार्थत्वादिति सूत्रं व्याचष्टे अयमेव हीति, परगतातिशयाधानस्यायोगव्यवच्छेदश्चेच्छेषिणयतिव्याप्तिः, अन्ययोगव्यवच्छेदश्चेदसंभव इति तदुभयव्यावृत्त्यर्थं परगता-

तिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपमित्युक्तं, शेषभूतस्य स्वगतातिशयाधानमपि परगतातिशयाधानार्थमित्यर्थः । स्वेच्छा वा परेच्छा वा न तत्र नियमः

तत्प्रतिसम्बन्धित्वं शेषित्वमिति चेत्, एवं तर्हि कार्यत्वमेव शेषित्वमित्युक्तं भवति, कार्यत्वमेव विचार्यते परोद्देशेन प्रवृत्तकृतिव्याप्त्यर्हत्वमेव शेषत्वमिति चेत् कोऽयं परोद्देशो नामेति अयमेव हि विचार्यते, उद्देश्यत्वं नामेप्सितसाध्यत्वमिति चेत् किमिदमीप्सिततत्वं कृतिप्रयोजनत्वमिति चेत् पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनं, स चेच्छाविषयः कृत्यधीनात्मलाभ इति पूर्व्वोक्त एव, अयमेव हि सर्वत्र शेषशेषिभावः परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपम्

यथासम्भवमेव, न हि शेषभूतस्य व्रीह्यादेः शेषिणो यागस्यापीच्छासम्भवः तत्रान्येच्छयैव ह्युपादेयत्वं, ततो यथोक्त एवार्थः । इदं शेषित्वं पराभ्युपेतस्य कार्यस्य न सम्भवति फलोत्पत्तीच्छयैवोपादेयत्वात्तस्याशेषित्वमेव, उक्तलक्षणस्य वैदिकोदाहरणं दर्शयति फलोत्पत्तीति, अन्यत्सर्वं व्रीह्यादि लौकिकोदाहरणमाह गर्भेति, औपनिषदोदाहरणमाह एवमिति, नित्यस्यानित्यस्य चेत्युभयविभूतिरुच्यते ईश्वरस्य चिदचितोश्च शेषित्वं शेषत्वं च प्रामाणिकं चेदुक्तलक्षणं तत्र वर्त्तेत, किं तत्र प्रमाणमित्यत्राह सर्वस्य वशीत्यादि, तस्मात्प्राभाकरोक्तं निरूपकेषु न शोभत इत्याह क्रतीति, कार्यानुबन्धिनमप्यर्थं दूषयति अपि चेत्यादिना, कार्ये स्वकीयत्वबुद्धिमान्नियोज्यः, तत्साधने कर्म्मणि स्वकीयत्वबुद्धिमानधिकारी तदनुष्ठाता कर्तेति तिस्रोऽवस्थाः तत्र यजेतेत्यादिपदैः नियोज्यसामान्यं प्रतिपन्नम् ।

स शेषः, परः शेषी, फलोत्पत्तीच्छया यागादेस्तत्प्रयत्नस्य चोपादेयत्वं यागादिसिद्धीच्छयाऽन्यत्सर्वमुपादेयम्, एवं गर्भाधानादीनामपि पुरुषविशेषातिशयाधानेच्छयोपादेयत्वमेव स्वरूपम् । एवमीश्वरगतातिशयाधानेच्छया उपादेयत्वमेव चेतनाचेतनात्मकस्य नित्यस्यानित्यस्य च सर्वस्य वस्तुनः स्वरूपमिति सर्वमीश्वरशेषभूतं सर्वस्य चेश्वरः शेषीति सर्वस्य वशी सर्वस्येशानः पतिं विश्वस्येत्याद्युक्तं,—कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत इति—अयमर्थः श्रद्दधानेष्वेव शोभते ।

स्वर्गकामादिपदैर्नियोज्यविशेषः समर्प्यत इति प्राभाकरैः षष्ठाद्याधिकरणे प्रपञ्चितं, तद् दूषयति स्वर्गकामइत्यादिना, कर्तृवाचित्वं शब्दानुसासनसिद्धं न तु नियोज्यवाचित्वम्, अतःस्वर्गकामादिपदान्यपि न नियोज्यविशेषसमर्पकाणीति दूषणशरीरं लकारवाच्यकर्तृविशेषसमर्पणपराणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पणपरत्वं शब्दानुशासनविरुद्धमित्यस्यायमभिप्रायः कर्तृवाचिनो लकारस्यापि नियोज्यसमर्पणपरत्वं शब्दानुशासनविरुद्धमिति पूर्वपक्षयुक्तिं शङ्कते साध्येति, न हि काम्यकामः साधने नियोक्तुं शक्यते इति न्यायात्स्वर्गकामस्यास्वर्गसाधने कर्तृत्वान्वयो न घटत इति तृतीयं पूर्वपक्षे युक्तिरगत्या शङ्किता । परिहरति नियोज्यत्वेति, स्वर्गकामस्यास्वर्गसाधने नियोज्यत्वान्वयोऽपि न सम्भवतीतिनियोज्यविशेषसमर्पणपरत्वमप्ययुक्तं, तदुपपत्तये स्वर्गसाधनत्वं कार्यस्य निश्चीयते इति चेत्कर्तृविशेषसमर्पकत्वोपपत्तये स्वर्गसाधनत्वं निश्चीयतां नियोज्यत्वं कर्तृत्वं वा स्वर्गकामस्यास्वर्गसाधने नोपपद्यते । अत उभयपक्षेऽपि कार्यस्य स्वर्गसाधनत्वनिश्चयसापेक्षत्वमविशिष्टम्, इयान्विशेषः कर्तुर्लकारवाच्यत्वात्स्वर्गकामादिपदानां कर्तृविशेषसमर्प-

यमेव शिर इत्यादौ ब्रह्मगुणत्वेन श्रुताः सर्वत्र प्रसज्येरन्, नेत्याह—

सू॰ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनामप्राप्तिः तेषामब्रह्मगुणत्वात् ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात् प्रियशिरस्त्वादीनाम् ।

टी॰ अनुक्तानामपीति त्वं तद्वसिष्ठ इति वा प्राणो वसिष्ठ इति वा वेद्भ्यवचनव्यत्ययाऽनुक्तानामित्यर्थः । सू॰ आनन्दादयः प्रधानस्य ॥ ११ ॥ स्वरूपगुणानां—स्वरूपप्रतीत्यनुबन्धिगुणानामित्यर्थः । किमानन्दादयो गुणाः सर्वासु विद्यासु उपसंहार्या? उत यत्र श्रूयन्ते तत्रैवे? ति, किमानन्दादीनामैश्वर्यादिवत् गुणपृथक्स्थितिमात्रम्? उत ब्रह्मस्वरूपवत् प्रतीत्यनुबन्धित्व? मिति, फलफलिभावः स्फुटः, अप्रकरणेति स्वप्रकरणे समानप्रकरणे चानधीतानामुपसंहारेऽतिप्रसङ्गादिति भावः । अभेदादिति वर्त्तत इति सर्वाभेदादन्यत्रेमे इति सूत्रस्याऽभेद—शब्दोऽत्रानुवर्त्तत इत्यर्थः । सर्वाभेदादिति समस्तस्याप्यभेद—शब्दस्यानुवर्त्तनमुपपद्यते बुद्ध्या तावतोंऽशस्य निष्कृष्य परामर्शात्, यथा अथ शब्दानुशासनं केषां शब्दानामित्यत्रानुशासन—शब्दस्येति भावः । सौत्रं प्रधान—शब्दं व्याचष्टे "गुणिन" इति, अभेदादैक्यात् अभेदादित्यनेन फलितमाह "गुणपृथगि"ति, गुणानामिति साधारणशब्दनिर्देश उत्तरसूत्रशङ्कोत्थानार्थः आनन्दादयः—आनन्दत्वादयः, द्व्येकयोरितिवत् भावप्रधानो निर्देशः । अनन्तरसूत्रशङ्कामाह "एवं तर्ही"ति, सू॰ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ अब्रह्मगुणत्वात्, ब्रह्मगुणत्वाभावात्, तदेवोपपादयति "ब्रह्मण"इति, भेदपदं व्याचष्टे—

सू० अन्यथा शिरःपक्षपुच्छाद्यवयवभेदे सति ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयातां, तथा च सति सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि विरुध्यते । नन्वेवमेव ब्रह्मसम्बन्धिनामैश्वर्यगाम्भीर्यौदार्यकारुण्यादीनां गुणानामनन्तानां गुणपृथक्स्थितत्वमात्रेण तत्रास्रुतानामप्युपसंहारे सति सर्वे सर्वत्र प्रसज्येरन्, आनन्त्यादुपसंहाराशक्तिश्च तत्राह–

टी० "अन्यथे"ति, ततः किमित्यत्राह "तथा चे"ति, आदिशब्दादस्थूलमनण्वह्रस्वमित्यादिवाक्यानि गृह्यन्ते, । नन्वस्यां योजनायां विग्रहविशेषनित्यत्वाभ्युपगमो विरुध्यते शिरःपक्षाद्यवयवभेदे सत्युपचयापचयप्रसङ्गोक्तेः, अतो[1]ऽन्यत्र कृतं योजनान्तरमेव वरं नैवं, योजनान्तरानुपपत्तेर्वक्ष्यमाणत्वात्, अस्यां योजनायां कस्यचिदपि विरोधस्याभावाच्च, तथा हि नात्र कालभेदेन ह्रासवृद्धिपरावुपचयापचय–शब्दौ किं त्वापेक्षिकप्रचितत्वाप्रचितत्वतारतम्यपराविति सर्वव्याख्यातृसंमतमिदम्, अतः कालभेदानपेक्षौ प्रकोष्ठाङ्गुल्योरिव पीनत्वकृशत्वरूपौ उपचयापचयौ सूत्रेण प्रसञ्जनीयतया विवक्षितौ प्रकोष्ठाङ्गुल्यादयो ह्यवयवाः पीनाः कृशाश्चोपलभ्यन्ते, न च तेषां स्थूलत्वकृशत्वे कालभेदायत्ते कालभेदाधीनवृद्धिह्रासविवक्षायां हि नित्यत्वविरोधः । किञ्च न तावदन्तवत्त्वं साक्षादेव सूत्रेण प्रसञ्जनीयतया विवक्षितम्, उपचयापचयशब्दयोस्तत्राचित्याभावात्, शिरःपक्षादिमत्त्वस्यान्तवत्त्वे प्रयोजकत्वाभावाच्च ईश्वरसंनिकृष्टविषयत्वादिकं हि तत्र प्रयोजकं, नाप्यवयवप्रवेशनिर्गमौ प्रसञ्जनीयौ नित्यविग्रहेऽपि तयोरिष्टत्वात्, परमव्योमनिलये हि भगवद्विग्रहे तदंशभूतव्यूहविभवादिविग्रहप्रवेशनिर्गमौ प्रामाणिकौ, एवमपि परिमाणतारतम्यप्रसङ्गो विग्रहस्य दुर्वार इति चेन्न विकल्पासहत्वात्, किं कालभेदायत्तं परिमाणतारतम्यं विवक्षितम्? उत स्वेच्छायत्तं? न प्रथमः हिरण्यगर्भ–सन-

[1] व्याख्यान्तरकृतं योजनान्तरमेव वरमित्यधिकम् ।

क–सनन्दादिदेहेष्वाप्रलयादेकरूपेषु व्यभिचारात्, द्वितीयेऽपि किमिच्छया परिमाणतारतम्यार्हत्वं प्रसञ्जनीयं तर्हीष्टप्रसङ्गः स्यात्, तदंशभूतेषु विग्रहेषु बालयौवनवामनत्वमहीयस्त्वादिदर्शनात्, यदि देशविशेषावच्छिन्नस्येश्वरविग्रहविशेषस्य तत्तारतम्यं तच्चाप्यभावादनुपपन्नम्, अतः स्थूलत्वकृशत्वरूपं प्रदेशभेदेन युगपद्वाविपरिमाणतारतम्यमस्थूलत्वादिश्रुतिविरुद्धं स्वरूपे प्रसञ्जनीयतया विवक्षितमिति न कश्चिद्विरोध इति ॥ अनन्तरसूत्रस्य शङ्कामाह–"नन्वि"ति, एवमेवेत्येवकारः एवमेव प्रसज्येरन्नित्युत्तरत्रान्वयात् प्रसङ्गस्यावर्जनीयत्वपरः, ब्रह्मसम्बन्धिनामेवेत्यत्रैवकारो ब्रह्मसम्बन्धित्वदार्ढ्यार्थः, । ततश्चैश्वर्यादीनां वास्तवत्वसिद्धिर्विवक्षिता भवति ॥

## सू० इतरे त्वर्थसामान्यात् ॥ १३ ॥

भा० तु–शब्दश्चोद्यं व्यावर्त्तयति, इतरे त्वानन्दादयोऽर्थसामान्यात्सर्वत्रानुवर्त्तन्ते, ये त्वर्थसमाना अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिनस्तेऽर्थस्वरूपवत्सर्वत्रानुवर्त्तन्ते, ते च गुणाः सत्यज्ञानानन्दामल[1]त्वादयः यतो वा इमानीत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेत्यानन्दादिभिश्च स्वरूपतो निरूप्यते, अत उपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोऽनुवर्त्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नास्तेषां गुणपृथक्स्थिति[2]त्वेऽपि प्रतीत्यनुबन्धित्वाभावात् ये यत्र श्रुतास्ते तत्रोपसंहार्या इति निरवद्यम् । यद्युपचयापचयप्रसङ्गात् प्रियशिर-

१ सत्यज्ञानानन्दामलत्वानन्तत्वानि इति पा० ।
२ गुणपृथक्स्थितत्वेऽपीति पा० ।

स्त्वादयो ब्रह्मणः पुरुषविधत्वनिरूपणमात्रार्थाः न तु ब्रह्मगुणाः तथ्यंनथारूपस्य ब्रह्मणस्तथात्वेन रूपणं किमर्थं क्रियते, अतथाभूतस्य हि तथात्वरूपणे केनचित्प्रयोजनेन भवितव्यं यथाऽऽत्मानं रथिनं विद्धीत्यादिनोपासकस्य तदुपकरणानां च रथिरथादित्वरूपणमुपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तं, न चेह तथाविधं किञ्चित्प्रयोजनं दृश्यत इति बलाद्ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यं तत्राह–

टी० सू· इतरे त्वर्थसामान्यात् ॥ १३ ॥ अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिन इति अर्थस्वरूप–शब्देन धर्मिस्वरूपमुच्यते "अर्थस्वरूपद्भाति समाधिः सोऽभिधीयत" इति हि शौनकवचनम्, अर्थप्रतीतिकाले प्रतीयमानत्वनियमः सामान्यशब्दाभिहितं साम्यमित्यर्थः । तेषामानन्त्यादसम्भवशङ्कां परिहरन् शक्योपसंहारतां दर्शयति "ते चे"ति, तेषामर्थप्रतीत्यनुबन्धित्वं श्रुत्या दर्शयति "यतो वा"इति, जगत्कारणतयोपलक्षितमिति केषुचिदुपासनेषु जगत्कारणत्वमनुसन्धेयं तज्जलानिति शान्त उपासीतेत्यादिवाक्यविहितेषु केषुचित्, एवं च सति यत्रानुसन्धेयं तत्र ज्ञाप्यान्तर्गतत्वात् जगत्कारणत्वं विशेषणं यत्र त्वननुसन्धेयं तत्रोपलक्षणं ज्ञाप्यानन्तर्गतत्वात्, अत एव हि जन्मादिसूत्रभाष्ये उपलक्षणत्वं विशेषणत्वमपि कारणत्वस्याङ्गीकृतं, प्रकृतिपुरुषकालविशिष्टस्य लक्षणं जगत्कारणत्वं तत्र विशेष्यांशस्य लक्षणमानन्दादयः, तत्र विशिष्टानुसन्धाने कारणत्वमनुसन्धेयं न तु विशेष्यानुसन्धान इत्यभिप्रायेण उपलक्षितमित्युक्तम्, अमलत्वश्रुतिर्निष्कलं निष्क्रियम् अपहतपाप्मे त्यादिर्द्रष्टव्या, स्वरूपतः–असाधारणाकारेण । अनन्तरसूत्रशङ्कामाह "यदी"ति, अतथाभूतस्य तस्य तथात्वरूपणे प्रयोजनं दृष्टमत्र तु प्रयोजनाभावात् प्रियशिरस्त्वादिकं न रूपणमात्रमपि तु गुण एवेत्यर्थः ॥

सू० आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

सू० प्रयोजनान्तराभावादध्यानायायं रूपणोपदेशः क्रियते आध्यानमनुचिन्तनमुपासनमुच्यते ब्रह्मविदाप्नोति परमित्यत्रोपदिष्टाध्यानरूपवेदनसिद्धये ह्यानन्दमयब्रह्मप्रतिपत्त्यर्थम् आनन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वोपदिश्यते, यथा अन्नमयः पुरुषोऽयं देहः शिरः पक्षपुच्छादिभिस्तस्येदमेव शिर इत्यादिना बुद्धावारोप्यते, यथा च प्राणमयमनोमयविज्ञानमयास्तस्य प्राण एव शिर इत्यादिना प्राणाद्यवयवैर्बुद्धावारोप्यन्ते, एवमेवैभ्योऽर्थान्तरभूतस्तदन्तरात्माऽऽनन्दमयोऽपि प्रियमोदादिभिरेकदेशैः शिरःप्रभृतित्वेन रूपितैराध्यानाय बुद्धावारोप्यते, एवमानन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादीनां न सर्वदाऽऽनन्दमयप्रतीतावनुवर्त्तन्ते, ॥

सू० आत्म-शब्दाच्च ॥ १५ ॥

अन्योऽन्तर आत्माऽऽनन्दमय इत्यात्म-शब्देन निर्देशादात्मनश्च शिरःपक्षपुच्छासम्भवात्प्रियशिरस्त्वाद्यस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते। नन्वन्योऽन्तर आत्मा प्राणमयेऽन्योऽन्तर आत्मा मनोमय इत्यात्म-शब्दस्याऽनात्मस्वपि पूर्वं प्रयुक्तत्वादन्योऽन्तर आत्माऽऽनन्दमय इत्यात्म-शब्दस्यात्मविषयत्वं कथं निश्चीयते तत्राह—

सू० आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

अन्योऽन्तर आत्माऽऽनन्दमय इत्यत्रात्म-शब्देन परमात्मन एव ग्रहणम् इतरवत्, यथा इतरत्र आत्मा वा इदमेक एवाग्र आसीत् स ऐक्षत लोकान्नुसृजा" इत्यादिष्वात्म-शब्देन परमात्मन एव ग्रहणं तद्वत्, कुत एतत् ।

टी० सू० आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ आध्यानमनुचिन्तनमिति "स्याच्चिन्ता स्मृतिराध्यान"मिति हि नैघण्टुकाः, उपासनोपयोगिशास्त्रजन्यज्ञानसिद्ध्यर्थमित्यर्थः । परोक्षार्थस्य बुद्धावारोपणं शिरःपक्षादिरूपणादेव हि भवति, प्रियमोदादिभिरेकदेशैरिति, अतिशयितसुखानामपि ब्रह्मसुखैकदेशत्वेन ब्रह्मणोऽपरिच्छिन्नसुखत्वमुक्तं भवतीति भावः न सर्वेति शास्त्रेण प्रतिपत्तौ बुद्ध्यारोहणाय प्रियशिरस्त्वादि प्रतिपत्तव्यम् एवमपरिच्छिन्नानन्दे प्रतिपन्ने सत्युपास्तौ प्रियशिरस्त्वादिकं नानुसन्धेयमित्यर्थः । सू० आत्मशब्दाच्च ॥ १५ ॥ आत्मनो निरवयवत्वसिद्धिमुपजीव्य प्रवृत्तमिदं सूत्रमित्यभिप्रायेणाह "आत्मनश्चे"ति, अनन्तरसूत्रस्य शङ्कामाह "नन्वि"ति । सू० आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ इतरवदिति, आत्मा वा इदमित्यादिष्वपि ।

सू० उत्तरात्, सोऽकामयत बहु स्यां प्रजायेयेत्यानन्दमयविषयादुत्तराद्वाक्यात् ॥

## सू० अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनान्नोत्तरास्मिन्नेतुं शक्यत इति चेत् स्यादवधारणात्, स्यादेव निश्चयः कुतः अवधारणात् पूर्वत्रापि तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति परमात्मन एव बुद्ध्याऽवधारितत्वादन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा, तदनन्तरं च प्राणमयादन्तरे मनोमये, ततो विज्ञानमये

तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिस्तदन्तराभावादुत्तराच्च सोऽकामयतेति वाक्यात् प्रतिष्ठितेत्युपक्रमे ऽप्यपरमात्मनि परमात्मबुद्ध्याऽऽत्म–शब्दान्वय इति निरवद्यम् ॥

आनन्दाद्यधिकरणं समाप्तम् ॥

टी० उत्तरात् स ईक्षतेत्यादिवाक्यात् परमात्मन एव ग्रहणमित्यर्थः । सू· अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥ पूर्वत्रेत्यादि उपक्रमाधिकरणन्यायेन पूर्वानुसारेण उत्तरं नेयं तस्मादुत्तरवाक्यात् पूर्वस्यात्मविषयत्वं न निश्चेयमित्यर्थः । स्यादित्यादि परमात्मन एव बुद्ध्यावधारितत्वात् विषयीकृतत्वात्, एवमुपक्रमोपक्रमे परमात्मन एवात्मबुद्धिविषयत्वाच्चोत्तरवाक्यस्योपक्रमबाध इत्यर्थः । तर्हि मध्ये त्वपरमात्मनि परमात्मवाचिशब्दः कथमित्यत्राह "अन्नमया" दिति, प्राणमयादिष्वप्यात्म–शब्दोऽपरमात्मबुद्ध्योपचारतो न प्रयुक्तः, अपि तु परमात्मबुद्ध्यैव प्रयुक्तः, अन्तः प्रविष्टः शास्ता जनानामिति तत्तदन्तःप्रवेशेन नियन्तृत्वं ह्यात्मत्वं, तत्र प्राणमयेऽन्नमयादन्तरत्वमात्रेण परमात्मबुद्धिर्जाता तस्याप्यन्तरदर्शनेन तत्रापि परमात्मबुद्धिर्जाता, पूर्वत्र तु निवृत्ता उत्तरोत्तरे तत्तदन्तरे चात्मशब्दः प्रयुक्तः, यस्यान्यदन्तरं नास्ति ईक्षणादिकं च श्रुतं तस्मिन् परमात्मबुद्धिरात्मशब्दश्च प्रतिष्ठितौ एवम[1]त्रापि परमात्मबुद्धिविषय एवात्मशब्दयोगादयमप्यात्म–शब्दः परमात्मविषय एवेति नात्रोपक्रमबाध इत्यर्थः । परे त्वानन्दरूपत्वविज्ञानघनत्वसर्वगतत्वसत्यत्वसर्वात्मत्वधर्माणां सर्वविद्याऽननुगतत्वं पूर्वपक्षीकृत्य सर्वाभेदात् सर्वत्र ब्रह्मण एकत्वात्तेषां सार्वत्रिकत्वमाहुः, तत्र भाष्ये तु सर्वात्मकत्वसर्वगतत्वयोः पृथगनुक्तिरानन्त्यान्तर्भावात्, सर्वाभेदादित्यत्राभेद–शब्दमात्रानुवृत्तिर्युक्ता । अथ शब्दानुशासनं केषां शब्दानामितिवत् सर्वस्याभेदात् सर्वत्राभेदादिति समासत्रैरूप्यप्रसङ्गात् सर्वशब्दाननुवृत्तिः पूर्वाधिकरणेऽपि सप्तमीसमास इति चेत्र तदनुपपत्तेरुक्तत्वात्, प्रियशिरस्त्वेति प्रियं मोदः प्रमोद इति परस्परापेक्षया

१ एवं पूर्वत्रापि इति पां· ।

भोक्त्रन्तरापेक्षया चोपचयापचयौ स्तः, अतः सजातीयविजातीयस्वगतभेदरहिते ब्रह्मणि न प्रियशिरस्त्वादयः ते तु कोशधर्माः तथाऽपि ब्रह्मगुणत्वाभ्युपगमेन न्यायः प्रदर्शितः संयद्वामत्वादीनामसार्वत्रिकत्वायेत्याहुः । तत्र कोशधर्मत्वं प्रागेव निरस्तं, ब्रह्मणो निर्भेदत्वं च प्रमाणविरुद्धमिति बहुश उक्तं, ब्रह्मगुणानां भोक्त्रन्तरगतमोदाद्यपेक्षया नापचयः, न तेषां वृद्धिरूपश्चोपचयोऽस्ति किन्तु सर्वेभ्योऽतिशयः स चैकरूपः, न च परस्परापेक्षया प्रकर्षापकर्षौ सर्वेषां स्वरूपतो विषयतश्च निरतिशयत्वात् अत उपचयापचयसद्भाव निषेधः किन्तु शिरआदिभेदे सति स्थूलत्वकृशत्वाद्यवयप्रसङ्गादेवाब्रह्मगुणत्वं प्रियशिरस्त्वादीनामिति युक्तमन्यथा शिरःशब्दवैयर्थ्यं च स्यात्, प्रियमोदाद्यप्राप्तिरिति तदा वक्तव्यम्, इतरे त्विति अर्थस्य ब्रह्मण एकत्वादित्यतोऽपि तुल्यत्वादिति तु स्वरसम्, आनन्दज्ञानादिशब्दा आनन्दत्वादिसामान्यमुखेन प्रवृत्ताः स्वार्थं परित्यज्याखण्डं वस्तु लक्षयन्ति, अत आनन्दादयः पदार्थाः सर्वेऽप्युपसंहर्तव्या इत्यप्ययुक्तं शब्दप्रमाणके वस्तुनि यथाशब्दं गुणाभ्युपगमस्य युक्तत्वात्, गुणाविवक्षायामेकेतरशब्दवैयर्थ्याद्, अतद्वावृत्तिमुखेन प्रतिपत्तेर्मुख्यार्थापवादाभावेनायुक्तत्वाच्च शङ्किताश्चापवादाः प्रागेव परिहृताः आध्यानायेत्यधिकरणान्तरं वर्णितम्, इन्द्रियेभ्यः परा ह्यर्था इत्यादिर्विषयः इन्द्रियादिभ्योऽर्थादीनां प्रत्येकं परत्वं प्रतिपाद्यं तथा प्रतिपन्नत्वाद्वाक्यैकत्वासम्भवाद्वाक्यभेदो न दोषः इति पूर्वपक्षं कृत्वा वाक्यैकत्वसम्भवात् पुरुषस्य सर्वास्मात्परत्वे प्रतिपाद्यं प्रत्येकं परत्वप्रतिपादने प्रयोजनाभावात्, दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तका इति स्मार्तफलानामिहाश्रुतत्वात्, वाक्यैक्ये सम्भवति तत्कल्पनेन वाक्यभेदायोगात्, परप्रतिषेधकाष्ठाशब्दादिभिः पुरुषप्रतिपत्त्यर्थत्वतात्पर्यावगमात् आत्म-शब्दाच्च, गूढोत्मा न प्रकाशत इति दुरवगमतयोक्तस्यात्मनः प्रतिपत्त्यर्थत्वाच्चेति वर्णयन्ति आध्यान-शब्दश्च ध्यानपूर्वकसम्यग्दर्शनपर इति तद्युक्तं कृतकरत्वात् अवान्तरवाक्यभेदो दुरपह्नवः, महावाक्यैकत्वेन परमपुरुषपरत्वं चाधिकरणद्वयेन समन्वयाध्याये चिन्तितं, न च बहूनान्ततस्ततः परत्वप्रतिपाद-

नस्य महावाक्यभेदकत्वमिह परिहर्त्तव्यं बहूनां प्राणमयादीनां तत्त-दन्तरत्वप्रतिपादनवन्मनुष्यगन्धर्वानन्दादीनां पूर्वपूर्वानन्दाधिकत्वप्रतिपा-दनवच्च महावाक्यैकत्वाविरोधस्य स्फुटतरत्वात्, आत्मगृहीतिरित्यादि चाधिकरणान्तरं वर्णितम् आत्मा वा इदमेक एवेत्यादिर्विषयः "स इमां-ल्लोकानसृजते"ति लोकस्य सृष्टिश्रवणात्तस्याश्च प्रजापतिकर्त्तृकत्वप्रसिद्धेः परमात्मविवक्षायां महाभूतादिसृष्टेर्वक्तव्यत्वादिह तदश्रवणादात्मैवेदमग्र आसीत् पुरुषविध इत्यादिष्वात्म-शब्दस्य सशरीरे हिरण्यगर्भेऽपि प्रयोग-दर्शनात्ताभ्यो गामानयत्ताभ्योऽश्वमानयदित्यादिव्यापाराच्च परमात्मव्य-तिरिक्तः कश्चिदिति पूर्वपक्षीकृत्यात्मन आकाश इत्यादिवदिहापि परमा-त्मगृहीतिरात्मत्वादेर्मुख्यत्वाच्च उत्तरात्स ईक्षतेति श्रवणात् लोकसृष्टि-प्रतिपादकवाक्यान्वयदर्शनाच्च पर इति चेत् न स्यादेव परः, एकत्वावधा-रणात्, लोकसृष्टिस्तु महाभूतसृष्ट्यनन्तरभाविनीति व्याचक्षते वर्णकान्तरं च कृतं, वाजसनेयके योऽयं विज्ञानमयः इत्यादि छान्दोग्ये सदेवेत्यादि च विषयः आम्नानवैषम्यादतुल्यार्थत्वं क्वचिदात्मशब्देनोपक्रमः अन्यत्र सच्छब्देनेति पूर्वपक्षं कृत्वा सद्विद्यायामप्यात्मगृहीतिः, यथा वाजसनेयि-नामुत्तरात्तादात्म्योपदेशात् उपक्रमेणान्वयात् तत्र च आत्म-शब्दाश्रवणा-न्नेति चेत् स्यादेवात्मगृहीतिः एकविज्ञानेन सर्वविज्ञानावधारणात्, अन्यथा हि सद्विज्ञानेनात्मा न ज्ञातः स्यात्, सामान्यस्य सच्छब्दस्य विशेषाकाङ्क्षस्य विशेषनिष्ठतया तुल्यार्थत्वं युक्तमिति उभयथाऽप्यधिकरणं पादासङ्गतं, विद्याभेदाभेदविचारात्मकत्वाभावात्, आद्ये वर्णके समन्वयाध्याय एवायं विचारः प्राप्तः कारणविषयत्वात् कृतकरत्वं च यदा सतोऽपि ईक्षणादिना परमात्मत्वमीक्षणस्य चागौणत्वमात्म-शब्देन साधितं तदात्मविषये ईक्ष-णादियुक्तवाक्ये कः संशयः। अत एव द्वितीयवर्णकमप्यनपेक्षितम् ईक्षत्यधि-करणे सच्छब्दस्य प्रधानविलक्षणब्रह्मपरत्वं हि निरूपितं यदाऽर्थान्तररूढानामाकाशादिशब्दानामपि कारणवाक्यस्थानां परमात्मविषयत्वं स्था-पितं तदा साधारणस्य सच्छब्दस्य परमात्मविषयत्वे कः संशयः, उदाहर-णमप्ययुक्तं योऽयं विज्ञानमय इति वाक्यस्य जीवविषयत्वात्, प्रकरणस्य-

जीववाचिशब्दानां क्वचित् परमात्मसामानाधिकरण्यस्य कृतनिर्वाहत्वाच्च पूर्वमेव वर्णक्रमपरैरादृतम् अधिकरणभेदे सूत्रयोजनाभेदे च यद्दूषणजातमुक्तं तत्सर्वमपरेषां पक्षेऽपि समानम् । अन्ये तु आनन्दविज्ञानैश्वर्यतेजःशक्त्यादयो ब्रह्मद्वारेण सन्निधानोपपत्तेः सर्वत्रोपसंहार्याः । सत्यकामत्वादीनां तेषु गुणेषु यथायोगमन्तर्भाव इत्याहुः । भाष्ये त्वैश्वर्यशक्त्यादीनां पृथगनुक्तिरानन्त्येऽन्तर्भावात् । ते हि वस्त्वपरि[1]च्छेदौपयिकाः गुणतोऽप्यानन्त्यमनन्त–शब्देन विवक्षितमिति भाष्यविदां स्फुटं, प्रियशिरस्त्वेति प्रियमोदप्रमोदादीनाम् उपचयापचयात्मकत्वादंशभेदे सति ते सम्भवन्ति न ब्रह्ममात्रे तस्य निरस्तसमस्तविकल्पत्वात्, । आनन्दज्ञानादयोऽपि उपचयापचयरूपतया न सार्वत्रिका इति शङ्कायामाह "इतरे त्वि"ति, ऐश्वर्यादयोऽर्थसामान्याच्छक्तिरूपत्वान्नोपचयापचयात्मकाः अतः सार्वत्रिकाः, एतदुक्तं भवति आदित्यादिस्थानभेदादधिष्ठेयभेदाच्च विषयभेदाच्च ऐश्वर्यज्ञानानन्दादीनामुपचयापचयात्मकतया तदवच्छिन्नतया ब्रह्मणोंऽशभेदः स्यात्, यैरुपचयापचयात्मकैर्गुणैर्गुणिभेदः न ते स्वा[2]भाविकाः ये ब्रह्ममात्रसम्बन्धिनः शक्तिमात्ररूपा गुणास्ते सर्वत्रोपसंहार्या इति, तदयुक्तम् अर्थसामान्यशब्दस्य शक्तिवाचित्वाभावात्, ब्रह्मगुणानां सर्वदा सर्वत्र स्वरूपतो विषयतश्चानवच्छिन्नत्वात् ज्ञानैश्वर्यादिशब्दानां शक्तिवाचित्वाभावाल्लयेऽपि तदवस्थप्रकृत्यादीनां ब्रह्मनियाम्यत्वधार्यत्वादे"र्यस्य मृत्युः शरीर"मित्यादि शरीरशरीरिभावश्रुतिसिद्धत्वाच्च, अत उपचयापचयरूपत्वाभावात् गुणानामधिष्ठेयादिभेदेऽपि नांशभेदः, तथा भवद्भिरेव न स्थानत इत्यत्र तस्माच्चाध्यात्मादिस्थानभेदेन भेद इति वदद्भिरुपपादितं च । किञ्च ईश्वरस्यैव ह्यधिष्ठेयभेदाद्भेदः तस्य तत्कृतांशभेदाभावेऽभिहिते स एव ब्रह्मेति स्यात्, ब्रह्मणि निर्भेदत्वाभ्युपगमात् तस्य चेश्वरे दृष्टत्वात्, ततश्च गुणिभेदकगुणप्राप्त्यनुपपत्तेः शक्तिमात्ररूपगुणानुवृत्तिरित्यनुपपन्नम् । आध्यानायेति चाधिकरणान्तरमाहुः कठवल्ल्यां यच्छेद्वाङ्मनसी इत्याद्युक्तेन्द्रि-

[1] वस्त्वपरिच्छेदौपयिकः इति पा० ।
[2] सार्वत्रिकः इति पा० ।

यसंयमनं शिरःपक्षपुच्छादिकल्पनं च विषयः ध्यानविध्यसन्निधानात् तत्त्व-प्रतिपत्त्यर्थमिति पूर्वपक्षः तमेकनेमित्यादौ चक्रत्वपरिकल्पनस्य तत्त्वानां ब्रह्मावयवत्वज्ञापनवत् प्रयोजनान्तराभावात् ज्ञानात्मनि अन्योऽन्तर आत्मेत्यात्मव्यपदेशस्य ध्यानार्थतया सङ्गतत्वात् ब्रह्मविदाप्नोति परं दृश्यते त्वग्र्ययेति ध्यानविधेः सन्निहितत्वादसन्निधानेऽप्युत्कृष्टान्वयोपपत्तेः ध्यानार्थमिति सिद्धान्तितं तत्तावत्कठवल्ल्यामयुक्तम् इन्द्रियसंमनरूपप्रयोजनस्य विद्यमानत्वात् । तर्हि प्रतिसर्गक्रमस्य प्रतीयमानस्याविवक्षाप्रसङ्ग इति चेत् न प्रतिसर्गक्रमप्रमित्यनुपपत्तेः, सा च प्रागेव दर्शिता तैत्तिरीयके च येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासत इत्युपास्तेरर्वाचीनफलानां च श्रुतत्वेन संशय एव नास्ति, शिरःपक्षाद्यवयवोपासनस्य ब्रह्मोपासनाङ्गत्वमुपपाद्यमिति चेत् न तस्याशक्योपपादनत्वात् । तच्च तत्त्वप्रतिपत्तिरूपदृष्टफले सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः प्रतिपर्यायं श्रुतानामुपासनानां ब्रह्मध्यानाङ्गत्वे वाक्यभेद इति चेत् ततः किम् अत्रान्तरवाक्यभेदो भवताऽपि दुरपन्हवः आनन्दमयव्यतिरिक्तोपासनानां क्षुद्रफलत्वेनानन्दमयोपासन एव श्रद्धाजननार्थतया महावाक्यैकत्वं तत्रोपपद्यते अतो न ब्रह्मध्यानाङ्गत्वमिति तत्समर्थनार्थमधिकरणभेदकल्पनमनुपपन्नम् । आत्मगृहीतिरित्यादिकं चाधिकरणान्तरं वर्णयन्ति, ऐतरेयके आत्मा वा इदं, वाजसनेयके नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदिति च विषयः, एकत्र उक्थमुक्थमिति प्रजा वदन्तीत्यारभ्य प्रजापते रेतोदेवः प्राण उक्थमित्येव विद्यादिति महाव्रतसम्बन्ध्युक्थविषयोपासिसम्बद्धः प्राणशरीरोऽन्तर्यामी प्रतीयते, वाजसनेयके तु "उषा वा अश्वस्य मेध्यस्य शिरो यः सूर्य" इत्यश्वमेधोपासिसम्बन्धितया पुरुषः प्रतीयते । अत उभयत्रार्थप्रत्यभिज्ञानाभावादर्थभेद इति पूर्वपक्षं कृत्वा मृत्यु-शब्देनात्मगृहीतिरितरवदात्मा वा इतिवदुत्तरात् तन्मनोऽकुरुत इत्यात्मन्वी स्यामिति वाक्यात् स इमान् लोकानसृजतेतिवत् सा पृथिव्यभवदिति लोकसृष्टिप्रतीतिवाक्याच्च वाजसनेयकेऽश्वमेधान्वयात् अशनाया हि मृत्युरित्यशनाया मृत्यु-शब्दान्वयाच्चार्थभेद

इति चेत् न आत्मा वा इदं नैवेह किञ्चनेत्युभयत्रावधारणात् अर्थैक-त्वप्रतीतेः अशनाया-मृत्यु-शब्दौ जगत्सञ्जिहीर्षायुक्तपरमात्मपरौ उपा-सनप्रकरणमुभयत्र परिसमाप्तम् । असमाप्तावप्युपास्यात्मैकत्वं सिध्यति इह सिद्ध आत्मा पूर्वत्राप्युपास्यतया सम्बद्ध इत्याहुः वर्णकान्तरं च कृतम् । आत्मा वा इदमित्यैतरेयकवाक्यम् आत्मैवेदमग्र आसीत् पुरु-षविध इत्यादिबृहदारण्यकवाक्यं च विषयः एकत्राशरीर आत्मा प्रति-पन्नः अन्यत्र तु पुरुषविधः स शरीः सो ऽबिभेदिति भयारत्याद्युपेतश्चेति वाक्ययोरर्थभेद इति पूर्वपक्षं कृत्वा एकत्र स ऐक्षत लोकान्नु सृजा इत्यादि-ना ऽन्यत्र स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजतेत्यादिना चोत्तरवाक्येनो-भयत्र देवतासृष्ट्याम्नानात्, शरीरभयाद्यन्वयादर्थभेद इति चेत् न आत्मैवे-मित्यवधारणेन परत्वावगमात् अशरीरस्यापि परस्य हिरण्यगर्भरूपेण शरी-रग्रहणं भयान्वयश्च घटते, ईश्वरव्यूहानामेव ब्रह्मादीनां सृज्यत्वं यो वै वे-दांश्च प्रहिणोतीति विद्याधिगमादिप्रवृत्तिश्च लीलारूपा संसारधर्मं शरीर-प्रवृत्तिमीश्वरो निरोद्धुं क्षमः नान्य इति भिदेति वर्णयन्ति । अत्र ब्रूमः किम-त्रोपासनयोरेकत्वं सिषाधयिषितम्? उत कारणवाक्ययोरेकार्थत्वं? प्रथ-मस्तु भवद्भिरेव निरस्तः, न हि वयमुपासनयोरैकत्वं ब्रूम इति वदद्भिरुपपा-दितं च तद्द्वयोरश्वमेधमहाव्रतोक्थविषयत्वात्, द्वितीये त्वध्यायासङ्ग-तिः कारणविचारस्य समन्वयाध्यायकृतत्वात्, कृतकरत्वं चैकत्वावधारणा-सङ्कल्पपूर्वकप्रपञ्चसर्गादिभिः परमात्मपरत्वनिर्णयस्य पूर्वमेव कृतत्वादधि-कशङ्काया अभावाच्च, अशनायामृत्यु-शब्दाभ्यां संशय इति चेत् यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन इति वाक्यतुल्यत्वादस्य वाक्यस्य, अत्ता चराच-रग्रहणादित्यनेनात्तुः परमात्मनो मृत्यु-शब्दवाच्यतोपपत्तेश्च, आकाशप्रा-णादिशब्दात् मृत्यु-शब्दस्य को विशेषः कृतकरत्वादेव द्वितीयं वर्णकमपि निरस्तं, तत्र च देवतासृष्ट्येकत्वावधारणाविना हि सिद्धान्तः संसारिचेत-नाचिद्धर्मान्वयस्तु प्रकृतिपुरुषरूपेणावस्थितब्रह्मणः सम्भवतीत्यवस्थितेरि-ति. काशकृत्स्न इत्यादिषूपपादितं, भवद्भिश्च सर्वधर्मोपपत्तेश्चेत्यत्र सर्व-मिदं दर्शितमिति कृतकरत्वमवर्जनीयं हिरण्यगर्भस्य विद्याधिगमादयो

लीला इति तु न युक्तं लीलात्वकल्पकाभावात्, तस्मिन् जज्ञे स्वयं ब्रह्मेति तु वचनं परमात्मनः सर्वशरीरकत्वान्मुख्यं हिरण्यगर्भस्य क्षेत्रज्ञत्वं चानयोर्दितसृज्यत्वश्रुत्यादिभिः सिद्धं, मोक्षधर्मप्रभृतिषु चोपबृंहणेषु स्फुटतरमिति नात्र प्रपञ्च्यते अत आनन्दादय इत्यारभ्य सप्तानां सूत्राणामधिकरणत्र[1]यकल्पनमयुक्तम् ॥ आनन्दाद्यधिकरणं समाप्तम् ॥

कार्याख्यानाधिकरणम् ।

## सू० कार्य्याख्यानादपूर्वम् ॥ १८ ॥

भा० पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते, छान्दोग्यवाजसनेयकयोर्ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यमुक्त्वा प्राणस्य वासस्त्वेनापोऽभिधीयन्ते छान्दोग्ये तावत् "सहोवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासोभवत्यनग्नो भवती"ति, वाजसनेयके "किं मे वास इति प्राणेन पृष्टा वागादय ऊचुः "आपो वास इति तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेत[2]देव तदनमनग्नं कुरुत" इति, तत्र संशयः किमत्राचमनं विधीयते? उतापां प्राणवासस्त्वानुसन्धान? मिति, अशिष्यन्नाचामेदशित्वा चाचामेदिति आचमने विधिप्रत्ययश्रवणात् एतमेव तदनमनग्नं कुरुत इति वेदने विधिप्रत्ययाभावादनग्नतासंकीर्त्तनस्य स्तुत्यर्थतयाऽन्वयोपपत्तेश्च भोजनाङ्गस्या-

१ अधिकरणत्रैधकल्पनमिति पा० ।
२ अशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते इति ।

चमनस्य स्मृत्याचारप्राप्तत्वेन विधिप्रत्ययबलात्प्राणविद्याङ्गमाचमनान्तरं विधीयत इति प्राप्ते ब्रूमः—आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेवेहापूर्वमप्राप्तं विधीयते, कार्य्याख्यानात्,—

टी० सू० कार्याख्यानादपूर्वम् ॥ १८ ॥ एकान्तरितपूर्वाधिकरणेनास्य सङ्गतिः लम्भुको ह वासो भवति वासो लब्धवान् भवति अनं प्राणम् । अत्र किं प्राणविद्याङ्गमाचमनमन्यद्विधीयते? उताचमनीयानामपां प्राणवासस्त्वानुसन्धानं? किं वेदने विधिप्रत्ययाश्रवणेऽपि किं मे वासः आपो वास इत्याद्युपक्रमादिपर्यालोचनया वासोदृष्टिपरत्वं प्रतीयते? ने? ति न चेदाचमनान्तरविधिः स्यात्, प्रतीयते चेदाचमनीयास्वप्सु वासोदृष्टिविधिः स्यात् । स्तुत्यर्थतयाऽन्वयोपपत्तेश्चेति नानुसन्धानार्थतयेत्यर्थः । राद्धान्तमाह “इति प्राप्ते” इतिं, अपूर्वपदव्याख्यानमप्राप्तपदम्, इह विधीयत इति इह—शब्दः प्रकरणपरः दृष्टिविध्यन्तरोपेतत्वं विवक्षितं यदिदं किञ्च आश्वभ्य आशकुनिभ्यः आकीटपतङ्गेभ्यस्तत्तेऽन्नमिति तत्तत्प्राणवदनीये वस्तुनि प्राणाप्यायकभूते प्राणान्नत्वदृष्टिर्विधित्सितेति तत्साहचर्यादपि वासस्त्वदृष्टिर्विधियुक्त इति भावः । प्राणवासस्त्वानुसन्धानमप्राप्तं विधीयते अप्राप्ताख्यानादियुक्तहेतोः साध्याविशिष्टतैव स्यादिति तन्निवृत्त्यर्थमाह—

भा० अप्राप्ताख्यानात्, अप्राप्ताख्याने शास्त्र[1]स्यार्थवत्त्वादित्यर्थः, एतदुक्तं[2] भवति किं मे वासः आपो वास अद्भिः परिदधति एतदेव तदनमनं कुरुत इत्युपक्रमोपसंहारयोर्वाक्यस्यापां प्राणवासोदृष्टिपरत्वप्रतीतेराचमनस्य स्मृत्याचारप्राप्तत्वादाचमनमनूद्याचमनीयास्वप्सु प्राणवास-

१ शब्दस्यार्थवत्त्वादिति पा० ।
२ एतमेवेति पा० ।

स्त्वानुसन्धानं विधीयत इति, अत एव च्छान्दोग्ये तस्मा- द्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधती- त्यद्भिः परिधानमेवोक्तं नाचमनम् ॥ कार्याख्यानाधिकरणं समाप्तम् ॥

टी० "अप्राप्ताख्याने शब्दस्ये"ति, न हि ज्ञातज्ञापने प्रयोजनं प्राणवासस्त्वानुसन्धानस्याप्राप्तत्वेऽपि आचमने विधिप्रत्ययश्रवणाद् द्वितोयाचमनस्याप्राप्तत्वात्तदेव विधीयत इत्यत्राह । "एतदुक्तमि"ति, एवंविदाचामेदिति स्नात्वा भुञ्जीतेतिवत् प्रतिपन्नस्यैव अप्राप्तत्वात् अप्रतिपन्नाप्राप्तार्थान्तरकल्पनायोगादुपक्रमोपसंहारतात्पर्यलिङ्गोपेतत्वाच्छाखाद्वयानुयायित्वाच्च प्राणवास्त्वानुसन्धानमेव विधेयं, स्मृत्याचाराभ्यां प्राप्तत्वात् तात्पर्यलिङ्गाभावादप्रार्थान्तरसम्भवादेकशाखामात्रप्रतिपन्नत्वाच्चाचमनं विधेयमित्यर्थः । परैस्त्वाचमनं वासस्त्वानुसन्धानमुभयं किं विधेयम्? उताचमनम्? उत वासोदृष्टि?रिति त्रेधा विचारः कृतः, भाष्ये तूभयविधानपक्षो वाक्यभेदस्य स्फुटत्वादनादृतः अप्सु वासःकार्यपरिधानाख्यानात् अपां वासस्त्वकल्पनं विधेयमिति योजयन्ति परिधानाख्यानस्य हेतुत्वायोगात् तदनादरः, अप्राप्तत्वमेव हि हेतुः आचमनीयास्वप्सु वासोदर्शनं विधेयम् अहरहः कर्त्तव्यस्य चाचमनस्य संकीर्त्तनादित्यपरेषां योजना, एवं सति वासोदर्शनस्य विधेयत्वे हेतुः कण्ठोक्तो न स्यात् किन्तु आचमनीयासु अप्सु कर्त्तव्यताया हेतुरुक्तः स्यात्, अतस्तदनादरः, । अन्ये तु आचमनान्तरं प्राणविद्याङ्गं विधेयम् आचामेदिति विधिप्रत्ययश्रवणात्, अनग्नतासंकीर्त्तनं स्तुत्यर्थमिति सिद्धान्तयन्ति । अथवा आपो वास इति वासोदृष्टिर्विहिता कास्वप्सु वासोदृष्टिरित्यपेक्षायाम् आचामेदित्याचमनान्तरविधिः अर्थादाचमनीयास्वप्सु वासोदृष्टिर्नियम्यते, अ१ एनं कुरुत इत्यर्थः वादश्च विहितावासोदृष्टिमनुवदतीति च सिद्धान्तयन्ति तदयुक्तं किं मे वास आप इति होचुः अद्भिः परिदधतीति

१ अनग्नं कुरुत इत्यर्थवादस्तु इति पा० ।

आपो वासः अनग्नं कुरुत इति उभयत्रोपक्रमोपसंहारपर्यालोचनया वासोदृष्टिविधाने तात्पर्यावगमात् छान्दोग्यैकार्थ्याच्च, न हि तत्राचामेदिति विधिः तत्रानुक्तमप्याचमनं विवक्षितम् अनुक्तस्यान्यतो प्राप्तत्वादिति चेत् अन्यत्राप्यनुक्तत्वात्। ननूक्तमाचामेदिति चेन्न तस्मादेवं विद्वशिष्यन्नाचामेदिति वाक्ये प्राङ्मुखोऽभुञ्जीतेति प्राङ्मुखत्ववद्वदनस्य विधेयत्वप्रतीतेः। यदि ह्याचमनं विधेयं तदा ह्येवं विदित्यनर्थकं स्यादनग्नं कुरुत इत्यर्थवादश्रवणादेव तदर्थज्ञानस्य सिद्धत्वात्, न हि विध्यन्तरेष्वार्थवादिकार्थज्ञानमेवं विदित्युच्यते यतोऽस्य वाक्यस्याचमनान्तरविधिपरत्वमयुक्तम् अत एव वासोदृष्ट्यनुवादेनाचमनान्तरविधिरिति पक्षोऽप्यनुपपन्नः ॥ कार्याख्यानाधिकरणं समाप्तम् ॥

समानाधिकरणम्। **सू० समान एवं चाभेदात् ॥ १९ ॥**

भू० वाजसनेयके अग्निरहस्ये शाण्डिल्यविद्याऽऽम्नाता, सत्यं ब्रह्मेत्युपासीताथ खलु क्रतुमयोऽयं पुरुष इत्यारभ्य "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानमिति, तथा तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्याऽऽम्नायते "मनोमयोऽयं पुरुषो भाः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं चेति, तत्र संशयः किमत्र विद्या भिद्यते? उत नेति संयोगचोदनाख्यानामविशेषेऽपि वशित्वाद्युपास्यगुणभेदेन रूपभेदाद् विद्याभेद इति प्राप्त उच्यते समान एवमिति, यथाऽग्निरहस्ये मनोमयः प्राणशरीरः भारूपः सत्यसङ्कल्पत्वादिगुणगणः श्रुतः, एवं बृहदारण्यकेऽपि मनोमयत्वादिके समाने सत्यधिकस्य वशि-

त्वादेश्च सत्यसङ्कल्पत्वगुणाभेदान्न रूपभेदः। अतो विद्यै-
क्यम् ॥ समानाधिकरणं समाप्तम् ॥

टी० सू० समान एवं चाभेदात् ॥ १९ ॥ पूर्वत्राधिकरणे प्राणवि-
द्याशेषत्वेन प्रसक्तं तत्पूर्वाधिकरणे स्वरूपप्रतीत्यन्तर्भूतानां गुणानामुपसं-
हार्यत्वमुक्तम्, एवं सत्यसंकल्पत्वान्तर्भूतवशित्वादिगुणानामुपसंहार्यत्वमु-
च्यते इति सङ्गतिः, किमत्र विद्या भिद्यते ? नेति किमुभयत्र रूपभेदोऽस्ति?
नेति ? किमग्निरहस्ये वशित्वादिप्राप्तिरस्ति नेति किं मनोमयभारूपस-
त्यसंकल्पत्वाम्नानमेव गुणिप्रत्यभिज्ञया वशित्वादिप्राप्तिं गमयति नेति न
गमयति चेत् वशित्वाद्यप्राप्त्या रूपभेदात् विद्याभेदः, गमयति चेत् वशित्वा-
दिप्राप्त्या रूपाभेदाद्विद्यैक्यं, बृहदारण्यके यद्वशित्वादिकमधिकमुक्तं, यच्च
वाजसनेयके सत्यसङ्कल्पत्वमधिकमुक्तं तदुभयमपि तुल्यार्थमिति न रूपभेदः
सत्यसंकल्पत्वकार्यत्वाद्वशित्वादेः अधिपतिशब्दोक्तं शेषित्वं न सत्यसंक-
ल्पत्वान्तर्भूतमिति चेत् न शेषित्वस्य नियमनासङ्कोचहेतुत्वात् अयदीये
स्वतन्त्रे च वस्तुनि नियमनस्य हि कदाचिद्विहतिशङ्का भवति, अतस्त-
दभावादसंकुचितमैश्वर्यं सत्यसङ्कल्पत्वान्तर्गतम् । परे त्वेकस्यां शाखायां
पुनरुक्तेः प्रतिपत्तृभेदेन परिहर्तुमशक्यत्वात् पञ्चकृत्वोऽभ्यासात् प्रयाज-
भेदवद्विद्याभेदं पूर्वपक्षीकृत्य मनोमयत्वादिगुणकोपास्याभेदादग्निरहस्ये
विद्यां विधाय सैव बृहदारण्यके वशित्वादिगुणविधानाय पठ्यत इति
गुणविधानाय पुनः श्रुत्युपपत्तेःप्राग्विहितमनोमयत्वादिगुणोपन्यासस्य वि-
हितविद्याप्रत्यभिज्ञानार्थत्वोपपत्तेर्विद्यैक्यं सिद्धान्तयन्ति । अपरेषामपि इदं
तुल्यम् अन्येऽप्यभ्यासन्यायेन विद्याभेदं पूर्वपक्षीकृत्य पुनः पाठस्य सत्यसङ्क-
ल्पत्वरूपैश्वर्यस्य सातिशयत्वसम्भवात् निरतिशयत्वस्य प्रतिपादनार्थमैश्व-
र्यस्य विशेषरूपवशित्वाद्यनेकगुणविधानायानुवादरूपत्वोपपत्तेर्विद्यैक्यमा-
हुः । तत्र "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण" इति न्यायेनानेकगुण-
विधानानुपपत्तिमाशङ्क्य सत्यसङ्कल्पत्वरूपैश्वर्यस्य निरङ्कुशत्वसिद्ध्यर्थं स एवै-
श्वर्यगुणो नानाविधो विहित इति परिहरन्ति तत्र सर्वेषां पूर्वपक्षोत्था-

नासम्भवः बृहदारण्यके सर्वस्य वशीत्यादेः श्रूयमाणत्वादापातप्रतीतिदशायामेव विशेषावगमादविशेषपुनःश्रवणनिमित्तविद्याभेदशङ्काऽनुपपत्तेः, अतो रूपभेदात् पूर्वपक्ष उचितः । येषामग्निरहस्ये अनुक्ता गुणा बृहदारण्यके विधीयन्ते इति पक्षः तेषां प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण इति न्यायेन प्राप्तायां विद्यायामनेकगुणविधाने वाक्यभेदः प्रसजेत्, ऐश्वर्यगुण एको विधीयत इत्यन्ये परिहरन्ति, गुणान्तरत्वे सिद्धे हि तथा निर्वाह उपपद्यते गुणविशेषान्तर्भावसम्भवात्तु भाष्ये तदनादरः ॥ समानाधिकरणं समाप्तम् ॥

संबन्धाधिकरणम् । सू० सम्बन्धादेवमन्यत्रापि ॥ २० ॥

भा० बृहदारण्यके श्रूयते "सत्यं ब्रह्मेत्युपक्रम्य "तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषोयश्चायं दक्षिणेऽक्षि"न्नित्युपक्रम्य आदित्यमण्डलेऽक्षिणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा "तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्यध्यात्ममिति द्वे उपनिषदौ रहस्यनामनी उपासनशेषतयाऽऽम्नायेते, ते किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते? उतोभयत्रोभे अनियमेने? ति संशये सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोः सम्बन्धादुपास्यैक्येन रूपाभेदात् संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति प्राप्तं तदिदमुच्यते सम्बन्धादेवमन्यत्रापीति, यथा मनोमयत्वादिगुणविशिष्टस्यैक्यादुपास्यैक्येन रूपाभेदाद्विद्यैक्याद् गुणोपसंहारः, एवमन्यत्राप्यादित्यसम्बन्धिनो ब्रह्मणः सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभयत्रोपसंहार इत्येवं प्राप्ते प्रचक्ष्महे—

सू० न वा विशेषात् ॥ २१ ॥

न चैतदस्ति यद्विद्यैक्यादुपसंहार इति कुतः विशेषात् उपास्यरूपविशेषात् ब्रह्मण एकत्वेऽप्येकत्रादित्यमण्डलस्थतयोपास्यत्वमितरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसम्बन्धित्वभेदेन रूपभेदाद्विद्याभेदः, नैवं शाण्डिल्यविद्याया उपास्यस्थानं भिद्यते उभयत्र हृदयाधारत्वेनोपास्यत्वात्, अतो व्यवस्थिते इति, ॥

सू० दर्शयति च ॥ २२ ॥

दर्शयति चाक्ष्याधारादित्याधारयोर्गुणानुपसंहारं तस्यैतस्य तदेव रूपं यदमुष्य रूपमित्यादिना रूपाद्यतिदेशेन स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ सम्बन्धाधिकरणं समाप्तम् ।

संभृत्यधिकरणम् । सू० संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

तैत्तिरीयके नाराणा[1]यनीयानां खिलेषु च ब्रह्मज्येष्ठा वीर्यासंभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्मभूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्द्धितुं कः" इति, ब्रह्मणि ज्येष्ठानां वीर्याणां संभृतिः द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातं, तेषामुपासनविशेषमनारभ्याधीतानां गुणानां सर्वासु विद्यासूपसंहारे प्राप्ते उच्यते "सम्भृतिद्युव्याप्त्यपी"ति, ।

1 राणायनीयानामिति युक्तः पाठः ।

टी० सू॰ सम्बन्धादेवमन्यत्रापि ॥ २० ॥ यथा मनोमयत्वादिगुणकस्यैवोपास्यत्वेन विद्यैक्यम् एवमत्यादित्यसम्बन्धिनो व्याहृतिशरीरकस्यैवोपास्यत्वेन विद्यैक्यमिति शङ्कया शङ्कतिः, दक्षिणेऽक्षिन् दक्षिणेऽक्षिणि उपनिषदाविति व्याख्येयपदं रहस्यनामनी इति व्याख्यानं किमेते नामनी यथाश्रुतस्याव्यवस्थिते? उत उभयत्राव्यवस्थयोपसंहार्ये? इति, किमत्र विद्यैक्य? मुत ने ति किं व्याहृतिशरीरत्वेनोपास्यत्वमुभयत्र विद्यैक्यं सङ्गमयति ने? ति किमुपास्यगुणैक्यमात्रमभेदहेतुः? उत स्थानैक्यमपी? ति स्थानं किमुपास्यान्तर्गम्? उत नेति न चेदुपास्यगुणाभेदमात्रमभेदहेतुरिति व्याहृतिशरीरत्वस्य विद्यैक्यगमकत्वात् तदभेदेन नाम्नोर्विकल्पेनोपसंहारः स्थानस्योपास्यान्तर्भावे स्थानैक्यमप्यभेदहेतुरिति व्याहृतिशरीरत्वमात्रेण विद्यैक्यानवगमेन विद्याभेदाचाम्नोर्व्यवस्थितत्वमिति पूर्वपक्षस्यानुत्सूत्रत्वमाह "तद्विद"मिति, । सूत्रस्य वाक्यार्थमाह "यथे"ति, । सू॰ न वा विशेषात् ॥ २१ ॥ अतो व्यवस्थिते इति नामनी इत्यर्थः । सू॰ दर्शयति च ॥ २२ ॥ चाविद्यैक्येन स्वतः प्राप्तौ रूपादीनां नातिदेशापेक्षा, तस्मादतिदेशो विद्याभेदनिबन्धनः तस्माद् गुणानुपसंहार इत्यर्थः ॥ सम्बन्धाधिकरणम् समाप्तम् ॥

सू॰ सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ पूर्वाधिकरणे नाम्नोः स्थानभेदाद्व्यवस्था कृता तथाऽनारभ्याधीतस्य सम्भृत्यादिकस्यापि स्थानभेदाद्व्यवस्थेति सङ्गतिः, उपासनविशेषमनारभ्य अप्रस्तुत्येत्यर्थः, किं सम्भृत्यादिगुणानां सर्वासु उपसंहारः? उत कासुचित्? किमनारभ्याधीतानां कासुचिद्विनियोगः? उत सर्वासु? किं सामर्थ्यं कासुचिदेव विनियुङ्क्ते? ने? ति, न चेत् क्वचिद्विनियोगाभावात् सर्वासूपसंहारः सामर्थ्यं क्वचिद्विनियोजकं चेत् विनियोगलाभात् कासुचिदेवोपसंहारः सम्भृतिद्युव्याप्ति इति वक्तव्यमित्याशङ्क्याह–

सू॰ संभृतिद्युव्याप्तीति समाहारद्वन्द्वत्वादेकवद्भावः सम्भृत्यादिकमनारभ्याधीतमपि अत एव स्थानभेदाद्व्यवस्थाप्यं न

सर्वत्रोपसंहर्त्तव्यं, कथमनारभ्याधीतानां स्थानविशेषनियतत्वं स्वसामर्थ्यादिति ब्रूमः द्युव्याप्तिस्तावद्दहराद्यल्पस्थानगोचरासु विद्यासु नोपसंहर्त्तुं शक्या संभृत्यादयोऽपि तत्सहचारिणः तत्तुल्यदेशा इत्यल्पस्थानविषयासु विद्यास्वनुपसंहार्याः शाण्डिल्यदहरादिविद्यास्वल्पस्थानविषयासु ज्यायान् पृथिव्याः यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्यादयस्तत्र तत्राशक्योपसंहाराः मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः ॥ संभृत्यधिकरणं समाप्तम् ॥

टी० "समाहारे"ति, हृदयस्थस्य द्युव्याप्त्यादिकमनुपपन्नं चेत् कथं दहरविद्यादिष्वर्भकौकसोऽपि ज्यायस्त्वाद्युक्तिरित्यत्राह "शाण्डिल्ये"ति, माहात्म्यप्रतिपादनपराः स्वतोऽनन्तत्वरूपमहात्म्यप्रतिपादनपरा इत्यर्थः । न त्वेतद्विद्याया उपास्याकारपरा इत्यर्थः, अल्पस्थानविषयदहरविद्यादिषु द्युव्याप्त्यादेरनुपसंहारश्चेत् कथं सर्वविद्यानुयायिष्वानन्दादिष्वन्तर्भूतस्यानन्त्यस्यानुसन्धेयत्वम्, इत्यम् औपाधिकाल्पत्ववतो ब्रह्मणस्तस्मिन्नेव स्थान औपाधिकमहत्त्वं विरुद्धमिति तदनुपसंहार उक्तः, आनन्दाद्यन्तर्भूतमानन्त्यं स्वाभाविकमिति न विरोधः, औपाधिकाल्पत्वानुसन्धानं स्वाभाविकमहत्त्वानुसन्धानं चाविरुद्धं स्वतोऽपरिच्छिन्नं ब्रह्मास्मदनुग्रहायौपाधिकाल्पत्ववत्स्थितमिति ह्यनुसंधातुं शक्यम् अल्पत्वमहत्त्वयोरौपाधिकयोर्युगपदेकत्रान्वयो विरुद्ध इत्यर्थः । उभयत्र समानमनोमयत्वादिगुणवत्संभृत्यादीनामुपास्यप्रत्यभिज्ञापनात्तमत्वादाधिदैविक्यः संभृत्यादयो नाध्यात्मं भवतीति परिहृत्यते तद्गुणविशिष्टताभेदादप्रत्यभिज्ञापनं चेत् क्वचिदपि गुणोपसंहारो न स्यात्, अतोविरुद्धगुणविशिष्टब्रह्मविषयविद्यासु नोपसंहार इत्येव युक्तम् ॥ संभृत्यधिकरणं समाप्तम् ॥

पुरुषविद्याधिकरणम् ।

**सू० पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥**

भा० तैत्तिरीयके पुरुषविद्याऽऽम्नायते "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः"रित्यादिका छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणी"त्यादिका, तत्र संशयः किमत्र विद्या भिद्यते? उत ने? ति पुरुषविद्येति नामैक्यात्पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपैक्यात्तैत्तिरीयके फलसंयोगाश्रवणात् प्रत्र षोडशवर्षः शतं जीवतीति छान्दोग्ये श्रुतस्यैव पुरुषविद्याफलत्वात् फलसंयोगस्याप्यविशेषात् विद्यैक्यमिति प्राप्त उच्यते उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव, कुतः इतरेषामनाम्नानात् एकस्यां शाखायामाम्नातानां गुणानामन्यत्रानाम्नानात्, तथा हि यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानीत्यादयस्तैत्तिरीयके आम्नाताः, छान्दोग्ये सवनत्वेन नाम्नायन्ते त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते, छान्दोग्ये श्रुतानामाशिशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतं, यजमानपत्न्यादिपरिकल्पनं चान्यथा, अतो रूपमुभयत्र भिद्यते तथा फलसंयोगोऽपि भिद्यते तैत्तिरीयके हि पूर्वानुवाके "ब्रह्मणे त्वामहसे ओमित्यात्मानं युञ्जीते"ति ब्रह्मविद्यामभिधाय तत्फलत्वेन ब्रह्मणो महिमानमाप्नोतीत्युक्त्वा तस्यैवं विदुष इत्यादिनाऽऽम्नाता

पुरुषविद्या अस्यैव ब्रह्मविदुषो यज्ञत्वकल्पनमिति गम्यते, अतो ब्रह्मविद्याङ्गत्वात् ब्रह्मप्राप्तिरेवाच फलं फलवत्सन्निधावफलं तदङ्गमिति च न्यायात्तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते, छान्दोग्ये त्वायुःप्राप्तिफला पुरुषविद्येत्युक्तम्, अतो रूपफलसंयोगयोर्भेदाद्विद्याभेद इत्येकचाम्नातानां गुणानामेक[1]चानुपसंहारः ॥ पुरुषविद्याऽधिकरणं समाप्तम् ॥

टी० सू० पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥ ब्रह्मप्राप्तिसन्निधिसमाम्नातस्य संभृत्यादेस्तत्समानस्थानानुप्रवेशादेकविद्यान्वय उक्तः, एवं ब्रह्मविद्यासन्निधिसमाम्नातपुरुषविद्यायास्तच्छेषत्वमिति सङ्गतिः । किमुभयत्र विद्यैक्यम्? उत विद्याभेद? इति, किमुभयत्र रूपसंयोगादेर्भेद? उत ने?ति किमुभयत्र प्रहर्षोडशवर्षः शतं जीवतीत्यायुःप्राप्तिरेव फलम्? उत तैत्तिरीयकविद्यायां ब्रह्मप्राप्तिः फलं? किं तैत्तिरीयकपुरुषविद्या प्रकृतब्रह्मविद्याङ्ग? मुत ने?ति किं तदेवं विदुष इति निर्देशो ब्रह्मविद्याङ्गत्वं गमयति ने?ति, न चेत् ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्राप्तिफलकत्वाभावात् आयुःप्राप्तिरेव फलमिति फलाभेदाद् रूपाभेदाच्च विद्यैक्यं स्यात् यदा तस्यैवमिति निर्देशो ब्रह्मविद्याङ्गत्वं गमयति तदा तैत्तिरीयकपुरुषविद्याया ब्रह्मविद्याङ्गत्वेन ब्रह्मप्राप्तिफलकतया फलभेदाद्रूपभेदाच्च विद्याभेदः फलसंयोगाश्रवणादिति विरोधिफलश्रवणे सति संयोगभेदः स्यात् विरोधिफलाश्रवणे आख्यारूपयोरभेदेन प्रत्यभिज्ञानादनुक्तमपि फलमन्यत्र स्वीकार्यमित्यर्थः । कथं फलाश्रवणं पुरुषविद्याया उपरिष्टात् ब्रह्मणो महिमानमाप्नोतीति हि फलं श्रूयते तच्च केवलपुरुषविद्याया ब्रह्मविद्यात्वाभावात् ब्रह्मप्राप्तिरूपं फलमयोग्यत्वात् पुरुषविद्यासम्बन्धमनवाप्य पूर्वानुवाकोक्तब्रह्मविद्ययाऽन्वितं

१ गुणानामितरत्रानुपसंहार इति पा० ।

भवतीत्यभिप्रायेण फलसंयोगाश्रवणादित्युक्तं, यथा द्वादशाहीनस्येति वाक्यं सत्रप्रकरणेऽधीतमपि तत्र संबन्धुमयोग्यत्वात् तत उत्कृष्य अहीनप्रकरणे सम्बध्यते तद्वत्, प्रहषोडशवर्षः शतं जीवतीत्यत्र प्रजीवतीत्यन्वयः, अत इत्यादि । ब्रह्मविद्याङ्गत्वं कथमित्यत्राह "फलवत्सन्निधावि"ति, अफलत्वं च पूर्वोक्तं पूर्वानुवाकेऽपि ब्रह्मणो महिमानमाप्नोतीति ब्रह्मप्राप्तिः श्रूयते, उत्तरानुवाकेऽपि ब्रह्मणो महिमानमाप्नोतीति श्रूयते तत्र पुरुषविद्याया अफलत्वे ब्रह्मणो महिमानमाप्नोतीति वाक्यद्वयं पुनरुक्तमिति चेन्न पूर्वानुवाके श्रूयमाणा ब्रह्मप्राप्तिः स्वर्गकामपदवदधिकारिविशेषणं ब्रह्मप्राप्तिकाम एवं कुर्यादित्यर्थः । उत्तरानुवाक्ये तदङ्गभूतं पुरुषावयवेषु यज्ञपरिकल्पनं विधाय एवं साङ्गमभिहिताया ब्रह्मविद्यायाः फलं ब्रह्मप्राप्तिरिति ब्रह्मणो महिमानमाप्नोतीति निगमयतीति ॥

पुरुषविद्याऽधिकरणं समाप्तम् ॥

वेधाद्यधिकरणम् । **सू० वेधाद्यर्थभेदात् ॥ २५ ॥**

भा० आथर्वणिका उपनिषदारम्भे "शुक्रं प्रविध्य हृदयं प्रविध्येत्यादी"न्मन्त्रानधीयते, सामगाश्च रहस्यब्राह्मणारम्भे "देव सवितः प्रसुव यज्ञं प्रसु"त्याद्यामनन्ति, काठकास्तैत्तिरीयकाश्च "शन्नो मित्रः शं वरुण" इत्यादिकं, शाट्यायनिनश्च "श्वेतोऽश्वो हरिनीलोऽसी"त्यादिकम् ऐतरेयिणस्तु महाव्रतब्राह्मणमधीयते, "इन्द्रो ह वै वृत्रं हत्वा महानभवदि"-त्यादि, कौषीतकिनोऽपि महाव्रतब्राह्मणमेव "प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रत"मिति वाजसनेयिनस्तु प्रवर्ग्यब्राह्मणम् "देवा ह वै सत्रं निषेदु"रित्यादि, तत्र संशयः किमुपनिषदारम्भेष्वधीताः शुक्रं प्रविध्य शन्नो मित्र इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्या-

देवता, इन्द्रो देवता ऽस्य ऐन्द्रः स्थालीपाक इति देवतात्वं वृत्तावन्तर्भवति, तद्वदत्रापि पण्यत्वमन्तर्भवतीति नात्रापूर्वं किं चित् ॥

"किशरादिभ्यष्ठक्" ॥ किशरादयो गन्धविशेषवचनास्तद्वृत्ति वर्तन्ते, गन्धान्पिनष्टीति यथा ॥

"शलालुनोऽन्यतरस्याम्" ॥ 'शलालुक इति'। इसुसुक्तान्तात्कः ॥

"शिल्पम्" ॥ 'कौशलमिति'। क्रियाभ्यासपूर्वको ज्ञानविशेषः। 'मृदङ्गवादनं शिल्पमस्येति'। मृदङ्गो वाद्यते येन तन्मृदङ्गवादनं शिल्पं, भावसाधनस्य गौणं सामानाधिकरण्यं, मृदङ्गवादनविषयं शिल्पमस्येत्यर्थः। 'मार्दङ्गिक इति'। ननु मृदङ्गवादनं शिल्पमस्येति विग्रहः कृतस्ततश्च मार्दङ्गवादनिक इति भवितव्यं तत्राह। 'मृदङ्गेत्यादि'। मृदङ्गवादनशब्दात्तु प्रत्ययो न भवत्यनभिधानात्, किं तूपचरितवृत्तेरपि मृदङ्गशब्दादेव भवति, अत एवानभिधानान्मृदङ्गनिष्पादनं शिल्पमस्य मार्दङ्गिकः कुम्भकार इत्यत्र न भवति ॥

"मड्डुकझर्झरादणन्यतरस्याम्" ॥ अयमेव निर्देशो ज्ञापयति तद्वादनवृत्तिभ्यो मृदङ्गादिभ्यः प्रत्यय इति, नहि मुख्यमड्डुकझर्झरयोः शिल्पेन सामानाधिकरण्यमुपपद्यते ॥

"प्रहरणम्" ॥ प्रहरणमायुधं प्रह्रियतेऽनेनेति कृत्वा। 'धानुष्क इति'। पूर्ववत्कादेशः, इणः ष इति विसर्जनीयस्य षत्वम् ॥

"परश्वधाट्ठञ्च" ॥ परश्वधः परशुः ॥

"शक्तियष्ट्योरीकक्" ॥ शक्यतेऽनया प्रहर्तुमिति शक्तिः, यष्टिशब्दो ऽव्युत्पन्नं प्रातिपदिकं, किमर्थमीकगुच्यते न कगेवोच्यते, का रूपसिद्धिः, शक्तियष्टिशब्दाभ्यां बह्वादिङीषन्ताभ्यां लिङ्गविशिष्टपरिभाषया कवि कृते शाक्तीको याष्टीक इति सिद्धं, न सिद्ध्यति, केण इति ह्रस्वत्वं प्राप्नोति, विभाषा ङीषुक्तः, तदभावपक्षे दीर्घस्य शङ्कैव नास्ति, एवं तर्हि इकगेवोच्येत, इकारेपि हि सवर्णदीर्घत्वे सिद्ध्यति, यस्येति लोप इकारोच्चारणसामर्थ्यान्न भविष्यति, पदस्यावयवहानिवृत्तिरिकारस्य

प्रयोजनम्, एवं तर्हि सूत्रारम्भो निष्फलः स्यात्, पूर्वसूत्रविहितेन ठकैवाऽवग्रहनिवृत्तेः सिद्धत्वात्, नानर्थकं वाक्यनिवृत्त्यर्थत्वात्, एवमपि प्रत्ययान्तरमनर्थकं शक्तियष्ट्योरित्येतावद्वक्तव्यं, ठक् प्रकृतस्तस्य पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति किमीकको विधानेन, तद्विधानात्तु यस्येति लोपो न भविष्यति, यथैव तर्हि यस्येति लोपो न भवति एवं सवर्णदीर्घत्वमपि न स्यात्, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, यस्येतिलोपं च प्रति इकारोच्चारणमनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव ॥

"अस्तिनास्तिदिष्टं मतिः" ॥ यद्यस्ति मतिर्यस्य स आस्तिकः, चोरोऽपि प्राप्नोति तस्यापि मतिसद्भावात्, तत्राह । 'न चेति' । 'तद्विपरीत इति' । परलोको नास्तीति मतिर्यस्य तत्रास्तिको लोकायतिको न त्वचेतनः पदार्थः, मत्यभावमात्रे प्रत्ययस्यानिष्टत्वात्, दिष्टं दैवं तद्विषया मतिर्यस्य स दैष्टिकः, वृत्तावपि प्रमाणानुपातिनी मतिर्यस्येति दैववित्, प्रमीयते तेभ्यो दैवमिति, प्रमाणशब्देनेतिहासपुराणादिविवक्षितम् । 'अस्तिनास्तिशब्दौ निपाताविति' । तेन प्रातिपदिकाधिकारो न बाध्यतइति भावः । वचनसामर्थ्याद्वेत्यभ्युपगम्यवादः ॥

"शीलम्" ॥ 'शीलं स्वभाव इति' । शील्यते पुनःपुनः क्रियतेऽनेनेति कृत्वा । 'अपूपभक्षणं शीलमस्येति' । शीलविषये शीलत्वमारोप्य सामानाधिकरण्येन व्यपदेशः । 'भक्षणक्रियेत्यादि' । शीलं तावदुपात्तत्वादन्तर्भवति क्रियाविषयत्वाच्च शीलस्य क्रियाऽप्यन्तर्भवति, स्वभावाच्च भक्षणक्रिया, न निष्पादिका ॥

"छत्रादिभ्यो णः" ॥ छत्रशीलता शिष्यस्य दर्शयितुमाह । 'छादनादावरणाच्छत्त्रमिति' । छादयतेः ष्ट्रनि इस्मन्त्रन्क्विषु चेति ह्रस्वः । 'छत्रशील इति' । छत्रसहचरिता छादनक्रिया शीलमस्येत्यर्थः, यदि त्वपूपभक्षणं शीलमस्यापूपिक इतिवत् छत्रावरणंशीलमस्य.छात्रिक इति व्युत्पाद्यते तदा दासेऽपि प्राप्नोति, अभिधानस्वाभाव्यात्तु तथा नाश्रीयते । 'उपसर्गपूर्वो गृह्यतइति' । ततश्च तस्यातश्चोपसर्गइत्यादिना व्युत्पत्तिः,

केवलस्य स्याशब्दस्याभावात् केवलस्य तु पाठः सर्वोपसर्गसंग्रहार्थः, चुरेति पठ्यते, तत्र चोरयतेर्यासश्चन्यो युजिति युचि प्राप्तेस्मादेव निपातनादकारो गुणाभावश्च, न च युचोन्यत्र बाधः, चोरणेत्यपि भवति ॥

"कर्माध्ययने वृत्तम्"॥ कर्म क्रिया तच्च स्खलितमपचाररूपं विवक्षितं न तच्छीलं कर्म, तेनेह न भवति, अध्ययने जपो वृत्तोस्येति, एतच्चाभिधानस्वाभाव्याल्लभ्यते; तदेतद्दर्शयति । 'यस्याध्ययने नियुक्तस्येत्यादि'। 'एकमन्यदिति'। सम्यक्पाठापेक्षया ॥

"बह्वच्पूर्वपदाट्ठच्" ॥ स्वरभेदेप्यन्यत्वं भवति न वर्णभेद एवेत्याह । 'उदात्ते कर्त्तव्यइति'। उदात्तग्रहणं सम्यक्स्वरस्योपलक्षणम् । अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥

"हितं भक्ताः" ॥ हितं भक्ता इति पदयोः पर्यवसानेन सम्बन्धः, अत्र हितमिति सामान्योपक्रमत्वादेकवचनं नपुंसकत्वं च, भक्ता इत्यपूपादिविशेषेषूपसंग्रहात्पुल्लिङ्गं बहुवचनं च, अत एवाह । 'यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्ता इति'। 'एवं तर्हीति'। एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे, कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थे इति, एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम्, अपर आह, हितं भक्तास्तदस्मादिति सूत्रच्छेदः, ततो दीयते नियुक्तमिति तस्या एवेति। 'हितार्थः क्रिया चेति'। हितार्थस्तावदुपात्तत्वादन्तर्भवति, भक्षणक्रियाप्यपूपादिशब्दानां लक्षणया तत्र वृत्तिरन्तर्भवति ॥

"तदस्मै दीयते नियुक्तम्" ॥ अव्यभिचारी नियोग इत्यस्मिन्पक्षे नियुक्तमिति क्रियाविशेषणत्वात्कर्मणि द्वितीया । 'अग्रभोजनमस्मै नियुक्तं दीयतइति'। यद्यग्रभोजनं दीयते तदास्माएवेत्येष नियोगार्थः । तेन कदाचिल्लोपेपि न नियुक्तताया हानिः । 'केचित्त्विति'। अत्र पक्षे नियुक्तमित्यन्तसंयोगे द्वितीया ॥

"श्राणामांसौदनाट्टिठन्" ॥ श्रा पाके क्तः, क्षीरहविषोरेव निपातनाच्छृभावाभावे संयोगादेरातो धातोरिति निष्ठातकारस्य नकारः । श्राणा यवागूः, मांसमिश्र ओदनो मांसौदनः । 'ठञेव कस्मान्नोक्त इति'।

लाघवात्स एव युक्तो वक्तुमिति भावः । 'नह्यत्रेति' । द्वे अप्येते प्रकृती पूर्वमेव वृद्धे, योपि वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः स टिठन्यपि न कोपधाया इति भवति । 'मांसौदनग्रहणमित्यादि' । ठञ्येव वक्तव्ये टिठनो वचनमेवात्र प्रमाणमिति तेषां भावः ॥

"भक्तादणन्यतरस्याम्" ॥ भजेर्भक्तमन्नम् ॥

"तत्र नियुक्तः" ॥ नियुक्तमिति प्रकृते पुनर्नियुक्तग्रहणमर्थभेदार्थमेव, तमेवार्थभेदं दर्शयति । 'नियुक्तोधिकृत इत्यादि' । किं च प्रकृतं नियुक्तग्रहणं प्रकृत्यर्थविशेषणस्य दीयतइत्यस्योपाधिर्न तस्येह प्रत्ययार्थत्वं शक्यं विज्ञातुम् ॥

"अध्यायिन्यदेशकालात्" ॥ अधीतइत्यध्यायी, आवश्यके णिनिर्ग्रह्यादिलक्षणो वा, अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ ताबदेशकालशब्देनोच्येते इति, अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात्पर्युदासवृत्त्या, अभक्ष्यास्पर्शनीयवत्, तद्यथा शूद्रादिप्राणिभिर्भक्ष्यमाणमपि लशुनमभक्ष्यमित्युच्यते, स्पृश्योपि चण्डालोस्पृश्य इत्युच्यते, अप्रतिषिद्धाभ्यां भक्ष्यस्पृश्याभ्यामन्यत्वात्तद्वदिहापि श्मशानचतुर्दश्यौ स्वरूपेणदेशकालावेव सन्तावप्रतिषिद्धाभ्यां देशकालाभ्यामन्यत्वाददेशकालशब्देनोच्येते, अध्ययनस्येत्येतदध्यायिना प्रत्ययार्थेन सन्निधापितत्वाल्लभ्यते ॥

"कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति" ॥ व्यवहरतिः सम्भवति पणिना समानार्थः, आह हि व्यवहृपणोः समर्थयोरिति, अस्ति विवादे व्यवहारे पराजित इति, अस्ति विक्षेपे शलाकां व्यवहरतीति, अस्ति क्रियातत्त्वे, तदिह चरमस्य ग्रहणं तद्धितस्वभावादित्याह । 'व्यवहारः क्रियातत्त्वमिति' । यत्र देशे या क्रिया यथानुष्ठेया तत्र तस्यास्तथानुष्ठानमित्यर्थः, वंशा वेणवः कठिना यस्मिन्वंशकठिनो देशः, वर्ध्री चर्मविकारः कठिना अस्मिन्वर्ध्रकठिनः, आहिताग्न्यादित्वाद्विशेषणस्य परनिपातः, चक्रयुक्तेन शकटेन चरतीति चक्रचरः, स देशाननुक्रमेण चरन् तत्रानुष्ठेयक्रियाविपरीतं चरन्नेवमुच्यते, संस्थानप्रस्तारौ संनिवेशौ ॥

"निकटे वसति" ॥ अरण्यं निवासो यस्य स आरण्यकः, अरण्यान्मनुष्य इति वुञ्, भिक्षुः सन्यासी । 'ग्रामात्क्रोश इति' । यतश्च निर्द्धारणमिति पञ्चमी, अयं च विशेषोऽभिधानस्वभावाल्लभ्यते ॥

"आवसथात् ष्ठल्" ॥ आवसत्येतमिति आवसथः, उपसर्गे वसेरित्यथप्रत्ययः । 'ठञः पूर्वो विधिरिति' । प्राग्वहतीयस्य ठञो विधानं पूर्वमित्यर्थः, अवधिरिति पाठे पूर्वः प्राप्त इत्यर्थः ॥

"तद्वहति रथयुगप्रासङ्गम्" ॥ ननु य एवार्थो रथं वहतीति स एव रथस्य वोढेति, तत्र तस्येदं रथाद्यदित्येव सिद्धं नार्थो रथग्रहणेन, ननु तत्रोक्तं रथाङ्ग एवेष्यत इति, वोढर्यपि प्रयोगदर्शनादिष्यताम् । इदं तर्हि प्रयोजनं द्वौ रथौ वहति द्विरथ्यः, द्विगोर्लुगनपत्य इति प्राग्दीव्यतीयो लुङ् माभूत्, रथसीताहलेभ्यो यद्विधाविति तदन्तविधिः, युग्यं च पत्त्रइत्येव सिद्धम् इह युगवहणमयुग्यमित्यत्र ययतोश्चातदर्थ इति स्वरार्थं, निपातनस्य तु क्यबन्तत्वादेव स्वरो न स्यात्, रथाङ्गवचनोऽयं युगशब्दः, इह न भवति युगं वहति राजा कलिं द्वापरं वेति, प्रासङ्गशब्दो वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते तद्वाची गृह्यते, प्रासज्यत इति प्रासङ्गः, इह न भवति प्रसङ्गादागतः प्रासङ्गस्तं वहतीति, एतच्चाभिधानस्वभावाल्लभ्यते ॥

"धुरो यड्ढकौ" ॥ धूर्धुर्वतेः, भ्राजभासेति क्विप्, राल्लोपः । 'धुरं वहतीति धुर्य इति' । न भकुर्छुरामिति प्रतिषेधाद्धलि चेति दीर्घाभावः, ठगत्र विधीयते न तु ठञ्, धौरेयो भविता पितुरिति च दृश्यते, धौरेयक इति स्वार्थिके कनि भवति, इह धुरो ठक् चेति वक्तव्यं चकारात्प्राग्घितीयो यद्भविष्यति ॥

"खः सर्वधुरात्" ॥ 'स्त्रीलिङ्गनिर्द्देशो न्याय्य इति' । सर्वा चासौ धूश्चेति पूर्वकालेत्यादिना समासः, ऋक्पूरब्धूरित्यकारः समासान्तः, तत्र धूःशब्दस्य स्त्रीलिङ्गत्वात्परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति वचनात् स्त्रीलिङ्गनिर्द्देशस्य न्याय्यत्वं, यथा बन्धुनि बहुव्रीहावित्यत्र, दक्षिणाधुरीणः, दक्षिणां धुरं वहति उत्तरां धुरं वहतीति तद्धितार्थे समासः, ततोऽकारः समासान्तः ॥

"एकधुराल्लुक् च" ॥ एकधुरादिति निर्देशः सर्वधुरादित्यनेन व्याख्यातः, चकारेण खोऽनुकृष्यते, तेन स तावद्विधेयः, प्रत्ययादर्शनस्य च लुक् सञ्ज्ञा, न चान्योऽत्र प्रत्ययः, तेन खस्यैव लुग्विज्ञायते, तस्य यदि लुक् स्याच्चकारेणानुकृष्य विधानमनर्थकं स्यात्, एकधुराल्लुगिति वक्तव्यं, लुक् स्वभावादनन्तरस्य खस्य प्राकरणिकस्य यतो वा विधिरनुमास्यते, तदाह । 'तस्य च लुग्भवतीति' । 'एकधुरीण इति' । एकां धुरं वहतीति तद्धितार्थे समासः, तत्रोक्तोऽकारः समासान्तः, ततः खः ॥

"शकटादण्" ॥ शकटादण्विधानमनर्थकं, कथं शाकट इति, तस्येदमित्यण् भविष्यति, यो हि शकटं वहति शकटस्यासौ वोढा भवति, तत्राहुः, आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वे शकटे वहति, द्वैशकट इति प्राग्दीव्यतीयो लुङ् न भवति ॥

"हलसीराट्ठक्" ॥ इह यो हलं वहति सीरं च तस्यासौ वोढा भवति तत्र तस्येदं हलसीराट्ठगित्येव हालिकः सैरिक इति सिद्धं नार्थोऽनेन, अत्राहुः, आरम्भसामर्थ्यादत्रापि तदन्तविधिः, द्वैहालिकः द्वैसीरिकः त्रैसीरिक इति लुङ् न भवतीति ॥

"सञ्ज्ञायां जन्याः" ॥ 'जामातुर्वयस्येति' । सा हि प्रणयकलहादौ जनीं जामातुः समीपं प्रापयति । 'जनी वधूरुच्यतइति' । जायतेऽस्यां गर्भ इति कृत्वा, जनिवदिभ्यामितीञ्प्रत्यये जनिवध्योश्चेति वृद्धिप्रतिषेधे कृदिकारादक्तिन इति ङीष् ॥

"विध्यत्यधनुषा" ॥ 'पादौ विध्यन्ति पद्या इति' । तुदन्तीत्यर्थः । पद्यत्यतदर्थेइति पद्भावः । 'ऊरव्या इति' । ओर्गुणः । वान्तो यि प्रत्यये । 'नन्वसमर्थत्वादिति' । सापेक्षमसमर्थं भवतीत्यसामर्थ्यं, प्रत्ययार्थो ह्यत्र बाह्यं करणं धनुरपेक्षते, ननु व्यधनमत्र सापेक्षं करणक्रिययोः संबन्धात्, व्यधनं च प्रधानं क्रियाप्रधानत्वादाख्यातस्य, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, यथा राजपुरुषः शोभन इति, भवतु क्रियाप्रधानमाख्यातं तद्धितस्तु स्वभावात्साधनप्रधानः क्रिया तु गुणभूतेत्युक्तं, सा च धनुरपेक्षतइत्यसामर्थ्यम् । 'अनभिधानाच्चेति' । अत्रैवोपपत्यन्तरमनभिधानमेव दर्शयति ।

'नहीति' । धनुषा पञ्च इत्युक्ते इत्थम्भूतलक्षणा सहयोगलक्षणा वा तृतीया गम्यते न तु पादौ धनुषा विध्यतीत्ययं विवक्षितोऽर्थः, अवश्यं चैतदेवं विज्ञेयम् असमर्थत्वादनभिधानाच्चात्र प्रत्ययो न भवतीति, यो हि मन्यते ऽधनुषेति प्रतिषेधात्प्रत्ययो न भवतीति तस्य शर्कराभिः पादौ विद्धाति कण्टकैरिह विद्धातीत्यत्र प्रत्ययः स्यादेव, एवं तर्हि विशेषोपलक्षणपरोऽत्र धनुषेति निर्द्देशो न तु धनुषः करणत्वप्रतिषेधपर इत्यर्थः । 'धनुष्प्रतिषेधेनेति'। नित्यं समासेनुत्तरपदस्थस्येति षत्वमुपलक्षणत्वमेव प्रतिपादयति । 'यस्मामिति'। तेनेह न भवति चौरं विद्धातीति, सम्भाव्यते हि प्रच्यवच्छेदनादिक्रायां चौरस्य व्यधनक्रियायां धनुषः करणत्वम् ॥

"धनगणं लब्धा" ॥ लब्धेति तृन्नन्तमेतत्; तृजन्ते तु कर्तृकर्मणोः कृतीति षष्ठ्या भवितव्यं, तृन्नन्ते तु न लोकाव्ययनिष्ठेति प्रतिषेधाद् द्वितीयैव भवति ॥

"वशङ्गतः" ॥ वश कान्तौ, वशनं वशः, वशिरण्योरुपसङ्ख्यानमित्यप्, काम इच्छा तां प्राप्त इति, परेच्छानुगामीत्यर्थः ॥

"पदमस्मिन् दृश्यम्" ॥ 'निर्द्देशादेवं प्रथमा समर्थविभक्तिरिति.'। द्वितीया तु न भवति दृश्यमिति क्यपा कर्मणोभिहितत्वात् । 'शक्यार्थे कृत्यप्रत्यये[1] इति'। तेन योग्यत्वे सति पदस्पर्शनाभावेपि पद्यः कर्द्दम इति प्रयोग उपपद्यतइति भावः, मुद्रा सन्निवेशः, प्रतिरूपा मुद्रा प्रतिमुद्रा । 'नातिद्रवो नातिशुष्क इति' । पांसवोपि नात्यल्पा नातिबहुलाः पद्याः ॥

"मूलमस्यावर्हि" ॥ 'प्रथमासमर्थादिति'। द्वितीयाया निमित्ताभावान्निर्द्देशादेवं प्रथमैव भवतीति भावः । वृहू उद्यमने, वादिरयं न बादिः, दृश्यते हि उद्वृह रक्षः सहमूलमिन्द्र वृश्च मध्यं प्रत्यग्रं शृणीहि, तद्वर्हात्मनो देवा इति च, आवर्हणमावर्हः, उत्पाटनमावर्हास्यास्ती-

१ प्रत्यय इति मुद्रितमूलपुस्तके नास्ति ।

त्वावर्हि,सुष्टु पक्का न शक्यन्ते संग्रहीतुं, मध्यतो लूयमाने कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ता इत्यर्थः ॥

"सञ्ज्ञायां धेनुष्या" ॥ 'यश्च प्रत्ययो निपात्यतइति'। कुत्र, अनिर्दिष्टार्थत्वात्स्वार्थे, तदाह। 'या धेनुरुत्तमर्णायेति'। कथं पुनर्यति प्रकृते यप्रत्ययो निपात्यते तत्राह। 'अन्तोदात्तोपि ह्ययमिष्यतइति'। यति हि तित्स्वरितमिति स्वरितः स्याद्, अन्तोदात्तश्चेष्यते, न केवलं सञ्ज्ञायामपि त्वन्तोदात्तोपीत्यपिशब्दस्यार्थः ॥

"गृहपतिना संयुक्ते ञ्यः" ॥ 'अन्यस्यापीत्यादि'। गृहपतिर्हि यजमानः स यथा गार्हपत्ये कार्याणि करोति तथा दक्षिणाग्नावाहवनीये च, भूयो वाहवनीये तस्मादन्यस्यापि गृहपतिना योगोस्ति, यद्येवं तत्राप्यतिप्रसङ्ग इत्यत आह। 'तत्रेति'। अपर आह, गृहपतिरग्निविशेषस्तेन संयोगो गार्हपत्यस्यैवाग्निहोत्रेपि गार्हपत्ये अग्नये गृहपतये प्रजापतये, पत्नीसंयाजेषु च तत्रैवेज्यतइति तत्रापि गृहपतिरग्निर्गृह्यते न यजमान इत्यत्र सञ्ज्ञाधिकार एव शरणम् ॥

"नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु" ॥ तत्र नावादीनां प्रथममूलान्तानां पञ्चानां द्वितीयमूलादीनां च त्रयाणां पूर्वं पृथक्पृथक् द्वन्द्वं कृत्वा ततो द्वयोरपरो द्वन्द्वः कृतः, न त्वष्टानां युगपत्सहविवक्षा, किं सिद्धं भवति, न मूलयोः सारूप्यादेकशेषो भवति, का पुनरत्र समर्थविभक्तिरित्यत आह। 'प्रत्ययार्थद्वारेणेति'। द्वारं मुखमुपायः, इह तायोदयः प्रत्ययार्थास्तत्संबन्धे करणे कर्त्तरि हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति। 'नाव्यमिति'। अत्र तावत्तरणक्रियायां करणत्वम्। 'वयसा तुल्य इति'। तत्र हेतुमाह। यो येन वयस्तुल्यः स तं प्रति वयस्यः। 'शत्रौ न भवतीति'। किंतु मित्रएव भवति। 'ननु चेति'। धर्मेण प्राप्यं सुखादि फलमपि धर्मादनपेतमेव कार्यस्य कारणाविनाभावादिति प्रश्नः। 'धर्मं यदनुवर्त्ततइति'। अनादिः शिष्टसमाचारस्तज्जन्यो वात्मगुणो धर्मः, यदनुष्ठानमनुवर्त्तते तद्धर्मादनपेतं, फलं तु धर्मादपेयेति, कुत इत्याह। 'कार्यविरो-

धित्वादिति' । धर्मस्य कार्यं सुखानुभवः, कार्यं विरोधि नाशकं यस्य स कार्यविरोधी तस्य भावः कार्यविरोधित्वं तस्मादित्यर्थः, उत्पन्ने हि फले धर्मो नश्यति, अन्यथा सकृद्धर्मे कृते स्वर्गमनुभवतः प्रभवो न स्यात् । 'वधमर्हतीत्यर्थे इति' । वधशब्दस्य दण्डादिभ्यो य इत्यत्रार्थे व्युत्पादितत्वात् । 'आनाम्यमभिभवनीयमिति' । अनेकार्थत्वाद्धातूनामाङ्पूर्वो नमिरभिभवे वर्तते । 'पटादीनामुत्पत्तिकारणमिति' । पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं यद्वस्तु तन्मूलशब्दवाच्यमित्यर्थः । 'तेनेति' । मूलेन । 'तदिति' । मूल्यम् । 'शेषीक्रियतइति' । शेषीकरणमेवात्राभिभव इत्यर्थः । गुणभावमापद्यते कथमित्याह । 'मूलं हि सगुणं मूल्यं करोतीति' । मूल्यमिह कर्तृ, मूलं कर्म, पटादिषु विक्रीयमाणेषु यन्मूलातिरिक्तं वस्तु लाभो नाम तन्मूल्यं, गुणो भागः स पुनरिह मूल्यमेव, तेन सह वर्त्तते सगुणः, हिशब्दो हेतौ, एतदुक्तं भवति, यस्मान्मूल्यमात्मनैव भागभूतेन सभागं मूलं करोति तस्मान्मूले मूल्यमभिभूयते शेषीक्रियते, मूल्ये सति तेन गुणेन सगुणं मूलं भवति, इयमेव चावनतिः, अयमेवाभिभवः, इदमेव शेषीकरणं, लोके तु यावता द्रव्येण पटादिको विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धो न मूलातिरिक्ते भागे, स च मूल्यसंभवादौपचारिकः,. एवं च यत्रापि मूल्यं नास्ति दायप्रतिग्रहादिलब्धे चैत्रे क्रीयमाणे तत्रापि क्रयद्रव्ये मूल्यशब्दप्रयोगः सिद्धो भवति, सीता हलाग्रं, संपूर्वादिणः क्तः, समितं सङ्गतं, निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत् । 'द्विसीत्यमिति' । द्वाभ्यां सीताभ्यां समीकृतमिति तद्धितार्थे समासस्ततः प्रत्ययः । 'तुलया संमितं तुल्यमिति' । अत्र तुल्यार्थयोगे तृतीया, यद्यपि तद्योगे षष्ठ्यपि भवति तथापि नावादिभिस्साहचर्यात्तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययः, अत एव पूर्वमुक्तं तृतीयासमर्थविभक्तिर्लभ्यतइति, षष्ठ्यन्तादपि न कश्चिद्दोषः, न्यायस्तु कथितः, कथं पुनस्तुल्यस्य तुलया सदृशत्वमत आह । 'यथेति' । 'एवं तदपीति' । तदपि तुल्यं प्रतियोगिनं सादृश्येन परिच्छिनत्ति, एतद्व्युत्पादनत्वेन प्रदर्शितं सदृशपर्यायस्तुल्यशब्दः नावयवार्थः कश्चित्, अत एव तुल्यास्यप्रयत्नं सवर्णमित्यत्रोक्तं तुल्यशब्दः सदृशपर्याय इति ॥

"धर्मपथ्यर्थन्यायादनपेते" ॥ 'निर्द्देशादेवेति'। सत्यर्थसम्भवेर्थान्तरस्य वा सम्भवे सति निर्द्देशादिति द्रष्टव्यं, धुरो यड्डकावित्यत्रातिप्रसङ्गो नोद्भावनीयः। 'संज्ञाधिकारादभिधेयस्य नियम इति'। शास्त्रीयात् पथो यदनपेतं तत्पथ्यं न तु तस्मादनपेतश्चोरः ॥

"छन्दसो निर्मिते" ॥ 'प्रत्ययार्थसामर्थ्यं लभ्यतइति'। निर्माणे छन्दसः करणत्वात्। इष्टपर्यायश्छन्दःशब्दोगृह्यतइति न वेदवचनो नापि त्रिष्टुबादिवचनः, एतच्च संज्ञाधिकाराल्लभ्यते, यद्यपि स्वच्छन्दतो हि वचसां प्रवृत्तिः, छन्दानुवृत्तिदुस्साध्येत्यादावकारान्तश्छन्दशब्द इच्छापर्यायः, तथापि तस्यैव धातोरसुन्नन्तस्येच्छावाचित्वमविरुद्धं चेति मन्यते ॥

"उरसोण् च" ॥ 'औरसः पुत्र इति'। आत्मनोत्पादित इत्यर्थः। 'संज्ञाधिकारादभिधेयनियम इति'। उरसा निर्मितं सुखमित्यादौ न भवति ॥

"हृदयस्य प्रियः" ॥ हृदयमन्तःकरणं, प्रियं प्रीतिकरम्। 'हृद्यमिति'। हृदयस्य हृल्लेखयदण्लासेष्विति हृदादेशः ॥

"बन्धने चर्षौ" ॥ 'षष्ठीसमर्थादिति'। बन्धनयोगे कृद्योगलक्षणा कर्मणि षष्ठी। 'ऋषिर्वेदो गृह्यतइति'। तदुक्तमृषिणेत्यादौ दर्शनात्, यस्त्वाध्यानसम्बन्धे वसिष्ठादावृषिशब्दस्तस्य ग्रहणं न भवति संज्ञाधिकारात् ॥

"मतजनहलात्करणजल्पकर्षेषु" ॥ 'प्रत्ययार्थसामर्थ्यलब्धेति'। करणादयः प्रत्ययार्थाः, तद्वचनाः करणादयः शब्दाः कृदन्ताः, तद्योगे यथायथं कर्तृकर्मणोः कृतीति षष्ठी भवति संज्ञाधिकाराद्धलसम्बन्धाच्च कर्षशब्दोपि क्रियावचनो गृह्यते न परिमाणशब्दः, मतस्य करणमिति कर्मणि षष्ठी, जनस्य जल्प इति कर्त्तरि, जल्पशब्दो भावसाधनः, अत एवात्र भावः साधनं वेति नोक्तं, हलस्य कर्ष इति कर्मणि षष्ठी.करणस्य वा कर्तृत्वविवक्षायां कर्त्तरि। 'द्विहल्य इति'। रथसीताहलेभ्यो यद्विधाविति तदन्तविधिः ॥

"तत्र साधुः" ॥ 'सामन्य इति' । ये चाभावकर्मणोरिति प्रकृतिभावः, प्रवीणो निपुणः, योग्यः समर्थः । 'तत्र हि परत्वादिति' । तस्मै हितमित्यनेन चतुर्थीसमर्थात्प्रत्ययो विधीयतेऽनेन तु सप्तमीसमर्थात्तेन नात्र विप्रतिषेधे परमित्येतत्परत्वामरत्वं विवक्षितं, किं तर्हि इष्टवाची परशब्दः, उपकारलक्षणे साधौ प्राक्क्रीतीयानामेवेष्टत्वात्तस्मै हितमित्यनेन विधिना भवितव्यमित्यर्थः, एतच्च संज्ञाधिकाराल्लभ्यते ॥

"प्रतिजनादिभ्यः खञ्" ॥ जनञ्जनं प्रति प्रतिजनमिति यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः । 'प्रतिजने साधुरिति' । तृतीयासप्तम्योर्बहुलम् । 'परस्य कुलममुष्य कुलमिति' । षष्ठीसमासेस्मादेव निपातनात् षष्ठ्या अलुक्, पूर्वसूत्रउक्तं साधुः प्रवीणो योग्यो वा गृह्यते नोपकारकस्तत्र प्राक्क्रीतीयानामेवेष्टत्वादिति, इह तु न तथेत्याह । 'यत्रेति'। 'प्राक्क्रीतीया बाध्यन्तइति' । अप्राप्तिरत्र बाधः, नहि चतुर्थ्यन्ताद्विधीयमानानां सप्तम्यन्तेभ्यः प्राप्तिरस्ति, तत्र प्राक्क्रीतीया न भवन्तीति वक्तव्ये बाध्यतइत्युक्तं चतुर्थ्यन्तेभ्योऽप्यनभिधानात्प्राक्क्रीतीया न भवन्तीति दर्शयितुम् ॥

"भक्ताद्णन्यतरस्याम्" ॥ 'भाक्तास्तण्डुला इति' । भक्तयोग्यास्त्रिःफलीकृतत्वात् ॥

"परिषदो ण्यः" ॥ 'णप्रत्ययोप्यत्रेष्यतइति' । पारिषदाकृतिरेषा तत्र भवतां, सर्ववेदपारिषदं हीदं शास्त्रमिति च भाष्यकारप्रयोगात् ॥

"पथ्यतिथिवसतिस्वपतेर्ढञ्" ॥ पतन्त्यनेनेति पन्थाः, गमेरिनिः पतेस्थ च, अतति सततं गच्छतीत्यतिथिः, न विद्यते तिथिर्यस्य सोऽतिथिः, एकमपि दिनमत्रास्थित इत्यर्थः, वसनं वसतिः वसेश्चेत्यतिप्रत्ययः, तत्र योग्या वासतेयी रात्रिः, स्वपतिराढ्यः स्वपतेर्योग्यं स्वापतेयं धनम् ॥

"समानतीर्थे वासी" ॥ वसतीति वासी निपातनाणिनिः, ग्रह्यादेराकृतिगणत्वाद्वा साधुरिति । 'निवृत्तमिति' । तेन किं सिद्धं भवतीत्याह । 'वासीति प्रत्ययार्थे इति' । साधुरित्यस्यानुवृत्तौ तु तस्यैव विशेषणं

वासिग्रहणं स्यात्। 'तीर्थशब्देनेह गुरुरुच्यतइति'। प्रयागादितीर्थसाधर्म्यात्, तरन्त्यनेनेतितीर्थं, तरतेः क्थन्, मुख्यस्य तीर्थस्य ग्रहणं न भवति संज्ञाधिकारात्॥

"समानोदरे शयित ओ चोदात्तः"॥ 'ओकारश्चोदात्त इति'। तित्स्वरितस्यापवादः। 'शयितः स्थित इति'। शेतेः स्थितावपि वृत्तेः, आमाशयो जलाशय इति यथा। 'समानोदर्य इति'। उद्गीर्यतइत्युदरम्, उदि दृणातेरलचौ पूर्वपदान्तलोपश्चेत्यलचोरन्यतरः, समानं च तदुदरं च समानोदरं, पूर्वापरप्रथमेत्यादिना समासस्ततः प्रत्ययः॥

"सोदराद्यत्"॥ 'यकारादौ प्रत्यये विवक्षितइति'। विभाषोदरइत्यत्र तीर्थे यइत्यतो यइत्यनुवर्त्तते, तत्र यइत्येषा विषयसप्तमीति दर्शयति। 'ओ चोदात्त इति तु नानुवर्त्ततइति'। यविधानसामर्थ्यात्॥

"भवेच्छन्दसि"॥ 'अणादीनां घादीनां चापवाद इति'। तत्र भवइतिप्राप्तानां सति दर्शने तेपि भवन्तीति। तद्यथा मुञ्जवान्नाम पर्वतस्तत्र भवो मौञ्जवतस्सोमस्येति भवः। 'मेध्यायेति'। अत्र यतो नाव इत्याद्युदात्तत्वं प्राप्नोति अन्तस्वरितं चाधीयतइति॥

"पाथोनदीभ्यां ड्यण्"॥ 'पाथोन्तरिक्षमिति'। पाति भूतान्यवकाशदानेनेति कृत्वा, यद्यपि पातेर्बलेजुट् उदके थुट् अन्ने चेति अन्नोदकयोः पाथःशब्दोऽसुनि व्युत्पाद्यते तथापि बाहुलकादन्तरिक्षेपि भवति॥

"वेशन्तहिमवद्भ्यामण्"॥ वेशन्तः पल्वलं विशेर्झ् च तत्र भवा आपः वैशन्त्यः॥

"स्रोतसो विभाषा ड्यड्ड्यौ"॥ स्रुरीभ्यां तुट् चेत्यसुन्, स्रोतो नदीप्रवाहः॥

"सगर्भसयूथसनुताद्यन्"॥ अर्त्तिगृभ्यां भन्, गिरति गीर्यते वा गर्भः, युता भवन्त्यस्मिन्यूथं, तिथपृष्ठगूथयूथप्रोथा इति क्थन्प्रत्ययान्तो निपातितः, नुतिर्नुतं नपुंसके भावे क्तः, सगर्भादयस्त्रयोपि कर्मधारयाः॥

"तुग्राद् घन्" ॥ तुजस्तुग्रम्यमः सार्वधातुकइत्यत औणादिको रन् गुडागमः ॥

"अयाय्यत्" ॥ इन्द्रेन्द्रायेत्ययशब्दो निपातितः । 'सामान्येनेति' । भवे छन्दसीतीति । 'ताभ्यां बाधा मा भूदिति पुनर्विधीयतइति' । एवमपि यद्ग्रहणमनर्थकम् । अयादित्येवास्तु प्राकरणिको यद्भविष्यति, अथ वा ऽयाद् घञ्छौ चेति चकाराद्भविष्यति, अय[illegible]चादिमजित्यस्य समुच्चयो न शक्यो विदेशस्थत्वात्, एवमप्यनन्तरस्य घनः समुच्चयो विज्ञायेत, योगविभागे पुनरनन्तरो घनेव स्यात्, योगविभागसामर्थ्याच्च भविष्यति, अथ कथं ताश्च स एव चाय्यजननः, एतच्छिवे जानीहि ब्राह्मणाय्यस्य लक्षणमिति भाषायां प्रयोगः छन्दोवदृषयः कुर्वन्ति ॥

"घञ्छौ च" ॥ 'चकारस्तुग्रादित्यस्यानुकर्षणार्थ इति' । पूर्वमेव विहितस्य यतोनुकर्षणे प्रयोजनाभावात् ॥

"समुद्राभ्राद् घः" ॥ समुनत्तीति समुद्रः, उन्देःस्फायितञ्चीति रक्प्रत्ययः, अपो बिभर्तीत्यभ्रं, मूलविभुजादित्वात्कः । 'तस्य लक्षस्येति' । तस्य पूर्वनिपातस्य यल्लक्षणं तस्येत्यर्थः । 'व्यभिचारित्वादिति' । व्यभिचारस्य चायमेव निर्देशो लिङ्गम् ॥

"बर्हिषि दत्तम्" ॥ बृंहेर्नलोपश्चेतीसिप्रत्ययः, बर्हिः ॥

"दूतस्य भागकर्मणी" ॥ दूताद्भागे तस्येदमित्यणि प्राप्ते वचनं, कर्मणि तु दूतवणिग्भ्यां चेत्यौपसंख्यानिके ये ॥

"रक्षोयातूनां हननी" ॥ रक्षेरसुनि रक्षः कमिमनिजनीत्यादिना, यातेस्तो यातुः, यातुशब्दो रक्षःपर्यायः विरूपाणामपि समानार्थानामित्येकशेषस्तु न भवति बह्वर्थाभिधायिस्वरूपपरत्वेन सूत्रे भिन्नार्थयोर्निर्देशात् । 'निर्देशादेव समर्थविभक्तिरिति' । सा पुनः कर्तृकर्मणोः कृतीति कर्मणि षष्ठी । 'बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थमिति' । तद्धि बहुवचनात्प्रत्ययविध्यर्थमन्यथा द्वित्वाद् द्विवचनमेव न्याय्यं स्यात्, कथं पुनर्बहुवचनेन स्तुतिवैशिष्ट्यं ज्ञाप्यते तत्राह । 'बहूनामिति' । बहुवचनान्तात्प्रत्यये

बहूनां रक्षसां हनने सामर्थ्यमुद्भाव्यते मन्त्रे, तथा च स्तुतिर्विशिष्टा संपूर्णा भवति, योगश्चायं शैषिकयोरणठञोरपवादः ॥

"रेवतीजगतीहविष्याभ्यः प्रशस्ये" ॥ रयिरस्यास्तीति रेवती रयेर्मतौ बहुलमिति बहुलवचनात्संप्रसारणम् । उगित्वान्ङीप्, नक्षत्रे तु गौरादित्वान्ङीष् । जगच्छब्दाच्छतृवद्भावान्ङीप् । 'षष्ठी समर्थेभ्य इति' । शंसु स्तुतावित्यस्मात्कृत्यल्युटो बहुलमिति भावे क्यप्, तद्योगे कर्मणि षष्ठी भवति, हविषे हिता हविष्या, उगवादिभ्यो यत् ॥

"असुरस्य स्वम्" ॥ न सुरोऽसुरः सुरप्रतिपक्षः, अथ वा असेरुरन् अस्यत्यस्यते वेत्यसुरः ॥

"मायायामण्" मीयतेनयेति माया, असदर्थप्रकाशनशक्तिः, माङ औणादिको यः, नेति वक्तव्ये ऽण्ग्रहणं लाघवे विशेषाभावात् ॥

"तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" ॥ मतुनिर्ह्रासः मतोरपचयः । 'तद्वानित्यवयवेन समुदायो निर्दिश्यतइति' । स विवक्षितो वर्चःशब्दादिरवयवोऽस्मिन्मन्त्रलक्षणे समुदायेस्तीत्येवमेकदेशार्थाभिधायिनः सर्वनाम्नः समुदाये मतुबयं विहित इत्यर्थः । 'वर्चःशब्दोऽस्मिन्मन्त्रेस्तीति' । स पुनः कुम्भेष्टकोपधानमन्त्रः, भूतं च स्थ भव्यं च स्थ देवस्य वः 'सवितुः प्रसव इत्यादिकः । 'वर्चस्या उपदधातीति' । यथा वर्चस्या भवन्ति तथोपदधातीत्यर्थः, तेजस्वान्मन्त्रः, वसु च स्थ वाम च स्थ देवस्य वः सवितुरित्यादिकः, वयस्वन्तोमन्त्राः त्र्यविर्वयः त्रिष्टुबित्यादिकाः, ऋतुमन्तो मन्त्राः मधुश्च माधवश्चेत्यादिकाः । 'मन्त्रसमुदायादेव मा भूदिति' । ननु तद्वानित्यस्मिन्नसति समर्थानां प्रथमाद्वेति वचनोदासामिति प्रथमं निर्दिष्टत्वात् षष्ठ्यन्तादिष्टकावाचिन उपधाने मन्त्रे प्रत्ययविधिः प्रसज्जनीयः, सत्यम् । आसामिति प्रथमं न करिष्यतइति मत्वा प्रश्नप्रतिवचने, ततश्च तद्वानित्यस्याभावे त्र्यविर्वयस्त्रिष्टुप्छन्द इत्ययमुपधानमन्त्र आसामिष्टकानामिति वाक्यं स्यात्तत्रश्चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोति । 'वर्चस्वानुपस्थान-

मन्त्र इत्यादि'। उपस्थानं मन्त्रेणाभिमन्त्रणं विवक्षितं, शिवेन मा चक्षुषेत्यादिकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। 'अङ्गुलिमानित्यादि'। यद्यपि सर्वासामिष्टकानामङ्गुलिमान्हस्त उपधानस्तथापि यास्तूष्णीमुपधेया इष्टकास्तासु मन्त्रव्यावृत्त्यर्थंतया विशेषणमर्थवत्। 'एषां कपालानामित्यत्र मा भूदिति'। स्त्रीलिङ्गनिर्देशादत्राप्रसङ्ग इति चेत् एवमपि शर्करासुप्रसङ्गः। 'अनेकपदसम्भवेपीति'। [illegible]ति त्विति करणे मन्त्रे बहूनां सम्भवाद्येन केन चित्पदेन तद्वान्मन्त्रो गृह्येत तथा पदैकदेशेन वर्णसमुदायेन, इतिकरणात्त्वयमतिप्रसङ्गो न भवति। मतुब्ग्रहणमुत्तरार्थम् अश्विमानित्यत्र मतुप एव लुग्यथा स्यादिनेर्मा भूदिति, इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुग्भविष्यति, वर्चःशब्दादावसुप्रभृतेरप्रसङ्गः, उणादीनामव्युत्पन्नत्वात्, इह प्राणभृत उपदधातीत्यादावभेदोपचारात्प्रत्ययाभावः।

"अश्विमानण्"॥ 'सोश्विमानिति'। यद्यपि बहवोश्विमन्तो मन्त्रा ध्रुवक्षितिरित्यादिकास्तथापि सामान्यापेक्षमेकवचनम्।

"वयस्यासु मूर्ध्नो मतुप्"॥ 'वयस्यास्विति'। छन्दसि या वयस्या इष्टका उच्यन्ते तास्वित्यर्थः, ताश्च बह्व्यः, तास्वन्तश्चतस्रो मूर्द्धन्वत्यः, विष्टम्भो वय इत्यादिवयस्वद्भिर्मन्त्रैरुपधेयास्तत्र च यद्यपि मूर्द्धा वयः प्रजापतिश्छन्द इत्यन्तिमएकस्मिन्नेव मन्त्रे मूर्द्धशब्दोस्ति तथापि साहचर्याद्विष्टम्भो वय इत्याद्याश्चत्वारो मूर्द्धन्वन्त उच्यन्ते, यथा छत्रिणो यान्तीति, तेन मूर्द्धन्वतीरुपदधातीति बहुवचनम्। 'मूर्द्धन्वानपि भवतीति'। नन्वनो नुडिति छन्दसि नुड्विधीयते, सत्यं, यथा सूत्रकारेण छान्दसमेव पदं प्रयुक्तं वयवस्यास्विति तथेदमपि वृत्तिकारेण, मूर्धन्वानपि भवति छन्दसीत्यर्थः, वयस्याश्च ताः मूर्धन्वत्याश्चेति उभयथापि छान्दस्यभिधीयतइत्युक्तं भवति। 'यत्र मूर्द्धन्वच्छब्द एव केवल इति'। यथाग्ने यशस्विन्यशसे समर्पयेत्यादिके मन्त्रे। 'ततो मा भूदिति'। तदभिधायिनो मूर्द्धन्शब्दादित्यर्थः। 'मूर्द्धन्वत इति वक्तव्यमिति'। तद्वानिति च लुक् च मतोरिति चानुवर्त्तते, ततश्च मूर्द्धन्वत इति युक्तं वक्तुमिति भावः, इह तु गायत्रीः पुरस्तादुपदधाति तेजो वै गायत्री तेज एव

मुखतो धत्ते मूर्द्धन्वती भवन्तीति मुख्यो गायत्रीषु मूर्द्धन्वतीशब्दः प्रथमं मतुबन्तः प्रयुक्तः, किं कारणं, तदुपधानमन्त्रेषु अग्निर्मूर्द्धा भुव इत्यादिषु वयःशब्दस्याभावात् ।

"मत्वर्थे मासतन्वोः" ॥ मत्वर्थयच्छ्याल्लभ्यमर्थं दर्शयति । 'प्रथमासमर्थादित्यादि' । मासतन्वोरिति कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरित्यूकारान्तस्तनूशब्दः सूत्रे निर्दि[illegible] न तु भृमृशीङ्तृचरित्सरितनिमिमस्जिभ्य उरित्युकारान्तः, द्वन्द्वे घीति पूर्वनिपातप्रसङ्गात् । 'अनन्तरार्थे चेति' । न केवलं मत्वर्थमात्रइति चशब्दस्यार्थः । 'लुगकारेकाररेफाश्चेत्यादि' । रादिफ इत्यत्र वर्णादिति न संबद्ध्यते तेन समुदायनिर्द्देशेपि इफः कृतः, अन्ये तु रशब्दा इति पठन्ति, प्रत्यय इत्यधिकारोकारादिभिः संबद्ध्यते न तु लुका, तपनं तपः, सहनं सहः, भावेऽसुन्, तदस्मिन्नस्तीति सूत्रेण विहितस्य यतो लुक्, कथं पुनरत्र नपुंसकत्वं यावता तद्धितलुकि सत्यभिधेयवल्लिङ्गेन भवितव्यमत आह । 'नपुंसकलिङ्गं छान्दसत्वादिति' । इडवम् इष्यमाणत्वात्, ऊर्क् बलम्, ऊर्ज्ज बलप्राणनयोः, ताभ्यामकारः प्रत्ययः, इषः ऊर्ज्जः, शोचनं शुक्, पूर्ववत्क्विप्, आतपातिरेकेण शरीरादेः शोषस्तद्वान्मासः शुचिः, एवं शुक्रः, अत्र छान्दसत्वादैवायस्मयादित्वाद्भत्वाज्जश्त्वाभावः, तदेव छन्दोधिकारे लुगादीनां विधानाद्भाषायां शुचिशुकादीनामन्याय्यः प्रयोगः स्यात्, व्युत्पत्यन्तरेण वा ऽव्युत्पन्ना वा नभस्यादयः शब्दा मासेषु वर्त्तन्ते, इषोर्ज्जशब्दावर्शआद्यच्प्रत्ययान्तौ, मत्वर्थीये रप्रत्यये पृषोदरादित्वाज्जश्त्वाभावे शुक्र इति भवति, शोचतेरन्तर्भावितण्यर्थादौणादिके किप्रत्यये कृते शुचिरिति भवति, शोचयति संतापयति प्राणिन इति कृत्वा, अभेदोपचाराच्चभःप्रभृतीनां मासेषु वृत्तिः, नभस्यप्रभृतयस्तु तत्र साधुर्लित यदन्ताः, मतौ छः सूक्तसाम्नोरित्यत्र यथान्तरेणाप्यर्थग्रहणं मत्वर्थे प्रत्ययो लभ्यते तथेहापि लप्स्यते नार्थोर्थग्रहणेन ।

"मधोर्ञ च" ॥ अत्रापि भाषायां मधुयोगान्मासो मधुः, तस्य प्रज्ञादिषु पाठादाद्युदात्तत्वम् ।

णपरत्वं शब्दानुशासनाविरुद्धं नियोज्यस्य लकारवाच्यत्वाभावात् स्वर्ग-कामादिपदानां नियोज्यविशेषसमर्पणपरत्वं शब्दानुशासनविरुद्धमित्यर्थः । तदु*दाहरणेन विशदयति यथेति,

अपि च स्वर्गकामोयजेतेत्यादिषु लकारवाच्यकर्त्तृविशेषसमर्पणपराणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पणपरत्वं शब्दानुशासनविरुद्धं केनावगम्यते–साध्यस्वर्गविशिष्टस्य स्वर्गसाधनने कर्तृत्वान्वयो न घटत इति चेत् नियोज्यत्वान्वयोऽपि न घटत इति हि स्वर्गसाधनत्वनिश्चयः । स तु शास्त्रसिद्धे कर्त्तृत्वान्वये स्वर्गसाधनत्वनिश्चयः क्रियते यथा भोक्तुकामोदेवदत्तगृहं गच्छेदित्युक्ते भोजनकामस्य देवदत्तगृहगमने कर्त्तृत्वश्रवणादेव प्रागज्ञातमपि भोजनसाधनत्वं देवदत्तगृहगमनस्यावगम्यते ।

एवमत्रापीति, स्वर्गकामस्य यागे कर्त्तृत्वश्रवणात् प्रागज्ञातमपि यागस्य स्वर्गसाधनत्वमवगम्यत इत्यर्थः । इयान्विशेष इत्यभिप्रायमाह न क्रियान्तरं प्रतीति, कथं क्रियान्तरं प्रति कर्तृतया श्रवणम् अस्य क्रियान्तरे कर्तृत्व-कल्पनं च किमित्यत्राह यजेतेति हीति, कथं बुद्धौ कर्तृत्वकल्पनं कृतं भवतीत्यत्राह बुद्धेरिति, उक्तार्थे तद्वन्यमुदाहरति यथोक्तमिति, नियोज्यस्य कर्तृत्वानुगुणमिति तत्परत्वमाश्रीयते इति शङ्कते यष्टृत्वेति, परिहरति देवदत्त इति, एवं यदधिकृत्य कृतिर्वर्तते तत्कृत्युद्देश्यमिति पक्षो दूषितः, प्रेरकत्वं कृत्युद्देश्यत्वमिति वादश्च निरस्तः । अर्थात्स्वत इष्टत्वं चापास्तं कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति च प्रतिचितं कृतिफलविशेष

* तदुदाहरणानि विशदयतीति पा० ।

त्युद्देश्यमित्यादेरप्युक्तरीत्या दूषणं सूचितम्* । एते मुखभेदाश्च बहुग्रन्थकारैर्विलिखिता इत्यत्र ते प्रत्युक्ताः । कार्य्यानुबन्ध्यर्थान्तरमपि परोक्तं दूषितं, पूर्वं ब्रह्मणः फलतया सिद्धिस्तावकत्वसिद्ध्यर्थं तत्सिद्धिश्चेत्युक्तेऽथ फलसाधनतया सिद्धिरुपपाद्यते अर्थात्कार्यस्य साधनतया सिद्धिश्चोपपाद्यते ।

एवमत्रापि भवतीति न क्रियान्तरं प्रति कर्त्तृतया श्रुतस्य क्रियान्तरे कर्त्तृत्वकल्पनं युक्तं, यजेतेति हि यागकर्त्तृतया श्रुतस्य हि बुद्धौ कर्त्तृत्वकल्पनं क्रियते बुद्धौ† कर्त्तृत्वकल्पनमेव हि नियोज्यत्वं, यथोक्तं—नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते । इति, यष्टृत्वानुगुणं तद्बोद्धृत्वमिति चेत् देवदत्तः पचेदिति पाके कर्त्तृतया श्रुतस्य देवदत्तस्य पाकार्थगमनं पाकानुगुणमिति गमने कर्त्तृत्वकल्पनं न युज्यते। किञ्च लिङादिशब्दवाच्यं स्थायिरूपं किमित्यपूर्वमाश्रीयते-स्वर्गकामपदसमभिव्याहारानुपपत्तेरिति चेत् काऽत्राऽनुपपत्तिः—सिषाधयिषितस्वर्गो हि

किञ्चेति, न केवलं प्राधान्यासिद्धिः अपि तु साधनतया स्वरूपसिद्धिरनुपपन्नेत्यर्थः । लिङादिरित्यादि स्पष्टं सिषायिषितेत्यादि, न हि काम्यकामसाधनेऽपि नियोक्तुं शक्यते इति न्यायात्, सिषाधयिषितस्वर्गस्य विधीयमानं तत्साधनमेव तत्र कालान्तरभाविफलस्य क्षणिकक्रियायाः साधनत्वाभावादपूर्वक्लृप्तिरित्यर्थः । परिहरति अनाघ्रातेति, भगवच्छब्दः फलप्रदानानुगुणज्ञानशक्त्यादिपौष्कल्यपरः, नारायणशब्दः प्राप्तिपरः, ईश्वरान्त-

* सुवचमिति पा० ।
† बुद्धेः इति पा० ।

रसापेक्षत्वव्यावृत्तिपरः परमेश्वरशब्दः । वेदविदुचोदर्शयति यथाहुरिति, भाष्यग्रन्थं व्याचष्टे फलेति, आत्मानमिति पदं व्याचष्टे इन्द्रादीति, इन्द्रादिदेवतामुखेनेतीन्द्रादिशब्दवाच्यत्वमित्यन्वयः । आत्मान्तरव्यावृत्त्यर्थं परमात्मानमिति पदं, भगवच्छब्दः पूर्ववत्

स्वर्गकामस्तस्य स्वर्गकामस्य कालान्तरभाविस्वर्गसिद्धौ क्षणभङ्गिनी यागादिक्रिया न समर्थेति चेत् अनाघ्रातवेदसिद्धान्तानामियमनुपपत्तिः सर्वैः कर्म्मभिराराधितः परमेश्वरो भगवान्नारायणस्तत्तदिष्टं फलं ददातीति वेदविदो वदन्ति—यथाहुर्वेदराविदग्रेसरा-द्रमिडाचार्याः—फलसम्बिभ*न्त्सया हि कर्म्मभिरात्मानं पिप्रीषन्तीति स प्रीतोऽलं फलायेति शास्त्रपर्यादा— इति, फलसंबन्धेच्छया कर्म्मभिर्यागदानहोमादिभिरिन्द्रादिदेवतामुखेन तत्तदन्तर्यामिरूपेणावस्थितमिन्द्रादिशब्दवाच्यं परमात्मानं भगवन्तं वासुदेवमाराधयिषन्ति, स हि कर्म्मभिराराधितस्तेषामिष्टानि फलानि प्रयच्छतीत्यर्थः, तथा च श्रुतिः—इष्टापूर्त्तं बहुधा जातं जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिरिति, इष्टापूर्त्तमिति सकलश्रुतिस्मृतिचोदितं कर्म्मोच्यते ।

वासुदेवशब्दोऽन्तरात्मत्वे प्रमाणद्योतकः, सर्वत्रासौ समस्तं चेत्यादि श्रुतिप्रमाणं दर्शयति तथा चेत्यादि । तद्वाक्यं व्याचष्टे सकलेति, श्रौतमिष्टं कर्म्म स्मार्तं पूर्तं कर्म्म । विश्वं बिभर्तीत्येतद्व्याचष्टे इन्द्राग्नीति, नानादेवताकत्वेन प्रतीयमानं कर्म्मजातमेकदेवताकमित्यर्थः । भुवनस्य नाभिरिति नाभिवन्नाभिरित्याधारत्वाभिप्रायेण तद्व्याचष्टे ब्रह्मेति, केन

* फलसम्बिभत्सयेति पाठस्तु पुनरयुक्तः सनि नलोपनिमित्तविरहात् ।

प्रकारेण धारक इत्यत्राह तैस्तैरिति, अभिमतफलदातृत्वमुखेन धारकत्वमित्यर्थः । भिन्नदेवताकत्वेन विधीयमानं कर्म कथमेकदेवताकमिति शङ्कायां मन्त्रस्योत्तरार्द्धं व्याचष्टे अग्नीति, अग्न्यादिदेवताकत्वेन विधीयमानानामेकदेवताकत्वं तत्तदन्तरात्मभूतपरब्रह्माराधनरूपत्वादित्यर्थः । भुवनस्य नाभिरित्यनेन प्रतिपादितफलप्रदत्वविशदाय तदेवाग्निरित्यादिसामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वविशदाय च भगवद्वचनमाह यथोक्तमिति,

तद्विश्वं बिभर्त्ति इन्द्राग्निवरुणादिसर्वदेवतासंबन्धितया प्रतीयमानं तत्तदन्तरात्मतयाऽवस्थितः परमपुरुषः स्वयमेव बिभर्त्ति—स्वयमेव स्वीकरोति, भुवनस्य नाभिः—ब्रह्मक्षत्रादिसर्ववर्णपूर्णस्य भुवनस्य धारकः तैस्तैः कर्म्मभिराराधितस्तत्तदिष्टफलप्रदानेन भुवनानां धारक इति नाभिरित्युक्तः, अग्निवायुप्रभृतिदेवतान्तरात्मतया तत्तच्छब्दाभिधेयोऽयमेवेत्याह तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः, इति, यथोक्तं भगवता—यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् ॥ यां यां तनुमिति इन्द्रादिदेवताविशेषास्तत्तदन्तर्यामितयाऽवस्थितस्य भगवतस्तनवः शरीराणीत्यर्थः । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेत्यादि, प्रभुरेव चेति

अवतारशङ्काव्यावृत्त्यर्थं व्याचष्टे यां यामिति, तनु–शब्दस्याल्पार्थत्वव्यावृत्त्यर्थमाह शरीराणीति, भोक्तृत्ववैशद्यायाह अर्हमिति, प्रभु–शब्दं व्याचष्टे प्रभुरिति, श्रीविष्णुपुराणवचनमाह यथा चेति, एवं कतिपयवचनप्रदर्शनमुपलक्षणार्थम् । अयमर्थः सर्ववेदशास्त्रानुमत इत्याह सेतिहासेति, एवं प्रमाणं दर्शितमथायमर्थ उपपन्न इति वदन् घटकं वाक्यं च दर्शयति एवमिति, आराधनप्रकारविशेषफलविशेषज्ञानवत्ता सर्वज्ञपदेन विवक्षिता, सर्वशक्तिमिति तत्तत्फलदानशक्तिरभिप्रेता सर्वेश्वरं सर्वेशेषिणमनेन प्राप्तिरुक्ता भवति, सम्पच्छब्दः प्राप्तिवाची पद गताविति धातुसंबन्धश्चस्यावयवार्थोऽन्वयस्वारस्यानुगुणरूपेण व्याख्यातः, श्रीगीताभाष्ये कर्म्मणां देवैः संबन्धश्चेदन्तर्यामिस्थितिरत्र कीदृशीत्यत्राह–

सर्वफलानां प्रदाता चेत्यर्थः । यथा च यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाऽच्युत! यैः स्वधर्म्मपरैर्नाथ! नरैराराधितो भवान् । ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥ इति, सेतिहासपुराणेषु सर्वेष्वेव वेदेषु सर्वाणि कर्म्माणि सर्वेश्वराराधनरूपाणि तैस्तैः कर्म्मभिराराधितः पुरुषोत्तमस्तत्तदिष्टं फलं ददातीति तत्र-तत्र प्रपञ्चितम् । एवमेव हि सर्वशक्तिं सर्वज्ञं सर्वेश्वरं भगवन्तमिन्द्रादिदेवतान्तर्यामिरूपेण यागदानहोमादिवेदोदितसर्वकर्म्मणां भोक्तारं सर्वफलानां प्रदातारं च सर्वाः श्रुतयो वदन्ति । चतुर्होतारो–यत्र सम्पदं गच्छन्ति देवैरित्याद्याः, चतुर्होतारो यज्ञाः यत्र परमात्मनि देवेष्वन्तर्यामिरूपेणावस्थिते देवैः सम्पदं गच्छन्ति देवैस्संबन्धं गच्छन्ति यज्ञा इत्यर्थः । अन्तर्यामिरूपेणावस्थितस्य

अन्तर्यामिस्वरूपेणेति, कर्म्मभिर्देवानां भगवच्छरीरत्वेन परतन्त्रतया संबन्धः स्वातन्त्र्येण संबन्धः परमात्मन एवेत्यर्थः । स्वतन्त्रतया संबन्धे प्रमाणमाह यथोक्तमिति, ततः किं प्रस्तुतानुपपत्तिपरिहारस्येत्यत्राह तस्मादिति, परमपुरुषस्यैव फलप्रदत्वात्तस्य फलसाधनत्वं न कल्प्यं वा व्यापूर्व्ववादे तस्य वाच्यत्वमपि न कल्प्यं, व्युत्पत्तिसिद्धत्वाभावादित्यभिप्रायः किं प्रयोजनमिति किमनुपपत्तिशमनं प्रयोजनमित्यर्थः । लिङाद्यर्थं विशदयितुमाह एवं चेति, प्रकृत्यर्थस्य कर्तृव्यापारसाध्यताभिधानं विवृणोति कर्तृवाचिनामिति, कर्तृवाचिनः प्रत्ययाः प्रकृत्यर्थस्य कर्तृव्यापारसंबन्धप्रकारमभिदधति तत्र लट् वर्तमानतया कर्तृव्यापारसंबन्धमभिधत्ते भूततया लिङादयः कर्तृसाध्यतया

परमात्मनः शरीरतयाऽवस्थितानामिन्द्रादीनां यागादिसंबन्ध इत्युक्तं भवति, यथोक्तं भगवता—भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । इति, तस्मादिन्द्रादिदेवतान्तरात्मभूतपरमपुरुषाराधनरूपाणि कर्माणि स एव चाभिलषितफलप्रदातेति किमत्रापूर्वेण व्युत्पत्तिपथदूरवर्त्तिना वाच्यतयाऽभ्युपगतेन, कल्प्येन* वा प्रयोजनम् । एवं च सति लिङादेः कोऽयमर्थः परिगृहीत इति चेत् यज देवपूजायामिति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्त्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नम् । कर्त्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्त्तृव्यापारसंबन्धप्रकारो हि वाच्यः, भूतवर्तमानतादिकमन्ये वदन्ति, लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति । अपि च कामिनः कर्त्त-

* कल्पितेन वेति पा० ।

व्यतया कर्म्म विधाय कर्म्मणो देवताराधनरूपतां तद्द्वारा फलसम्भवं च तत्तत्कर्म्मविधिवाक्यान्येव वदन्ति, वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीत्यादीनि नात्र

संबन्धं लिङादयोऽभिदधति एवमभिधानाल्लिङादयः प्रकृत्यर्थस्यैव कर्तृव्यापारसंबन्धमेवाभिदधति न तु प्रकृत्यर्थातिरिक्तस्य यदि लिङादयोधात्वर्थातिरिक्तस्य कर्तृव्यापारसाध्यतामभिदधति तर्हि लडादयोऽपि धात्वर्थातिरिक्तस्य वर्तमानतादिकमभिदध्युः यथा लडादयोधात्वर्थमात्रस्य वर्तमानतादिकं वदन्ति तथा लिङादयेऽपि धात्वर्थमात्रस्य कर्तृव्यापारसाध्यतां वदन्तीत्यर्थः । एवमुपनिषद्वाक्यैः सोपबृंहणैः भगवत एव फलप्रदत्वात् नापूर्व्वक्लृप्तिरित्युक्तम् । इदानीं कर्म्मविधिवाक्यैरेव देवतानां फलप्रदत्वाभिधानात् नापूर्व्वक्लृप्तिरित्याह अपि चेति, तत्तत्कर्म्मविधिवाक्यान्येवं वदन्तीति विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युरिति न्यायादर्थवादवाक्यस्यापि विधिशेषतया तदेकवाक्यत्वमभिप्रेत्य कर्म्मविधिवाक्यान्येवेत्युक्तं वाक्यं दर्शयति वायव्यमिति, कर्म्मणोदेवताद्वारा फलप्रदत्वं श्रौतमिति फलसाधनत्वं विध्याक्षेपसिद्धमिति वक्तुमयुक्तमित्याह नात्रेति,

फलसिद्ध्यनुपपत्तिः काचिदपि दृश्यत इति फलसाधनत्वावगतिरौपादानिकीत्यपि न सङ्गच्छते, विध्यपेक्षितं यागादेः फलसाधनत्वप्रकारं वाक्यशेष एव बोधयतीत्यर्थः। तस्माद्ब्राह्मणाय नापगुरेतेत्यत्र अपगोरणनिषेधविधिपरवाक्यशेषे श्रूयमाणं निषेध्यस्यापगोरणस्य

औपादनिकीति, उपादानप्रमाणसिद्धा–विध्याक्षेपसिद्धेत्यर्थः, अभिहितापर्यवसानं श्रुतार्थापत्तिः, पीनो देवदत्तो दिवा न भुङ्क्ते इत्यभिधानापर्यवसानम् उपादानमिति तयोर्भेदः अर्थवादादेः स्तुत्याद्यन्यपरत्वेन स्वार्थे तात्पर्याभावात्कर्म्मणां देवताद्वारकं फलसाधनत्वं न सिध्यतीत्यत्राह विध्यपेक्षितमिति, अक्ताः शर्करा उपदधातीत्यादिषु तेजो वै घृतमिति वाक्यशेषावगतस्य विध्यपेक्षितत्वेन स्वार्थे तात्पर्यमभ्युपगतं संदिग्धे तु वाक्यशेषादित्यादिसूत्रेण प्रतिपन्नपरित्यागेनाप्रतिपन्नकल्पनायोगात् एवमत्रापि विध्यपेक्षितत्वेन देवतास्वरूपे तात्पर्यमस्तीत्यभिप्रायः। अर्थवादोक्तविध्यपेक्षितार्थतात्पर्याभ्युपगमे उदाहरणमाह तस्मादिति, ततः किमित्यत्राह अत्रेति, विधेयविरोधिनः फलसाधनत्वमर्थवादोक्तं विध्यपेक्षितत्वात्स्वीकृतं विधेयस्य फलसाधनत्वं विध्यपेक्षितं ततोऽप्यन्तरङ्गतयाऽर्थवादोक्तं स्वीकार्यं तदनादृत्य किमित्युपादानेन फलसाधनत्वक्लृप्तिरित्यर्थः। लोकसिद्धभावनानुस्मरणमुखेन परमुपालभते हिरण्यनिधिमिति, हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न

शतयातनासाधनत्वं निषेधविध्युपयोगीति हि स्वीक्रियते, अत्र पुनः कामिनः कर्तव्यतया विहितस्य यागादेः काम्यस्वर्गादिसाधनत्वप्रकारं वाक्यशेषावगतमनादृत्य किमित्युपादानेन यागादेः फलसाधनत्वं प्रकल्प्यते, हिरण्यनिधिमपवरके निधाय याचते कोद्रव्यादिलुब्धः कृपणञ्जनमिति श्रूयते तदेतद्युष्मासु दृश्यते, शतयातनासाधनत्वमपि नादृष्टद्वारेण चोदितान्यनुतिष्ठतो विहितङ्कर्म्माकुर्वतो निन्दितानि च कुर्वतःसर्वाणि सुखानि दुःखानि च परमपुरुषानुग्रहनिग्रहाभ्यामेव भवन्ति, एष ह्येवानन्दयाति अथ

सोऽभयं गतोभवति अथ तस्य भयम्भवति भीषाऽस्माद्वातः पवते भीषोदेति सूर्यःभीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति· पञ्चमः, इति ॥

विन्देयुरिति, परमात्मनो हिरण्यनिधिदृष्टान्तो हि श्रौतः, अतोहिरण्यनिधिमपवरके निधायेत्युक्तं शतेति अपगोरणस्य शतयातनासाधनत्वमपि न कल्प्यापूर्व्वद्वारेण सम्भवति देवताद्वारकत्वश्रुतेः कल्पनायोगादित्यर्थः। कथं तर्हीत्यत्राह चोदितानीति, उक्तार्थे श्रुतिमाह—एष हीति, ददतोमनुष्याः प्रशंसन्तीति दानस्य प्रशस्यत्वं भगवदाराधनात्मकतयेत्यर्थः दर्वीं पितरोऽन्वायत्ता इति दर्वीशब्दः पैतृककर्म्मोपलक्षणार्थः अन्वायत्ताः तत्प्रवणाः तर्पणाय पितॄणां पैतृककर्म्मणा तृप्तिर्भगवदाश्रयेत्यर्थः। वेदविद्वचनमाह यथोक्तमिति, मेर्षविसर्पितम् उज्जृम्भणं जलोर्मितः जलाशयास्समुद्राः कृतसीमान एव मेर्षविसर्प्पितं कुर्वन्ति न त्वतिलङ्घितसीमान इत्यर्थः। उक्तार्थे भगवद्वचनं दर्शयिष्यन्नाह परमपुरुषेति, अश्रुतेति देवतायां प्रतिपाद्यमानायां कर्म्मणि श्रद्धावैकल्यं स्यात् तदनुत्पत्तये कर्म्मणि श्रद्धाजननाय चातिवादाः कृताः, न तत्र तात्पर्यं देवतानिरपेक्षं कर्मैव फलदानशक्तमिति

एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वाऽक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः, इत्याद्यनेकविधाश्श्रुतयः सन्ति, यथोक्तं द्रमिडभाष्ये—तस्याज्ञया धावति वायुर्नद्यः स्रवन्ति तेन च कृतसीमानोजलाशयाः स*मदा इव मेषविसर्पितं कुर्वन्ति, इति, तत्सङ्कल्पनिबन्धना हीमे लोका न च्यवन्ते न स्फुटन्ते स्वशासनानुवर्तिनं

* समुद्रा एव मेर्षविसर्पितमिति पा·।

ज्ञात्वा कारुण्यात्स भगवान् वर्द्धयेत विद्वान् कर्म्मदक्ष इति च परमपुरुषयाथात्म्यज्ञानपूर्व्वकतदुपासनादिविहितकर्म्मानुष्ठायिनस्तत्प्रसादात्तत्प्राप्तिपर्यन्तानि सुखान्यभयं च यथाऽधिकारम्भवन्ति, तज्ज्ञानपूर्व्वकं तदुपासनादिविहितं कर्म्माकुर्व्वतो निन्दितानि च कुर्वतस्तन्निग्रहादेव

श्रद्धातिशयजननमेवाभिप्रेतमित्यर्थः । एवमविरोधेन निर्वाहः किमर्थमित्यत्राह सर्वमिति, एकशास्त्रं भगवद्बोधाय*नाद्यभिमतमङ्गीकृतं तत्र च विरुद्धार्थप्रतिपादने श्रुतिविरोधात्तदनादरणीय स्यात् अविरोधे सम्भवति विरुद्धार्थपरत्वेन व्याख्यानमयुक्तमिति भावः ॥ एवं सर्व्ववेदान्त्यभिमतः सिद्धार्थे व्युत्पत्त्यभावनिरासः कृतः । अथ तैरप्यनभिमतां नित्यविभूतिं समर्थयति तस्यैतस्येत्यादिना, तस्यैतस्येति पदद्वयेन ब्रह्मस्वरूपसिद्धौ

तदप्राप्तिपूर्व्वकापरिमितदुःखानि भयं च भवन्ति, यथोक्तं भगवता—नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः । इत्यादिना, कृत्स्नं कर्म्मज्ञानपूर्व्वकमनुष्ठेयं विधाय—मयि सर्वाणि कर्म्माणि संन्यस्येति सर्वस्य कर्म्मणः स्वाराधनतामात्मनां स्वनियाम्यतां च प्रतिपाद्य—ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः। श्रद्धावन्तो ऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ इति स्वाज्ञानुवर्तिनः प्रशस्य विपरीतान्विनिन्द्य पुनरपि स्वाज्ञानुपालनमकुर्वतामासुर-

† अयं चार्थोऽस्माभिर्बोधायनमतानुवर्तिब्रह्मसूत्रवृत्तौ बहुलमुपपादितः ।

प्रकृत्यन्तर्भावमभिधाय अधमा गतिश्चोक्ता—तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥ आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि। मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्॥ इति सर्वकर्म्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः—मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्। इति च स्वाज्ञानुवर्तिनां शाश्वतं पदं चोक्तम्। अश्रुतवेदान्तानां कर्म्मण्यश्रद्धा माभूदिति देवताधिकरणे अतिवादाः कृताः कर्म्ममात्रे यथा श्रद्धा स्यादिति सर्वमेकशास्त्रमिति वेदवि*त्सिद्धान्तः,॥ तस्यैतस्य परस्य ब्रह्मणो नारायणस्यापरिच्छेद्यज्ञानानन्दामलत्वस्वरूपवज्ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभृत्यनवधिकातिशया—

तस्य च नारायणत्वे प्रमाणं स्मारितं, स्वरूप-शब्दः स्वरूपनिरूपकधर्म्मवाची अपरिच्छेद्येति स्वरूपमुक्तं ज्ञानेति गुणा उक्ताः। स्वसङ्कल्पेति विभूतिमस्वमुक्तं, स्वरूपतद्गुणविभूतयो र्दिव्यरूपादीनां प्रामाणिकत्वे दृष्टान्ततयोक्ताः। दिव्यविग्रहादयः साध्याः अनुरूपो†ऽप्यभिमतिरस्तीति तद्व्याशृत्यर्थमनुरूप-शब्दः, हेयप्रत्यनीकत्वं कल्याणगुणास्पदत्वं सर्वावस्थस्याप्यस्तीत्येकरूपत्वं तदुचितेत्यादिभूषणविशेषणं कल्याणत्वमप्राकृतत्वं स्वशक्तिसदृशेत्याद्यायुधविशेषणम्, अनन्ताश्चर्यत्वमत्यन्तविस्मयनीयत्वं, स्वाभिमतेत्यादि महिषीविशेषणं, स्वरूपरूपगुणेति रूपतद्गुणा इत्यर्थः। ऐश्वर्यशीलशब्दौ स्वरूपगुणप्रदर्शनार्थौ, स्वरूपस्य भगवदनुरूपपत्वं यथा सर्वे-

* वेदार्थविदां बोधायन-टङ्क-द्रमिड-गुहदेव-भारुचिप्रभृतीनां सिद्धान्तः।
† अननुरूपेति पा०।

गतो विष्णुरित्यवगम्यते । विग्रहस्य तदनुरूपत्वं विष्णोर्देहानुरूपां वै इति ज्ञायते । महिम-शब्दः

**सङ्ख्येयकल्याणगुणवत्स्वसङ्कल्पप्रवर्त्यस्वेतरसमस्तचिदचिद्वस्तुजातवत्स्वाभिमतस्वानुरूपैकरूपदिव्यरूप-तदुचितनिरतिशयकल्याणविविधानन्तभूषण-स्वशक्तिसदृशापरिमितानन्ताश्चर्यनानाविधायुध-स्वाभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्य*शीलाद्यनवधिकमहिम-महिषीस्वानुरूपकल्याणज्ञानक्रियाद्यपरिमेयगुणानन्तपरिजनपरिच्छदस्वोचितनिखिलभोग्यभोगोपकरणाद्यनन्तमहाविभवावाङ्मनसगोचरस्वरूपस्वभाव-**

उत्कृष्टत्ववाची महिषी-शब्देन लक्ष्मीर्विवक्षिता अन्यासामपि तच्छेषत्वेन सिद्धिः । स्वानुरूपेत्यादि परिजनपरिच्छदविशेषणं क्रियाकैङ्कर्यम्परिजनाः शेषशेषासनादयः कलाचिकाप्रभृतयः परिच्छदाः स्वोचितेत्यादिपरमपदविशेषणं, भोग्यशब्देन स्रक्चन्दनादिर्विवक्षितः, भोगोपकरणशब्देन स्रक्चन्दनादिविनियोगोपयोगिभाजनादयो विवक्षिताः । परिच्छदशब्देन कलाचिकादिस्वरूपेण भोगोपकरणं विवक्षितं, भोगोपकरण-शब्देन भोग्यवस्तुविनियोगसाधनपदार्थो विवक्षिता इति भिदा, आदि-शब्देन दिव्योद्यानादि विवक्षितम् । अवाङ्मनसगोचरेति अपरिच्छेद्यत्वात्स्वभावशब्दो जाज्वल्यमानत्वादिगुणपरः, आदि-शब्देन तत्र तद्व्यापारादयोऽभिप्रेताः । सहस्रशः श्रुतयः सन्तीति प्रत्यक्षश्रुतयः उपबृंहणमूलभूताखिलश्रुतयश्चाभिप्रेताः । उक्तार्थविषयाः श्रुतीरुदाहरति वेदाहमिति, मनोमय-शब्दं व्याचष्टे मनोमय इतीति, मयट्-शब्दः प्राचुर्यार्थोऽयं सम्बन्धपरो भवति सम्बन्धश्च वाच्यवाचकभावः, मनसा तु विशुद्धेनेत्या-

* लीलेति पा० ।

द्युतेरित्यर्थः । नीलतोयदेत्यादिश्रुतिं व्याचष्टे मध्यस्थेति, नीलतोयदमध्यस्थेति समासो बहुव्रीहिः पूर्वनिपातश्छान्दसः । अस्य वाक्यस्य कथमयमर्थ इत्यत्राह सेयमिति,

दिव्यस्थानादिनित्यतानिरवद्यतागोचराश्च सहस्रशः श्रुतयः सन्ति, वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् य एषोऽन्तरादित्ये हिरण्मयः पुरुषः तस्य यथा कप्यासम्पुण्डरीकमेवमक्षिणी स एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः । मनोमय इति मनसैव विशुद्धेन गृह्यत इत्यर्थः । सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि विद्युद्वर्णात्पुरुषादित्यर्थः नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा मध्यस्थनीलतोयदा विद्युल्लेखेव सेयं दहर-

तस्य मध्ये वह्निशिखेत्यत्र तस्येति पदं सुशिरपरामर्शपरमित्यर्थः । स्वान्तरिति स्वरूपशब्दो विग्रहपरः पूर्वापरपरामर्शान्नीलतोयदेत्यादिवाक्यस्योक्त एवार्थः । मनोमयः पूर्ववदर्थः, प्राणशरीरः शरीरधारकस्यापि धारकः, भारूप इत्यत्र तात्पर्यम्, आकाशात्मा आकाशवत्स्वच्छद्रूपः, अक्षरमम्बरान्तधृतेरित्युक्तप्रकृत्यन्तरात्मेति वा, सर्वकर्म्मा सर्वं जगदस्य कर्म्मेति क्रियत इति कर्मणि व्युत्पत्तिः । सर्वकामः भोग्यभोगोपकरणादिकाम्यवस्तुसमृद्धः । एवं पदद्वयेनोभयविभूतिमत्त्वमुक्तं भवति । सर्वगन्धः सर्वरस इत्यनेन च विग्रहसिद्धिः अभ्यात्तः—स्वीकृतवान्, अवाकी—अजल्पाकः, अनादरः—तृणीकृतसकलजगत्स्वार्दित्यर्थः । महा*रजतं रागद्रव्यविशेषः तेन

* अत्रापि महारजनमित्येव युक्तः पाठोमाध्यन्दिनारण्यकमूलव्याख्यादौ तथैवोपलम्भात्—रागद्रव्यविशेषश्च हरिद्रैव ब्राह्मणव्याख्यादिषु तथोक्तत्वात् ।

रञ्जितं माहा*रजतम् आद्यशब्देन वक्ष्यमाणाः श्रुतयो विवक्षिताः, पत्नी-
विषयं प्रमाणमाह अस्येति, स्थानपरिजनादौ प्रमाणमाह तद्विष्णो-
रिति, क्षयन्तं क्षि—निवासगत्योरिति धातुः । यदेकमिति अनन्तरूपमिति
पदं विग्रहपरं स्पष्टम् । उपरि तद्विष्णोरित्यादिस्थानविधिः सूरि-
विधिः सदा दर्शनविधिश्चेत्यभिप्रेत्य तत्र चोद्यं परिहारं च वक्ष्यंस्त-
त्प्रतिपन्नमर्थमाह—

**पुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वा-न्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहि-तनीलतोयदा विद्युदिवाभातीत्यर्थः । मनोमयः प्राण-शरीरो भारूपः सत्यकामः सत्यसङ्कल्पः आकाशात्मा सर्वकर्म्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्या-त्तोऽवाक्यनादरो महारजतं वास इत्याद्याः, अस्येशा-ना जगतो विष्णुपत्नी ह्रीश्च ते लक्ष्मीश्च पत्न्यौ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः क्षयन्तमस्य रजसः पराके, यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् यो वेद निहितं गुहायां परमे व्योमन् यो ऽस्याध्यक्षः परमे व्योमन् तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्नित्यादिश्रुतिशतनिश्चितोऽ-यमर्थः, तद्विष्णोः परमं पदमिति विष्णोः परस्य ब्रह्मणः परमं पदं सदा पश्यन्ति सूरय इति वचनात् ।**

परस्येति, ये सूरय इति यच्छब्दान्वयो वचनव्यक्तिकृतः, नात्रो-
द्देश्यं किमप्यस्ति सर्वोर्थस्याप्राप्तत्वात्तस्मादियं वचनव्यक्तिर्नोद्देश्योपा-

* माहारजनमिति पाठान्तरमेव तु युक्तं भाति तदर्थश्च महारजनं हरिद्रा तया रक्तं-माहारजनमिति तेन रक्तं रागादिति पाणिनीयेनाणि साधुः ।

द्देयविभागवतीत्यभिप्रायेण वचनव्यक्तिद्वयमुक्तम्, अनेकार्थविधाने वाक्यभेद इति शङ्कते उभयेति, परिहरति अप्राप्तत्वादिति, विशिष्टविधाने जैमिनीयं सूत्रमाह यथोक्तमिति, सूत्रस्य विषयवाक्यं दर्शयंस्तदर्थं विशदयति यथेति, । ननु विशिष्टविधिरस्तु तत्रापि मन्त्राणामनुष्ठेयार्थप्रकाशकत्वादत्रान्यपरत्वेन स्वार्थे न तात्पर्यमिति सर्वमिदं न सिध्यतीति अत्राह करणमन्त्रा इति, करणमन्त्राः होमादिसाधनतया विहितमन्त्राः न तु जप्यत्वेन विहिताः, क्रियमाणानुवादिनो बर्हिर्देवसदनं दामीत्यादयः, स्तोत्रं गानविशिष्टं मन्त्रोच्चारणं, शस्त्रं गानरहितम् एकश्रुतिरूपोच्चारणं तद्युक्ता इत्यर्थः ।

सर्वकालदर्शनवन्तः परिपूर्णज्ञानाः केचन सन्तीति विज्ञायते ये सूरयस्ते सदा पश्यन्ति इति वचनव्यक्तिः ये सदा पश्यन्ति ते सूरय इति वा उभयपक्षेऽप्यनेकविधानं न सम्भवतीति चेन्न अप्राप्तत्वात्सर्वस्य सर्वविशिष्टं परमस्थानं विधीयते यथोक्तं तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः, इति, यथा यदाग्नेयोऽष्टाकपाल इत्यादिकर्म्मविधौ कर्म्मणो गुणानां चाप्राप्तत्वेन सर्वगुणविशिष्टं कर्म्म विधीयते तथाऽत्रापि सूरिभिस्सदा दृश्यत्वेन विष्णोः परमस्थानमप्राप्तं प्रतिपादयतीति न कश्चिद्विरोधः । करणमन्त्राः क्रियमाणानुवादिनः स्तोत्रशस्त्ररूपा जपादिषु विनियुक्ताश्च प्रकरणपठिताश्चाप्रकरणपठिताश्च स्वार्थं सर्वं यथाऽवस्थितमेवाप्राप्तमविरुद्धं ब्राह्मणवद्बोधयन्तीति हि वैदिकाः,

**प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रं, विनियुक्तार्थप्रकाशिनां च-**

जपादिष्विति आदि-शब्देनाध्ययनं विवक्षितम् उपांशूच्चारणम् जपः, उच्चैरुच्चारणमध्ययनं, मोक्षप्रकरणानधीतत्वात् न परस्यानादौ तात्पर्यमिति चेत् तत्परिहाराय प्रकरणपठिताश्चाप्रकरणपठिताश्चेत्युक्तं, तद्विष्णोरित्यादिश्रुतिर्मोक्षप्रकरणे पठिता च अण्डं भिनत्तीत्यादिप्रकरणे सुबालोपनिषदधीतत्वात्, अप्राप्तमविरुद्धं चेति साधकबाधकप्रमाणरहितमित्यर्थः साधकान्तरसद्भावे तदनुवादः स्यात् बाधकस्य सद्भावे आदित्योयूप इत्यादिवाक्यवत् तत्प्रतिपादक इति तदुभयव्यावृत्त्यर्थमप्राप्तमविरुद्धं चेत्युक्तं, करणमन्त्रशब्दस्य कर्मसाधनमन्त्रमात्रपरत्वे तु नाध्याहारः, अन्यथा मन्त्राश्चेत्यध्याहारः स्यात् मन्त्राश्चेत्यनुष्ठेयार्थप्रकाशिनः अपि तु बर्हिर्देवसदनं दामीत्यादयः के च न तदर्थाश्चेत्तत्पराः स्युः । अन्य व्युत्पत्तिसिद्धस्वार्थपराः ब्राह्मणवद्विधिभागवत् विनियोगभेदेऽपि न स्वार्थपरित्यागः ऐन्द्र्या गार्हपत्यमुपतिष्ठते सावित्र्या गार्हपत्यमुपतिष्ठते इत्यत्र विनियोगभेदाच हि सावित्र्यादेः सवितृदेवताकत्वादिहानिः ।

**देवतादिष्वप्राप्ताविरुद्धगुणविशेषप्रतिपादनं विनियोगानुगुणमेव नेयं श्रुतिर्मुक्तजनविषया**

यदि कर्मविशेषविनियुक्तस्य मन्त्रस्य तदेकानुष्ठेयपरत्वं तर्हि-वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः । इत्यादिभिः कृत्स्नस्य वेदस्य जपे विनियुक्तत्वात् ब्राह्मणभागोऽपि विनियुक्त इति ब्राह्मणमपि स्वार्थे न प्रमाणं स्यात् जपमात्रानुष्ठेयप्रकाशकं स्यात्, न च तथा भवति, शब्दानां व्युत्पत्तिसिद्धस्वार्थाभिधायित्वं चेति तन्मन्त्रेष्वपि तुल्यमिति बाधकसाधकाभावे मन्त्राः स्वार्थप्रतिपादका एवेत्यर्थः । अनुष्ठेयार्थप्रकाशकत्वमभ्युपगम्याह विनियुक्त इति, अनुष्ठेयार्थप्रकाशकत्वेऽप्यनुष्ठेयं कर्मैवंविधदेवताकं

ङ्ग?मुत नेति किं युक्तं विद्याङ्गमिति, कुतः सन्निधिसमाम्नानात विद्याङ्गत्वप्रतीतेः, यद्यपि शुक्रं प्रविध्येत्यादीनां मन्त्राणां, प्रवर्ग्यादेश्च कर्मणः श्रुतिलिङ्गवाक्यैर्बलवद्भिर्यथायथं कर्मसु विनियोगोऽवगम्यते तथाऽपि "अग्नो मित्रः स च नाववत्वि"त्यादेर्मन्त्रस्यान्यत्र विनियोगाभावाद्विद्याधिकाराच्च विद्याङ्गत्वमवर्ज्जनीयमिति सर्वासु विद्यासु ते[1] मन्त्रा उपसंहर्त्तव्या इति प्राप्ते प्रचक्ष्महे वेधाद्यर्थभेदात् "शुक्रं प्रविध्य हृदयं प्रविध्य ऋतं वदिष्यामि सत्यं वदिष्यामि ऋतमवादिषं सत्यमवादिषं तेजस्विनाऽवधीतमस्तु माविद्विषावहा" इत्यादिभिर्लिङ्गैरभिचाराध्ययनादिष्वेषां विनियोगावगमान्न विद्याऽङ्गत्वम् ।

टी० सू० वेधाद्यर्थभेदात् ॥ २५ ॥ ब्रह्मविद्यासन्निधिसमाम्नातायाः पुरुषविद्यायास्तदङ्गत्वमुक्तम्, एवं सन्निधिसमाम्नानां शन्नोमित्रादिमन्त्राणां ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कया सङ्गतिः, प्रवर्ग्यादीनि चेत्यादि-शब्देन महाव्रतादिकं गृह्यते, प्रवर्ग्यादेः संशयविषयत्वाभावेऽप्यापातप्रतीत्यनुगुणः संशय उक्तः, किं शुक्रं प्रविध्येत्यादिमन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गानि? ने?ति किमेषां यथायथं श्रुतिलिङ्गवाक्यैः कर्मसु विनियोगः? उत ब्रह्मविद्यायां प्रकरणाद्विनियोगः? किमेषां प्रकरणपाठोऽङ्गत्वाय? उत दिवाकीर्त्याऽऽरण्येऽनुवाक्यतायै? यदा अङ्गत्वाय तदा प्रकरणाद्विनियोग इति विद्याङ्गत्वं, यदा दिवाकीर्त्यारण्येऽनुवाक्यतायै तदा यथायथं श्रुत्यादिभिः कर्मसु विनियोगान्न विद्याङ्गत्वं, विद्याधिकाराद्विद्याप्रस्तावात् एवं प्राप्त इति, वेधादीत्यादि-शब्देन ऋतवदनादिकं गृह्यते ब्रह्मविद्याङ्गत्वाभावः शुक्रं प्रविध्येत्यादीनां स्पष्टः । तत् कथं सूत्रे वेधस्य कण्ठोक्तिरित्यत्राह–

[1] इमे पा० ।

श्रु० एतदुक्तं भवति यथा वै हृदयं प्रविध्येत्यादि मन्त्रसामर्थ्याच्छुक्रं प्रविध्येत्यादीनामभिचारादिशेषत्वमवस्यते, एवमेवतं वदिष्यामि तेजस्विनाऽवधीतमस्त्वित्यादि मन्त्रसामर्थ्यादेव स्वाध्यायशेषत्वं शन्नोमित्रेत्यादिमन्त्राणामवस्यते, अतो न तेषां विद्याङ्गत्वमिति शुक्रं प्रविध्येत्यादीनां प्रवर्ग्यादिब्राह्मणानां चेह पाठोऽदिवाकीर्त्यत्वारण्येऽनुवाक्यत्वकृतः । वेधाद्यधिकरणं समाप्तम् ॥

हान्यधिकरणम् ।

सू० हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

छन्दोगा आमनन्ति "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी"ति, आथर्वणिकाश्च तथा "विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"ति, शाट्यायनिनस्तु "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि"त्यादि, कौषीतकिनस्तु तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतमिति, एवं क्वचित्पुण्यपापयोर्हानिः क्वचित्प्रियाप्रियेषु तत्प्राप्तिः क्वचिदुभयं च श्रुतं, तदुभयमेकैकविद्यायां श्रुतमपि ।

टी० "एतदुक्तं भवती"ति दृष्टान्ततयेत्यर्थः, मन्त्रसामर्थ्यात् मन्त्रावगतवस्तुसामर्थ्यात् लिङ्गादित्यर्थः, तर्हि तेषां कथमुपनिषद्भिः सह पाठ

इत्यत्राह "शुक्रमि"ति, अरण्येऽनुवाक्यत्वम् अलुक् । नन्वरण्येऽनुवाक्यत्वं रहस्यत्वात्तच्च विद्यासम्बन्धादिति विद्याऽङ्गत्वमिति चेत् न तस्यान्यथासिद्धत्वात्, अनुपनीतस्त्रीशूद्राद्यश्रवणार्थम् अदृष्टार्थं वा तत्स्यात्, यथा एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हतीति । ननु न प्रकरणाद्विद्याङ्गत्वं प्रकरणवत्त्याः सर्वारण्यकव्यापिन्याः कस्याश्चिद्विद्यायाः अभावात् सन्निधिमात्रमकिञ्चित्करम्, अन्यथा दर्शपौर्णमासादीनामप्यन्यशेषत्वप्रसङ्गादिति पूर्वपक्षे परिचोद्य आरण्यकाम्नायपरिग्रहो न विना कारणेन भवति, कारणमरण्येऽनुवाक्यत्वमिति चेत् तदपि विद्यासम्बन्धनिबन्धनाद् रहस्यत्वादित्यन्ये परिहरन्ति । तदप्यरण्येऽनुवाक्यत्वस्य पूर्वोक्तान्यथासिद्ध्यैव प्रतिक्षिप्तं भवति ॥ वेधाद्यधिकरणं समाप्तम् ॥ सू॰ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ सन्निधिसमाम्नातानां शुक्रं प्रविध्येत्यादीनामतदङ्गत्वमुक्तं, तथा सन्निधिसमाम्नातहानोपायनचिन्ताऽनन्तरं प्राप्तेति सङ्गतिः ॥

भू॰ सर्वविद्याङ्गमास्थेयं सर्वब्रह्मविद्यानिष्ठस्यापि ब्रह्म प्राप्नुवतः पुण्यपापप्रहाणस्यावश्यं भावित्वात् प्रहीणविषयत्वाच्चोपायनस्य तच्चिन्तनं च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति, तत्रेदं विचार्यते हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनं च विकल्प्येरन्, उपसंह्रियेरन् वा, किं युक्तं विकल्प्येरन्निति, कुतः पृथगाम्नानसामर्थ्यात्, समुच्चये हि सर्वत्रोभयानुसन्धानं स्यात्, तच्च कौषीतकिवाक्येनैव सिद्धमित्यन्यत्राम्नानमनर्थकमेव स्यात्, अतोऽनेकत्राम्नानस्य विकल्प एव प्रयोजनं, न चाध्येतृभेदेन परिहर्त्तुं शक्यम् . अनेकत्राम्नानमविशेषपुनःश्रवणं ह्यध्येतृभेदपरिहारार्थम्, अत्र तु हानिरेव द्वयोः शाखयोरुपायनमेव चैकस्यां, न च विद्याभेदेन व्यवस्थापयितुं

मक्यं सर्वशेषभूतमिदमनुसन्धानमित्युक्तत्वात्, अत्रेदमुच्यते, हानौ तूपायनशब्दशेषत्वादिति,तु–शब्दः पक्षं व्यावर्त्तयति–

टी० सर्वविद्याङ्गमास्थेयमिति अङ्ग–शब्देनापेक्षितमुच्यते, प्रहीणविषयत्वाच्चोपायनस्येति प्रहीणविषयशब्देन प्रहीणसम्बन्धउच्यते उपायनमन्यत्र प्रवेशः सुकृतमुपयन्तीति श्रुत्यनुसाराद्रुपायनमित्युक्तं, प्रहीणसंबन्धित्वाद्रुपायनस्य प्रहीणस्य कर्मणः क्वचित्प्रवेशो ह्यवश्यम्भावीत्यर्थः तच्चिन्तनं च विधीयमानमिति तत्क्रतुन्यायात् "एतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धेती"ति करणश्रवणात् अभिसम्भवानीत्यनुसन्धानस्य श्रुत्या च विधीयमानत्वं सिद्धं सर्वविद्याङ्गं हानोपायनचिन्तनस्य तत्सिद्ध्यर्थत्वात् तच्चिन्तनं सर्वविद्याङ्गमित्यर्थः, एवं विषयः शोधितः। संशयमाह "तत्रे"ति, विकल्प्येरन् विकल्पेन तिष्ठेयुरित्यर्थः विकल्प्येरन्निति च पाठोऽस्ति हानोपायनस्योभयस्य चिन्तनानि विहितानि किं विकल्प्येर? उत समुच्चीयेरन्? किमुपायनं हानिशेषतया विद्याङ्गम्? उत स्वतन्त्रतये?ति, एवं किमुपायनवाक्यं शाखान्तराऽधीतमपि हानिवाक्यशेषःमुत स्वतन्त्रं? किं कौषीतकिनामुभयाम्नानमुपायनवाक्यस्य हानिवाक्यशेषताविरोधि ने?ति, विरोधित्वे उपायनवाक्यस्य स्वातन्त्र्याद्रुपायनं स्वातन्त्र्येण विद्याङ्गमिति तच्चिन्तनानां विकल्पः उभयाम्नानं शेषत्वाविरोधि चेद्रुपायनवाक्यस्य हानिवाक्यशेषत्वेनोपायनस्य हानशेषतया विद्याङ्गत्वमिति चिन्तनानां समुच्चयः । अत्रेदमित्यादि ॥

श्रु० हानाविति प्रदर्शनार्थं केवलायां हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यं भावी, कुतः, उपायनशब्दशेषत्वात्, उपायन–शब्दस्य हानिवाक्यशेषत्वात्, उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितं, विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वाद्रुपायनवाक्यस्य

प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते "कुशाच्छन्दस्तुत्युपगानव" दिति कौषीतकिनः[1] कुशा वानस्पत्या इत्यामनन्ति, शाट्यायनिनां तु औदुम्बर्य्यः कुशा इति वाक्यं सामान्येन वानस्पत्यत्वेनावगताः कुशा औदुम्बर्य्य इति विशेषतद्वाक्यशेषतामापद्यते, तथा देवासुराणां छन्दोभिरित्यादिनाऽविशेषेण देवासुराणां छन्दसां प्रसङ्गे देवच्छन्दांसि पूर्वमिति वचनं क्रमविशेषं प्रतिपादयत्तद्वाक्यशेषतां गच्छति ।

टी० हानाविति प्रदर्शनार्थम्, उपायनस्यापि प्रदर्शनार्थमित्यर्थः, उपायनशब्दशेषत्वादित्युक्ते उपायन-शब्दस्य अन्यत् शेषभूतमिति प्रतिभातीति तद्व्यावृत्त्यर्थं व्याचष्टे "उपायन-शब्दस्य हानिवाक्यशेषत्वा"-दिति, हानिवाक्यस्योपायनशब्दः शेष इत्यर्थः । विपरीतं किं न स्यादित्यत आह "उपायनवाक्यस्ये"ति, तदुपपादयति "विदुषे"ति, प्रधानस्य तदुपयोगित्वेन प्राप्तं हि शेषभूतम्, अत्र ब्रह्म विदुषोऽपेक्षितत्वेन प्रधानं सुकृतदुष्कृतप्रहाणं तदेव हि तस्य प्रयोजनं, प्रहाणोपयोगी ह्यन्यत्र प्रवेशः तस्माद्धानिवाक्यं प्रत्युपायनवाक्यं शेषभूतमित्यर्थः । तथेति हानिप्रवेशवाक्ययोः प्रधानशेषभावे दृष्टान्तो माभूदिति तद्व्यावृत्त्यर्थमाह "प्रदेशान्तरे"ति, कालापिन एके शाखिनः शाखान्तराम्नातं वाक्यं वनस्पतिसामान्यवाचि, तस्य विशेषाकाङ्क्षायां तत्समर्पकत्वे शेषभूतमित्यर्थः, तथेति देवदैवत्यान्यसुरदैवत्यानि च छन्दांसि तत्रानिर्द्धारितक्रमविशेषस्य वाक्यस्य क्रमविशेषनिर्द्धारणमुखेन शेषभूतमित्यर्थः । देवासुराणामिति देवासुरशब्दक्रमादेव छन्दःक्रमो ज्ञायत इति न वाक्यन्तरापेक्षेति चेत् न क्रमाविवक्षायामप्यल्पाच्तरत्वाद्देव-शब्दस्य पूर्वनिपातसम्भवेन वाक्यान्तरापेक्षणात् ।

[1] कालापिन इति पा० ।

मू० तथा हिरण्येन षोडशिनस्तोत्रमुपाकरोतीत्यविशेषेण प्राप्ते समयाविशिते सूर्ये षोडशिनस्तोत्रमुपाकरोतीति विशेषविषयं वाक्यं तद्वाक्यशेषत्वं भजते, तथा ऋत्विज उपगायन्तीत्यविशेषप्राप्तस्य नाध्वर्युरुपगायेदिति वाक्यमनध्वर्युविषयतामवगमतत्तद्वाक्यशेषत्वमृच्छति, एवं सामान्येनावगतमर्थं विशेषेण व्यवस्थापयितुं समस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिस्तयोरर्थयोर्विकल्पः समाश्रयितव्यः, स च सम्भवन्त्यां गतौ न युज्यते, तदुक्तं पूर्वस्मिन्काण्डे "अपि तु वाक्यशेषत्वादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादि"ति, तदेवं केवलहानोपायनवाक्ययोरेकवाक्यत्वात् केवलस्य हानस्य केवलस्य चोपायनस्याभावाद्विकल्पोनोपपद्यते ।

टी० स्तोत्रं गानविशेषविशिष्टोच्चारणं, शस्त्रं केवलमेकस्वरोच्चारणमुपाकरणं प्रस्तावः, अत एवोपाकर्मणि चोपाकरण–शब्दप्रयोगः अध्ययनारम्भत्वात् उपाकरोति–प्रस्तौतीत्यर्थः, समयाविशिते[1] ईषदुदित इत्यर्थः । अनिर्द्धारितकालविशेषस्य वाक्यस्य कालविशेषं प्रतिपादयद्वाक्यं शेषभूतमित्यर्थः, तथेति सामान्यप्राप्तमुपगानमृत्विग्विशेषे व्यवस्थापयद्वाक्यं सामान्येनोपगानवाचिवाक्यस्य शेषभूतमित्यर्थः । अविशेषप्राप्तस्य उपगानस्येत्यध्याहारः, इमान्युदाहरणानि कर्मविचारोक्तानि अमीषां वाक्यानां शाखान्तराम्नातवाक्यं प्रति शेषत्वानभ्युपगमे किं स्यादित्यत्राह "एवं सामान्येने"ति, स चेति पाक्षिकबाधगर्भविकल्पं विनाऽपि समुच्चयेन गतौ सम्भवन्त्यामित्यर्थः । तदुक्तमिति सूत्रखण्डः । तं पूरयति "पूर्व-

१ समया उदित इत्यर्थः इति पा० ।

स्मिन् काण्डे" इति, एकवाक्यत्वादिति अन्योऽन्यशेषशेषिभावेनान्वयादेकवाक्यत्वं केवलस्य हानस्य केवलस्य चोपायनस्य चाभावात् अप्रामाणिकत्वात् विकल्पो नोपपद्यते सर्वोपनिषत्सु उभयमुक्तं भवतीति विकल्पो नोपपद्यत इत्यर्थः ॥

सू० कौषीतकिनामुभयाम्नानमविशेषपुनःश्रवणत्वेन प्रतिपत्तृभेदाद्विरुद्धम् ॥ हान्यधिकरणं समाप्तम् ॥

साम्परायाधिकरणम् ।

**सू० साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥**

सुकृतदुष्कृतयोर्हानमुपायनं च सर्वासु विद्यासु चिन्तनीयमित्युक्तं, तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च? उत देहवियोगकाल एवे? ति विषये उभयत्रेति युक्तम्, उभयथा श्रुतत्वात्, एवं हि कौषीतकिनः समामनन्ति "स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छती"त्युपक्रमस्य "स आगच्छति विरजां नदीं तां मनसाऽत्येति तत्सुकृतदुष्कृते धूनुते" इत्यत्र वाक्ये अध्वनि सुकृतदुष्कृतहानिः प्रतीयते, ताण्डिनस्तु "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी"त्यत्र तु देहवियोगकाल एवेति प्रतीयते शाट्यायनकेऽपि "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या"मिति पुत्रेषु दायसंक्रान्तिसमकालं सुकृतदुष्कृतसंक्रमणं श्रूयमाणं देहवियोगकालमिति गम्यते, अतः सुकृतदुष्कृतयोरेकदेशो देहवियोगकाले क्षीयते, शेषस्त्वध्वनीति प्राप्ते

उच्यते "सांपराय" इति, सांपराये देहोत्क्रमणकाल एव विदुषः सुकृतदुष्कृते निरवशेषं क्षीयेते, कुतः तत्कार्याभावात् विदुषो देहवियोगात्पश्चात्सुकृतदुष्कृताभ्यां भवितव्यभोगाभावात्, विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण हि सुकृतदुष्कृताभ्यां भोक्तव्ये सुखदुःखे न विद्येते, तथा ह्यन्ये देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरिक्तसुखदुःखोपभोगाभावमधीयते "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति च, ॥

## सू० छन्दत उभयाविरोधात् ॥ २८ ॥

टी० कौषीतकिनामिति अन्यतरोक्ताविति अन्यतरस्य प्राप्तत्वात् सर्वत्र हानमुपायनं चोक्तं भवतीत्यविशेषणपुनःश्रवणमेव, अतस्तत्प्रतिपत्तृभेदादिति वक्तुं युक्तमित्यर्थः । परे तु हानोपायनचिन्ताविकल्पसमुच्चयविषयं विचारमनिच्छन्तो वस्तुविषयं विचारमाचक्षते, उभयाम्नानेन सन्देहः उपायनाम्नाने हानिरार्थिकी, केवलहान्याम्नाने विशयः, किं सुहृद्द्विड्भिः उपायनं हान्या संनिपतेदुत नेति, अश्रुतत्वादन्यकर्तृके हानेऽन्यकर्तृकोपायनस्यावश्यंभावाभावाद्विद्यान्तरशेषतया श्रुतस्यान्यत्र प्रतीत्ययोगाच्च नोपायनं संनिपततीति पूर्वपक्षं कृत्वा उपायनस्य कौषीतकिवाक्ये हानशेषतया समधिगतत्वात्संनिपतति, अनुष्ठेयोपसंहारस्यैव विद्यैकत्वापेक्षा न तु स्तुत्यर्थतया कीर्त्तितस्य, तस्य तूपसंहारो विद्यान्तरेऽपि युज्यते अर्थवादान्तरस्य अर्थवादान्तरापेक्षा दृष्टा एकविंशो वा इतरोऽसावादित्य इत्यर्थवादः, द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका इत्यर्थवादसाकाङ्क्षः त्रिष्टुभौ भवतः सेन्द्रियत्वायेत्ययमपि इन्द्रियं वै त्रिष्टुबित्यादिसापेक्षो

दृष्टः, अतोविद्यास्तुतिप्रकर्षायोपायनं संनिपतति, शाखान्तरे श्रुतस्यान्यत्रापेक्षायां दृष्टान्ताः कुशादयः, गुणोपसंहारचिन्तायां स्तुत्युपसंहारचिन्ता प्रासङ्गिकीति विचारान्तरं च कुर्वते विधूननं नाम किं हान?-मुतार्थान्तरम्? अमूर्त्तद्रव्येषु कम्पनायोगाच्चलनेन चलनवद्वस्तुगतं कार्यान्तरप्रतिबन्धनं लक्षणयोच्यत इति पूर्वपक्षं कृत्वा लक्षणायामपि सन्निहितोपायनपदानुसारेण प्रहाणलक्षणोचिता, शाखान्तरस्य शाखान्तरेऽपि सविधौ दृष्टान्ताः कुशादयः, उपायनशेषत्वादिति वक्तव्ये शब्दशेषत्वादिति निर्देशोऽन्यगतसुकृतदुष्कृतयोरन्यत्र प्रवेशासम्भवेन स्तुतिपरत्वाभिप्राय इति चाहुः । अपरेषामपि तुल्यम् । अन्ये तु स्तुत्यर्थत्वमनादृत्य हानोपायनयोर्योगान्ते चिन्त्यत्वमिच्छन्तश्चिन्ताविकल्पसमुच्चयनिद्धारणाय केवलहानौ नोपायनोपसंहारः प्राप्तस्यावचने कारणान्तराभावात् इति पूर्वपक्षं कृत्वाऽनारभ्याधीतसर्वविद्यासाधारणकौषीतकिवाक्यैकदेशप्रतिपन्नोपायनस्य सर्वहानवाक्यानां शेषत्वात् केवलहानश्रवणेऽप्युसंहर्त्तव्यमित्याहुः । अत्र ब्रूमः अत्र साक्षात्सङ्गत्यभावः परैरेवाभ्युपेतः तस्यां सम्भवन्त्यां प्रासङ्गिकविचारपरत्वमयुक्तम् । ननूपरितनाधिकरणद्वयं तवापि प्रासङ्गिकमिति चेत् सत्यं, सोऽस्माकं युज्यते न तु भवतः, अधिकरणविशेषपश्चाद्भावनियामकाभावात्, प्रासङ्गिकेन हि विचारेण प्रसञ्जकानन्तरभाविना भाव्यं, गुणोपसंहारः प्रसञ्जकश्चेत् स्तुत्युपसंहारचिन्तया द्वितीयादनन्तरं वा पादान्ते वा भवितव्यं न तु मध्ये विशेषहेत्वभावात्, अस्माकन्तु हान्यादिविचारे साक्षात् सङ्गते सति हान्यादेः समयविशेषादिचिन्तायास्तदनन्तरभावित्वं हि युज्यते, अतः सङ्गत्यन्यथाऽनुपपत्त्या हान्यादिचिन्ताविषयो विचारो भवितुमर्हति केवलहानावुपायनं सन्निपतेन्न वेति विचारोन घटते सकलकर्मप्रहाणस्य सर्वब्रह्मविद्याफलत्वस्यार्थसामर्थ्यसिद्धत्वात्, ब्रह्मवेदनाव्यभिचारिसर्वकर्मप्रहाणप्रत्यभिज्ञापनेन विहितत्वादुपायनस्य, क्रत्वव्यभिचारिजुहूप्रत्यभिज्ञापनेन विहितपर्णताया इव सर्वासु विद्यासु सन्निपातोपपत्तेर्न्यायान्तरनिरपेक्षत्वात्, विद्यान्तरगोचरार्थवादस्यार्थवादान्तरेण सन्निपातोपपत्तिरपि दुर्वचा

एकविंशत्यार्थवादादिवत् साकाङ्क्षत्वाभावादेकविंशत्वस्यापेक्षितत्वात्तत्रापेक्षणीयप्रपत्तिराकाङ्क्षिता, नैवं विधूननश्रुतेरुपायनमपेक्षितं, न हि बटुः पटहध्वनिभिर्विधूतनिद्र इत्युक्ते निद्राया अन्यैरुपायनमपेक्षितं, तथाऽपि रक्तपटन्यायेनोत्थापिताकाङ्क्षं सन्निपततीति चेत् न अतिप्रसङ्गात्, पुनश्च किंप्रभावा विद्येत्यप्याकाङ्क्षामुत्थाप्य "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद नास्याब्रह्मवित्कुले भवती"त्यादयोऽर्थवादाः कस्मान्नाकृष्येरन्, पुरुषान्तरगतसुकृतदुष्कृतयोः पुरुषान्तरसंक्रमणानुपपत्त्या स्तुतिमात्रमिति चेत् न क्रियोत्तीर्णयोः कर्तृविषययोरीश्वरनिग्रहानुग्रहरूपयोः पुरुषान्तरे फलदानानुगुण्यलक्षणसंक्रमणोपपत्तेः । ननूपायनस्य सर्वविद्याशेषत्वे तच्चिन्तनस्य सार्वत्रिकत्वं स्वयमेव सिध्यतीति नारम्भणीयता स्यादिति चेत् न पृथगाम्नानसामर्थ्यस्य पूर्वपक्षहेतोः स्थितत्वादारम्भोपपत्तेः ॥ हान्यधिकरणं समाप्तम् ॥ सू० साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥ सङ्गत्यर्थमनुवदति "सुकृते"ति, ताण्डिनः छन्दोगाः किं विदुषः सुकृतदुष्कृतहानं देहवियोगकाले अध्वनि च ? उत देहवियोगकाल एव ? किमुभयत्र हानिश्रवणम् ? उत देहविवियोगकाल एव ? किं सुकृतदुष्कृते धूनुत इति वाक्यावयवस्य स एतं देवयानमित्यस्मात् प्रागन्वयः ? उत यथापाठमन्वयः ? किमशरीरस्य सुखदुःखाननुभवश्रवणानुरोधेन प्रागन्वयवर्णनं न्याय्यम् ? उत देवयानगत्यै सूक्ष्मदेहस्थित्यर्थं यथापाठमन्वयवर्णनं न्याय्यं ? किं सूक्ष्मदेहस्थितिः कर्मणा विनोपपद्यते ? नेति, न चेत् सूक्ष्मदेहस्थितये यथापाठमन्वयस्य न्याय्यत्वात्तथैवान्वय इत्युभयत्र हानिश्रवणाद्देहवियोगकाले ऽध्वनि च हानं स्यात्, सूक्ष्मदेहस्थितिः कर्मणा विनोपपद्यते चेत् प्रागन्वयवर्णनस्य न्याय्यत्वेन तथैवान्वय इत्युभयत्र श्रवणाभावाद्देहवियोगकाल एव सुकृतदुष्कृतहानं स्यात्, अत्रेतरे सर्वे च कौषीतकिवाक्यमेवोदाहृत्य सांपरायेऽध्वनि वेति संशयमाहुः, तदयुक्तं वाक्यद्वयोत्थत्वात्संशयस्य, न हि कौषीतकिवाक्यमात्रेण संशयो जायते, दायसंक्रान्तिसमकालत्वमपि देहवियोगकाल एव, प्रहाणस्यार्थापत्तिः उभयश्रुत्यवैयर्थ्यं पूर्वपक्षहेतुः, इति प्राप्त इत्यादि

तर्तव्याभावादित्यत्र तरतिः प्राप्तिवचनः, अशरीरं वाव सन्तमिति शरीरवियोगानन्तरमेवेति भावः । सू० छन्दत उभयाविरोधात् ॥ २८ ॥

वृ० एवमर्थस्वाभाव्यात्सुकृतदुष्कृतहानिकालेऽवधृते सत्युभयाविरोधेन श्रुतेरर्थस्वभावस्य चाविरोधेन छन्दतो यथेष्टं पदानामन्वयो वर्णनीयः, कौषीतकिवाक्ये तत्सुकृतदुष्कृते धूनुत इति चरमश्रुतो वाक्यावयव एतं देवयानं पन्थानमापद्येति प्रथमश्रुतावयवात्प्रागनुगमयितव्य इत्यर्थः ॥ अत्र पूर्वपक्षी प्रत्यवतिष्ठते ।

**सू० गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥**

वृ० सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः शेषस्य पश्चादिति उभयथा कर्मक्षये सत्येव गतेरर्थवत्त्वं—देवयानगतिश्रुतेरर्थवत्त्वमित्यर्थः, अन्यथा हि विरोधः देहवियोगकाल एव हि सर्वकर्मक्षये सूक्ष्मशरीरस्यापि नाशः स्यात्, तथा सति केवलस्यात्मनो गमनं नोपपद्यते, अत उत्क्रान्तिसमये विदुषो निःशेषकर्मक्षयोऽनुपपन्नः, अत्रोत्तरम् ।

**सू० उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

वृ० उपपन्न एव उत्क्रान्तिकाले सर्वकर्मक्षयः कथं, तल्लक्षणार्थोपलब्धेः क्षीणकर्मणोऽप्याविर्भूतस्वरूपस्य देहसम्बन्धलक्षणार्थोपलब्धेः, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत् क्रीडन् रममाणः स स्व-

राड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति स एकधा भवति त्रिधा भवतीत्यादिषु देहसम्बन्धाख्योऽर्थो ह्युपलभ्यते, अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते, कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवतिष्ठत इति चेत्, विद्यामाहात्म्यादिति ब्रूमः, विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकाऽपि प्राक्तनसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति, लोकवत्—यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तडागादिके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तडागादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादिकं कुर्वन्ति तद्वत्। अथ स्याद्ब्रह्मज्ञानिनां साक्षात्कृतपरतत्त्वानां देहपातसमये कर्मणो निरवशेषक्षयाद्देहपातादूर्द्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्त्तते सुखदुःखानुभवो न विद्यते इति यदुक्तं तन्नोपपद्यते वसिष्ठापान्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानां देहपातादूर्द्ध्वं देहान्तरसङ्गमः पुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवश्च दृश्यत इति, । अत उत्तरं पठति—

**सू० यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥**

भा० नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतयोर्विनाशः उक्तः, अपि तु येषां ज्ञानिनां देहपातानन्तर-

मर्चिरादिका गतिः प्राप्ता तेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतहानिरुक्ता वसिष्ठादीनां त्वाधिकारिकाणां न देहपातादनन्तरम् अर्चिरादिका गतिप्राप्तिः ।

टी० अर्थस्वाभाव्यादिति श्रुतिवाक्ये सत्यपि तर्तव्याभावादिति सूत्रोक्तत्वादर्थस्वाभाव्यमेवात्र हेतुरुक्तः, श्रुतेरर्थस्वभावस्य चाविरोधेनेति श्रुतेः-देहवियोगकाल एव प्रहाणपरश्रुतेः, पदानामिति महावाक्यापेक्षया पदस्थानीयानां वाक्यावयवानामित्यर्थः, छन्दत इति यथेष्टमित्युक्ते कुत्र केषामन्वय इत्यन्वयस्यास्फुटत्वादनुपपन्नान्वयो माभूदिति तदर्थमाह "कौषीतकी"ति, यथाऽग्निहोत्रं जुहोति यवागूं पचतीति वाक्ययोरर्थक्रमेण पाठक्रमो बाध्यते, तद्वदिहापि तत्सुकृतदुष्कृते धूनुते स एतं देवयानं पन्थानमापद्यते" इत्यर्थक्रम इत्यर्थः ॥ अनन्तरसूत्रमवतारयति "अत्रे"ति, सू० गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥ केवलस्यात्मनो गमनं नोपपद्यत इति कथम् अणुत्वात् गमनं युज्यत इति चेन्न करणकलेवररहितस्य प्रवृत्त्यशक्तत्वात् सत्यसङ्कल्पत्वादेरनाविर्भूतत्वाच्च उपपन्न इत्युत्तरसूत्रारम्भत्वात् तत्सङ्घटनार्थमनुपपन्न इति पूर्वसूत्रव्याख्यानं समापितम् ॥ उत्तरसूत्रमवतारयति "अत्रोत्तरमि"ति, सू० उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ लक्षण-शब्दः स्वरूपवाची अकर्महेतुकदेहसम्बन्धरूपप्रमेयोपलब्धेरित्यर्थः । तदुपलब्धेरिति वक्तव्ये किमर्थं तल्लक्षणार्थोपलब्धेरिति शब्दभूयस्त्वमिति चेत् उच्यते न ह्याविर्भूतस्वरूपस्य कर्मकृतप्राकृतदेहसम्बन्धोऽस्ति तस्माच्छरीरत्वाकारेण सजातीयदेहसम्बन्धमात्रमेव न त्वयमेव कर्मकृतः प्राकृतदेह इत्यभिप्रायेण तल्लक्षणार्थोपलब्धेरित्युक्तं, लोकवदिति सौत्रमंशमवतारयितुमाह "कथमि"ति, विद्यामाहात्म्यमुपपादयति "विद्या ही"ति, पापं यथा स्वफलभूतदुःखभोगाय निरयप्राप्तिहेतुं वपुर्दिशति यथा पुण्यं स्वफलसुखभोगाय स्वर्गप्राप्तिहेतुं वपुर्दिशति तथा ब्रह्मविद्याऽपि स्वफलब्रह्मप्राप्तिहेतुं शरीरं स्थापयतीत्यर्थः । लोकवदिति सूत्रखण्डं व्याचष्टे "यथे"ति, अन्यहेतुकतयोत्पन्नस्य हेत्वभा-

वेऽपि कार्यान्तरार्थं स्थितौ दृष्टान्त उक्तः ॥ अनन्तरसूत्रशङ्कामाह "अथ स्यादि"ति, सू० यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥ वसिष्ठादीनामर्चिरादिगत्यनासत्तिमुपपादयति—

सू० प्रारब्धस्याधिकारस्यासमाप्तत्वात् तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते, प्रारब्धस्य हि कर्मणो भोगादेव क्षयः, अत आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते, अतस्तेषां न देहपातानन्तरमर्चिरादिगप्राप्तिः । साम्परायाधिकरणं समाप्तम् ।

टी० "प्रारब्धस्ये"ति, अधिकारः—पदं, ततः किमित्यत्राह "तेषामि"ति, देहपातानन्तरप्राप्तार्चिरादिगतीनामेव विदुषां देहपातसमकाले सुकृतदुष्कृतक्षयः नैवान्येषां वसिष्ठादीनाम् असमाप्ताधिकाराणान्तद्धेतोरनुभवैकविनाश्यस्य कर्मणो विद्यमानतया नार्च्चिरादिगतिरासत्त्वा, अतो न देहपातसमकाले कर्मक्षय इति न दोष इत्यर्थः । अत्र द्वितीयसूत्रस्य परैर्वर्णिकान्तरं च कृतं कर्मक्षयहेतोर्यमनियमादिविद्याऽभ्यसनस्य देहपातात् पश्चात् अशक्यतया तद्धेतुकर्मक्षयस्यो[1]पपत्तेः देहपातात्पूर्वमेव छन्दतइच्छातोऽनुष्ठानं तत्पूर्वकं सुकृतदुष्कृतहानं च स्यात्, एवं च सति नित्यनैमित्तिकयोरविरोध इति, अध्याहारबाहुल्यात् कौषीतकिनां पाठस्य परिहारस्य वक्तव्यत्वाच्च तदनादरः । देवयानमध्येऽनुष्ठानानुपपत्तेः प्रहाणानुपपत्तिरिति वा, साधकावस्थायामेव छन्दतोऽनुष्ठानं तत्पूर्वकं च सुकृतदुष्कृतहानमिति वा ऽध्याहारः कार्यः, अस्माकं तु अन्वयः कार्य इत्येतावदध्याहार्यं गतेरर्थवत्त्वमित्यधिकरणान्तरं कृतं देवयानः पन्थाः क्रमविशेषेण सर्वत्र सन्निपततेत्? उत विभागेन क्वचित्सन्निपतेत् क्वचिन्ने? ति विचार्य हानिसन्निधौ श्रुतत्वात् उपायनानुवृत्तिवद्देवयानानुवृत्तिरिति पूर्वपक्षं कृत्वा

१ कर्मक्षयस्यानुपपत्तेरिति पा० ।

गतेर्देवयानस्य यथोऽर्थवत्त्वम्? उभयथा क्वचित्सन्निपतेत् क्वचिन्नेति विभागेन भवतीति निरञ्जनस्य ब्रह्मभूयङ्गतस्य देशान्तरगमनविरोधात् पर्यङ्कविद्यादिसगुणोपासनेष्वेव गतिकारणभूतपर्यङ्कारोहणाद्युपलब्धेश्च लोकवत्, यथा ग्रामान्तरप्राप्तौ मार्गापेक्षत्वेऽपि नारोग्यप्राप्तौ मार्गापेक्षा तद्वदिति वर्णितं, तदयुक्तं निर्गुणविद्याया एवाप्रामाणिकत्वादद्वारास्वारस्याच्च, अर्थवत्त्वमुभयथेत्युक्ते त्वर्थवत्त्वस्यैव प्रकारद्वययोगित्वं स्यात् देवयानस्य क्वचिदसन्निपातो नाम तत्र प्रयोजनशून्यत्वं, कथमर्थवत्त्वस्य प्रकारोऽर्थशून्यत्वं ब्रह्मणोऽनन्तत्वेऽप्युपासकस्य निरञ्जनत्वाविर्भावः कालविशेषमिव देशविशेषमपेक्षत इति न विरोधः । अपरे त्वाहुः पर[1]कीययोः सुकृतदुष्कृतयोः कथं परत्र सङ्क्रान्तिरित्याशङ्कायां छन्दतः परत्र शुभाशुभसङ्कल्पतस्तदीयसुकृतदुष्कृतापत्तिः यथा "शप्यमानस्य यत्पापं शपमानन्तु गच्छती"त्यादिशास्त्रप्रामाण्यात् न युक्तयः क्रमन्ते, कौषीतकिशाट्यायनश्रुत्योरविरोधात्, एवं पुण्यमपि निवर्तते चेत् किमर्था गतिरित्यपेक्षायां गतेरर्थवत्त्वमित्यादि गतेरर्थवत्त्वमुभयथा पुण्यपापनिवृत्तिरूपप्रकारद्वयेन भवति । अन्यथा पुण्यानुवृत्तावनावृत्तिश्रुतिविरोधः, गतिश्च देशविशेषप्राप्तये युज्यते, तदाह उपपन्न इति, उपपन्नो गत्युपदेशः पर्यङ्कविद्यायां लोक इव कार्यब्रह्मणा संवादाद्युपलब्धेरिति, तत्र ब्रूमः परत्र शुभाशुभसङ्कल्पत इत्युक्तेऽपि परकीययोः कथमन्यत्र प्रवेश इति संशयोऽवतिष्ठते, तत्र शास्त्रप्रामाण्यादिति वक्तव्यम्, अतश्च कौषीतकिशाट्यायनश्रुत्योरविरोधादित्येतावताऽलं छन्दत इत्यस्य वैयर्थ्यम् । अनन्तरसूत्रस्य च पुण्यं निवर्त्तते चेत् किमर्था गतिरिति शङ्कापरिहारपरत्वमयुक्तं देशविशेषप्राप्तिरूपप्रयोजनस्याशाब्दत्वात् कण्ठोक्तस्योभयहानस्यानावृत्तिश्रुत्यविरोधस्य च गतिप्रयोजनत्वाभावात् सुकृतदुष्कृतप्रहाणं देहवियोगसमय एव भवद्भिर्निश्चितमिति तस्य पश्चाद्भाविगतिप्रयोजनत्वं ह्ययुक्तम् अनावृत्तिश्रुत्यविरोधस्य च गन्तृपुरुषसमवायि[2]त्वाभावेन गतिफलत्वासम्भवः

---

१ परक्रिययोरिति पा० ।

२ समवेतत्वाभावेनेति पा० ।

गतिप्रतिपादकाभ्युपगमफलं हि तद्वन्तर्गतं कार्यब्रह्मप्राप्तिस्तत्संवादादिप्रयोजनमनन्तरसूत्रोक्तमस्तीति चेत् तर्हि तेनैवालम् । अन्ये तु साम्पराय इति सूत्रं पूर्वपक्षविषयं कृत्वा द्वितीयस्य सिद्धान्तविषयत्वमिच्छन्तः श्रुतिद्वयविरोधपरिहारपरं द्वितीयसूत्रमेवं व्याचक्षते छन्दतः सङ्कल्पतश्चिन्तनादुपासनार्थमध्वनि सुकृतदुष्कृतहानं कौषीतकिवाक्यस्यानारभ्याधीतत्वात्, सर्वविद्याशेषत्वेनानुचिन्तनार्थम्, इतरद्वाक्यं तत्त्वप्रतिपत्त्यर्थमेवमुभयोः श्रुत्योरविरोध इति । यद्वा यैः कर्महानमध्वनि चिन्तितं तेषां तदध्वनि स्यात् यैर्देहवियोगे तच्चिन्तितं तेषां देहवियोगे स्यादिति छन्दत उभयत्राविरोध इत्याहुः, । तत्र प्रथमः पक्षोऽनुपपन्नः मुमुक्षूणां तत्त्वस्यैव चिन्तनीयत्वेन चिन्तनार्थं तत्त्वप्रतिपत्त्यर्थं चेति विभागानुपपत्तेः, चिन्तितप्रकारेण फलसिद्धिश्चेत्तत्त्वमेव स्यात्, न चेत् चिन्तनवैयर्थ्यं छन्दशब्दस्य चिन्तावाचित्वं च क्लिष्टं छन्दतश्चेति च-शब्दाभावात्, तत्त्वप्रतिपत्त्यर्थताया अशाब्दत्वं च, द्वितीयोऽप्यनुपपन्नः तुल्यबलत्वाभावादुपासकभेदेन विकल्पाश्रयणानुपपत्तेः, साम्परायपक्षो हि वाक्यद्वयावगतः इतरस्त्वेकेन पापं विधूय धूत्वा शरीरमिति श्रोतक्रमस्तारितत्र्यभोगाभावानुगृहीतस्तदननुगृहीतात् कौषीतकिनां पाठक्रमात्प्रबलश्च गतेरर्थवत्त्वमित्यधिकरणान्तरमाहुः अर्चिरादिगतिः किं तत्त्वप्रतिपत्त्यर्थमाम्नायते? उत तत्त्वप्रतिपत्त्यर्थमुपासनार्थं चेति संशयः, गतिमुपासीतेति विध्यभावात् पूर्वः पक्षः, एकस्या एवार्चिरादिगतेर्न्यूनाधिकपर्वभावेन श्रुतत्वान्न्यूनाधिकभावविरोधस्योपासनार्थतया परिहर्तव्यत्वात्, ध्यानस्य च ध्यानवतां तथा तथा प्राप्त्यर्थत्वाच्च उभयार्थमिति सिद्धान्तयन्ति तत्तद्विद्यासु प्रतिपादितपर्वमात्रचिन्तागतिश्रवणरहितासु विद्यासूपसंहृतसर्वपर्वा गतिश्चिन्त्या यथातत्त्वमुपासनस्य निसर्गप्राप्तत्वादित्याहुः । "एवंवित् पादेनैवाध्यारोहती"ति वचनाच्च तत्त्ववेदनमुपासनं च गत्याम्नानफलमवगतं, वेदन-शब्दो ह्यविशेषतत्त्वज्ञानमुपासनं च वदतीति, उपपन्न इति गतिश्रुतेरुभयथाऽर्थ उपपन्नः, तत्प्रमाणतया मूर्द्धन्यनाड्या निष्क्रमणेन ब्रह्मप्राप्त्युपलब्धेः तथा निष्क्रमणस्यान्तकाले पुरुषेण कर्त्तुमशक्यत्वात् स्मृत्यविभ्रंशेन तत्सौकर्या-

यानुदिनं स्मरणं कार्यं लोके परिशीलितेनाध्वना गच्छन् हि सन्तमसेऽपि न प्रमाद्यतीति वर्णयन्तीति तदयुक्तं मार्गपर्वविरोधस्य उपासनार्थत्वेन विनाऽपि सुपरिहरत्वस्य गतिपादे वक्ष्यमाणत्वात्, मार्गपर्वणां न्यूनाधिकभावविरोधस्तु सर्वशाखाप्रत्ययन्यायेन सुपरिहरः, परिहरिष्यते च, क्वचित्कस्यचिदनाम्नानस्याज्ञानेनैरर्थक्यनिबन्धनत्वाभावादन्यत्राम्नातस्यासद्भावायोगात् वस्तुनि विकल्पायोगाच्च, तथा तथोपासनार्थमिति चेत् न उपासनार्थत्वेन विनाऽप्यनाम्नानोपपत्तेः, न हि कर्मकाण्डे क्वचित्कस्यचिदनाम्नानमुपासनार्थं, नाप्यज्ञानादिनिबन्धनं, किंनिबन्धनमिति चाचोदनीयम्, अनादिवेदपाठस्यापर्यनुयोज्यत्वात्, मन्त्रब्राह्मणभागाः क्वचिदसङ्कीर्णा आम्नाताः क्वचिच्च सङ्कीर्णाः कोऽत्र पर्यनुयोगः, अनाम्नानस्य न्यूनतयोपासनार्थत्वे सर्वशाखाप्रत्ययन्यायश्च भज्यते, क्वचिदप्यनुक्तोपसंहारस्यानपेक्षितत्वात्, "एवं वित्पर्यङ्कं पादेनाध्यारोहती"ति श्रुतिश्च यथा ऽवस्थितमार्गविषयतयोपपन्ना, तस्याश्रुतत्वेन न्यूनाधिकपर्वविशिष्टताविषयत्वे नियामकाभावात्, न च फले तुल्ये ऽपि न्यूनाधिकानुसन्धानं युक्तं, न हि मार्गपर्वसु कस्यचिदप्राप्तिरुपपद्यते, न हि प्रथमद्वितीयानतिक्रमेण दशमसोपानप्राप्तिरुपपद्यते, उपपन्न इत्यादिसूत्रार्थोऽप्यनुपपन्नः मार्गचिन्तनस्य दृष्टोपायत्वानुपपत्तेः, न हि चिरानुध्यातोराजमार्ग उत्क्रान्तेन प्राप्तुं शक्यते, अतो यथाभाष्यमेवार्थ उपपन्नः ॥ साम्परायाधिकरणं समाप्तम् ॥

अनियमाधिकरणम् ।

## सू० अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥

भा० उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिः श्रूयते किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः? उत सर्वेषां ब्रह्मोपासननिष्ठाना?मिति संशये, इतरेष्वनाम्नानात् "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते श्रद्धां सत्यमुपासत" इतीतरसकल-

ब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्तेऽभिधीयते अनियम इति, सर्वेषां सर्वोपासननिष्ठानां तथैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति, सर्वेषां तथैव गमने हि सति शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामविरोधः, अन्यथा विरोध एवेत्यर्थः, श्रुतिस्तावत् छान्दोग्यवाजसनेयकयोः पञ्चाग्निविद्याथामर्चिरादिमार्गेण सर्वोपास[1]ननिष्ठानां गमनमाह "य एवमेतद्विदुर्ये चेमे ऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ती"ति, वाजसनेयके "तद् य इत्थं विदुर्ये चे[2]मेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ती"ति, छान्दोग्ये य इत्थं विदुरिति पञ्चाग्निविद्यानिष्ठान् ये चेमेऽरण्ये इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चाभिधायार्चिरादिका गतिरुपदिश्यते "सत्यं ज्ञानमनन्तं ब्रह्म सत्यं त्वेव विजिज्ञासितव्यमिति सत्य-शब्दस्य ब्रह्मणि प्रसिद्धेः, तपः-शब्दस्यापि तेनैकार्थ्यात्सत्यतपः-शब्दाभ्यां ब्रह्मैवाभिधीयते श्रद्धापूर्वकं ब्रह्मोपासनं चान्यच्च श्रुतं, सत्यं त्वेव विजिज्ञासितव्यमित्युपक्रम्य श्रद्धा त्वेव विजिज्ञासितव्येति, स्मृतिरपि "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना" इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह—

१ सर्वब्रह्मोपासननिष्ठानामिति पा॰ ।
२ ये चामी अरण्ये इति पा॰ ।

टी० सू० अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥ अर्चिरादिगतेः प्रस्तुतत्वात्तन्नियमानियमचिन्तेत्यवान्तरसङ्गतिः, किमर्चिरादिगतिस्तत्सन्निधिसमाम्नातोपासननिष्ठानामेव? उत सर्वविद्यानिष्ठानां? किं छान्दोग्यवाजसनेयकयोस्तद्य इत्थं विदुर्ये एवमेतद्विदुरिति वाक्ययोः पञ्चाग्निविद्यानिष्ठानामेवार्चिरादिगतिश्रवणम्? उत सर्वब्रह्मविद्यानिष्ठानां? ये चेमेऽरण्ये श्रद्धा तप इत्युपासते ये चामी अरण्ये श्रद्धां सत्यमुपासत इति किं पञ्चाग्निविद्यानिष्ठानुद्दिश्य गतिर्विधीयते? उतेतरानप्युपासकान्? किं श्रद्धासत्यतपःशब्दैरुपास्यब्रह्मोपस्थानमुखेन उपासनान्तरप्रतिपत्ति? रस्ति ने? ति, किम् उपकोसलविद्यायामाचार्यस्तु ते गतिं वक्तेति गत्यनुवादः उपासनान्तरप्रतिपत्तिमुपोद्बलयति? नेति, यदा नोपोद्बलयति तदा ब्रह्मोपस्थापनमुखेन उपासनान्तराप्रतिपत्तेः इतरोपासकानामनुद्दिष्टत्वात् पञ्चाग्निविद्यानिष्ठानेवोद्दिश्य गतिविधानात् छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामर्च्चिरादिगतिश्रवणाभावात् न सर्वब्रह्मविद्यानिष्ठानामिति स्याद्, यदोपोद्बलयति तदा ब्रह्मोपस्थापनमुखेनोपासनान्तरप्रतिपत्तेरितरानप्युद्दिश्य विहितत्वेन छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामर्च्चिरादिगतिश्रवणात्सर्वब्रह्मनिष्ठानामपि अर्चिरादिगतिः स्यादिति ॥ सिद्धान्त्यभिमतवाक्यस्य निर्वाहमाह "ये चेमे" इति, प्रमाणाभावादिति सत्यतपःशब्दयोर्ब्रह्मवाचकत्वाभावेन कारणाभावोऽभिप्रेत इति प्राप्त इति, गमने हि सतीति, हि-शब्दः सूत्रयोजनाशेषः, अविरोध इति श्रुतिस्मृतिभ्यामस्यार्थस्याविरोध इत्यर्थः, । उदाहृतवाक्यैः सर्वब्रह्मविद्यानिष्ठानामर्चिरादिगतिमत्त्वप्रतिपादनं दर्शयति "छान्दोग्य इत्थं विदु"रितिसत्य-शब्दस्य ब्रह्मवाचकत्वं दर्शयंस्तन्मुखेन तपः-शब्दस्यापि तद्वाचित्वं दर्शयति "सत्यं ज्ञान"मिति, तपः-शब्दस्यापि "परमं योमहस्तप" इत्यादिषु द्रष्टव्यम् । परैस्तु विद्यामन्तरेण केवलश्रद्धातपोभ्यामर्चिरादिगतिलाभासम्भवस्य "विद्यया तदारोहन्ति यत्र कामाः परा[1]हृताः न तत्र दक्षिणा

१ परागता इति पा० ।

यान्ति नाविद्वांसस्तपस्विन" इत्यादि श्रुतिसिद्धत्वात् श्रद्धातपःपरायणानां विद्यानिष्ठत्वमार्थमित्युक्तं, तदविरुद्धम् आर्थत्वादपि शाब्दत्वं सम्भवद्युक्ततमं "स एनान् ब्रह्म गमयती"ति ब्रह्मप्राप्तिफलत्वात् फलस्य च यथोपासनभावित्वात्, तत्रोपास्यतया प्रतीतं सत्यतपः-शब्दवाच्यं ब्रह्मैवेति च सिद्धम् । श्रद्धापूर्वकं ब्रह्मोपासनस्य श्रुत्यन्तरसिद्धतां दर्शयति "श्रद्धापूर्वकमि"ति, स्मृतिवचने ब्रह्म ब्रह्मविदोजना इत्यत्र तात्पर्यं न विद्याविशेष उक्तः ।

**सू० एवंजातीयकाः श्रुतिस्मृतयो बह्व्यः सन्ति, एवं सर्वविद्यासाधारणीयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥ अनियमाधिकरणं समाप्तम् ॥**

टी० एवंजातीयका इति, "तयोर्द्ध्वमायन्नमृतत्वमेति सूर्यद्वारेण ते विरजाः प्रयान्ति अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया वाऽऽत्मानमन्विष्यादित्यमे[1]वाभियन्ति" इत्यादयः श्रुतयः "स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु । द्रष्टव्यस्त्वनुमन्तव्यः श्रोतव्यश्च द्विजातिभिः । य एवमेनं जानन्ति ये चारण्यकमाश्रिताः । उपासते तपः सत्यं श्रद्धया परया युताः क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम् । अयनं देवलोकं च सवितारं स वैद्युतम् । तत्र तत्पुरुषो दिव्यो मानवो ब्रह्म लौकिमान् । करोति पुनरावृत्तिस्तेषामिह न विद्यते" ॥ इत्यादिस्मृतयश्च विवक्षिताः, सर्वविद्यास्वर्चिरादिगतिः प्राप्ता चेच्छान्दोग्ये प्रदेशद्वयेऽर्चिरादिगतेर्द्विरुक्तिः कथमित्यत्राह "एवं सर्वे"ति, पूर्वपक्षे तद्य इत्थं विदुरित्यादिवाक्यस्य संकोचोऽनुवादत्वं च, सिद्धान्ते तु न तत्सङ्कोचः, अन्येषामनुवादत्वमात्रमेव, इदमधिकरणम्, अर्चिरादिगतिचिन्तनस्य तत्सिद्ध्यर्थत्वात् . अर्चिरादिगतेः सर्वविद्यासु चिन्तनीयतया क्रुतं तदङ्गीभविष्यति, इतरे सर्वेऽपि यावदधिकारमिति सूत्रमतः परस्तात् पठित्वा अधिकरणान्तरमाहुः । तत्र परे तु विदुषस्तद्देहपातानन्तरं देहान्तरमुत्पद्यते न वेति संशय्य ब्रह्मविदामपि

१ आदित्यमेवाभियान्तीति पा· ।

वशिष्ठादीनामितिहासपुराणेषु देहान्तरोत्पत्त्यवगमाद्विद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति पूर्वपक्षं कृत्वा वर्त्तमानब्रह्मविदां प्रारब्धभोगक्षय इवाधिकारिकपुरुषाणामपि प्रारब्धाधिकारहेतुकर्मक्षये मोक्ष इति न पाक्षिकहेतुत्वाहेतुत्वे इति सिद्धान्तयन्ति'। तदयुक्तं प्रत्यक्षया श्रुत्या विद्याया अपवर्गहेतुत्वे श्रुते तद्विरुद्धेतिहासपुराणवचसामप्रमाणतया विद्याया अपवर्गसाधनत्वे संशयानुत्थानात् । किञ्च यावदधिकारमवस्थितिरित्युक्ते कथमहेतुत्वपरिहारः यावदधिकारमवस्थानेन वर्त्तमानदेहानन्तरमप्यवर्गाभावस्य सिद्धत्वादहेतुत्वमेव समर्थितं भवति । नन्वधिकारस्य प्रारब्धकर्मकृतत्वात् तदवसाने मोक्षहेतुत्वमेव विद्याया मोक्षहेतुत्वमिति चेत् न प्रारब्धकर्मणोऽपि स्वाप्नार्थवन्मिथ्यात्वेन निवर्त्तकज्ञाने सति स्थित्यनुपपत्तेः, प्रवृत्तफलस्य कर्माशयस्य मुक्तेषोर्वेगक्षयादिव फलक्षयान्निवृत्तिरिति चेत् न प्रारब्धकर्मणोऽपि स्वाप्नशरवेगस्येव मिथ्यात्वेन बोधादनन्तभोगानुपपत्तेः, न हीषुमोक्षणक्षण एव पुरुषे प्रबुद्धे शरश्च वेगश्चाबाधितौ तिष्ठतः, यदि वसिष्ठादीनां न निवर्त्तकज्ञानमुदितं तर्ह्यहेतुत्वशङ्काया अभावात्सुतरामनारम्भणीयता । अपरे तु वसिष्ठादीनां देहान्तरोत्पत्तिदर्शनेन विद्याया अर्च्चिरादिनाऽपवर्गहेतुत्वव्यभिचारशङ्कानिवारकं सूत्रं व्याचक्षते तन्मतेऽपि श्रुतिविरोधे स्मृत्यप्रामाण्येन संशयाभावात् अधिकरणानारम्भस्तुल्यः । अन्ये तु अर्चिरादिमार्गस्य ऋजुत्वादादित्यादीनां परिभ्रमणशीलत्वेन तत्र नियमेनानवस्थानादार्जवेन न सदा देवाश्चिन्त्याः किन्तु यदा यत्र यस्तिष्ठति स तत्र तदा चिन्त्यत इति विचार्य भ्रमतामपि सूर्यादीनां शरीरान्तरेण मार्गानुगुणस्थित्युपपत्तेर्मार्गानुगुण्येन सदा ते देवाश्चिन्तनीया इति सिद्धान्तयन्ति, तदयुक्तं कृतकरत्वात् देवताऽधिकरणेऽनेकप्रतिपत्तिदर्शनादिति युगपदनेकत्र प्रवृत्तिविरोधोऽयं शरीरभेदेन परिहृतः यतो विचारान्तराण्ययुक्तानि अत एवास्य सूत्रस्य विदुषो देहात्यये सकलकर्मक्षयस्य व्यभिचारशङ्काव्युदासपरत्वमेव युक्तं यतस्तदेव युक्तम् । अत एव साम्परायाधिकरणशेषत्वमेव घटत इति अनियमसूत्रात् प्रागेव पाठः समीचीनः । ननु अनियमसूत्रात् परत्वमुपपद्यते विदुषोऽर्चि-

रादिनाऽपवर्गप्राप्त्यदर्शनपरिहारपरत्वेऽपि सङ्गत्युपपत्तेः, नैवम् । अर्चिरादिगतेर्देहानन्तरभावित्वचिन्तनपरत्वाभावादनियमसूत्रस्य सर्वविद्यानिष्ठसाधारणत्वं हि तेन सूत्रेण निरूपितम् । अतो विद्याफलविशेषस्य देहपातानन्तरभावित्वचिन्तनपरस्य यावदधिकारमिति सूत्रस्य साम्परायाधिकरणशेषतया पूर्वमेव पठनं युक्तम् । अनियमाधिकरणं समाप्तम् ॥

अक्षरध्यधिकरणम् ।

सू० अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

भू० बृहदारण्यके श्रूयते "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमो वाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन एतस्य वा ऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति, तथा आथर्वणे "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपाद"मिति, तत्र संशयः किमिमे ऽक्षरशब्दनिर्दिष्टब्रह्मसम्बन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मविद्यास्वनुसन्धेयाः? उत यत्र श्रूयन्ते तत्रैव? वेति, किं युक्तं यत्र श्रुतास्तत्रैवे? ति, कुतः विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात्, प्रतिषेधरूपाणामेषां गुणानामानन्दादिवत्

टी० सू० अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदु-क्तम् ॥ ३३ ॥ अथार्चिरादिगतेः पूर्वविद्या[1]साधारण्यमुक्तं तथा ऽस्थूलत्वा-देरपि सर्वसाधारण्यं निरूप्यत इति सङ्गतिः पूर्वाधिकरणे प्रकरणं पूर्वप-क्षहेतुः अत्रापि तथेति वा सङ्गतिः । प्रपञ्चप्रत्यनीकतास्वरूपा इति प्रपञ्च-प्रत्यनीकं ब्रह्म तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपकाः अस्थूल-त्वादिधर्मा इत्यर्थः । किं मैत्रेयीब्राह्मणे श्रुतमस्थूलत्वादिकं तत्रैवोपसंहा-र्यम् ? उत सर्वासु विद्यासु ? अस्थूलत्वादीनां किं ब्रह्मासाधारणतया तत्स्व-रूपनिरूपकत्वम् ? उत केवलज्ञानानन्दादीना ? मिति, किमस्थूलत्वादिकं विनाशङ्कितस्थूलत्वादेर्व्यावृत्तिप्रतीतिरस्ति ने ? ति अस्ति चेत् केवलज्ञाना-दीनामेव निरूपकत्वेनास्थूलत्वादेरनुपसंहार्यत्वं भवेत्, न चेत् स्वरूपनि-रूपकत्वात् सर्वासूपसंहार्यत्वं प्रमाणाभावात् हेत्वभावात् । वस्तुसामर्थ्यं प्रमाणमाशङ्क्य प्रतिषेधति—

सू० स्वरूपावगमोपायत्वाभावाच्च, आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते नि-रालम्बनप्रतिषेधायोगात्, एवं प्राप्ते प्रचक्ष्महे अक्षर-धियां त्ववरोध इति, अक्षरब्रह्मसम्बन्धिनीनामस्थूलत्वा-दिधियां सर्वब्रह्मविद्यास्ववरोधः संग्रहणमित्यर्थः, कुतः सामान्यतद्भावाभ्यां सर्वेषूपासनेषूपास्यस्याक्षरस्य ब्रह्मणः समानत्वादस्थूलत्वादीनां तत्स्वरूपप्रतीतौ भावाच्च, एत-दुक्तं भवति असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणं, न च केवलानन्दादि ब्रह्मणोऽसाधारणमाकारमुपस्थापयति प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात्, हेयप्रत्यनीको ह्यानन्दादिर्ब्रह्मणोऽसाधारणं रूपं, प्रत्यगात्मनस्तु स्वतो-

[1] सर्वविद्यासाधारण्यमुक्तमिति युक्तः पाठः ।

हेयविरहिणोऽपि हेयसम्बन्धयोग्यताऽस्ति, हेयप्रत्यनीकत्वं च चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम्, अतोऽसाधारणाकारेण ब्रह्मानुसंदधताऽ-

टी० "स्वरूपे"ति, स्वरूपावगमोपायत्वाभावं विवृणोति "आनन्दादिभिरि"ति, लब्धरूपे क्वचित् किञ्चित्तादृगेव निषिध्यत इत्यभिप्रायः अस्थूलत्वादिधियामवरोध इति सर्वब्रह्मविद्यास्वस्थूलत्वादिकमनुसन्धेयमित्यर्थः, सामान्यतद्भावाभ्यामिति समुच्चित्यैको हेतुः, सर्वविद्यासु ब्रह्मानुगतं चेत्कथमस्थूलत्वादिगुणानां तत्स्वरूपप्रतीत्यनुबन्धित्वमित्यत्राह "एतदुक्त"मिति, अत्र विवक्षिता प्रतीतिर्न येन केनचिदाकारेण प्रतीतिः अपितु व्यावृत्ताकारेण प्रतीतिर्विवक्षिता तादृशप्रतीत्यन्तर्भावोऽस्थूलत्वादीनामस्त्येवेत्याह "असाधारणे"ति, आकारमुपस्थापयति—स्वरूपमुपस्थापयतीत्यर्थः । हेयसंबन्धाभावः प्रत्यगात्मनोऽप्यस्ति तत्कथं हेयप्रत्यनीकानन्दादिब्रह्मणोऽसाधारणं रूपमित्यत्राह "प्रत्यगात्मन"स्त्विति, ब्रह्मणो हेयप्रत्यनीकत्वमसाधारणमस्तु तत्रास्थूलत्वादिकं कथमसाधारणमित्यत्राह "हेयप्रत्यनीकत्वं"चेति, विपरीतरूपं—विरोधिरूपं तत्तद्धेयशङ्काव्यावर्तकमित्यर्थः ॥

भू० ऽस्थूलत्वादिविशेषितज्ञानानन्दाद्याकारं ब्रह्मानुसन्धेयमिति अस्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्सर्वासु ब्रह्मविद्यासु तथैव ब्रह्मानुसन्धेयमिति, । गुणानां प्रधानानुवर्त्तित्वे दृष्टान्तमाह औपसदवदिति यथा जामदग्न्यचतूरात्रपुरोडाशाद्युपसद्गुणभूतः सामवेदपठितोऽग्निर्वै होत्रं वेत्वित्यादिको मन्त्रः प्रधानानुवर्त्तितया याजुर्वेदिकेनोपांशुत्वेन प्रयुज्यते, तदुक्तं प्रथमे काण्डे "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग" इति,

"श्रोजसोऽहनि यत्खौ" ॥ यद्ग्रहणमनर्थकं खस्वेत्येव वक्तव्यं, यत्कारात्पाकरणिको यद्भविष्यति, नैवं शक्यं, खश्चेत्युच्यमानेऽनन्तरसूत्रविहितस्य अस्य समुच्चयो विज्ञायेत तस्माद्यद्ग्रहणम् ।

"ख च" ॥ 'योगविभाग इत्यादि' । के चित्पुनरेकमेव योगमधीयते; तथा च यथासंख्यमनुदेशः समानां प्रत्ययविध्यर्थो बहुवचननिर्देशः, बहुवचनान्तात्प्रत्ययोत्पत्तौ यथासंख्यमिष्यतइति । 'उत्तरार्थश्चेति' । उत्तरत्र खस्यैवानुवृत्तिर्यथा स्याद्यतो मा भूदिति ।

"पूर्वैः कृतमिनियौ च" ॥ 'बहुवचनान्तेनेत्यादि' । बहुवचनान्तात्प्रत्ययविध्यर्थो बहुवचननिर्देशो बहुवचनान्तात्प्रत्ययोत्पत्तौ यथा प्रशंसा गम्यते पूर्वैर्बहुभिः क्रियतइति प्रतीतेः, तेन पूर्वशब्दश्च वृद्धेषु पुरुषेषु प्रवर्त्ततइत्यर्थः ।

"सहस्रेण संमितौ घः" ॥ 'निर्देशादेव समर्थविभक्तिरिति' । सा पुनस्तुल्यार्थयोगे तृतीया । 'संमितएव लक्षयितव्य इति' । किंकारणमित्याह । 'तत्रेति' । छन्दसि हि तत्र संमिते प्रयोगो दृश्यते ।

"सोममर्हति यः" ॥ छन्दसीत्यधिकाराद्भाषायां सोम्यशब्दस्य साधुत्वं चिन्त्यम्,* आयुष्मान्भव सोम्येति वाच्यो विप्रोभिवादनइति, के चित्सौम्येति वृद्धिं पठन्ति, सौम्यशब्दो दर्शनीयवचनः सुखादिवत् ।

"मये च" ॥ 'मय इति मयडर्थो लक्ष्यतइति' । शब्दे कार्यस्यासंभवात् । 'तत्र यथायोगं समर्थविभक्तिरिति' । आगते पञ्चमी, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा ।

"वसोः समूहे च" ॥ श्रोश्रावयेत्यादिकस्याक्षराणि गण्यन्ते, सप्तदशात्मकश्छन्दस्योक्षरसमूहः, प्रजापतिः प्रजापतिना दृष्टः, हस्तौ पृणस्वेति पृणातिः पूरणकर्मा ।

"नक्षत्राद्घः" ॥ 'समूहइति नानुवर्त्ततइति' । लिङ्गानिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यतइति भावः ।

"शिवशमरिष्टस्य करे" ॥ 'करोतीति कर इति'। पचाद्यच्। 'सामर्थ्यलभ्या षष्ठी समर्थविभक्तिरिति'। सा पुनः कृद्योगलक्षणा कर्मणि, भाषायां शिवतातिप्रभृतीनां साधुत्वं चिन्त्यम्।

श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तोऽध्यायश्च ॥



श्रीगणेशाय नमः ॥

# अथ पञ्चमोध्यायः ।

# काशिकाव्याख्या पदमञ्जरी ।

"प्राक् क्रीताच्छः" ॥ 'अवत्सीय इति' । अतिदोहनाद्वत्सान्प्रति हितो न भवति गोधुगित्येवं प्रकृत्या नञा च युगपत्प्रत्ययार्थस्य संबन्धः, प्रधानभूतश्च प्रत्ययार्थः, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, प्रधानत्वादेवानेकोपकार्यत्वस्याविरोधात्, सामान्याप्रयोग इति लिङ्गाच्च । किं च विशेषतोऽत्र ज्ञापकमस्ति, यदयं नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिता इत्याह, तज्ज्ञापयति भवत्येवं जातीयकेऽपि विषये तद्धित इति, अन्यथा संपाद्यर्हहितालमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे प्रवृत्तिनिमित्तप्रतिषेधे वर्तमानात्पराणि न संभवेयुः, तत्र पूर्वं प्रत्ययः पश्चान्नञ्समासः, अत एव पक्षमाध्यत्वादवत्सीय इत्यादेरुपन्यासः, यस्तु वत्सादन्यस्मै हितो यो वा वत्सीयादन्यो न तत्र किञ्चिदवसाध्यम् । अथ किमर्थमियानवधिरुपादीयते यावता नह्यस्य प्राग्वतेष्ठञित्यारभ्य ये योगास्तेन क्रीतमित्येतस्मात्प्राक् पठितास्तेषु व्यापारोऽस्ति, नहि तत्र कश्चिदर्थो निर्दिश्यते ततश्च प्राक् ठञ इति वक्तव्यं, प्राग्वतेष्ठञित्ययमेव च प्रत्यासन्नष्ठञ् ग्रहीष्यते न विप्रकृष्टो लोकसर्वलोकाट्ठञित्यादिरित्यत आह । 'अर्थोऽवधित्वेन गृहीत इति' । गृहीतो ग्रहीतुमिष्टः । अयमभिप्रायः । अवश्यमत्रार्थोऽवधित्वेन ग्राह्यः, अन्यथा प्राक् ठञ इत्युच्यमानेऽवधिना सजातीयस्यावधिमतोऽभावादर्थाः प्रकृतयो वाऽवधिमत्त्वेन गृह्येरन् प्राक् ठञो येऽर्था या वा प्रकृतय इति, तत्र प्रकृतिपक्षेऽधिकारस्य नदीस्रोतोरूपेण प्रतिप्रकृत्युपस्थानादुगवादिभ्यो यच्छश्चेति यच्छयोः संनिधानादविशेषादुत्सर्गापवादभावो न स्यात्तव्यत्तव्यानीयरामिव विकल्प

१ अत्रादत्तेति २ पा० ।

एव स्यात्, अर्थे त्ववधित्वेन गृहीते प्राक् क्रीतादर्थोऽस्तित्वस्योपस्थानं भवति, अवधिसजातीयो ह्यवधिमान् भवति, यथा मासात्पर इति कालः प्रतीयते, ग्रामात्पूर्व इति देशः, अलोऽन्त्यात्पूर्व इत्यलेव, ततोऽतिप्रसङ्गो न भवति, कथं समानार्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं बाधते यथा तक्रं कौण्डिन्ये दधि, अतोऽर्थावधित्वेन गृहीत इति। ननु च प्राक् ठञ इत्युच्यमाने भवतु नामैवं प्राक् ठञो याः प्रकृतय इति तथापि यदादिविषये छो न भविष्यति, ज्ञापकात्, यदयं विभाषा हविरपूपादिभ्य इति विभाषां शास्ति तज्ज्ञापयति नान्यविषये छो भवतीति, एवं च कृत्वा छ इत्येवाधिकारोऽस्तु नार्थावधिनिर्देशेन, ज्ञापकाच्च प्रतिसूत्रमुपस्थानेऽप्यन्यविषये न भविष्यति, प्राग्वतेष्ठञित्यादिके तु प्रकरणे नास्याधिकारोऽधिकारान्तरेणावष्टब्धत्वात्। सत्यम्। प्रतिपत्तिगौरवपरिहारार्थस्त्ववधिनिर्देशः, स चावधिरर्थ एव निर्देश्यो न प्रत्ययोऽन्यथा लशुनं च भक्षितं व्याधिश्च न निवृत्त इत्येतदापद्येत॥

"उगवादिभ्यो यत्"॥ 'उवर्णान्तात्प्रातिपदिकाद्गवादिभ्यश्चेति'। उवर्णादेर्गशब्दादेर्वशब्दादेश्च यद्भवतीत्यर्थो न भवति गवादिगणपाठतः। 'सनङ्गुरित्यादि'। चर्मविकारलक्षणस्याञोऽवकाशो वार्ध्रं चर्म वारत्रं चर्मेति, उवर्णान्तलक्षणस्य यतोऽवकाशः शङ्कव्यं पिचव्यमिति, सनङ्गावुभयप्रसङ्गे परत्वादञ् प्राप्नोति। 'चरुर्नाम हविरिति'। स्थालीवचनस्य चरुशब्दस्य तदधिकरणे हविष्युपचाराद्वृत्तिः। विभाषा हविरपूपादिभ्य इत्यत्र हविर्विशेषवाचिनां ग्रहणं न स्वरूपस्य तस्य गवादिषु पाठात्, विपर्ययस्तु न भवति इह विशेषग्रहणं तत्र स्वरूपग्रहणमिति, गवादिष्वसञ्जातविरोधित्वेन स्वरूपग्रहणे बाधकाभावात्, अतो विभाषा हविरपूपादिभ्य इत्यत्रैव विशेषग्रहणमिति स्थिते तस्यावकाश आमिक्ष्यमामिक्षीयं पुरोडाश्याः पुरोडाशीया इति। 'अन्नविकारेभ्यश्चेति पठ्यतइति'। तस्यावकाशः सुराः सुर्या सुरीयाः, ओदन्याः ओदनीया इति, उवर्णान्तलक्षणस्य यतः स एव, चरुसक्तुभ्यामुभयप्रसङ्गे परत्वाद्विभाषा प्राप्नोति, 'तत्र सर्वत्र पूर्वविप्रतिषे-

घेन यत्प्रत्यय एवेष्यतइति'। अयमेव नित्यो यत्प्रत्यय इत्यर्थः। 'नभं चाद्देशमापद्यतइति'। भसंज्ञकं च न भवतीत्ययं त्वर्थो न भवति व्याख्यानात्, तदर्थमेव हि गणसूत्रं व्याख्यातं, प्रायेण हि वृत्तिकारो गणसूत्राणि न व्याचष्टे। 'नभ्योऽक्ष इति'। छिद्रवद्रथाङ्गविशेषो नाभिः, तच्छिद्रानुप्रविष्टकाष्ठविशेषोऽक्षः, स तदनुगुणत्वात्तस्मै हित इत्युच्यते, अञ्जनं तैलकृताभ्यङ्गः, तदपि स्नेहनत्वान्नाभये हितं, यत्तु भाष्यउक्तं. नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावादिति, तन्नभ्यं चक्रमिति प्रयोगाभिप्रायं, नहि चक्रस्य नाभिर्विकृतिरपि त्ववयवः, नापि तादर्थ्यमस्ति, अवयविनोऽवयवार्थत्वाभावात्, तेन तदर्थं विकृतेः प्रकृतावित्यत्रार्थे नभ्यं चक्रमिति नैव सिद्ध्यति, हितार्थस्त्वशक्य एवेति न सर्वथा प्रत्ययानुपपत्तिस्तत्र विवक्षितेति भावः। 'शरीरावयवाद्यदिति यति कृतइति'। परत्वादिति भावः। 'नाभ्यं तैलमिति'। 'भवितव्यमिति'। अथात्रापि नभभावः कस्मान्न भवतीत्याह। 'गवादिपठितेति'। 'शुन इत्यादि'। श्वनित्यस्य सम्प्रसारणं यत्प्रत्ययश्च भवति पक्षे दीर्घश्च तत्संनियोगेनेति, यदा दीर्घत्वं तदा शुने हितं शुन्यं शून्यमिति वा नस्तद्धित इति टिलोपो न भवति, ये चाभावकर्मणोरिति प्रकृतिभावात्। नन्वनिति तत्र वर्त्तते, सम्प्रसारणे च कृते नेदमनन्तं कामं दीर्घपक्षे तद्विधानसामर्थ्याट्टिलोपो न स्यात्पक्षान्तरे तु प्राप्नोति, स[1]म्प्रसारणं बाधकबाधनार्थमन्यथा प्रकृतिभावप्रसङ्गात्, एवं तर्हि चकारद्वयमत्र पठ्यते, तत्रैकः सम्प्रसारणसमुच्चये द्रष्टव्यः, तत्रान्यस्य समुच्चेतव्यस्याभावात्सम्प्रसारणमेव पुनर्विधीयते, तत्र पुनर्विधानं तु तद्रूपस्यैवावस्थानार्थं भविष्यति। 'ऊधसोऽनङ् चेति'। नश्चेति नोक्तं लाघवे विशेषाभावात्, ऊधःशब्दस्यानङादेशो भवति यत्संनियोगेन, ऊधन्यः, ये चाभावकर्मणोरिति प्रकृतिभावः॥

"कम्बलाच्च संज्ञायाम्"॥ अयं योगः शक्योवक्तुं, कथं कम्बल्य इति, निपातनादेवैतत्सिद्धम्, अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धि-

[1] संप्रसारणविधानं तु टिलोपार्थमेव स्यादन्यथा ये चाभावकर्मणोरिति प्रकृतिभावप्रसङ्गात्।

तलुकीति, इदं तर्हि प्रयोजनं संज्ञायामिति वक्ष्यामीति, एतदपि नास्ति प्रयोजनं, परिमाणपर्युदासेन पर्युदासे प्राप्ते तत्र कम्बल्यग्रहणं परिमाणस्य च संज्ञा कम्बल्यशब्दः, एवं तर्हि स्वरार्थं वचनं, निपातनेन हि परिमाणे कम्बल्यशब्दः साधुरित्येतावदवगम्यते न तु यदन्तोयमिति, ततश्चान्तस्वरितत्वं न स्यात्, अथ निपातनएवान्तस्वरितत्वं पठेत्, तत्र व्याख्यानं शरणं व्याख्यानाच्च लघु सूत्रम् ॥

"विभाषा हविरपूपादिभ्यः" ॥ 'हविर्विशेषवाचिभ्य इति'। स्वरूपस्य ग्रहणं न भवति तस्य गवादिषु पाठात्, विपर्ययस्तु न भवति तत्र विशेषाणां ग्रहणमिह स्वरूपस्येति, असंजातविरोधित्वेन तत्रैव स्वरूपग्रहणस्य न्याय्यत्वात्। 'अन्नविकारेभ्यश्चेति'। अन्नविकाराः अन्नप्रकारा अदनीयविशेषा इत्यर्थः, तेभ्यश्च विभाषा यद् भवति ओदन्या ओदनीयाः, यद्येवमपूपादीनां किण्वपर्यन्तानां पाठोनर्थकः, अन्नविकारत्वादेव सिद्धेः, सुराप्रकृतिद्रव्यं किण्वं, नानर्थकः प्रपञ्चार्थत्वात्, अपर आह । यदा सादृश्यादिनापूपादयोर्थान्तरउपचर्यन्ते तदर्थं एषां पाठ इति ॥

"तस्मै हितम्" ॥ तस्मादिति हितयोगे चतुर्थी वक्तव्येति चतुर्थी । अपर आह । अयमेवनिर्देशो ज्ञापको हितयोगे चतुर्थी भवतीत्यस्येति, तच्चिन्त्यम्, चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरिति आशिषि विषयविशेषे हितयोगे चतुर्थ्याः सम्भवात् ॥

"शरीरावयवाद्यत्" ॥ 'शरीरं प्राणिकाय इति' ॥ एतेनैतद्दर्शयति शीर्यतइति शरीरमिति, शृणातेरीरन् प्रत्ययमुत्पाद्य यद्यपि शरीरशब्दो व्युत्पाद्यते तथापि योगरूढत्वात्प्राणिकायएव वर्तते न घटादाविति ॥

"खलयवमाषतिलवृषब्रह्मणश्च" ॥ 'ब्रह्मण्यमिति'। पूर्वेण टिलोपाभावः, वृषशब्दोयमकारान्तो गृह्यते न तु नकारान्तः, अन्यथाऽसन्देहार्थं नकारलोपमकृत्वैव निर्दिशेत्, यथात्मन्विश्वजनेति, अस्ति च नकारान्तस्तत्र वक्तव्यं ततोपि यद्भवतीति, अन्यथा तत्र छे टिलोपे च वृषीयमिति प्राप्नोति, तस्य च वृषशब्द आदेशो वक्तव्यः, अन्यथा

वृषण्य इति स्यात्, तथा ब्रह्मशब्दो नकारान्तो गृहीतः ब्राह्मणशब्दश्चाकारान्तोस्ति तत्र वक्तव्यं ब्राह्मणशब्दादपि यद्भवतीति, अन्यथा ततश्छः स्यात्, तस्य च ब्रह्मन्शब्द आदेशो वक्तव्यः, अन्यथा ब्राह्मण्यमिति प्राप्नोति, इत्यस्मिन्पूर्वपक्ष इदमाह । 'वृष्णे हितमित्यादि' । 'छप्रत्ययोपि न भवतीति' । यत्प्रत्ययस्तु तावत्सूत्रेनुपादानादेव न भवति, न केवलं स एवा ऽपि तु छप्रत्ययोपीत्यपिशब्दस्यार्थः । कुत इत्याह । 'अनभिधानादिति' । तदनेनाप्यव्यविकन्यायो दर्शितः, त्रैशब्द्यं हि नः साध्यं वृषाय हितं वृष्यं वृष्णे हितं तथा ब्रह्मणे हितं ब्रह्मण्यं ब्राह्मणाय हितमिति तत्र द्वयोः शब्दयोः समानार्थयोरेकत्र विग्रहएवापरत्र विग्रहश्च वृत्तिश्च भविष्यति, तद्यथा ऽविकस्य मांसमाविकमवेर्मांसमिति । 'रथाय हिता रथ्येति' । हितार्थएव यथा स्यादर्थान्तरे मा भूदित्येवमर्थं गवादिषु पाठो नाङ्गीकृतः । के चि[1]त्तदन्तविधिमिच्छन्ति रथसीताहलेभ्यो यद्विधाविति, अपरे तु हलसीताभ्यां साहचर्याच्चातुरर्थिकएव तदन्तविधिर्भवति न त्वस्मिन्निति ॥

"अजाविभ्यां थ्यन्" ॥ अजशब्दोऽयमिह पुल्लिङ्ग उपात्तः, अत एव द्वन्द्वे घीत्यविशब्दस्य पूर्वनिपातं बाधित्वाजाद्यदन्तमित्यजशब्दस्य पूर्वनिपातः कृतः, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्त्रीलिङ्गादपि थ्यन् भवत्येव, अजायै हितमजथ्यं, तसिलादिषु थ्यन्थालाविति परिगणनात्पुंवद्भावः ॥

"आत्मन्विश्वजनभोगोत्तरपदात्खः" ॥ इहोत्तरपदग्रहणं व्याप्तिन्यायेन सर्वैर्वा संबध्येत प्रत्यासत्तिन्यायेन भोगशब्देनैव वा, तत्राद्यं पक्षं निराकरोति । 'आत्मन्निति नलोपो न कृत इति' । विवक्षितां प्रकृतिं कार्त्स्न्येन निर्दिशेयमिति नलोपो न कृतः, प्रत्येकं सम्बन्धे चोत्तरपदग्रहणस्य नैतावती प्रकृतिः स्याद् अतो नलोपाकरणेन प्रत्येकं सम्बन्धे निवारिते भोगशब्देनैव संबध्यतइत्यर्थः । 'कर्मधारयादिष्यतइति' । व्याख्यानमत्र शरणम् । 'षष्ठीसमासादिति' । विश्वस्य जनो विश्वजनः

[1] अत्रेति २ पु० अधिकम् ।

सर्वसाधारणो वेश्यादिः । 'बहुव्रीहेश्चेति' । विश्वो जनोऽस्येति स एव वेश्यादिरन्यपदार्थः । 'पञ्चजनादिति' । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । दिक्संख्ये संज्ञायामिति समासः । 'पञ्चजनीयमन्यदिति'। षष्ठीसमासाद्बहुव्रीहेश्च छ एव भवतीत्यर्थः । यदा च प्रकरणादिवशाद्विशिष्टसंख्येयवृत्तित्वावसायः संख्याशब्दानां तदा सापेक्षत्वाभावादविरुद्धः समासः, जनादिनैव साक्षात्सम्बन्धादन्यथा तु संख्येयस्यैव जनापेक्षया व्यतिरेकस्तद्द्वारेण तु संख्यागुणस्येति साक्षात्सम्बन्धाभावाद्दुर्लभः षष्ठीसमासः । 'सर्वजनादिति' । पूर्वकालैकसर्वेति कर्मधारयः । 'महाजनान्नित्यमिति' । नित्यग्रहणं सर्वजनादुक्तो खो मा भूदिति । 'तत्पुरुषादेवेति' । अत्र कर्मधारयादेवेति नोक्तमात्वनिर्देशेनैव षष्ठीसमासव्यावृत्तिसिद्धेः, इह पितृभोगीणादिशब्दैः पित्रादिहितस्यार्थस्याभिधानमिष्यते पित्रादिभोगहितस्य तु प्राप्नोति, भोगशब्दश्चायमस्त्येव द्रव्यपदार्थकः, तद्यथा भोगवानयं देश उच्यते यस्मिन् गावः सस्यानि च वर्द्धन्ते, भुज्यतइति भोगः, अस्ति च क्रियापदार्थः, तद्यथा भोगवानयं ब्राह्मण उच्यते यः सम्यक् स्नानादिकाः क्रिया अनुभवति, अस्ति च शरीरवाची, अहिरिव भोगैः पर्येति बाहुमिति दर्शनात्, अत्र समुदाये प्रवृत्तस्य भोगशब्दस्यैकदेशेषु फणेषु प्रयोगः, न चाहेरेव शरीरं भोगोऽपि तु सर्वं शरीरम् अनन्तत्वात्प्रयोगविषयस्यावधारणस्य कर्त्तुमशक्यत्वात्, निघण्टुषु तु प्रयोगबाहुल्यादहिशरीरे प्रयोगः, सर्वेष्वपि चार्थेषु विवक्षिताभिधानं न प्राप्नोति तस्मान्नायं भोगोत्तरपदात्खो विधेयः, पित्रादिभ्य एव तु भोगीनञ्प्रत्ययो विधेयः, पित्रे हितः पितृभोगीण इति, यद्येवं वावचनं कर्त्तव्यं मात्रीयं पित्रीयमिति यथा स्याद् अन्यथा भोगीनञा बाधितत्वाच्छो न स्यात्, इह च ग्रामणिभोगीनः सेनानिभोगीन इतीको ह्रस्वोऽङ्यो गालवस्येत्युत्तरपदनिबन्धनं ह्रस्वत्वं न स्यात्, इह चाब्भोगीन इत्यपो भीति भकारादौ प्रत्यये विधीयमानं तत्वं प्राप्नोति, भोगोत्तरपदात्तु खविधाने नैते दोषाः, अर्थविरोधस्तु भवति तं परिहरति । 'भोगशब्दः शरीरवाचीति' । तत्र शरीरशरीरिणोरभेदाद्य एवार्थो मात्रे हित इति स एव मातृभोगाय हित

इत्यपि विग्रहे भवतीति भावः, एवं भोगोत्तरपदात्खविधानेप्यर्थविरोधं परिहृत्य तत्रैव गुणमाह । 'केवलेभ्यो मात्रादिभ्यश्छ एव भवतीति'। एवकारो भवतीत्यस्यानन्तरं द्रष्टव्यः, भोगीनञ्प्रत्ययविधाने तु छो न स्यादेवेत्येवशब्दस्यार्थः । 'राजाचार्याभ्यामिति'। राजाचार्याभ्यां हितार्थे यदि प्रत्ययो भवति नित्यं भोगोत्तरपदाभ्यामेव स च ख एवेत्यर्थः । 'न केवलाभ्यामिति'। अत्र प्रत्यय इष्यतइत्येतावदपेक्ष्यते न तु खप्रत्यय इष्यतइति, प्राप्त्यभावात्, अत एव के चित्खः प्रत्यय इष्यतइति व्यस्तं पठन्ति । 'आचार्यादणत्वं चेति'। भोगोत्तरपदादिति गम्यते, इदानीमेव ह्युक्तं राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेवेति ॥

"सर्वपुरुषाभ्यां णढञौ" ॥ 'सर्वाद्विति'। अनुकरणत्वात्सर्वनामकार्याभावः, सर्वनामानीत्यन्वर्थसंज्ञाविज्ञानात्प्रकृतिवदनुकरणमित्यपि सर्वनामत्वं न भवति, अनाश्रितार्थस्य शब्दरूपस्यानुकरणात् । 'पुरुषाद्वधेति'। प्रत्ययार्थसामर्थ्येन षष्ठीसमर्थविभक्तिर्लभ्यते कृते तु तेनेत्युपात्तैव तृतीया, भाष्यकारप्रयोगाच्च द्वन्द्वमध्येपि तेनेत्यस्य निवेशः, तत्र वधे तस्येदमित्यणोपवादः, विकारे प्राणिरजतादिभ्योञित्यञः, समूहेपि तस्य समूह इत्यण एव, तेन कृतेपि ग्रन्थात्मके कृते ग्रन्थइत्यण एव, पौरुषेयः प्रासाद इत्यत्र न कस्य चिदपवादः ॥

"माणवचरकाभ्यां खञ्" ॥ मनोरपत्यं कुत्सितं माणवः, अपत्ये कुत्सिते मूढइति णत्वं, चरतीति चरः पचाद्यच्, चरिचलिपतिवदीनामिति द्विर्वचनं विकल्पितत्वादिह न भवति, ततः संज्ञायां कन् चरकः, खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च, चरके वृद्ध्यर्थं माणवे वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधार्थं माणवीभार्यः ॥

"तदर्थं विकृतेः प्रकृतौ" ॥ 'प्रकृतिरुपादानकारणमिति'। उपादीयतेस्मात्कार्यमित्युपादानम् उपादानं च तत्कारणं च उपादानकारणं, कार्यस्य हि त्रीणि कारणानि उपादानकारणमसमवायिकारणं निमित्तकारणमिति, तत्र कार्येणापृथक्देशं यद्बुद्धिः कार्येष्वनुवर्त्तते तद्यथा मृदयं कुम्भः तन्तवः पटो हिरण्यं कुण्डलमिति तदुपादानकारणम्, उपादा-

नकारणप्रत्यासन्नमसमवायिकारणं यथा तन्तुसंयोगः पटस्य, तटस्थं तु कारणं निमित्तकारणं तन्तुवायादि, तदेतेषु त्रिषु यदुपादानं सा प्रकृतिः, तस्यैवोपादानकारणस्योत्तरमवस्थान्तरं विकृतिरिति, अनेन कार्योपादानयोरभेदमाह. यथाहि शिक्यं रज्जुरिति न तत्त्वान्तरम्, अथ च न रज्जुमात्रे शिक्यप्रतीतिरेवमत्रापि मृदेव घटस्तन्तव एव पटः सुवर्णमेव कुण्डलम् अथ च न मृदादिमात्रे घटादिप्रतीतिः, यद्यपि वृक्षादिषु न बीजादिप्रतीतिर्भवति या तु बीजस्यानन्तरावस्था तत्र तत्प्रतीतिर्भवत्येव, एवं तदनन्तरादिष्वप्यवस्थासु पूर्वपूर्वा प्रतीतिर्द्रष्टव्या, वृक्षस्य तु बीजं परम्परयोपादानकारणमिति सर्वमवदातम्। 'विकृतिवाचिन इति'। ननु समर्थानां प्रथमादिति वचनात्तदर्थस्य चेह प्रथमनिर्दिष्टत्वात्प्रकृतेश्च तदर्थत्वात्तद्वाचिन एव प्रत्ययः प्राप्नोत्यत आह। 'तदिति सर्वनाम्ना विकृतिः प्रत्यवमृश्यतइति'। तेन विकृतिरेव सर्वतः प्रथमनिर्दिष्टेति भावः। 'विकृत्यर्थायां प्रकृतौ प्रत्यय इति'। एतेन तदर्थमिति सप्तम्याः स्थाने प्रथमा स्त्रीलिङ्गस्य च स्थाने नपुंसकलिङ्गमिति दर्शयति। 'तदर्थग्रहणेनेत्यादि'। इह प्रकृतिविकारवाक्ये क्वचिद्योग्यतामात्रं विवक्ष्यते मूत्राय कल्पते यवागूरिति, क्वचित्प्रकृत्यन्तरव्यावृत्तिः, यथा यवानां धाना धानानां सक्तव इति, क्वचित्प्रकृतेरनन्यार्थता यथाङ्गारेभ्य एतानि काष्ठानीति, तत्रेह चरमोऽर्थो विवक्षित इति प्रतिपादनाय तदर्थग्रहणं कृतमित्यर्थः, किं सिद्धं भवति तदाह। 'न प्रकृतिविकारेति'। 'प्रत्ययार्थस्य चेत्यादि'। विकृत्यर्थायां हि प्रकृतौ प्रत्यय उच्यते तच्च तस्यास्तादर्थ्यं चतुर्थ्यैव शक्यते बोधयितुमित्येतत्सामर्थ्यम्। 'के चित्त्विति'। तेषां वचनादेव लभ्या चतुर्थी। 'यवानां धाना इति'। येषां सामर्थ्यलभ्या चतुर्थी तेषामिदं प्रत्युदाहरणं, ये तु तस्मादित्यनुवर्त्तयन्ति तेषां मूत्राय कल्पते यवागूरिति द्रष्टव्यम्। 'या का चिदिति'। अनुपादानकारणभूतापीत्यर्थः, तत्रैतत्स्याद् न कूप उदकस्य का चिदपि प्रकृतिस्तत्राह। 'भवति चेति'। कुत इत्याह। 'तत्रेति'। यथैव हि प्रयाजादीनां धर्माणामुत्पत्त्याधारत्वाद्दर्शपूर्णमासौ प्रकृतिः सौर्यादीनामेवमुदकधर्माणां क्षारत्वादीनामुत्पत्त्याधारत्वात्कूप

उदकस्य प्रकृतिरित्यर्थः, यद्येवमुदकमपि तस्य विकृतिरेव सौर्यादिवदित्यत आह। 'नत्विति'। कुत इत्यत आह। 'अत्यन्तभेदादिति'। तस्यैवोत्तरमवस्थान्तरं विकृतिरित्यत्र कार्योपादानयोरभेदो दर्शितः, उदकं तु कूपादत्यन्तभिन्नमत्यन्तग्रहणे नैतद्दर्शयति कार्यकारणयोर्नात्यन्तभेदः, मृदयं कुम्भ इति प्रतीतेः, नाप्येकान्ततस्तत्त्वं मृन्मात्रे कुम्भप्रतीतेरभवात्, तस्मात्कथञ्चिद्भेदः कथञ्चिच्चाभेदः, एतेन जातितद्वतोर्गुणगुणिनोश्च भेदाभेदौ व्याख्यातौ। 'न तु कोशी तस्य प्रकृतिरिति'। अतत्कारणत्वादनुत्पस्याधारत्वाच्च, चर्मपिनद्धं दार्वादिनिर्मितमस्यादीनां प्रक्षेपस्थानं कोशी, ननु च प्रकृतिर्विकृतिरिति च सम्बन्धिशब्दावेतौ सम्बन्धिशब्दाश्च नियतमेव सम्बन्धिनमुपस्थापयन्ति, तद्यथा मातरि वर्त्तितव्यमित्युक्ते न चोच्यते स्वस्यामिति, अथ च या यस्य माता तस्यामिति गम्यते, एवं चात्रान्यतरोपादानेप्यन्यतरस्य प्रतीतिः सिद्धेत्यत आह। 'द्वयोरपीति'। एवं मन्यते, विपूर्वोयं करोतिरस्त्येवापकारे दैवं मे दौस्थ्ये विकरोतीति, अस्ति चेटानानात्वे विकुर्वते छात्रा इति, अस्त्यनौचित्ये विकृतिरेषा स्त्रीणां यत्स्वातन्त्र्यं नामेति, अस्ति कार्यं तन्तूनां विकारः पट इति, तथा प्रपूर्वोपि करोतिरनेकार्थः, अस्ति कारणे तन्तवः प्रकृतिः पटस्येति, सांख्यास्तु सत्त्वरजस्तमसां गुणानां साम्यावस्थां प्रकृतिमाहुः, अस्ति दोषापगमे प्रकृतिस्थं मन इति, अस्ति स्वभावे प्रकृत्याभिरूप इति, अस्ति धर्माणामुत्पत्त्याधारे यथोक्तं पुरस्तात्, तदेवमनेकार्थत्वाच्चानयोरैकान्तिकं सम्बन्धिशब्दत्वमित्यन्यतरोपादानेन विवक्षितः प्रकृतिविकारभावो लभ्यत इति, तस्य विकार इत्यत्र तु अभिधानस्वभावादेव कार्यस्य ग्रहणं नापकारादेः॥

"छदिरुपधिबलेर्ढञ्"॥ छाद्यतेनेनेति छदिः, अर्चिशुचिहुसृपिच्छादिभ्य इसिः, इस्मन्त्रन्क्विषु चेति ह्रस्वत्वम्। 'छादिषेयाणि तृणानीति'। यदा तु चर्मविकारश्छदिस्तदा परत्वाच्चर्मणोञित्यञ् प्राप्नोति तत्र पूर्वविप्रतिषेधेन ढञेवेष्यते छादिषेयं चर्मेति, आह च यञ्ञ्यावञः पूर्वविप्रतिषेधेन ढञ् चेति, वृत्तिकारेण तु प्रतिपदविधेर्बलीयस्त्वाच्चैतदुपन्यस्तमित्याहुः, नेति वयं, ढञोपि छादिषेयाणि तृणानीत्यत्रचरितार्थत्वात्।

'बालेयास्तण्डुला इति'। कथं पुनरत्र प्रकृतिविकृतिभावः, यदा बल्यवस्थायामपि तएव तण्डुलाः; नावश्यं यत्प्रकृत्युपमर्द्देनैव भवति स एव विकारः, तदेव गुणान्तरयुक्तमपि विकारः, अस्ति च बल्यवस्थायां हरिद्रायोगेन तण्डुलानां गुणान्तरयोगः, अन्ततः प्रक्षालनेन श्वैत्यमार्द्रतामार्दवं सन्निवेशविशेषो वा भवति। 'उपधिशब्दात्स्वार्थे प्रत्यय इति'। इष्टिरेषा, किं पुनः कारणमधिकारप्राप्तो नेष्यतइत्याह। 'उपधीयतइत्युपधिरित्यादि'। यदेव हि तद्रथाङ्गमुपधीयमानत्वादुपधिशब्देन कर्मणि किप्रत्ययान्तेनोच्यते, यद्यपि तस्य प्रकृतिरस्ति तथापि तत्र न ठञन्तं वर्तते किं तर्हि तत्रैव हि रथाङ्गे, स्वभावश्चात्र हेतुः, न च तदेव तस्य प्रकृतिर्भवति, अतः स्वार्थे प्रत्यय एषितव्यः, अथायमुपधानमुपधिरिति क्रियावचन उपधिशब्दस्तादर्थ्यमपि सम्भवति उपधानक्रियार्थत्वाद् द्रव्यस्येत्युच्यते, एवमपि क्रियाविकारो न भवति, क्रियापि विकारो भवति बहुविकारोयं मनुष्यो हसति नृत्यति गायतीति दर्शनात्, सत्यं, तदर्थे विकृतेः प्रकृताविव्यत्र तु विशिष्ट एव प्रकृतिविकारभावो गृह्यते यत्र प्रकृतेरुच्छेदो यत्र वा रूपान्तरापत्तिरत एव तत्र विवक्षितः प्रकृतिविकारभाव इत्युक्तम् ॥

"ऋषभोपानहोर्ञ्यः" ॥ 'आर्षभ्यो वत्स इति'। महाप्राणः संहननवान् सुजातावयवो यो वत्स ऋषभावस्थाप्राप्तये पोष्यते। 'चर्मण्यपीति'। ञ्यस्यावकाश औपानह्यो मुञ्जः, अञोऽवकाशो वाह्नं चर्म, उपानच्छब्दाच्चर्मणि प्रकृतित्वेन विवक्षिते सति परत्वादञ् प्राप्नोति पूर्वविप्रतिषेधेन ञ्य एव भवति, ये तु सावकाशत्वे सत्यपि प्रतिपदविधानं बलीयस्त्वे कारणमाहुस्तेषामयं पूर्वविप्रतिषेधोऽसङ्गतः स्यात् ॥

'चर्मणोऽञ्" ॥ 'चर्मण इति षष्ठीति'। पञ्चम्यां तु चर्मन्शब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात् चर्मणो द्वीपीत्यादौ, न चैवमभिधानमस्ति ॥

"तदस्य तदस्मिन् स्यादिति" ॥ 'सम्भावने लिङिति'। सम्भावनेऽलमिति चेत्यादिना, इष्टकानां बहुत्वेनेत्यादिना सूत्रार्थमुदाहरणेषु दर्शयति, प्रकृतिविकारभाव इत्यादिना तदर्थं विकृतेरित्यादिना सिद्धिं

दर्शयन्सूत्रारम्भं समर्थयते । 'योग्यतामात्रमिति' । तथा चान्यार्थास्वपीष्टकासु वक्तारो भवन्ति प्राकारीया इष्टका इति । 'छदिस्तद्ग्रहणमित्यादि' । ननु विपरीतमिदं प्रत्येकं सम्बन्धे ह्यत्र छदिस्तद्ग्रहणमनर्थकमतोऽत्र छदिस्तद्ग्रहणादन्यत्र समुदायेन सम्बन्धो युक्त इति, सत्यमयमपि तु प्रकारः सम्भवतीति न्यायप्राप्तं प्रत्येकं सम्बन्धमस्मिन्सूत्रे स्थित्वा उदाहरणरूपेण दर्शयतीति तदिदमुक्तम् । 'न्यायप्रदर्शनार्थमिति' । प्रदर्शनं दिगुदाहरणमित्यर्थः, यदि पुनरयं न्यायोऽत्र न प्रदर्श्येत तदा तदस्यास्त्यस्मिन्निति मतुबित्यत्र समुदायेन समर्थविभक्तिसम्बन्धो विज्ञायेत ततश्च शाखावान्वृक्ष इत्यादौ यत्र द्वाभ्यां प्रत्ययार्थाभ्यां समर्थविभक्तेः सम्बन्धः सम्भवति तत्रैव स्यात्, यत्र त्वन्यतरेण सम्बन्धो गोमान्देवदत्तो वृक्षवान्पर्वत इति तत्र न स्यात् । 'अर्थेहेति' । यदा ब्राह्मणार्थं निर्मितं प्रासादं गुणवन्तं च देवदत्तं पश्यन्सम्भावयति तदा तस्य प्रसङ्गः ॥

"प्राग्वतेष्ठञ्" ॥ 'वक्ष्यति पारायणतुरायणेति' । अत्र तु प्रदेशस्य करणमुत्तरसूत्रे येषां पर्युदासस्तेभ्यष्ठञ् यथा स्यादिति गोपुच्छिकः साम्प्रतिकः, ठञित्येवाधिकारे सिद्धे प्राग्वतेरिति वचनं मध्ये योऽधिकारस्तदपवादः सर्वभूमिपृथिवीभ्यामणञौ शीर्षच्छेदाद्यच्चेत्येवमादिस्तेन विच्छेदेऽपि पारायणतुरायणेत्येवमादौ ठञेव यथा स्यादित्येवमर्थं, यद्यप्यत्र प्रत्ययोऽवधित्वेन गृहीतस्तथाप्यर्थ एवोपतिष्ठते न तु प्रकृतिषु तेनापवादविषये न भवति, तथा च शूर्पादञन्यतरस्यामित्यन्यतरस्यांग्रहणमर्थवद्भवति ॥

"आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्" ॥ 'तदर्हतीति वक्ष्यतीति' । तदेकदेशोऽर्हशब्दो निर्दिश्यत इति भावस्तदाह । 'आ एतस्मादर्हसंशब्दनादिति' । तदर्हमित्ययं त्ववधिर्न भवति यदि स्यादार्हादित्यनर्थकं प्राग्वतेरित्येव सिद्धत्वात्, ननु च वत्यर्थेऽपि ठको विधिर्यथा स्यादित्येवमर्थमार्हादिति वचनं स्याद् एवमप्याङ एव निर्देशः कर्तव्यो वतेरित्येवाभिविधावाकारः, एवमप्युपसर्गाच्छन्दसि धात्वर्थ इत्यत्रापि वत्यर्थे ठक् प्राप्नोति तस्माद्व्याख्यानमेवात्र शरणम् । 'गोपुच्छादीन्वर्जयित्वेति' ।

अगोपुच्छशब्दात्सङ्ख्यावाचिनः परिमाणशब्दाच्चेत्ययं त्वर्थो न भवति यदि स्याद्विष्कादिषु द्रोणशब्दस्य परिमाणवाचिनः षष्ठिशब्दस्य सङ्ख्यावाचिनः पाठोनर्थकः स्याद् अनेनैवसिद्धत्वा,त्रानर्थकः, नियमार्थं पुनर्वचनं स्यादसमासएव यथा स्यादिति, नैतदस्ति, विधिनियमसम्भवे विधेरेव न्यायस्त्वात्। 'अभिविधौ वायमाकार इति'। यदि तु मर्यादायां स्यात्तस्य ग्रहणमनर्थकं स्यात् प्राग्ग्रहणानुवृत्त्यैव सिद्धत्वात्, तेन किं सिद्धं भवति तदाह। 'अर्हत्यर्थेपि ठञ्भवत्येवेति'। 'सङ्ख्यापरिमाणयोः को विशेष इति'। परिमीयते परिच्छिद्यते येन तत्परिमाणं सङ्ख्यापि च परिच्छिद्यतइति प्रश्नः। 'भेदगणनं सङ्ख्येति'। भिद्यतइति भेदः, मिथो भिन्नाः पदार्थाः ते गण्यन्ते येन तद्भेदगणनम्, एकत्वादिसङ्ख्यासामीप्योपक्रमत्वाद्भेदगणनी सङ्ख्येति न भवति, भेदगणनमित्यनेन पृथक्त्वनिवेशितत्वमाह, यथोक्तं पृथक्त्वनिवेशितत्वात्सङ्ख्या कर्मभेदः स्यादिति, एकत्वसङ्ख्यापि बहुषु बुद्ध्या सन्निवेशितेषु भेदमेकमसहायमाह,*एतदुक्तं भवति एको घट इत्यत्रापि द्व्यादिनिरासा‸द्वावगनिरस्त्येवेति'। 'गुरुत्वमानमुन्मानमिति'। तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वमुन्मीयते तदुन्मानमित्यर्थः। 'आयाममानं प्रमाणमिति'। आयामो दैर्घ्यं स येन मीयते तदायाममानम्, एतच्च क्वचित्तिर्यगभिमुखस्य वस्तुनो भवति यथा वस्त्रादेर्हस्तादि, क्वचिदूर्ध्वाधरदिगवस्थितस्य भवति हास्तिनमुदकम् ऊरुद्वयसमुदकमिति। 'आरोहपरिणाहमानं परिमाणमिति'। आरोह उच्छ्रायः,परिणाहो विस्तारः, ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादि परिमीयते तत्परिमाणं, परिः सर्वतोभावे, सङ्ख्यापरिमाणयोर्विशेषे पृष्टे उन्मानादेर्विशेषप्रदर्शनं प्रसङ्गेन तद्विशेषस्याप्यज्ञानस्यापनयनार्थम्। 'ऊर्ध्वमानमिति'। ऊर्ध्वारोपणाद्गुरुत्वमानमुन्मानमिति पूर्वोक्त एवार्थः, किलशब्दः प्रसिद्धौ। 'परिमाणं तु सर्वत इति'। ऊर्ध्वमानमित्युपसमस्तमपि मानमित्येतदत्रापेक्ष्यते, एतदर्थमेव केचिदूर्ध्वं मानमिति व्यस्तं पठन्ति। 'आयामस्येति'। मानमित्यपेक्ष्यते, कर्मणि षष्ठी, प्रसिद्धस्तु पाठ

आयामस्त्विति तत्रायामपरिच्छेदार्थे उपचारादायामशब्देनोक्त । 'सङ्ख्या बाह्या तु सर्वत इति' । पूर्वोक्तादुन्मानाद्वेः सर्वतो बाह्या तत्रानन्तर्भावात् तस्यांश्च सङ्ख्यायतेनयेति निर्वचनं भेदगणनलक्षणत्वं व्याख्यातव्यमित्यनुसन्धातव्यम् ॥

"असमासे निष्कादिभ्यः" ॥ 'ठञोपवाद इति' । येन नाप्राप्तिन्यायेन निष्कादिभ्यो हि द्रोणपर्यन्तेभ्यः परिमाणशब्दात्पष्ठिशब्दाट्टकः पर्युदासे ठञेव प्राप्नोत्यतस्तस्यैवायमपवादः । 'तदन्तप्रतिषेधस्येति' । तदन्तविधावप्रतिषेधस्येत्यर्थः, यदि तर्हि तदन्तात्प्रत्ययो विज्ञायते एवं तर्हि व्यपदेशिवद्भावो प्रातिपदिकेनेति केवलेभ्यो नोपपद्यते, नैष दोषः, असमासग्रहणे न हि ग्रहणवत्परिभाषाया निवृत्तिराख्याता तन्निवृत्तौ येन विधिस्तदन्तस्येति तदन्तता, अत्र स्वस्य च रूपस्य प्रकृतत्वात्केवलादपि भवति । यस्तु मन्यते पूर्वत्रोपादानसामर्थ्यात्केवलादपि स्यादिति तस्य हि लाघवार्थं केवलानां पाठः स्यादिति यत्किञ्चिदेतत् । 'इत उत्तरं चेति' । कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति प्रतिषिध्यते, अस्याः परिभाषाया अनित्यत्वात्, अनित्यत्वं च तस्या गर्गादिषु वाजासइति समासप्रतिषेधाद्गम्यते, नित्यत्वे हि सति वाजशब्दादुत्पद्यमानस्य प्रत्ययस्य समासे प्राप्तिरेव नास्तीति समासे प्रतिषेधं न कुर्यात् । 'द्विशूर्पमिति' । द्वाभ्यां शूर्पाभ्यां क्रीतमिति तद्धितार्थे द्विगुं कृत्वा न तावदेषा लुगन्ता प्रकृतिरिति संख्यापूर्वपदादपि शूर्पादञन्यतरस्यामित्यञेव क्रियते तस्याध्यर्धपूर्वद्विगोर्लुगसंज्ञायामिति लुक् । 'द्विशौर्पिकमिति' । परिमाणान्तस्यासंज्ञाशाणयोरित्युत्तरपदवृद्धिः । यदुक्तमित उत्तरं संख्यापूर्वपदानां तदन्तविधिरिष्यतइति यच्चोक्तं लुगन्तायास्तु प्रकृतेर्नेष्यतइति तदुभयमाप्तागमेन स्थिरीकर्तुमाह । 'तथा चोक्तमित्यादिना' ॥

"शताच्च ठन्यतावशते" ॥ 'कनोपवादइति' । उत्तरसूत्रेण प्राप्तस्य । 'शतकमिति' । तदस्य परिमाणमिति वर्त्तमाने संख्यायाः संज्ञासङ्घसू-

त्राध्ययनेष्विति सङ्घ प्रत्ययार्थे विवक्षिते उत्तरसूत्रेण कनेव भवति। 'प्रत्ययार्थोऽत्र सङ्घ इति'। शतमध्यायानां परिमाणं यस्य निदानाख्यस्य ग्रन्थस्य स इह प्रत्ययार्थः स च शतसंख्यावच्छिन्नाध्यायसमुदायात्मक इति सङ्घः प्रत्ययार्थो भवति। 'शतमेव वस्तुत इति'। शतात्तस्यानन्यत्वात् ततश्च प्रकृत्यर्थोऽत्र भिद्यते यदेवाध्यायानां शतं प्रकृत्याभिधीयते प्रत्ययान्तेनापि तदेवेति नेह प्रकृत्यर्थात्प्रत्ययार्थस्य भेदः, एतेन यत्राव्यतिरिक्तः प्रत्ययार्थात्प्रकृत्यर्थस्तत्र प्रतिषेधो भवति न व्यतिरिक्त इत्येतदाख्यातं, ननु च सङ्घे चानौत्तराधर्ये सङ्घायाः संज्ञासङ्घसूत्राध्ययनेष्वित्यत्र च प्राणिसमूहे सङ्घशब्दो गृह्यते तत्कथमत्र ग्रन्थविषयो गृह्यते, उपचारेणेत्यदोषः, यदि वा संज्ञासङ्घसूत्रे शब्दसाहचर्याद्विशिष्टः सङ्घो गृह्यते, सङ्घे चानौत्तराधर्य इत्यत्रापि छन्दोनाम्नीत्यतश्छन्दोग्रहणानुवृत्तेः प्राणी गृह्यते, इह तु यत्नान्तराभावाद्ग्रन्थस्यापि ग्रहणमित्यदोषः, ननु च शतेऽभिधेये न भवितव्यम् इह च शत्यं शाटकशतं शतिकं शाटकशतमित्युक्ते शतं प्रतीयत एव तत्किमिति प्रतिषेधो न भवतीत्यत आह। 'वाक्येनेत्यादि'। शत्यशतिकशब्दौ सामान्यशब्दौ, सामान्यशब्दाश्च प्रकरणादिकमन्तरेण न विशेषे वर्त्तन्ते, न यावच्छाटकशतमित्येतत्पदान्तरं प्रयुज्यते तावत्प्रत्ययार्थस्य शतत्वं नावसीयते तस्मात्पदान्तरसंनिधौ गम्यमानत्वाद्वाक्यार्थोऽसौ भवति। 'न श्रुत्येति'। गम्यत इति सम्बन्धः, यत्र प्रत्ययान्तेन पदान्तरनिरपेक्षेण प्रत्ययार्थस्य शतत्वमाख्यायते तत्र श्रुत्या प्रत्ययान्तश्रवणमात्रेणैव गम्यते यथा प्रत्युदाहरणे शतं परिमाणमस्य शतकमित्युक्ते गम्यते एतत्प्रत्ययार्थोऽपि शतमेवेति, इह तु वाक्याच्छतत्वं प्रतीयते, न च पदसंस्कारकाले वाक्यार्थस्याङ्गभावोऽस्ति तदा तस्यानुपस्थानात्, प्रकृत्यर्थादव्यतिरिक्ते प्रत्ययार्थे प्रतिषेधो भवति, नव्यतिरिक्ते वाक्यगम्य इत्येतदाप्तवचनेन द्रढयितुमाह। 'तथा चोक्तमित्यादि'। शतप्रतिषेधे कर्त्तव्ये प्रकृत्यर्थादन्यस्य च प्रत्ययार्थस्य शतत्वे सत्यप्रतिषेधः, एतदुक्तं भवति, यत्रान्यत्प्रकृत्यर्थे शतमन्यत्प्रत्ययार्थे शतं तत्र विधिरेव भवति न प्रतिषेधः, केन पुनः समासे प्राप्नोति यतस्तत्प्रतिषेधार्थमसमासानुकर्षणार्थश्चकारः क्रियत इत्याह। 'प्राग्वतेरित्यादि'। ।

भवतीति कर्म्मविशेषणभूतदेवताविशेषणस्थानपर्षत्परिजनादिप्रतिपादनं च विनियोगाननुगुणमित्यर्थः । नित्यपरविभूतिपरत्वस्येमे मुक्ताविषयत्वादिक्रमाशङ्क्य परिहरति नेयमिति, नापीति, एकैकं सर्वदा दर्शनवन्तोऽनेके प्रतीता इति श्रुतिभङ्गप्रसङ्गात् प्रवाहविषयत्वमयुक्तमित्यर्थः । कार्यार्थ एव व्युत्पत्त्या न विवक्षितार्थसिद्धिरिति चेत् तत्राह मन्त्रार्थवादगता इति, अर्थान्तरपरत्वमुखेन चोदयति ननु चेति, अव्यतिरेकदर्शनादिति परमपद-शब्दवाच्यस्य भगवत्स्वरूपाव्यतिरेकदर्शनादित्यर्थः । परिहरति नैवमिति, विलक्षणस्थानस्य-

तेषां सदा दर्शनानुपपत्तेः । नापि मुक्तप्रवाहविषया सदा पश्यन्तीत्येकैककर्तृविषयतया प्रतीतेः श्रुतिभङ्गप्रसङ्गात्, मन्त्रार्थवादावगता ह्यर्थाः कार्यपरत्वेऽपि सिद्ध्यन्तीत्युक्तं, किं पुनः सिद्धवस्तुन्येव तात्पर्ये व्युत्पत्तिसिद्धे इति सर्वमुपपन्नम् । ननु चात्र तद्विष्णोः परमं पदमिति परस्वरूपमेव परमपद-शब्देनाभिधीयते समस्तहेयरहितं विष्णवाख्यं परमं पदमित्यादिषु अव्यतिरेकदर्शनात्, नैवं क्षयन्तमस्य रजसः पराके तदक्षरे परमे व्योमन् यो अस्याध्यक्षः परमे व्योमन् यो वेद निहितं गुहायां परमे व्योमन्नित्यादिषु परमस्थानस्यैव प्रदर्शनात् तद्विष्णोः परमं पदमिति व्यतिरेकनिर्देशाच्च विष्णवाख्यं परमं पदमिति विशेषणादन्यदपि परं पदं विद्यत इति चैतेनैव ज्ञायते, तदिदं परमं स्थानं सूरिभिः सदा दृश्यत्वेन प्रतिपाद्यते ।

प्रमाणान्तरसिद्धत्वादत्रापि विष्णोरिति व्यतिरेकनिर्देशात् परमपद-शब्दस्य च स्थानवाचित्वव्युत्पत्तिसद्भावाच्चेदं स्थानपरमित्यर्थः । विष्णवाख्यमिति विशेषणानां व्यावर्तकत्वात् द्विषण्वाख्यमिति विशेषणेन तद्व्यावर्त्यतयाऽन्यस्यापि कस्यचित्परमपदशब्दवाच्यत्वं गम्यत इत्यर्थः । तद्विदमिति–एकान्तिनः सदाब्रह्मध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः । इति श्रीविष्णुपुराणवचनं स्मारितं, परमस्थानशब्देन अस्याः श्रुतेः परमस्थानपरत्वेन श्रीविष्णुपुराणे व्याख्यातत्वादियं श्रुतिः स्थानपरेत्यभिप्रायः । स्थान-शब्दस्य स्वरूपपरत्वमस्वरमं स्वरमार्थविरोधाभावे हि नाङ्गीकार्यं विष्णवाख्य परमं पदमित्यत्र व्यावर्त्यं न स्थानमपि तु जीवस्वरूपमित्यत्राह एतदुक्तं भवतीति, भगवत्स्वरूपादन्यस्यापि परमपदशब्दवाच्यत्वं दृष्टमित्येतदेव विवक्षितमित्यर्थः ।

**एतदुक्तं भवति क्वचित्परमं स्थानं परमपदशब्देन प्रतिपाद्यते, क्वचित्प्रकृतिवियुक्तात्मस्वरूपं क्वचिद्भगवत्स्वरूपं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इति परमं स्थानं,–सर्गस्थित्यन्तकालेषु त्रिविधैवं संप्रवर्तते । गुणप्रवृत्त्या परमं पदं तस्यागुणं महत् ॥ इत्यत्र प्रकृतिवियुक्तात्मस्वरूपं समस्तहेयरहितं विष्णवाख्यं परमं पदम् । इत्यत्र भगवत्स्वरूपं त्रीण्यप्येतानि परमप्राप्यत्वेन परमपद–शब्देन प्रतिपाद्यन्ते कथं त्रयाणां परमप्राप्यत्वमिति चेत् ।**

परमपदशब्दस्यार्थत्रयवाचित्वेऽपि प्रयोगं दर्शयति तद्विष्णोरिति, त्रिष्वप्यर्थेषु किं शक्तिभेदक्लृप्तिस्तदा कल्पनागौरवं स्यात्, किमेकत्र मुख्यत्वमन्यत्रामुख्यत्वं तथा पक्षाः अस्वारस्यम्, सोऽप्यमुख्यस्वपरस्वरूपस्यापि वाक्यप्रतिपाद्यत्वप्रसिद्धेरित्यत्राह त्रीण्यपीति, एकावयवशक्त्या त्रिष्वपि

मुख्यमित्यर्थः । अर्थत्रयस्यापि प्राप्यत्वं चोद्यपूर्व्वकमुपपादयति कथमिति, इतरयोरपि भगवत्प्राप्तिगर्भत्वात्—भगवत्प्राप्तिसहितत्वादित्यर्थः । तत्रात्मप्राप्तेर्भगवत्प्राप्तिसाहित्यमाह सर्वेति, तिरोधायकसर्वकर्म्मविनाशे ह्यात्मप्राप्तिर्भगवद्गुणानामपि तिरोधायकं कर्म्मेति तन्निवृत्तिपूर्वकात्मप्राप्तौ भगवद्गुणतिरोधायकनिवृत्तेरपि प्रतिबन्धकाभावात् भगवत्प्राप्तिः सिध्यतीत्यर्थः । अनृत-शब्दस्य कर्मवाचित्वं कथमिति शङ्कते अनृतेति, परिहरति अविद्येति, अविद्या-शब्दस्य कर्म्मवाचित्वे प्रयोगः श्रीविष्णुपुराणे दर्शितः । इदमप्यभिप्रेतम् ऋतं पुण्यम् ऋतं पिबन्तौ सुकृतस्य लोके इति वचनात्, एवं पुण्यस्य कर्म्मणो दूराद्गन्धो वातीति प्रकरणेऽनृतादात्मानं जुगुप्सेदिति श्रवणात् पापमनृत-शब्दवाच्यं न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त इति मुमुक्षुत्वपेक्षयाऽनिष्टफलप्रदत्वेन द्वयोरपि पाप-शब्दवाच्यत्वादनृतमिति कर्म्मोच्यते इति परस्यानेति अर्चिरादिना स्थानविशेषप्राप्तिर्भगवत्प्राप्तिगर्भेति स्पष्टमित्यर्थः ।

**भगवत्स्वरूपं परमप्राप्यत्वादेव परमं पदम्, इतरयोरपि भगवत्प्राप्तिगर्भत्वादेव परमपदत्वं सर्वकर्म्मबन्धविनिर्मुक्तात्मस्वरूपावाप्तिर्भगवत्प्राप्तिगर्भेति ते इमे सत्याः कामाः अनृताभिधाना इति भगवतो गुणगणस्य तिरोधायकत्वेनानृत-शब्देन स्वकर्म्मणः प्रतिपादनात्, अनृतरूपतिरोधानं क्षेत्रज्ञकर्म्मेति कथमवगम्यत इति चेत्—अविद्या कर्म्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा ॥ संसारतापानखिलानवाप्नोत्यतिसन्ततात् तया**

उदाहृतवाक्यान्तरं व्याचष्टे क्षयन्तमिति, क्षि निवासगत्योरिति धातु पराके—परस्तात् । फलितमर्थमाह अनेनेति, वेदाहमिति अस्मिन्वाक्येऽपि

निवासशब्दार्थोऽनुसन्धेय इत्याह रजस इति, एकवाक्यत्वात्—एकार्थप्रतिपादकत्वात्, अस्य परमव्योमशब्दवाच्यत्वनिर्विकारत्वे दर्शयति सत्यं ज्ञानमित्यादिना, स्पष्टं, व्याख्याविशेषव्यावृत्त्यर्थमाह अत्र इति, यत्रेति, यत्र पूर्वे इत्यत्र यच्छब्दः परमपदपरामर्शी नाक—शब्देन प्रकृतं नास्मा अकं भवतीति हि श्रुतिः, अतोनाक—शब्दः परमपदमुख्यार्थः । यत्रर्षय इत्यत्र प्रथमजाः पूर्वमेव सन्तः तद्विप्रास इति विप्रास इति पदं व्याचष्टे मेधाविन इति, अथर्वणे विष्णुक्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शीति वचनात्, विपन्यवः—स्तुतिशीला इति पण पन स्तुतिव्यवहारयोरिति

तिरोहितत्वाच्चेत्यादिवचनात् परस्थानप्राप्तिरपि भगवत्प्राप्तिगर्भैवेति सुव्यक्तं, क्षयन्तमस्य रजसः पराक इति रजश्शब्देन त्रिगुणात्मिका प्रकृतिरुच्यते केवलस्य रजसोऽनवस्थानात् इमां त्रिगुणात्मिकां प्रकृतिमतिक्रम्य स्थिते स्थाने क्षयन्तं वसन्तमित्यर्थः, अनेन त्रिगुणात्मकात् क्षेत्रज्ञस्य भोग्यभूताद्वस्तुनः परस्ताद्विष्णोर्वासस्थानमिति गम्यते वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादित्यत्रापि तमश्शब्देन सैव प्रकृतिरुच्यते केवलस्य तमसोऽनवस्थानादेव रजसः पराके क्षयन्तमित्यनेनैकवाक्यत्वात्तमसः परस्ताद्वसन्तं महान्तमादित्यवर्णं पुरुषमहं वेदेत्ययमर्थोऽवगम्यते सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् तदक्षरे परमे व्योमन्निति तत्स्थानमविकाररूपं परमव्योमशब्दाभिधेयमिति च गम्यते । अक्षरे परमे व्योमन्नित्यस्य

स्थानस्यात्तरत्वश्रवणात् त्तररूपादित्यमण्डलादयो न परमव्योमशब्दाभिधेयाः, यत्र पूर्वे साध्याः सन्ति देवाः ।

धातुः महिमानं पश्यते इति श्रुतिप्रयोगः स्पष्टः । परमपदस्याप्यस्थिरत्वमेकत्वावधारणादित्यत्राह एतेषामिति, यथा कारणवस्त्वन्तर्भूतत्वात् ज्ञानादिगुणानां सदेवेत्यादिवाक्ये तेषामभावो न प्रतिपाद्यते एवं नित्यविभूतेरपि कारणवस्त्वन्तर्भूतत्वात् सदेवेत्यादिवाक्यगतैः सदेवैकमेवाद्वितीयमिति शब्दैर्ब्रह्मान्तर्भावो ऽवगम्यते नित्यविभूतिविशिष्टं ब्रह्मैवावगम्यत इत्यर्थः । कुत इत्यत्राह एषामपीति, कल्याणगुणैकदेशत्वादप्राकृतविशेषणैकदेशत्वादित्यर्थः । गुण-शब्दो विशेषणवाची ज्ञानादेरपि हि द्रव्यत्वे सत्यपि गुणत्वं नित्यविशेषणत्वादेव नित्यविभूतेरपि तथेत्यर्थः । विशेषणत्वं प्रपञ्चस्याप्यविशिष्टमिति तद्व्यावृत्त्यर्थं कल्याणगुणैकदेशत्वादित्युक्तं, प्राकृतो हि प्रपञ्चः सदेवेत्यादि स्पष्टम् । अपहतेत्यादि सत्यकाम-शब्दस्य कथं भोग्यभोगोपकरणादिवाचित्वमित्यत्राह सत्या इति,

यत्रर्षयः प्रथमजा ये पुराणाः इत्यादिषु च त एव सूरय इत्यवगम्यते, तद्विप्रासो विप*ण्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदमित्यत्रापि विप्रासो-मेधाविनः, विपण्यवः-स्तुतिशीलाः, जागृवांसः-अस्खलितविज्ञानास्त एवास्खलितविज्ञानास्तद् विष्णोः परमं पदं सदा स्तुवन्तस्समिन्धत इत्यर्थः । एतेषां परिजनस्थानादीनां सदेव सोम्येदमग्र आसीदित्यत्र ज्ञानबलैश्वर्यादिकल्याणगुणगणवत्परब्रह्मस्वरूपान्त-

* विन्यव इति पा० ।

गतत्वात् सदेवैकमेवाद्वितीयमिति ब्रह्मान्तर्भावोऽवगम्यते, एषामपि कल्याणगुणैकदेशत्वादेव सदेव सोम्येदमग्र आसीदित्यत्रेदमिति शब्दस्य कर्म्मवश्यभोक्तृवर्गमिश्रतद्भोग्यभूतप्रपञ्चविषयत्वाच्च सदा पश्यन्ति सूरय इति सदादर्शित्वेन च तेषां कर्म्मवश्यानन्तर्भावात् अपहतपाप्मेत्याद्यपिपास इत्यन्तेन

प्रमाणसम्बन्धार्हत्वलक्षणं सत्यत्वं प्रपञ्चस्याप्यस्तीति तद्व्यावृत्त्यर्थमाह अन्यस्येति, सत्यत्वं द्विविधं प्रमाणसम्बन्धार्हत्वमविकारित्वं च तच्च सत्यत्वं प्रपञ्चे नास्ति तदत्राभिप्रेतमित्यर्थः । सत्यसङ्कल्पपदं व्याचष्टे सत्येति, अर्थान्तरमाह एषां चेति, चेतनानामचेतनानां चेति, प्रपञ्चे प्राकृतपदार्थाः अचेतना बद्धाश्चेतनाः, नित्यविभूतौ शुद्धसत्त्वमचेतनं नित्या मुक्ताश्च चेतनाः स्थिराणामस्थिराणां चेति प्रपञ्चे चिदंशः स्थिरः, अचिदंशोऽस्थिरः । नित्यविभूतावपि लीलाव्यापारादयोऽस्थिरा अन्यत्सर्वं स्थिरं, तत्सङ्कल्पेति, आदि-शब्देन तत्तत्पदार्थधर्म्माणामपि तत्सङ्कल्पायत्तत्वं विवक्षितम् ।

सर्व*लीलोपकरणभूतत्रिगुणात्मकप्रकृतिप्राकृततत्संसृष्टपुरुषगतं हेयस्वभावं सर्वं प्रतिषिध्य सत्यकाम इत्यनेन स्वभोग्यभोगोपकरणजातस्य सर्वस्य सत्यता प्रतिपादिता, सत्याः कामा यस्यासौ सत्यकामः काम्यन्त इति कामाः तेन परब्रह्मणा स्वभोग्यतदुपकरणादयः स्वाभिमता ये काम्यन्ते ते सत्याः—नित्या इत्यर्थः । अन्यस्य लीलोपकरणस्यापि वस्तुनः

* स्वलीलोपकरणभूतेति पा· ।

प्रमाणसम्बन्धयोग्यत्वे सत्यपि विकारास्पदत्वेनास्थिरत्वात्तद्विपरीतं स्थिरत्वमेषां सत्यपदेनोच्यते, सत्यसङ्कल्प इत्येतेषु भोग्यतदुपकरणादिषु नित्येषु निरतिशयेषु अनन्तेषु सत्स्वपि अपूर्वाणामपरिमितानामर्थानामपि सङ्कल्पमात्रेण सिद्धिं वदति, एषां च भोगोपकरणानां लीलोपकरणानां चेतनानामचेतनानां स्थिराणामस्थिराणां च तत्सङ्कल्पायत्तस्वरूपस्थितिप्रवृत्तिभेदादि सर्वं वदति सत्यसङ्कल्प इति, इतिहासपुराणयोर्वेदोपबृंहणयोश्चायमर्थ उच्यते—तौ तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ। वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ इति, वेदोपबृंहणतया प्रारब्धे श्रीमद्रामायणे—व्यक्तमेष महायोगी परमात्मा

उक्तार्थोऽनधीतशाखास्वपि प्रतिपाद्यत इति दर्शयितुं भूषणादिकण्ठोक्तिं दर्शयितुं चोपबृंहणं दर्शयति इतिहासेति, तत्र श्रीमद्रामायणे दर्शयिष्यंस्तस्य काव्यसाम्यबुद्धिनिवृत्तये प्रामाण्यमाह तौ त्विति, काव्यत्वकल्पुक्तिनो वेदार्थो हि तत्र प्रतिपादितः सर्वजनबुद्ध्यारोहणाय, यथोक्तं महाभारते-बिभेति निगमाच्छास्त्रावरस्तिकादिवैापधात् । भारतः शास्त्रसारोऽयं ततः काव्यात्मना कृतः ॥ इति, व्यक्तमेष इत्यादि अनादिमध्यनिधन इति स्वरूपनित्यत्वं, शाश्वत इति गुणविशिष्टाकारेण नित्यत्वं ध्रुव इति विग्रहविशिष्टाकारेण नित्यत्वं, नित्यश्रीरिति, पर्वोविधिः । श्रीपराशरवचनमाह श्रीमदिति, मूर्तमिति मूर्तं ब्रह्म यस्यास्ति स हरिः सर्वब्रह्ममयश्च ब्रह्म—शब्दो जीवपरः शुद्धजीवस्वरूपं तच्छेषमित्यर्थः ।

* गह्वरादिति पा० ।

सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीर*नेयः शाश्वतो ध्रुवः ॥ शरा नानाविधाश्चापि धनुरायतविग्रहम् । अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः ॥ विवेश वैष्णवं ते†जः सशरीरस्सहानुगः ॥ श्रीमद्विष्णुपुराणे—समस्ताः शक्तयश्चैता नृप ! यत्र प्रतिष्ठिताः ॥ तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् । मूर्त्तं ब्रह्म महाभाग ! सर्वब्रह्ममयो हरिः । नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम । देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोरे‡वानुरूपां वै करोत्येषात्मनस्तनुम् । एकान्तिनः सदा ब्रह्मध्यायिनोयोगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥ कलामूहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ॥ महाभारते च—

श्रीपत्न्यां प्रमाणमाह नित्यैवेति, परमस्थाने वचनमाह एकान्तिन इति, तस्य नित्यत्वमाह कलेति, महाभारतवचनमाह महेति, परस्येति, अन्तस्तद्धर्म्मोपदेशादिति सूत्रे न हि रूपवत्त्वं प्रतीयते कथं वा तस्य विलक्षणत्वमिति शङ्कायां तद्विषयवाक्यार्थपुरस्सरं तदर्थमाह योऽसावित्यादिना, य एषोऽन्तरादित्ये ,हिरण्मयः पुरुषो दृश्यते इत्यादिविषयवाक्यं तत्र य इति प्रसिद्धवन्निर्द्देशात्प्रत्यक्षाप्रत्यक्षसकलश्रुतिगतविशेषणजातमत्र विवक्षितमिति सर्वश्रुतिस्मृतीतिहासपुराणगतवि-

* अजय्य इति पा० । † धामेति पा । 
‡ विष्णो.र्देहानुरूपामिति पा० ।

णेरणान्यत्रोच्यन्ते य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् इति बृहदारण्यके य एष एतस्मिन्मण्डलेऽर्चिषि पुरुष इति तैत्तिरीयके च श्रवणादत्रादित्यशब्दोमण्डलवाचीत्यभिप्रायेणादित्यमण्डलान्तर्वर्त्तीत्युक्तम्, आदित्यशब्दादुपरि दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति ण्य प्रत्ययः रुक्माभं स्वप्नधीगम्यं यदा पश्यः पश्यते रुक्मवर्णं प्रतप्तकार्तस्वरवर्चसं प्रभुमित्यादिवचनानुसारेण तप्तकार्तस्वरगिरिवरप्रभ इत्युक्तम्, आदित्यवर्णं परस्तात् दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा तस्य स्याद्भासस्तस्य महात्मनः ॥ इत्यादिवचनात् सहस्रांशुशतसहस्रकिरण इत्युक्तम् ।

**दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम् । गच्छ प्रभो ! रक्ष चास्मान्प्रपन्नान् कल्पे कल्पे जायमानः स्वमूर्त्या ॥ कालस्सम्पच्यते तत्र न कालस्तत्र वै प्रभुः ॥ इति, परस्य ब्रह्मणोरूपवत्त्वं सूत्रकारश्च वदति—अन्तस्तद्धर्म्मोपदेशात् इति, योऽसावादित्यमण्डलान्तर्वर्ती**

एवं विशेषणद्वयेन भक्तजनभोग्यत्वं प्रतिकूलदुरासदत्वं च विवक्षितं, तच्चाभियुक्तैरुक्तं—नित्यानुकूलमनुकूलनृणां परेषामुद्वेजनं तव च तेज उदाहरन्ति । इति तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी इत्यस्यार्थं हृदि निधायाह गम्भीराम्भ इति, अस्य वाक्यस्य वाक्यकारेण षडर्थाः पूर्व्वपक्षत्वेन सिद्धान्तत्वेन चोक्ताः, तत्र सिद्धान्तितार्थत्रयमत्रोक्तम्, इतरार्थत्रयस्य पूर्व्वपक्षत्वं तत्स्वभावादेवावगतं, तत्र पूर्व्वपक्षानुपन्यासादेव तस्यानुपादेयत्वं स्पष्टं, न च तस्य पृथक् निरासः क्रियते ग्रन्थेषु, तस्माद्वाक्यकारोक्तष्वर्थत्रयं विवक्षितम् । के पुनः पूर्व्वपक्षिता अर्थाः—उच्यन्ते कपिः—आदित्यः कपि चलने इति धातुः, कं पिबतीति च कपिः कपिर्भस्तितेजनमिति वैदिकप्रयोगस्तस्यासम्मण्डलं कप्यासं, यथाऽऽदित्य

मण्डलं हृदयपुण्डरीकं चोपासनस्थानम् एवमक्षिणी अप्युपासनस्थानमित्ये-कोऽर्थः, अयं नोपपद्यते उपास्यस्येति षष्ठ्यन्तं पदमध्याहार्यम् उपासन-स्थानमिति चाध्याहार्यम् । एवं पदद्वयाध्याहारः समानविभक्त्यन्तयोः पदयोः स्वतः प्राप्तं सामानाधिकरण्यं घटः पट इतिवदर्थविरोधा-भावे च-शब्दाप्रभावेऽपि स्वतःप्राप्तसामानाधिकरण्यपरित्याग शङ्का दोषः, पुण्डरीकशब्दस्य गौणता पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख-मिति श्रुतेः तत्सदृशि तच्छब्दो हि गौणः, हिरण्यश्मश्रुर्हिरण्यकेशः आप्र-णखात् सर्व एव सुवर्ण इति दिव्याङ्गवर्णनप्रकरणाननुगुणत्वं च, य एषोऽ-क्षिणि पुरुषो दृश्यत इत्युत्तरत्राक्षिस्थानस्याभिधास्यमानत्वात् पुनरु-क्तिश्च, य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्येकस्मिन्नक्षिण्युपासनविधा-नात् य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् इति बृहदार-ण्यके दक्षिणस्याक्ष्ण उपासनस्थानत्वविधानादक्षिणी इति द्विवचनानुपप-त्तिश्चेति ।

तप्तकार्तस्वरगिरिवरप्रभः सहस्रांशुशतसहस्रकि-रणो गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसि-तपुण्डरीकदलामलायतेक्षणः—

तस्मादस्य वाक्यस्योपासनस्थानविधिपरत्वमनुपपन्नं कपिमर्कटः तस्यासं पृष्ठमिति मर्कटपृष्ठसाम्यमुच्यते इति यत् तदयुक्तं मर्कटपृष्ठं पुण्डरीकं चोपमाद्वयम् उतैकोपमा तत्रोपमाद्वित्वमयुक्तं स्वतःप्राप्तसामा-नाधिकरण्यपरित्यागप्रसङ्गात् श्लाघ्यार्थे सम्भवत्यपि हीनोपमाश्रयणा-योगाच्च । यद्येकोपमा तथा सति मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात् तदा कप्यास-शब्दस्य गौणता स्यादिति कप्यासमीषद्विकसितमिति यदुच्यते तदाऽप्यनौचित्यमस्त्येव तथाऽप्यवयवशक्त्या रूढ्या वैषद्विक-सितवाचित्वं नास्तीति तदप्ययुक्तमित्येवमर्थत्रयस्याप्यनुपपत्तेरुपपन्नमर्थ-त्रयं विवक्षितं भगवता भाष्यकारेण । गम्भीराम्भ इत्यादि, कं पिबतीति कपिरादित्यः तेनास्यते क्षिप्यते विकास्यत इति कप्यासम्, तदाह वाक्य-

कार आदित्यान्तिकं वा श्रीमत्त्वादिति, तत्रादित्यः स्वकिरणेन विकासयति अतो घटकं रविकिरणमपि स्वीकृत्य रविकरविकसितेत्युक्तं, कं पिबतीति कपिर्नालं तस्मिन्नास्ते इति कप्यासम् अत्र *त्रुटितादपि पद्मात् पद्मनालस्थस्य पुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः, मनालमप्युन्मूलितमम्बुजं म्लानं स्यात् इति तद्व्यावृत्त्यर्थमुच्यते मृष्टेति, अर्थान्तरमुच्यते गम्भीराम्भः समुद्भूतेति कज्जलम्, अम भुविरपि पूर्व्वकः वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति वचनादपेरकारल्लोपः, कप्यासं सलिले विद्यमानमित्युक्तं भवति, एवं वाक्यकारोक्तार्थत्रयकथनेन तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी इति श्रुतिवाक्यं व्याख्यातं भवति रामः कमलपत्राक्षः, पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् । प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम् । जितं ते पुण्डरीकाक्ष त्वत्तः कमलपत्राक्षेत्यादिभिः पद्मपत्रसाम्यकथनात्पुण्डरीकस्य दलाभ्यामेव साम्यमिति दर्शयितुं दल-शब्दः प्रयुक्तः, यथा पुण्डरीकमेवमक्षिणी इत्युक्ते पुण्डरीकादधिकगुणनिवृत्तिर्माभूदित्याशयेनायत-शब्दप्रयोगः, एवमिति, सामान्येन पुण्डरीकधर्म्मेषु तद्गतदोषातिदेशोमाभूदित्यमल-शब्दः, एवमधिकगुणान्वयं दोषराहित्यं चाभिप्रेत्याभियुक्तैरुक्तम् । अदीर्घमप्रेमदुघं सशोणोज्ज्वलं न चोरमन्तःकरणस्य पश्यताम् । अनुब्जमब्जं नु कथं निदर्शनं नीलाद्रिनाथस्य विशालयोर्दृशोः ॥ इति, नारायण! नमस्तेऽस्तु पुण्डरीकायतेक्षण! सुभ्रूललाटसुनसस्मिताधरविद्रुमेति जितं ‡तोक्तविशेषणान्येवोक्तानि, सुभ्रूललाट इत्यादिनासुरुचिरकोमलगण्ड इत्यादिविशेषणानामपि मूलभूतवचनानि भगवच्छास्त्रपुराणादिषु द्रष्टव्यानि । सुकपोलमिति पराशरः, कम्बुग्रीवो महाहनुरिति वचनमभिप्रेत्य कम्बुग्रीव इत्युक्तं, कर्णकिसलयः कर्णपाशः पीनवृत्तायतभुजः पीनवृत्तायतभुजः श्रीवत्सकृतलक्षण इति जितंतेवचनं, विशालवक्षस्स्थलः महोरस्को महेष्वासः । इति वचन, समविभक्तसर्वाङ्गः

* अपचितादपि इति पा० ।

† वनाद्रिनाथस्येति द्राविडपाठः ।

‡ जितन्ते पदेन तत्पदघटित ध्यायो विवक्ष्यते ।

समः समविभक्ताङ्गः । इति वचनं, दिव्यरूपसंहनन इति रूपसंहनने लक्ष्मीर्मिति रूपसंहननं नाम सर्वाङ्गानां संश्लेषौचित्यम्, । अभिरूपविरूपाणामङ्गानां हि संश्लेषो नोचितः सर्वाङ्गानामप्यभिरूपत्वादन्योन्यसंश्लेषः सदृश इति संहनन-शब्दार्थः । स्निग्धवर्णः-

**सुभ्रूललाटस्सुनासस्सुस्मिताधरविद्रुमः सुरुचिरकोमलगण्डः कम्बुग्रीवः समुन्नतांसविलम्बिचारुरूपदिव्यकर्णकिसलयः पीनवृत्तायतभुजश्चारुतरातिताम्रकरतलानुरक्ताङ्गुलीभिरलङ्कृतस्तनुमध्यो विशालवक्षस्स्थलः समविभक्तसर्वाङ्गोऽनिर्देश्यदिव्यरूपसंहननः स्निग्धवर्णः प्रबुद्धपुण्डरीकचारुचरणयुगलः**

प्रतापत्रानिति वचन, प्रबुद्धपुण्डरीकचारुचरणयुगल इति त्वत्पादकमलादन्यत् स्वानुरूपपीताम्बरधर इति तस्य महार*जतं वाम इति श्रुतिः-ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ इत्याद्युक्तविशेषणान्युच्यन्ते । अमलकिरीटेति, अमल-शब्देनाप्राकृतत्वं विवक्षितम्, अनवधिकेति-रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणमिति वचनं, लावण्यं समुदायशोभा । सौन्दर्यमवयवशोभा । अत्यद्भुतेति युवा कुमारः । यः पूर्व्याय वेधसे नवीयसे इति श्रुतिः पुष्पहासमुकुमार इति सौकुमार्यं सुवेशतामिति वचनं, पुण्यगन्धेति सर्वगन्धः सर्वरसः

**स्वानुरूपपीताम्बरधरोऽमलकिरीटकुण्डलहारकौस्तुभकेयूरकटकनूपुरोदरबन्धनाद्यपरिमिताश्चर्यानन्तदिव्यभूषणः शङ्खचक्रगदासिशार्ङ्गश्रीवत्सवनमाला-**

* तस्य माहारजनं वाम इति बृहदारण्यके पाठः ।

ऽलङ्कृतोऽनवधिकातिशयसौन्दर्याहृताशेषमनोदृष्टिवृत्तिर्लावण्यामृतपूरिताशेषचराचरभूतजातोऽत्यद्भुताचिन्त्यनित्ययौवनः पुष्पहाससुकुमारः पुण्यगन्धवासितानन्तदिगन्तरालस्त्रैलोक्याक्रमणप्रवृत्तगम्भीरभावः करुणानुरागमधुरलोचनावलोकिताश्रितवर्गः पुरुषवरो दरीदृश्यते । स च निखिलजगदुदयविभवलयलीलो निरस्तसमस्तहेयः

तस्याननं पद्मसमानगन्धीति त्रैलोक्येति समुद्र एव गाम्भीर्ये इति करुणेति करुणापूर्णदृष्टिभ्यां दीनं मामवलोकयेति य एष य एवं य एषोऽन्तरादित्ये इत्यादिवाक्यस्यार्थ उक्तः । एतद्विषयस्य सूत्रस्य प्रतिज्ञाखण्डस्यार्थमाह स इति, निखिलजगदिति पदेनानन्दवल्ल्युक्तजगत्कारणत्वं विवक्षितं, यश्चामावादित्ये इति तत्र हि जगत्कारणस्यादित्यान्तर्वर्तित्वमुक्तं, निरस्तेति सर्वेभ्यः पाप्मभ्य उदित इत्यस्यार्थो विवक्षितः । हेयप्रतिभटत्वात् कल्याणगुणाकरत्वाच्च स्वेतरसमस्तवस्तुविलक्षणपरमात्मपरब्रह्मनारायणशब्दाः सामान्यविशेषशब्दाः, एवं सूत्रस्य प्रतिज्ञाखण्डो व्याख्यातः । कुत इत्यत्राह तद्धर्मोपदेशादित्येतद्व्याचष्टे स एष इति, सर्वलोकेशत्वादिगुणा हि श्रूयन्ते ततः किं परमात्मत्वस्येत्यत्राह तस्यैते गुणा इति, तस्यैते गुणा इत्यादिवाक्यप्रतिपादिता इत्यन्वयः । वाक्यकारश्चैतदिति प्राज्ञ—शब्देन ब्रह्मणा विपश्चितेत्युक्तं विपश्चित्त्वमुक्तं सर्वान्तरशब्देनान्योऽन्तर आत्मानन्दमय इत्युक्तार्थो विवक्षितः, लोककामेशोपदेशात् लोककामेशत्वोपदेशात्, तथोदयात् पाप्मनां स एषः सर्वेभ्यः पाप्मभ्य उदितः इत्युक्तादित्यर्थः । एवमादित्यान्तरवर्तिनो रूपवत्त्वात् जीवत्वमाशङ्क्य

समस्तकल्याणगुणनिधिः स्वेतरसमस्तवस्तुविलक्षणः परमात्मा परब्रह्मनारायण इत्यवगम्यते । तद्ध-

र्म्मोपदेशात् स एष सर्वेषां लोकानामीष्टे सर्वेषां कामानां स एष सर्वेभ्यः पाप्मभ्य उदित इत्यादिदर्शनात्, तस्यैते गुणास्सर्वस्य वशी सर्वस्येशानः अपहतपाप्मा विजर इत्यादिसत्यसङ्कल्प इत्यन्तं विश्वतः परमं नित्यं विश्वं नारायणं हरिं पतिं विश्वस्यात्मेश्वरमित्यादिवाक्यप्रतिपादिताः । वाक्यकारश्चैत*त्सर्वमाह—हिरण्मयः पुरुषो दृश्यत इति प्राज्ञः सर्वान्तरः स्याल्लोककामेशोपदेशात्

रूपस्याप्राकृतत्वात् परमात्मनश्च सिद्धान्तितमन्तरित्यादिसूत्रे वाक्यकारग्रन्थे रूपस्यानित्यत्वप्राकृतत्वशङ्काव्यावृत्त्यर्थमाह तस्य चेति, पूर्व्वपक्षवाक्यमिदं स्यात् रूपमित्यादि, भक्तानामुपासकानामनुग्रहार्थमैश्वर्यात् स्वतन्त्रशक्त्या वा रूपं कृतकं स्यादित्यर्थः । वाक्यस्यार्थमाह उपासितुरिति, रूपं वेत्यादिसिद्धान्तवाक्य तत्तात्पर्यार्थमाह यथेति, स्वरूपतया स्वरूपनिरूपकधर्म्मतया स्वाभाविकत्वेनेत्यर्थः । द्रमिडाचार्य्यैर्व्याख्यातमित्याह भाष्येति, अञ्जसा-अव्यवधानेन स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवस्तुवन्मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह तत्त्विति, मिथ्याभूत—दुष्टेन्द्रियग्राह्यम् अदुष्टकरणग्राह्यत्वश्रवणात् परमार्थभूतमित्यभिप्रायः । पारमार्थ्यमेवोपपादयति न हीति, । अरूपाया रूपोपदेशः कथमित्यत्राह यथा भूतवादीति, वेदाहमित्यादित्यवर्णमिति पदं तात्पर्यमिति, आदिना भाष्यकारेण व्याख्यातमित्यन्वयः, हिरण्मय इति विकारवाचिशब्दश्रवणात्कनकरूपमिति शङ्काव्यावृत्त्यर्थं वाक्यमाह हिरण्मय इति, रूपमौज्ज्वल्य तस्य भाष्ययन्यथाह न मयडत्रेति,

तथोदयात्पाप्मनामित्यादिना, तस्य च रूपस्यानित्यतादि वाक्यकारेणैव प्रतिषिद्धं स्यात्तद्रूपं कृत-

* वाक्यकारश्चैतत्सुस्पष्टमाहेति पा० ।

कमनुग्रहार्थं तच्चेतनानामैश्वर्यादिति उपासितुरनुग्रहार्थः परमपुरुषस्य रूपसंग्रह इति पूर्वपक्षं कृत्वा—रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशादिति, यथा ज्ञानादयः परस्य ब्रह्मणस्स्वरूपतया निर्देशात् स्वरूपभूतगुणाः तथेदमपि रूपं श्रुत्या स्वरूपतया निर्देशात्स्वरूपभूतमित्यर्थः। भाष्यकारेणैतद्व्याख्यातम्—अञ्जसैव विश्वसृजो रूपं तत्तु न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते

विकारमादाय—विकारार्थमङ्गीकृत्य अनारभ्यत्वादात्मन इति विग्रहविशेषस्यात्मनोऽनारभ्यत्वादित्यर्थः। पूर्वं रूपं चान्तीन्द्रियमिति वाक्योपादानेन संग्रहेणोक्तमर्थं भाष्यग्रन्थानन्तरं विस्तरेणाह यथेति, कल्याणतमरूप इत्यनेन—तत्ते कल्याणतमं रूपं पश्यामीति श्रुतिः स्मारिता, आदित्यवर्णमिति श्रुतिः पुरुषविषया अतः पुरुषोत्तम—शब्दः, स एव ब्रह्मेति-दर्शयितुं परब्रह्म-शब्दः विशेषवाची नारायणशब्दः, यथा ज्ञानादिकल्याणगुणगणाः प्रामाणिकत्वादभ्युपगम्यन्ते तथा रूपमपि प्रामाणिकत्वादङ्गीकार्यमित्यर्थः। एवं वाक्यकार-भाष्यग्रन्थयोर्दिव्यरूपसमर्थनं पर्वोपरिजनादेरपि प्रदर्शनार्थं तुल्यन्यायादित्यभिप्रेत्याह तथेति, कथं तत्रावगतमित्यत्राह यथेति, प्रामाणिकत्व द्गुणाभ्युपगमवद्रूपमभ्युपेतव्यमिति

न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेनेति श्रुतेः, न ह्यरूपाया देवताया रूपमुपदिश्यते यथाभूतवादि हि शास्त्रं महा*रजतं वासः वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति प्रकर-

* माहारजनं वास इति पा०।

णान्तरनिर्देशाच्च साक्षिणा इत्यादिना हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत् न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मन इति यथा ज्ञानादिकल्याणगुणानन्त्यनिर्देशादपरिमितकल्याणगुणविशिष्टं परं ब्रह्मेत्यवगम्यते, एवमादित्यवर्णं पुरुषमित्यादिनिर्देशात्स्वाभिमतस्वानुरूपकल्याणतमरूपः परब्रह्मभूतः पुरुषोत्तमो नारायण इति ज्ञायते तथाऽस्येशाना जगतो विष्णुपत्नी ह्रीश्च ते लक्ष्मीश्च पत्न्यौ सदा पश्यन्ति सूरयः तमसः परस्तात् क्षयन्तमस्य रजसः पराके इत्यादिना पत्नीपरिजनस्थानादीनाम् ।

उक्तं तर्हि गुणानपि वयं नाभ्युपगच्छाम इत्यत्राह एतदुक्तं भवतीति, प्रमाणसिद्धत्वाद् ब्रह्मणः स्वरूपमभ्युपगम्यते सार्वज्ञ्यसर्वशक्तित्वविश्वावभासकत्वादिसद्गुणाश्च अवगन्तव्याः प्रामाणिकत्वाविशेषात्, तथा रूपपरिजनादीन्यपीत्यर्थः । सकलेतरविलक्षणा इत्यनेन प्रकृतिप्राकृतवैलक्षण्यं प्राकृतेषु पदार्थेषु चतुर्मुखादीनामप्यभिमानोऽस्तीति तद्व्यावृत्त्यर्थं स्वासाधारणा इत्युक्तम् । इयतारहित्यम्, औज्ज्वल्यादिगुणोत्कर्षश्च अनिर्देश्येत्यादिपदेनोक्तं,तत्रायमपि चोद्यपरिहारोऽर्थात्सिद्धः ।

निर्देशादेव तथैव सन्तीत्यवगम्यते—यथाऽऽह भाष्य*कारः—यथाभूतवादि हि शास्त्रमिति, एतदुक्तं भवति यथा सत्यं ज्ञानमनन्तं ब्रह्मेति निर्देशात्परमात्मस्वरूपं समस्तहेयप्रत्यनीकानवधिकानन्दैकतानतयाऽपरिच्छेद्यतया च सकलेतरविलक्षणं तथा यस्सर्वज्ञः सर्व-

* द्रमिडाचार्यः ।

नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वाद् गुणानां च प्रधानानुवर्त्तित्वात् "सर्वकर्मा सर्वगन्धः सर्वरस" इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याप्यव्यवस्था स्यात्तत्राह—

टी० अस्थूलत्वादिविशेषितेति, अस्थूलत्वाद्युपेतत्वमुक्तं स्थूलत्वादिविरोधिशब्दाभिलप्य आकारोऽस्थूलत्वादिर्भावान्तरस्यैव अभावशब्दार्थत्वात्, अत एव ह्रस्थूलत्व सूक्ष्म-शब्देनोक्तं श्रुत्यन्तरे, अस्थूलत्वादिधर्मं यथायोग्यं तत्तद्व्यावृत्तिरवगन्तव्या अचक्षुष्ट्वाप्राणत्वादिभिरिन्द्रियाधीनज्ञानप्राणायत्तचेष्टितजीवव्यावृत्तिः अनणुत्व ह्रस्वत्वादिभिर्मुक्तस्यापि व्यवच्छेदः, आनन्त्येन सर्वव्यवच्छेदेऽपि शङ्कितस्थूलत्वादिव्यवच्छेदस्तु तद्विरोध्यस्थूलत्वादिभिरेव सिध्येदित्यवश्यानुसन्धेयत्वमेतदधिकरणार्थमुपजीव्य पूर्वमानन्दादिष्वमलत्वं च सह पठितम्। औपसदवदिति वक्ष्यमाणदृष्टान्तः कर्मविषयः, दार्ष्टान्तिकं तूपासनं तस्मात् दृष्टान्तोपजीव्यमंशमाह "गुणानां प्रधानानुवर्त्तित्व" इति, जामदग्न्यचतूरात्रं जमदग्निना मुहुरनुष्ठितं चतूरात्रं नाम कर्म तत्र पुरोडाशद्रव्यकोपसदङ्गभूतः सामवेदपठितो मन्त्रः "उच्चैः साम्ने"ति वचनात् सामवेदपठितत्वेन तस्य मन्त्रस्योच्चैर्गाने प्राप्तेऽप्युपांशु यजुषेत्युपांशु पठितव्ययजुर्वेदोक्तोपसत्कर्मशेषत्वेन तदनुवर्त्तित्वादुपांशुप्रयोगः प्राप्त इत्यर्थः। गुणमुख्यव्यतिक्रम इति व्यतिक्रमो विरोधः यथा प्रकरणान्तराधीतानामपि प्रधानानुवर्त्तित्वं दृश्यते, तथा प्रकरणान्तराधीतानामप्यस्थूलत्वादिधर्माणां प्रधानभूतधर्म्यनुवृत्तिरुपपन्नेत्यर्थः। अयं दृष्टान्तः आनन्दादेरपि तुल्य इत्यभिमेतः ॥ अनन्तरसूत्रशङ्कामाह "नन्वेव"मिति, अस्थूलत्वाद्यनेकगुणानां बहुशाखोक्तानां सर्वविद्यानुगत्वे तेषां बाहुल्यात् प्रधानानुवर्त्तितया प्राप्तानां सर्वकर्मत्वादीनां चानन्त्यादुपसंहाराशक्तिः स्यादिति चाभिप्रायः ॥

सू० इयदामननात् ॥ ३४ ॥

आमननमाभिमुख्येन मननम् अनुचिन्तनम् । आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तं यद् स्थूलत्वादिविशेषितमानन्दादिकं येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न सम्भवति तदेव सर्वत्रानुवर्त्तनीयं तच्चेयदेवेत्यर्थः । इतरे तु सर्वकर्मत्वादयः प्रधानानुवर्त्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः अक्षरध्यधिकरणं समाप्तम् ॥

टी० सू० इयदामनात् ॥ ३४ ॥ सूत्रस्याक्षरार्थमाह आमननमित्या दिना तात्पर्यमाह "येने"ति, ब्रह्मणोव्यावृत्ताकारानुसन्धानाय प्राप्तं गुणजातमियदेवेत्यर्थः । अत्र परे तु सामान्यतद्भावाभ्यां प्रतिषेधमुखेन प्रतिपादनप्रकारस्य समानत्वादक्षरस्य ब्रह्माभिन्नतया प्रत्यभिज्ञानाच्चेति योजयन्ति ततोऽपि वरमुक्तार्थपरत्वं निदर्शनानुगुण्यात् अङ्गानां प्रधानानुवर्त्तित्वे हि निदर्शनोपन्यासः भावाभावरूपधर्मविषयत्वात् आनन्दादय इत्यनेन न पौनरुक्त्यमित्याहुः । तदयुक्तम्, सत्यादिवाक्यानामतद्व्यावृत्तिपरत्वाभ्युपगमात् तत्रापि स्वरूपातिरिक्तव्यावृत्तिरूपधर्मानभ्युपगमात् सकलेतरव्यावृत्तस्वरूपस्य सत्यादिवाक्यप्रतिपन्नस्य व्यवच्छेद्यविशेषव्यावृत्तिप्रतिपत्तौ प्रयोजनाभावाच्च । न हि पांसुराशेर्विविक्तस्य रत्नस्य पुनः पुनः प्रत्येकं पांसुव्यतिरेचने किंचित्प्रयोजनम् । ऋतं पिबन्तौ द्वा सुपर्णेति वाक्ययोर्विद्याभेदाभेदविषयमियदामननादिति सूत्रमधिकरणान्तरमाहुः उभयोर्भोक्तृत्वमेकत्र एकस्य भोक्तृत्वमन्यतरस्याचाभोक्तृत्वम् अन्यत्र इति विद्याभेदमुक्त्वा छत्रिन्यायेनाविरोधात् जीवोपादानस्य तादात्म्यप्रतिपादनार्थत्वाच्च रूपाभेदाद्विद्यैक्यमित्युक्तं तदयुक्तं, छत्रिन्यायादिभिरर्थैकत्वस्य गुहां प्रविष्टावात्मानावित्यत्र सिद्धत्वात् सूत्राक्षराणां तदसाधारणत्वाभावाच्च, इयच्छब्दोऽपि देशकालस्वरूपसंख्येयत्तासाधारणः । किञ्च यदा पैङ्गिश्रुत्यनुसारेण सत्त्वद्वितीयप्रत्यगात्मपरत्वं द्वासुपर्णेति वाक्यस्याभि-

मतं तदा द्वयोरपि जीवसद्वितीयपरमात्मपरत्वं व्याहतं जीवसद्वितीयपरमात्मपरत्वेऽपि पौनरुक्त्यमुक्तम् । ननु न पौनरुक्त्यं तत्प्रपञ्चनार्थो ह्ययमारम्भ इति चेत् न अधिकरणान्तरनिरूप्यार्थानामिहाप्रपञ्चनात् अस्य तेभ्यो वैषम्याभावाच्च । किञ्च द्वयदिति सौत्रं पदं च न द्वित्वसंख्याव्यवच्छेदमेकान्ततोऽवगमयति तदर्थश्च विश्वमेवेदं पुरुषः महान् प्रभुर्वै पुरुष इत्यादिषु जगदाकारव्यवच्छेदेन विद्यैक्यपरं सत्रं किं न स्यात्, यदि संख्याव्यवच्छेदकत्वमेवाभिमतं तर्हि त्रिविधं ब्रह्मैतत् चतुष्पात् ब्रह्मेत्यादिसंख्यान्तरावच्छिन्नब्रह्मपरवाक्यविषयं किं न स्यात्, सर्वत्र भेदाभेदहेतवश्च उत्प्रेक्षितुं शक्याः, अतो यथा कथंचिन्निर्वहणात् अपेक्षितार्थपरत्वं साधिष्ठम् । सूत्राक्षरानैकान्त्यपुनरुक्तिभ्यामेवापरेषां पक्षेऽप्यधिकरणभेदो व्युदस्तः अन्ये तु संभूतिं च विनाशं च यस्तद्वेदोभयं सह । विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते इति सप्रपञ्चब्रह्मोपासनं प्रपञ्चविनाशावस्थसन्मात्रब्रह्मोपासनं चेति द्विविधयोरपि ब्रह्मोपासनयोः समुच्चयमाहुः । तत्र प्राणाद्युपासनं च संभूतिरेव जगदेकदेशसम्बन्धित्वादस्थूलमित्यादिभिर्विहितं विनाशोपासनं प्राणादिसंभूतिभिरपि किं समुच्चीयते नेति चिन्तायामविशेषेण संभूतिं च विनाशं चेति श्रुतत्वाद्विनाशधर्मिणो ब्रह्मणः प्राणादिसंभूतिष्वभावेऽपि तत्र धर्मिणो ब्रह्मणः समाकृष्योपासनसम्भवात् सर्वाभिः संभूतिभिरपि विनाशः समुच्चीयत इति पूर्वपक्षं कृत्वा गुणिनो गुणानुरोधित्वाभावात् गुणानुरोधेन गुणिनो ब्रह्मणः समाकर्षायोगात् गुणानामेव गुण्यनुरोधित्वात् ब्रह्मणोऽसद्भावे विनाशस्याप्ययोगात् ब्रह्मसंभूतिभिरेव विनाशः समुच्चीयते इति वर्णयन्ति तदयुक्तं सप्रपञ्चनिष्प्रपञ्चब्रह्मोपासनसमुच्चयस्य प्रमाणविरुद्धत्वात् अक्षरविद्याशाण्डिल्यविद्यादीनां श्रुतिस्वारस्यादन्योन्यनिरपेक्षोपायत्वं हि प्रतीयते समुच्चयश्रुतिबलात्तासामन्यसापेक्षत्वं कल्प्यत इति चेत् न कल्पकस्यार्थान्तरविषयत्वेनान्यथासिद्धत्वात्, अर्थान्तरस्य स्वारसिकतया विद्यान्तरस्वारस्यानुगुणतया चाप्रकल्प्यत्वात्, सम्भूति- शब्दः सम्भवत्यनेनेति सम्भूतिरिति व्युत्पत्त्या मार्गपरः, एतमितः प्रेत्याभिसम्भवितास्मि

ब्रह्मलोकमभिसम्भवानीति च प्रयोगात्, अभिसम्भविताऽस्मीति उत्तमपुरुषेण इति यस्य स्यादद्धा न विचिकित्सेत्यनेन च मार्गचिन्तायाः कार्यत्वस्य सूचितत्वाच्च विनाश-शब्दश्च सुकृतदुष्कृतविनाशविषयः, अतो मार्गस्य कर्मविनाशस्य च चिन्तनं विद्याङ्गत्वेन समुच्चित्य विधीयते, न च सम्भूतिविनाशशब्दयोः सम्प्रपञ्चनिष्प्रपञ्चब्रह्मणि स्वारस्यं नाप्यनन्यथासिद्धप्रयोगः, यतः समुच्चयो न प्रमाणिकः अत एव संशयाभावादनारम्भणीयता । इयदामननादित्यत्र च सूत्राक्षराणामनैकान्त्यं पूर्ववत् ऋतं पिबन्तौ द्वा सुपर्णेति वाक्यावगतयोर्भोगानशनयोर्मिथोविरोधात् सम्भूतिषु समुच्चय इति विचार्य भोगस्य हविर्विषयतयाऽनशनस्य कर्मफलविषयतया वाऽन्तर्यामिपरमात्मविषयतया वा विरोधाभावात्, सम्भूतिषु समुच्चय इति सिद्धान्तवर्णनं च सम्भूतिविनाशसमुच्चयाप्रामाणिकत्वादेवानुपपन्नं, भोगानशयोर्विरोधस्तु छत्रिन्यायेन वा प्रयोज्यप्रयोजकभावेन वा ऋतपानस्य विरोधाभावात् पूर्वमेव परिहृतः, अन्यथा तस्यापरिहृतत्वे गुहां प्रविष्टावित्याद्यधिकरणसिद्धान्तैःस्यप्रसङ्गात्, अतोऽधिकरणभेदोऽनुपपन्न इति ॥ अत्तरध्यधिकरणं समाप्तम् ॥

अन्तरत्वाधिकरणम् ।

## सू० अन्तराभूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥

भा० बृहदारण्यके उषस्तप्रश्न एवमाम्नायते "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वेति तस्य प्रतिवचनं "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मे"त्यादि अतुष्टेन तेन पुनः पृष्ट आह "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीयाः एष ते आत्मा सर्वान्तरोऽतोऽन्यदार्त"मिति, तथा तदन-

न्तरं कहोलप्रश्ने चैवमाम्नायते "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वे"ति प्रतिवचनं च "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एवं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्चे"-त्यादि अतोऽन्यदार्त्तमित्यन्तं, तत्र संशय्यते किमनयोर्विद्याभेदोऽस्ति ? नेति ? किं युक्तं भेद इति, कुतः, रूपभेदात् प्रतिवचनभेदाद्रूपं भिद्यते प्रश्नस्यैकरूप्येऽपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते पूर्वत्र प्राणनादीनां कर्त्ता सर्वान्तरात्मत्वेनोच्यते परत्राशनायापिपासादिरहितः अतः पूर्वत्र प्राणिता देहेन्द्रियबुद्धिमनःप्राणव्यतिरिक्तः प्रत्यगात्मोच्यते, परत्र तु तदतिरिक्तोऽशनायापिपासादिरहितः परमात्मा, अतो रूपं भिद्यते ॥

टी० सू० अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥ हेयप्रत्यनीकत्वं ब्रह्मणोऽसाधारणं चेत् आशनायाद्यतीतत्वविशिष्टं ब्रह्म स्यात्, प्राणितृत्वादिति विशिष्टस्तु जीवः स्यादिति शङ्कया सङ्गतिः, उषस्तप्रश्न-शब्देन तत्प्रकरणं विवक्षितं किमुषस्त-कहोलप्रश्नप्रतिवचनश्रुत्योर्विद्याभेद ? उत विद्यैक्यं ? किं पूर्वत्र जीव उपास्योऽन्यत्र परः ? उतोभयत्र पर एवेति ? किमत्र सर्वान्तरत्वप्राणितृत्वे देहादिजागरदाद्यवस्थापेक्षे ? उतानवच्छिन्ने न दृष्टेर्द्रष्टारमिति दृष्टिव्यतिरिक्तत्वनिषेधः ? उत श्रवणादिकर्त्तुर्जीवस्य मन्तव्यत्वनिषेध ? इति यदा दृष्टिरूपताव्यतिरेकनिषेधः, तदा तथात्वस्य जीवे सम्भवात् सर्वान्तरत्वप्राणितृत्वयोरप्यापेक्षिकत्वेन पूर्वत्र जीव उपास्य इति विद्या भिद्यते, यदा श्रवणादिकर्त्तुरुपास्यत्वनिषेधः तदा सर्वान्तरत्वप्राणितृत्वयोरप्यनवच्छिन्नतया पूर्वत्रापि पर एवोपास्य इति विद्यैक्यमिति, रूपभेदादिति कथमुच्यते प्रश्नो ह्येकरूप इत्यत्राह "प्रतिवचन-

भेदादि"ति, प्रतिवचनप्रकारेण हि प्रश्नार्थो ज्ञायत इति भावः । ततः किमित्यत्राह "अत" इति, सर्वान्तरत्वं कथमित्यत्राह–

सू० भूतग्रामवतश्च प्रत्यगात्मनस्तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन सर्वान्तरत्वमप्युपपन्नं, यद्यपि प्रत्यगात्मनः सर्वान्तरत्वं भूतग्राममात्रापेक्षत्वेनापेक्षिकं तथाऽपि तदेव ग्राह्यम् अन्यथा मुख्यान्तरात्मपरिग्रहलोभात्परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते, प्रतिवचनं हि पूर्वंच प्रत्यगात्मविषयं परमात्मनः प्राणितृत्वापानितृत्वाद्यसम्भवात्, परं च परमात्मविषयम् अशनायाद्यतीतत्वात्, तदिदमाशङ्कते अन्तराभूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेदिति अन्तरा सर्वान्तरात्मत्वेन प्रथमप्रतिवचनं भूतग्रामवत्स्वात्मनः भूतग्रामवांस्तदन्तरः स्वात्मा प्रत्यगात्मा सर्वान्तर इत्युच्यते इत्यर्थः । अन्यथा यः प्राणेन प्राणिति योऽशनायापिपासाद्यतीत इति प्रतिवचनभेदानुपपत्तिरिति चेत्, अत्रोत्तरं नेति न विद्याभेद इत्यर्थः । उभयत्र परविषयत्वात्प्रश्नप्रतिवचनयोः, तथा हि "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर"इति प्रश्नस्तावत्परमात्मविषय एव ब्रह्म-शब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शनात्तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं यत्साक्षाद्ब्रह्मेति विशेषणं क्रियते;

टी० "भूतग्रामवतश्चे"ति, आत्म-शब्दस्य परमात्मवाचित्वव्यावृत्त्यर्थं स्वात्मन इत्युक्तं, स्वमेवात्मा स्वात्मा, सर्वान्तरत्वमप्यापेक्षिकमस्य सम्भवतीति दर्शयितुं भूतग्रामवच्छब्दः प्रयुक्तः, यद्यपीत्यादि, आपेक्षिकं

सम्भवतु नाम तथाऽप्यस्वरसमिति भावः । परिहरति "तथाऽपी"ति, अनेकपदविरोधेनैकपदस्वारस्यमनुपपन्नमित्यर्थः । शङ्कायां अनुत्सूत्रत्वमाह "तदिद"मिति, । सूत्रखण्डं व्याचष्टे "अन्तरेत्या"दिना, सर्वान्तरत्वेन प्रतिवचनं भूतग्रामवत् स्वात्मसम्बन्धीत्यर्थः । भूतग्रामवत् स्वात्मन इति पूर्वपक्षमुक्त्वा नेत्युक्ते परस्येत्यर्थादुक्तं भवतीत्यभिप्रायज्ञार्थे हेतुमाह "उभयत्रे"ति, कथमित्यपेक्षायां तं विवृणोति "तथा ही"ति, साक्षाद्ब्रह्मशब्दग्राह्यत्वमेको हेतुः । हेत्वन्तरमाह—

भा० अपरोक्षत्वमपि सर्वदेशसर्वकालसम्बन्धित्वं सत्यं ज्ञानमनन्तं ब्रह्मेति अनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते, सर्वान्तरत्वमपि "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर इत्यारभ्य य आत्मनि तिष्ठन्नात्मनोऽन्तर इति सर्वान्तर्यामिणः परमात्मन एव सम्भवति, प्रतिवचनमपि तथैव परमात्मविषयं यः प्राणेन प्राणितीति निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात्, एवमजानतोषस्तेन प्राणने कर्तृत्वमात्रमुक्तं मन्वानेन प्रत्यगात्मनोऽपि साधारणत्वं प्रतिवचनस्य मत्वा अनुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं परमात्मानमाह न दृष्टेर्द्रष्टारं पश्येरित्यादिना, इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः तस्य सुषुप्तिमूर्छादौ प्राणनादेरकर्तृत्वात् ।

टी० "अपरोक्षत्वमपी"ति, देशकालसन्निकर्षो ह्यपरोक्षे विवक्षते, तस्माद् ब्रह्मणोऽपरोक्षत्वं नाम सर्वदेशसर्वकालसन्निहितत्वमित्यर्थः । निरु-

पाधिकं प्राणनस्य कर्तृत्वमिति, प्राणयितृत्वं विवक्षितं निरुपाधिक-शब्देन जीवव्यावृत्तिः । स हि कर्मानुगुणदेहेन्द्रियादीनामधिष्ठातृत्वेन कदाचित् प्राणयिता निरुपाधिकप्राणयितृत्वं परमात्मन एवेत्युपपादयति "प्रत्यगात्मन" इति, पुनः प्रश्नस्यार्थान्तरविषयत्वशङ्कां परिहरति "एवमि"ति, इन्द्रियाधीनानामिति, दृष्टेर्द्रष्टारमिति व्यपदेशः ओदनपाकं पचतीतिवदिति भावः । परमात्मनः सर्वदा सर्वप्राणिप्राणयितृत्व श्रुतिमाह—

भा० "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति सर्वप्राणिप्राणनहेतुत्वं हि परमात्मन एव अन्यच्च अनम्, अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये एवमुत्तरे अपि अशनायाद्यतीतत्वस्य परमात्मासाधारणत्वात्, उभयत्रातोऽन्यदार्त्तमित्युपसंहारश्चैकरूपः प्रश्नप्रतिवचनावृत्तिस्तु कृत्स्नप्राणिप्राणहेतोः परस्य ब्रह्मणोऽशनाद्यतीतत्वप्रतिपादनाय, तच्च दृष्टान्तमाह उपदेशवदिति, यथा सद्विद्यायाम् उत तमादेशमप्राक्ष्य इति प्रक्रान्ते सदुपदेशे भगवांस्त्वेव मेतद् ब्रवीत्विति भूय एवमाह भगवान् विज्ञापयत्विति प्रश्नस्य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यमिति प्रतिवचनस्य च भूयोभूय आवृत्तिः सतो ब्रह्मणः तत्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते तद्वत्, अत एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः कृत्स्नप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपैक्याद्विद्यैक्यम्, अथ स्यात् यद्यप्युभे प्रश्नप्रतिवचने परब्रह्मविषये तथाऽपि विद्याभेदोऽवर्जनीयः एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यम् इतरत्राशनाद्यतीतत्वेनेत्युपास्यगुणभेदेन रूपभे-

दात् प्रष्टृभेदाच्च, पूर्वंच ह्युषस्तः प्रष्टा उत्तरत्र तु कहोल इति तत्राह—

सू० व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

नात्र विद्याभेदः प्रश्नप्रतिवचनाभ्यामेकरूपार्थविषयाभ्यामेकेन च विधिपदेनैकवाक्यत्वप्रतीतेः, प्रश्नद्वयं तावत्सर्वान्तरात्मत्वविशिष्टब्रह्मविषयं, द्वितीयेप्रश्ने "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर" इत्येवकारश्च पूर्वमोषस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्यावधारयति, प्रतिवचनं चोभयत्र स त आत्मा सर्वान्तर इति, सर्वान्तरात्मत्वविशिष्टब्रह्मविषयमेकरूपमेव, विधिप्रत्ययश्चोत्तरत्रैव दृश्यते "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे"दिति, एवं सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे द्वयोरवधृते सत्येकस्मिन्नेव सर्वान्तरात्मत्वविशिष्टे ब्रह्मण्युपास्ये उषस्तकहोलयोरितरेतरबुद्धिव्यतिहारः कर्त्तव्यः, उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः सा कहोलेनापि प्रष्टा कार्या, या च कहोलस्य तस्यैव ब्रह्मणोऽशनायाद्यतीतत्वविषया बुद्धिः सोषस्तेनापि कार्य्या, एवं व्यतिहारे कृते उभाभ्यां सर्वान्तरस्य ब्रह्मणो जीवव्यावृत्तिरवधृता भवति, एवं सर्वान्तरात्मानं प्रत्यगात्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन विशिंषन्ति हि याज्ञवल्क्यस्य प्रतिवचनानि, अतो-

ब्रह्मणः सर्वान्तरात्मत्वमेवोपास्यगुणः, प्राणनहेतुत्वाद्-यस्तु तस्योपपादकाः नोपास्याः। ननूपास्यगुणः सर्वान्तरा-त्मत्वमेव चेत्प्राणनहेतुत्वस्याशनायाद्यतीतत्वस्य च प्रष्टा-र्व्यतिहृत्यानुसन्धानं किमर्थं, तदुच्यते—

टी। "को ह्येवा न्यादि"ति, उत्तरे अपि कहोलप्रश्नप्रतिवचने इत्यर्थः प्रष्टृभेदाच्चेति, अत्र प्रष्टृद्वयसद्भावाद्विद्याभेदः सम्भवतीत्यर्थः। सू० व्यति-हारो विशिंषन्ति हीतरवत् ॥ ३६ ॥ प्रश्नप्रतिवचनैकरूप्यं विधिपदैक्यं च विवृणोति प्रश्नद्वयमित्यादिना, विधिप्रत्ययश्चेति अविशेषपुनःश्रवणं हि भेदहेतुः, अत्र तदभावात् विद्यैक्यमिति भावः॥ तिष्ठासेद्-ब्रह्मणि तिष्ठासेत् निष्ठां लभेत उपासीतेत्यर्थः। द्वयोरवधृत इति, द्वयोः उषस्त-प्रश्नप्रतिवचनकहोलप्रश्नप्रतिवचनरूपवाक्ययोः कर्त्तव्य इति व्यतिहारस्य कर्त्तव्यत्वं श्रुत्यभिप्रेतमिति सूत्रकाराभिप्राय इत्यर्थः। व्यतिहारं विवृ-णोति "उषस्तस्ये"ति, व्यतिहारस्य प्रयोजनमाह "एव"मिति, व्यावृ-त्तिबुद्धिजननार्थं प्रतिवचनमिति वदन् विशिंषन्तीति सौत्रं पदं व्याचष्टे "एवं सर्वान्तरात्मान"मिति, अत इत्यादि सर्वान्तरात्मत्वस्य गुणस्य एकस्य गुणस्यैकोपास्यत्वाद्रूपभेदः परिहृतः विद्यैक्येऽपि वैश्वानरविद्यायामौप-मन्यवादिवत् प्रष्टृभेदः सम्भवतीति स्पष्टत्वाच कण्ठोक्तं, व्यावृत्तिबुद्धिज-ननाय परस्परं बुद्धिव्यतिहार उक्तः, तत्र सर्वप्राणिप्राणनहेतुत्वाशनायाद्य-तीतत्वयोरन्यतरेणैव व्यावृत्तिबुद्धिः स्यादित्यन्यतरेण किमित्यभिप्रायेण चोदयति "नन्वि"ति, परिहरति "तदुच्यत"इति, कहोलस्य पुनः प्रश्नः सम्भवति सर्वप्राणिप्राणनहेतुत्वज्ञानेन व्यावृत्तबुद्ध्यनुदयादुषस्तस्य सर्व-प्राणिप्राणनहेतुत्वविशेषाय पुनः पुनः प्रश्नस्तद्वत्, अन्यतरेण व्यावृत्तबुद्धौ द्वयोर्जातायां परस्परबुद्धिव्यतिहारो द्वयोरपि व्यावर्त्तकधर्मभूयस्त्वहेतुक-व्यावृत्तबुद्ध्यतिशयजननार्थमित्यभिप्रायेणाह—

सू० सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्र-

ह्माणि उषस्तेनाऽभ्युपगते सति कहोलेन जीवस्य सर्वात्मना-ऽसम्भावितेन स्वभावविशेषेण सर्वान्तरात्मा व्याहृत्तोऽनुसंधेय इति कृत्वा पुनः प्रश्नः कृतः, याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय प्रत्यगात्मनोऽसम्भावितमशनायादिप्रत्यनीकत्वमुक्तवान्, अतस्त्वोपास्यस्य व्याहृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः कर्त्तव्यः, इतरवत्—यथेतरच सद्विद्यायां भूयोभूय प्रश्नैश्च प्रतिवचनैश्च तदेव सद्ब्रह्माव्यवच्छिद्यते न पुनः पूर्वप्रतिपन्नाद् गुणाद्गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते तद्वत्, तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यमवगम्यत इति चेत्तत्राह—

## सू० सैव हि सत्यादयः ॥ ३७ ॥

सैव हि सच्छब्दाभिहिता परमकारणभूता परा देवतैव "सेयं देवतैक्षत तेजः परस्यां देवतायामिति प्रकृता यथा सोम्य मधुमधुकृतो निस्तिष्ठन्ती"त्यादिषु पर्यायेषु सर्वेषूपपाद्यते, यतः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेति प्रथमपर्यायोदिताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते। केचित्तु व्यतिहारो विशिंषन्ति हीतरवत् सैव हि सत्यादय इति सूत्रद्वयमधिकरणद्वयं वर्णयन्ति ।

टी० "सर्वप्राणी"ति, अतः कहोलप्रश्नस्य व्याहृत्तिवैशद्यार्थत्वदर्शनात् व्याहृत्तिप्रतीतिसिद्ध्यर्थं व्यावर्तकधर्मभूयस्तया व्याहृत्तिबुद्धिातिशयार्थमित्यर्थः । एवं धर्मभेदेन च रूपभेदाशङ्काकृतोविद्याभेदो निरस्तः अथ दृष्टान्ते विद्यैक्यं स्थापयिष्यन् सूत्रमवतारयितुं शङ्कामाह "तत्रा-

पी''ति, । सू· सैव हि सत्यादयः ॥ ३७ ॥ सैवु हीति सेति निर्देशः सेयं देवतैवेतेति सद्विद्यावाक्यानुरोधादिति भावः । उपपाद्यते—प्रश्नप्रतिवचनमुखेन प्रतिपाद्यत इत्यर्थः । तत्रापि कारणभूतायाः परस्या देवताया एवोपास्यत्वमुपपादयति ''यत''इति, परमकारणत्वविशिष्टदेवतैवोपास्या कारणत्वोपयोगिगुणानां सत्यत्वात्मत्वजीवविशेषान्तर्यामित्वादिगुणानां प्रतिपर्यायमावृत्तत्वेन तत्र तात्पर्यादित्यर्थः । परोक्तप्रकारमनूद्य दूषयति ''केचि''त्विति, तस्य कथमर्थं वर्णयन्तीत्यत्राह—

श्रु० तच्च दूवें ॥ त्वं वा ऽहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ यो ऽसौ सोऽहमिति वाक्ये जीवपरयोर्व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यत इत्याहुः तत्सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वं तत्त्वमसीत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयं, तत्तु वक्ष्यति ,'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे''ति न च सर्वात्मत्वानुसन्धानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वानुसन्धानं, जीवे च परब्रह्मत्वानुसन्धानं तथ्यं सम्भवति उत्तरेण च सूत्रेण स योऽह वै तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य तद्यत्सत्यमसौ स आदित्यो य एष तस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्नित्यादिवाक्यप्रतिपादितोपासनस्य चैक्यं प्रतिपाद्यत इति तदप्ययुक्तम्, उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव न वा विशेषादित्यनेन प्रतिपादितत्वात् । न च द्वयोरनयोर्व्याहृत्यादिशरीरकत्वेन

रूपवतोर्हन्ति पाप्मानं जहाति च य एवं वेदेति च पृथक्संयोगचोदनात्रतोर्हेयोरुपासनयोः स योऽह वै तन्महद्यत्तं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमांल्लोकानिति संयोगरूपादिमत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदः सम्भवति ।

टी० "तत्रे"ति, सोऽपि वक्तव्य एवेत्यत्राह "तत्तु वक्ष्यति"इति, ननु सर्वत्र प्रसिद्धोपदेशादिति जगत्तादात्म्यपरवाक्यविषयम् आत्मेतीत्यादिकन्तु जीवतादात्म्यपरं नात्र सर्वात्मभाव उच्यते अपि तु जीवब्रह्मणोरन्योन्यभावारोपणमिति इति चेत् तत्राह "न चे"ति, तथ्यं न सम्भवतीति गरुडादिध्यानवदमद्दारोपणं चेन्न न तदपवर्गोपायः, तत्त्वज्ञानं ह्यपवर्गोपाय इति भावः । त्वं वा अहमस्मि इत्यादेरयमर्थः-त्वं वाऽहमस्मीति त्वं-शब्दबुद्धिविषयः परमात्मैवाहं शब्दबुद्धिविषयः अहं वै त्वमसि अहं-शब्दबुद्धिविषय एव त्वं-शब्दबुद्धिविषयः, अस्मि अस्तीति निर्देशावहं त्वं-शब्दप्रयुक्तौ अहं-त्वं-शब्दौ प्रवृत्तिनिमित्तभेदात् ब्रह्मपर्यन्तौ, तद्योऽहमित्यादेरप्ययमर्थः । अनन्तरसूत्रस्य परोक्तार्थमनुवदति "उत्तरेण चे"ति । दूषयति "तदपी"ति, ततः किमित्यत्राह "न चे"ति, जहाति च शरीरमित्यध्याहारः, प्रथमं द्वयोरिति पदं वाक्यपरं द्वितीयं तूपासनपरं द्वयोर्मध्ये उत्तरवाक्यप्रतिपाद्योपासनयोर्विद्याभेदस्य साधितत्वात् परस्परभिन्नविद्याद्वयेन पूर्ववाक्योदितस्योपासनस्यैक्यं न सम्भवति एकविद्यात्वे साकाङ्क्षतयाऽन्वयः स्यात् पृथक्पृथक्संयोगादीनामुक्तत्वेन निराकाङ्क्षत्वाच्च नैकविद्यात्वमित्यर्थः ॥

सू० न च हन्ति पाप्मानं जहातीति च गुणफलाधिकारत्वं प्रमाणाभावात्, पूर्वेणैकविद्यात्वं प्रमाणमिति चेन्न इतरेतराश्रयत्वात्, एकविद्यात्वे निश्चिते सति पूर्वफलस्यैव

प्रधानफलत्वेनोत्तरयोः फलयोर्गुणफलत्वं, तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात् पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमित्येवमादिभिर्यथोक्तप्रकारमेव सूत्रद्वयम् ॥

अन्तरत्वाधिकरणं समाप्तम् ॥

टी० न चेति गुणफलम् अङ्गफलं प्रमाणाभावात् हेत्वभावात्, उत्तरयोः फलयोः पापहननशरीरप्रहाणयोः संयोगभेदाभावात् प्रधानफलसंयोगभेदाभावात् इत्येवमादिभिरित्यादि-शब्देन स्वोक्तार्थोपपत्तयोऽभिप्रेताः । एवं व्यतिहार इत्यादिसूत्रद्वयस्य योजनान्तरं निरस्तम् । आद्यसूत्रस्य योजनान्तरं परैः कृतं ते ह्यन्तराभूतग्रामवत् स्वात्मन इति सूत्रं भङ्क्त्वा सिद्धान्तविषयं वर्णयन्ति अत्र द्विराम्नानाविशेषादविशेषगुणश्रवणान्यायेन विद्यानानात्वं पूर्वपक्षीकृत्य स्वात्मनो विद्यैक्यं स्यात्, न हि द्वौ सर्वान्तरौ सम्भवतः तदा ह्येकस्य सर्वान्तरत्वमापेक्षिकं स्यात्, यथा भूतग्रामे पृथिव्यादावबादीनामापेक्षिकमन्तरत्वमिति वैशद्यार्थं शङ्काविशेषनिरासार्थं च द्विराम्नानसम्भव इति सिद्धान्तयन्ति, अत्र व्यवहितान्वयोऽध्याहारबाहुल्यं च अस्मिन्मते हि प्रतिवचनशब्दमात्रमध्याहार्यम् अन्यथा भेदानुपपत्तिरिति चेदित्यपि न घटते अन्यथा-शब्दो हि प्रकृतादन्यथात्वं ब्रूते सिद्धान्तस्य प्रकृतत्वे सत्यन्यथा-शब्दः पूर्वपक्षविषयो भवितुमर्हति ततश्चानभ्युपगम्यमाने विद्याभेदे द्विराम्नानानुपपत्तिरिति व्याख्यानमस्वरसं विद्यैक्यानभ्युपगम इति हि स्वरसार्थः, तदा चाम्नानभेदानुपपत्तेरिति हेतुर्न घटते तस्मादिति चेदित्यन्तस्य पूर्वपक्षविषयत्वं तत एवाखण्डितत्वम् च युक्तं, भूतग्रामवदिति पदस्य एको देव इति श्रुत्यन्तरोक्तरूपभूतान्तरात्मत्वनिदर्शनपरत्वेन योजनान्तरमप्यनुपपन्नं सिद्धान्तसूत्रत्वानुपपत्तेरेव, व्यतिहार इत्यादिसूत्रयोरधिकरणान्तरद्वयविषयत्वनिरासः कण्ठोक्तः ॥ अपरे तूभयत्र प्रतिपाद्यभेदसमर्थनपरमधिकरणमिच्छन्तो जीवप्रतिपादनस्य ब्रह्मोपासनार्थतया तत्र पर्यवसानात् विद्यैक्यं फलमिति वदन्ति तदयुक्तं पूर्वत्राप्युक्तहेतुभिः परमात्मपर-

त्वसिद्धेर्जीवस्य प्रतिपाद्यत्वायोगात् स्वात्मनोऽन्तरा नान्यः सम्भवति तदा भूतग्रामवदात्मेतिकत्वं स्यात्, अत उपदेश्यभेदानुपपत्तिरिति चेत् न उपदेशभेदवदुपदेश्यभेदेन भवितव्यमुपदेशद्वयानर्थक्यादिति योजनाऽपि क्लिष्टा अश्रुतनञोऽध्याहारात् । अन्ये तु सम्भूत्युपासनेऽभयेषां प्राणित्वा-दीनामशनायाद्यतीतत्वादीनां च समुच्चयार्थं ब्रह्मैकत्वविषयत्वेन विद्यैक्यसमर्थनपरत्वमाहुः । तत्र समुच्चयनिश्चयार्थत्वमयुक्तं सम्भूतिविना-शसमुच्चयस्याप्रामाणिकत्वात्, व्यतिहार इत्यादिसूत्रद्वयस्य तत्कृतयो-जना च भाष्येणैव निरस्ता । तथाऽहं सोऽसौ योऽसौ सोऽहमिति सामा-नाधिकरण्यं च घटशरावशब्दयोरिवांशद्वयवाचित्वादयुक्तम्, अत एव ब्रह्मणो जीवत्वे ऽहङ्कारहृद्देशदिक्कालादीनां ब्रह्मणि प्रतिपत्तिः, जीवस्य ब्रह्मत्वे तु जीवस्य ज्ञानानन्दैश्वर्यादीनां प्रतिपत्तिः प्रयोजनमिति चायुक्तं घटशरावयोरिव परस्परासाधारणगुणानामन्यत्रानुपपत्तेः साधार-णगुणानां च द्रव्यत्वादीनामिव यत्तद्युष्मदस्मत्पदसामानाधिकरण्यप्र-तिपाद्यत्वाभावाच्च ॥ अन्तरत्वाधिकरणं समाप्तम् ॥

कामाद्यधिकरणम् ।

## सू० कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

वृ० छान्दोग्ये श्रूयते “ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्ड-रीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्त-स्तदन्वेष्टव्य”मित्यादि, वाजसनेयके च “स वा एष महा-नज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिंश्शेते सर्वस्य वशी सर्वस्येशान” इत्यादि, तत्र संशयः किमनयोर्विद्याभेदः ? उत ने ? ति, किं युक्तं भेद इति, कुतः रूपभेदात्, अपहतपाप्मत्वादिगुणाष्टक-विशिष्ट आकाशः छान्दोग्ये उपास्यः प्रतीयते, वाजस-नेयके त्वाकाशे शयानो वशित्वादिगुणविशिष्ट उपास्यः

प्रतीयते, अतो रूपभेदाद्विद्याभेद इति प्राप्ते प्रचक्षाणे-न भेद इति, कुतः रूपाभेदात्, इतरच्च तत्र च कामादीव चि रूपम् ।

टी० सू० कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥ प्राणितृत्त्वादीनामशनायाद्यतीतत्वादीनां च धर्मिभेदाभावाद्विद्यैक्यं समर्थितम् अत्र तु गुणाष्टकस्य वशि'त्वादीनां च धर्मभेदशङ्कया सङ्गतिः किमत्र विद्याभेद? उताभेद? इति किं छान्दोग्ये अपहतपाप्मत्वादिविशिष्टविषयमुपासनं वाजसनेयके वशित्वादिविशिष्टविषयम्? उतोभयत्रापहतपाप्मत्वादिविशिष्टविषय?मिति किं वाजसनेयके सत्यसङ्कल्पत्वसहचरादपहतपाप्मत्वादीनां प्रतिपत्ति? रस्ति ने?ति, यदा नास्ति प्रतिपत्तिः तदा रूपभेदाद्विद्याभेदः, यदा त्वस्ति प्रतिपत्तिः तदा रूपाभेदाद्विद्यैक्यम्, अस्मिन्नधिकरणे व्योमातीतनिरासः फलितो भविष्यति आकाशान्तर्वर्त्तिनो गुणस्यैनाकाशस्य परमात्मत्वं दहराधिकरणे दर्शितम्, आकाशान्तर्वर्त्तिनः स्वतन्त्रवस्तुत्वे सत्याकाशस्य प्रसिद्धाकाशत्वमत्रोच्यत इति भिदा । वशित्वादीत्यादि-शब्देन स वा एष महानज इत्युक्तदहरत्वविरोधिमहत्त्वं च विवक्षितं गुणाष्टकविशिष्टः-वशित्वादिगुणविशिष्ट इति धर्मभेद उक्तः, आकाशः-आकाशे शयान इति धर्मिभेद उक्तः एवं धर्मितो धर्मतश्च रूपभेदाद्विद्याभेद इत्यर्थः, इति प्राप्त इति इतरत्रेति पदव्याख्यानार्थं धर्ममात्रस्योपास्यत्वव्यावृत्त्यर्थं चाह—

भू० वाजसनेयके छान्दोग्ये च सत्यकामादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः । कुत एतदवगम्यते आयतनादिभ्यः—हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावदुभयत्र सैव विद्येति प्रत्यभिज्ञायते, वशित्वादयश्च वाजसनेयके श्रुताः छान्दोग्ये श्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसङ्कल्पत्व-

१ वशित्वादिगुणस्य वेति पा० ।

स्य विशेषा एवेति सत्यसङ्कल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति, अतो रूपं न भिद्यते, संयोगोऽपि परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते अभयं वै ब्रह्म भवतीति ब्रह्मप्राप्तिरूपो न भिद्यते, आकाश–शब्दः छान्दोग्ये परमात्मविषय इति, दहर उत्तरेभ्य इत्यत्र निर्णीतं, वाजसनेयके त्वाकाशे शयानस्य वशित्वादिश्रवणात्तस्य शयानस्य परमात्मत्वे सति तदाधाराभिधायिन आकाशशब्दस्य तस्यान्ते सुषिरं सूक्ष्ममिति हृदयान्तर्गतस्य सुषिर–शब्दवाच्यस्याकाशस्याभिधायकत्वमवगम्यते, अतो विद्यैक्यम् । अथ स्यात् यदुक्तं वाजसनेयके वशित्वादिभिः सह सत्यकामत्वादिसद्भावोऽवगम्यत इति तन्नोपपद्यते वशित्वादीनामेव तत्र परमार्थतः सद्भावाभावात्, तदभावश्च मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति एकधैवानुद्रष्टव्यम् एतदप्रमेयं ध्रुवमिति प्रकृतेन वाक्येन, स एष नेति नेत्यात्मेति वक्ष्यमाणेनोत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेषत्वप्रतीतेरवगम्यते, अतो वशित्वादयोऽपि स्थूलत्वादिवन्निषेध्या इति प्रतीयन्ते, अत एव छान्दोग्येऽपि सत्यकामत्वादयो न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते अतोऽपारमार्थिकत्वादेवंजातीयकानां गुणानां मोक्षार्थोपासनेषु लोप इति, तत्राह–

टी० "वाजसनेयक"इति, आकाश-शब्द इत्यादि आकाश-शब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात् तदेव सर्वत्र स्वतः प्राप्तं तत्र परमात्मासाधारणगुणश्रवणं प्रसिद्धिप्राचुर्यस्यापवादकं तच्छान्दोग्येऽस्तीति तत्राकाशशब्दस्य परमात्मपरत्वमुक्तं, वाजसनेयके तु तदभावात् प्रसिद्धिप्राचुर्यमेवानुविधीयते इत्यर्थः ॥ अनन्तरसूत्रशङ्कामाह "अथ स्यादि"ति, छान्दोग्ये दहरविद्या सगुणविषया फलविशेषार्थगुणप्रतिपादनपरत्वात्, इयं तु निर्गुणविद्या अतो न विद्यैक्यमित्यर्थः ॥

## सू० आदरादलोपः ॥ ३९ ॥

भू० ब्रह्मगुणत्वेन प्रमाणान्तरा[1]प्रतिपन्नानां गुणानामेषां सत्यकामत्वादीनां तस्मिन् यदन्तस्तदन्वेष्टव्यमेष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सर्वस्य वशी सर्वस्येशान एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये"त्यादिभिरनयोः श्रुत्योरन्यानुच मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशादेषामलोपः, अपि तूपसंहार एव कार्यः, छान्दोग्ये तावत् "तद्य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवती"ति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनं विधाय "अथ य इह आत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामाँस्तेषां सर्वेषु लोकेष्वकाम[2]चारो भवतीति अवेदननिन्दा क्रियमाणा गुणविशिष्टवेदनस्यादरणीयतां दर्शयति, तथा वाजसनेयके

१ प्रमाणान्तराप्राप्तानामिति पा० ।
२ तेषां सर्वेषु लोकेष्वकामचारोभवतीति पा० ।

"सर्वस्य वशी सर्वस्येशान एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल इति भूयोभूय ऐश्वर्योपदेशात् गुणेष्वादरः प्रतीयते, एवमन्यत्रापि

टी० आदरादलोपः ॥॰३९ ॥ आदरं दर्शयति छान्दोग्य इत्यादिना, प्रमाणान्तराप्राप्तानामित्यनेन निषेधार्थमनुवादत्वं निरस्तम् । अपूर्वत्वरूपतात्पर्यलिङ्गं चोक्तं, यथा अपूर्वता तद्रूपतो विपर्ययतश्चापरिच्छित्तिरूपा तथा फलमपि स्वीकारास्वीकारयोरनुकूलप्रतिकूलरूपं तदुभयमपि कामचाराकामचाराभ्यामुक्तं भूयोभूय इत्यभ्यासो दर्शितः, अवेदननिन्दाक्रियमाणा गुणविशिष्टवेदनमुक्त्वा तद्विषयावेदननिन्दा क्रियमाणेत्यर्थः, एवं सत्यकामत्वादीनामपूर्वत्वं वेदने फलश्रवणं वेदनफलकथनावेदननिन्दार्थमावृत्तिरेष सर्वेश्वर इत्याद्यावृत्तिश्च तस्मिन् यदन्तस्तदन्वेष्टव्यं तस्मिन् कामाः समाहिता इत्युपक्रमोपसंहारौ अर्थवादः अपूर्वत्वेन विहितस्य निषेधायोगरूपोपपत्तिरित्यादिभिरादरो दृश्यत इत्यर्थः । वाजसनेयकेऽप्येवमादिकमादरलिङ्गं द्रष्टव्यमित्यभिप्रायेणाह "तथे"ति ।

मू० न च मातापितृसहस्रेभ्योऽपि वात्सल्य[1]परं शास्त्रं प्रतारकवदपारमार्थिकान्निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नानादरेणोपदिश्य संसारचक्रपरिवर्त्तनेन पूर्वमेव बम्भ्रम्यमाणान् मुमुक्षून् भूयोऽपि भ्रमयितुमलं, नेह नानाऽस्ति किञ्चन एकधैवानुद्रष्टव्यमिति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधाऽनुदर्शनं विधाय अब्रह्मात्मकत्वेन पूर्वसिद्धनानात्वदर्शनं निषेधतीत्ययमर्थः प्रागेव प्रपञ्चितः, स एष नेति नेत्यात्मेत्यत्र चेति-शब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चा[2]प्रकारं परामृश्य न तथाविधं ब्रह्मेति सर्वा-

१ वत्सलतरमिति पा॰ ।
२ प्रपञ्चाकारं परामृश्येति पा॰ ।

त्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते, तदेव चानन्तरमुपपादयति "अग्राह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते अव्यथितो न व्यथते न रिष्यती"ति प्रमाणान्तरग्राह्यविसजातीयत्वात् प्रमाणान्तरेण न गृह्यते विशरणीयविसजातीयत्वात् न विशीर्यते, एवमुत्तरत्रानुसन्धेयम् ॥

टी० "न च मातापितृसहस्रेभ्य इति, गुणानां प्रमाणान्तराप्रतिपन्नत्वात् विधेयार्थमनुवाद इति वक्तुमशक्यम् इत्युक्त, गुणकथनं विप्रलिप्सया चेत् गुणनिषेधोऽपि तथा स्यात्, हितोपदेशप्रवृत्तशास्त्रस्य विप्रलम्भकत्वमयुक्त चेत् तद्गुणेष्वपि तुल्यं, फलविशेषार्थमविद्यमानगुणारोपणमिति चेत् गुणनिषेधोऽपि फलाय स्यादिति गुणान्वयो वास्तवः स्यात् निर्गुणवेदनस्यापवर्गोपायरूपत्वाच्चारोपणमिति चेत् सगुणवेदनस्याप्यपवर्गोपायरूपत्वाच्चासदारोपणमिति सगुणवेदस्यापवर्गोपायत्वकथनं विप्रलिप्सामूलमिति चेत् नैर्गुण्यकथनमपि तथा स्यात्, हितोपदेशप्रवृत्तशास्त्रस्य विप्रलम्भकत्वमयुक्तमिति चेत् तद्गुणप्रतिपादनेऽपि तुल्यमित्यभिप्रायेणापारमार्थिकानित्यादिविशेषणमुक्तं, नेह नानाऽस्तीत्यादेः कोऽर्थ इत्यपेक्षायां प्रतिबन्दित्वेन पूर्वग्रन्थाभिप्रेतस्य गुणनिषेधस्य पराभिमतनिर्विशेषपरत्वव्युदसनार्थं सामान्यनिषेधस्य विहितविशेषव्यतिरिक्तविषयत्वाच्चेह नानाऽस्तीत्यादेरब्रह्मात्मकनानात्वनिषेधपरत्वमाह "नेहे"त्यादिना, एकधैवानुद्रष्टव्यं केषांचित् कदाचित् स्वनिष्ठत्वमपरतन्त्रत्वं वा न मन्तव्यम् । अपि तु परमात्मपरतन्त्रतयैकरूप्यमेव द्रष्टव्यमित्यर्थः । स एष नेति नेतीत्यस्य वाक्यस्य प्रकरणानुगुण्यात् प्रपञ्चसाजात्यनिषेधपरत्वमुक्तम् । अथात आदेशो नेति नेतीत्यस्य वाक्यस्येयत्तानिषेधपरत्वमपि तत्प्रकरणानुगुण्यादुक्तम् इहोक्तार्थस्य प्रकरणानुगुण्यं दर्शयन्नग्राह्य इत्यादिकं व्याचष्टे "प्रमाणान्तरे"ति, ।

सू० छान्दोग्येऽपि "नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते ए-

तत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता" इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन्सत्यकामत्वादयो विधीयन्ते। ननु एवमपि "तद्य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति स यदि पितृलोककामो भवती" त्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफलसम्बन्धश्रवणान्मुमुक्षोर्ब्रह्मप्रेप्सोर्न सगुणं ब्रह्म उपास्यं, परविद्याफलं च परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इतीदमेव, अतः सत्यकामत्वादयो ब्रह्म प्रेप्सोर्नोपसंचार्या इत्यत उत्तरं पठति—

**सू० उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥**

उपस्थितिरुपस्थानं ब्रह्मोपसम्पत्तिः उपस्थिते ब्रह्मोपसम्पन्ने सर्वबन्धविनिर्मुक्ते स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मन्यत एवोपसम्पत्तेरेव हेतोः सर्वेषु लोकेषु कामचार उच्यते परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती"ति, तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते ।

टी० "छान्दोग्येऽपीति अस्य जरया न ब्रह्म जीर्यतीत्यर्थः ॥ अनन्तरसूत्रशङ्कामाह "नन्वि"ति, सर्वलोककामचारादिकं संसारिकफलं स्वेन रूपेणाभिनिष्पद्यत इति साक्षान्मुक्तिलं स्यात् तद्विलक्षणत्वस्य श्रवणादित्यर्थः ॥ सू० उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥ अत एवोपसम्पत्तेरेव हेतोरिति, उपसम्पत्त्यनन्तरं सर्वलोककामचारकथनाद्धेतुत्वमभिप्रेतमित्यर्थः ।

ब्रह्मानुभवतो जीवस्य सर्वलोककामचाराद्यपेक्षा कथं स्यादित्यत्राह "तदे-तच्चतुर्थे"इति, । निगमयति–

सू० अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वान्मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ॥ कामाद्यधिकरणं समाप्तम् ॥

टी० "अत"इति, परे तु छान्दोग्यस्थसत्यकामत्वादिगुणजातं वाजसनेयके स वा एष महानित्यत्र सम्बध्यते, तत्र श्रुतं वशित्वादिकं छान्दोग्ये सम्बध्यते आयतनत्वसेतुत्वादिसामान्यात् छान्दोग्ये सगुणविद्या विवक्षिता, वाजसनेयके निर्गुणविद्या, असङ्गो ह्ययं पुरुषः नेति नेतीत्यादिश्रवणात्, अतः छान्दोग्ये वशित्वादिसम्बन्ध उपासनार्थः । अन्यत्र सत्यकामत्वादिसम्बन्धस्तुतिपौष्कल्यार्थः उभयविधाकाङ्क्षासम्भवात् ब्रह्मणस्तत्तद्गुणसम्बन्धयोग्यत्वादायतनत्वादिसाम्यबाहुल्याच्चेति तदयुक्तं निषेधस्य विहितगुणविषयत्वाभावेन सगुणनिर्गुणविभागाभावात्, नेति नेतीत्यत्रापि अगृह्यो न हि गृह्यते असङ्गो न हि सज्यते अव्यथितो न व्यथते नरिष्यतीत्यादिनिषेधानां विशोको विजरो विमृत्युरित्यादीनां च तुल्यार्थत्वाच्च आयतनत्वादिसाम्येन स्तुत्याकाङ्क्षया सम्बन्धश्चानुपपन्नः, तथा सति शाण्डिल्यविद्याऽऽम्नातानां भारूपत्वसर्वकामत्वादीनामपि सम्बन्धप्रसङ्गात्. तत्रापि ह्येष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या अवाक्यनादर इति हृदयायतनत्व महत्त्वं निषेधस्त्वं च समानम् । अस्तु सम्बन्ध इति चेत् परस्परभिन्नसर्वविद्योपात्तगुणानां सर्वत्र स्तुत्यर्थतया सम्बन्धप्रसङ्गः कारणत्वसत्यज्ञानात्मत्वविभुत्वनित्यत्वपतित्वादिषु केनचिद्रूपेण साम्यस्य सर्वासु विद्यासु सद्भावात् आकाङ्क्षायाश्च निवारकाभावात्, न ह्येतावता गुणेन स्तुतिरलमिति व्यवस्थापकमस्ति स्वप्रकरणस्थगुणेन नैराकाङ्क्ष्यं चेत् वाजसनेयकेऽपि तुल्यम् ॥ अपरे तु विद्यैक्यं सिद्धान्तयन्त उपक्रमभेदेऽपि विद्याभेदयुक्तिमाहुः । परमात्मलिङ्गवत् प्रकरणेऽप्यस्य विशेषणतया वा व्यावर्त्तनतया वा मोक्षप्रदत्वलक्षणैश्वर्योपायिकतया वा

जीवप्रतिपादनस्य सङ्गतेर्मुहुः सूचितत्वात् भाष्ये तदनुपन्यासः ॥ अन्येतु दहरविद्येति संज्ञातदभावौ च भेदहेतुमाहुः विरोधिसंज्ञान्तराभावात् अव्यपदेशमात्रं न विद्याभेदायालमित्यनादरः । आख्याभेदो हि विद्याभेदसाधकः अपरेऽप्येते आदरादित्याद्यनन्तरसूत्रद्वयमधिकरणान्तरं प्राणाग्निहोत्रविषयं वर्णयन्ति, तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यांमाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेत्यारभ्य य एतदेवं विद्वानग्निहोत्रं जुहोतीति प्रतिपादितं प्रथमोपनतभक्तद्रव्यकमेव प्राणाग्निहोत्रभोजनलोपेऽपि न लुप्येत किंत्वबादिना प्रतिनिधिनापि निर्वर्त्यते, अतिथिभोजनेन भक्तक्षये प्राणाग्निहोत्रलोपमाशङ्क्य तत्परिहाराय हि प्राथम्यविधिः, जाबालश्रुतौ पूर्वोऽतिथिभ्योऽश्नीयाद् यथा वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तदित्यतिथिभोजनाप्राथम्यनिन्दनेनादरदर्शनाच्च, न हि प्राथम्यलोपासहा श्रुतिः प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेत, न च भुजिप्रयुक्तभक्तसंयोगात् भोजनलोपे लोपः तत्त्व कौण्डपायिनामग्निहोत्र इवाग्निहोत्रस्य नैयमिकाग्निहोत्रगतनैयमिकाग्निहोत्रगतपयः प्रभृत्यतिदेशार्थत्वात् पयःप्रभृतिषु प्राप्तेषु द्रव्यनियमार्थत्वात् तद् यद्भक्तमिति वाक्यस्य अतो भोजनाभावात् गुणभूतद्रव्यलोपेऽपि नाग्निहोत्रलोपः आदरादिति पूर्वपक्षं कृत्वा भोजन उपस्थिते होमस्य तदर्थभक्तसाध्यताप्रतीतेर्वाजिनस्यामिक्षादध्यानयनप्रयोजकत्वाभाववत् परार्थद्रव्यसाध्यानां कर्मप्रयोजकत्वाभावात् कौण्डपायिनामग्निहोत्र इव प्राणाग्निहोत्रेऽप्युद्धरणादिधर्मायोगात् अग्निहोत्रशब्दस्य विध्युद्देशगतत्वाभावादास्यमाहवनीयमिति साम्यादिकत्वदर्शनाच्चाग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रधर्मातिदेशार्थत्वाभावेन तद्यद्भक्तमिति वाक्यस्य द्रव्यविशेषविधानार्थत्वाभावात् आदरवचनस्यापि भोजनपक्षे प्राथम्यरूपाङ्गविधानार्थतया होमलोपपरिहारार्थत्वाभावाच्च भोजनलोपे लोप इति सिद्धान्तयन्ति । अन्ये तु द्रव्यदेवतासम्बन्धेनापूर्वकर्मत्वावगमात् न परार्थं द्रव्यनियमात्रविधिः प्राथम्यविधानं चातिथिभोजनेन भक्तक्षये प्राणाग्निहोत्रलोपपरिहारार्थमिति पूर्वपक्षमाहुः अन्यत्तुल्यं तदिदमनुपपन्नं प्राणाहुतिमात्रविषयत्वे विचारस्य

विद्यातदुपयोगिविषयत्वाभावेन पादसङ्गत्यभावात् प्राणाहुतिष्वग्निहोत्रदृष्टिविषयत्वेऽनन्तराधिकरणन्यायेन उद्गीथाद्युपासनानामिवानियमस्य सिद्धतया कृतकरत्वाच्च आमिक्षायागे नियतमपि वाजिनं दध्यानयनादेरप्रयोजकमित्यनियतस्याग्निहोत्रदृष्टिचिन्तनस्य प्रयोजकत्वं हि दूरोत्सारितं पूर्वपक्षहेत्वभावाच्च नारम्भणीयता, न चादरवचनं हेतुः तस्य साधकत्वाप्रतीतेः पूर्वपक्षहेत्वभावाच्च नारम्भणीयता नचादरवचनं हेतुः तस्य साधकत्वाप्रतीतेः । पूर्वपक्षहेतवोऽपि हि यावद्दौर्बल्यनिश्चयं साध्यसाधकतया प्रतीयन्ते किमतिथिभोजनप्राथम्यनिन्दनं हेतु? उत प्राणाग्निहोत्रप्राथम्यं न प्रथमः, निन्दनस्य निन्दितविपरीतार्थविधेयताऽवगमकत्वात्, अपगोरणनिन्दा हि तन्निवृत्तेर्विधेयतां गमयति, अतोऽतिथिभोजनप्राथम्यनिन्दनं स्वामिभोजनप्राथम्यं गमयेत् न तु भक्तालाभेऽपि निष्याक्षतां, न द्वितीयः प्राथम्यविधानस्यानुष्ठानदशायामप्राथम्यमात्रनिवर्तकत्वात्, परार्थद्रव्यसाध्यस्याप्रयोजकत्वं च वाजिनकर्ममप्तमपदपांसुग्रहणादिषु पूर्वकाण्डसिद्धं पदकर्माप्रयोजकत्वं नयनस्य परार्थत्वादिति, अतोऽनारम्भणीयता ॥ कामाद्यधिकरणं समाप्तम् ॥

तन्निर्धारणानियमाधिकरणम् ।

## सू० तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥

मू० ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादीनि कर्माङ्गाश्रयाण्युपासनानि कर्माङ्गभूतोद्गीथादिमुखेन जुह्वादिमुखेन पर्णतादिवत् कर्माङ्गत्वेन निरूढानुष्ठानानीत्युद्गीथाद्युपासनसम्बन्धिनो यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्भवतीति ।

टी० मू० तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥ सत्यकामत्वादीनामुपसंहार्यत्वमुक्तम् एवमुद्गीथाद्युपासनानामपि नियमे-

"संख्याया अतिशदन्तायाः कन्"। 'पञ्चकः पट[1] इति'। लौकिक्याः संख्याया उदाहरणम्। 'बहुक इति'। पारिभाषिक्याः। 'चात्वारिंशत्क इति'। इसुसुक्तान्तात्कः। 'अर्थवतस्तिशब्दस्य ग्रहणादिति'। अर्थवद्ग्रहणपरिभाषया। 'डतेरिति'। इत्यवयवस्य तिशब्दस्येत्यर्थः। 'पर्युदासो न भवतीति'। नह्यसावर्थवान्। 'कतिक इति'। का संख्या परिमाणं येषामिति किमः संख्यापरिमाणे डति चेति डतिः, सप्ततिशब्दे तु सप्तदशदर्थाभिधायिनः सप्तशब्दात्परिमाणोपाधिकादस्येति षष्ठ्यर्थे तिप्रत्ययो भवतीति तिशब्दोऽर्थवान्, एवं नवतिशब्दे, अशीतिशब्दे तु यद्यप्यशीशब्दस्याष्टस्वन्यत्र न दृष्टः प्रयोगः, सास्त्र त्वेषा व्यवस्था, अष्टानामशीभावस्तिश्च प्रत्यय इति, विंशतिशब्दे तु द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्यय इति तिशब्दोऽनर्थक एव, ततश्च ततः कन् भवत्येव विंशतिकः, एवं च कृत्वा विंशतिकात्खः शतमानविंशतिक इति निर्देश उपपद्यते किं तु विंशतित्रिंशद्भ्यां ड्वुनसञ्ज्ञायामित्यसञ्ज्ञायां ड्वुन्विधानात्सञ्ज्ञायामेव कन् भवति, अतिशदन्ताया इत्यत्रान्तग्रहणमेकसप्तत्या क्रीतमित्यत्रापि पर्युदासार्थमन्यथा प्रत्ययग्रहणपरिभाषया न स्यात्॥

"वतोरिड्वा"॥ 'तस्य त्वनेनेति'। चरेष्ट इत्यादिवत् प्रत्ययान्तरं त्विण्[2] न भवति टित्करणसामर्थ्यात्, अस्त्यन्यट्टित्करणस्य प्रयोजनं टित इति ङीब्यथा स्यात्, अत इत्यधिकारे ङीप्, न चैषोऽकारान्तः, टित्करणसामर्थ्यादनदन्तादपि ङीप् स्यात, यथा डित्यभस्याप्यनुबन्धकरणसामर्थ्यात्[3] त्सरज इत्यत्र टिलोपः, एवं तर्हि स्वरितत्वप्रतिज्ञानेन कनोनुकर्षणसामर्थ्यादागमो भविष्यति, अस्त्यन्यदनुवृत्तेः प्रयोजनम्; इटा बाधो मा भूत् कनोऽपि विधिर्यथा स्यादिति, वावचनादेव कन् भविष्यति, इदं तर्हि प्रयोजनं स्यादिट्कनौ वा भवतः पक्षे सामन्यविहितष्ठञि[4]ति,

१ पट इति नास्ति २ पुस्तके।
२ अर्थेष्विति २ पु॰ पाठः।
३ प्रत्ययान्तरविधिर्नेति २ पु॰ पाठः।
४ उपेत्यधिकं २ पुस्तके।
५ भविष्यतीत्यधिकं २ पुस्तके।

तस्माद्व्याख्यानमेव शरणम् । ननु नेह कन्ग्रहणमस्ति यद्यपि प्रकृतं तदपि प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः, वतोरिति पञ्चमी कनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । 'तावत्क इति' । तत्परिमाणमस्य यत्तदेतेभ्यः परिमाणे वतुप्, आ सर्वनाम्नः ॥

"विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्" ॥ 'विंशक इति' । ति विंशतेर्डितीति तिशब्दस्य लोपः, अतो गुण इति पररूपत्वं, यस्येति लोपस्तु न भवति असिद्धवदत्राभादिति तिलोपस्यासिद्धत्वात् । ननु सुबन्तात्तद्धितोत्पत्तिः, ततश्चान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसञ्ज्ञा भवति तत्कथं पररूपत्वं, या तु ड्वुनमपेक्ष्य भसंज्ञा सा येन नाप्राप्तिन्यायेन स्वादिष्विति या पदसंज्ञा तामेव बाधते न सुप्तिङन्तं पदमित्येतामपि, एतामपि बाधते, कथं, परत्वात्, अत एव सामन्य इत्यादौ नलोपाद्यभावः । 'कथं पुनरत्रेति' । त्रिंशत्कमधिकृत्य प्रश्नप्रतिवचने, विंशतिशब्दात्तु कनः सिद्धिः प्रागेव प्रतिपादिता, यदा तु द्वयोर्दशतोर्विंशभावस्तिश्च प्रत्यय इति पक्षस्तदा विंशतिकमप्यधिकृत्य भवतः ॥

"कंसाट्टिठन्" । कंसशब्दोऽयं कांस्यपात्रवाची परिमाणशब्दो गृह्यते पूर्वोत्तरैः परिमाणशब्दैः साहचर्यात्, न लोहविशेषवचनो नाप्युग्रसेनसुतवचन इति दर्शयति । 'ठञोऽपवाद इति' । 'इकार उच्चारणार्थ इति' । एवं च प्रक्रियालाघवाय टिकनेव वक्तव्यः, तथा तु न कृतमित्येव । 'अर्द्धिक इति' । अर्द्धशब्दः कार्षापणस्यार्द्धे निरूढ इति भागवदपेक्षया ऽसामर्थ्यं नाशङ्कनीयम् । अपर आह । प्रकरणादिवशेन भागविशेषे निश्चिते सति नासामर्थ्यमिति ॥

"शूर्पादञन्यतरस्याम्" ॥ 'ठञोऽपवाद इति' । शूर्पशब्दस्य परिमाणवाचित्वात्, यद्यपि परिपवनविशेषः शूर्पं तथापि विशिष्टसंस्थानं धान्यादेः परिमाणमपि, शूर्पपरिमितो वा व्रीह्यादिः शूर्पशब्देनोच्यते ॥

"शतमानविंशतिकसहस्रवसनादण्" ॥ 'ठक्ठञोरपवाद इति' । शतमानं परिमाणं सहस्रं सङ्ख्या ताभ्यां ठञोऽपवादः, विंशत्या क्रीतं विंश-

तिकं संज्ञाशब्दोयम्, असञ्ज्ञायां विंशतित्रिंशद्भ्यां ड्वुनसञ्ज्ञायामिति ड्वुना भवितव्यं, सा यदि परिमाणस्य संज्ञा तदा ततोपि ठञो पवादः, अथ त्वर्थान्तरस्य ततष्ठकः, वसनशब्दात्तु ठक एव ॥

"अध्यर्द्धपूर्वद्विगोर्लुगसञ्ज्ञायाम्" ॥ अध्यारूढमर्द्धमस्मिन्नित्यध्यर्द्धं, प्रादिभ्यो धातुजस्येति बहुव्रीहिः । अध्यर्द्धपूर्वद्विगोरिति समाहारद्वन्द्वः, सौत्रः पुंल्लिङ्गनिर्द्देशः । 'तस्मादध्यर्द्धपूर्वात्प्रातिपदिकाद्विगोश्च परस्येति' । तेनाध्यर्द्धपूर्वद्विगोरिति पञ्चम्याश्रितेति लक्ष्यते, यद्येवं द्विगोर्लुकि तन्निमित्तग्रहणं, द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग् भवतीति वक्तव्यं, द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं द्विशूर्पेण क्रीतं द्विशौर्पिकमित्यत्र द्वितीयस्य मा भूत्, तथार्थविशेषासंप्रत्यये तन्निमित्तादपि यत्र तद्धितार्थेद्विगुना सहार्थो न भिद्यते तत्रातन्निमित्तादपि, स तद्धितो यस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुग्भवतीति वक्तव्यं, द्वयोः शूर्पयोःसमाहारो द्विशूर्पी, द्विशूर्प्या क्रीतमित्यपि विग्रहे द्विशूर्पमित्येव यथा स्यात्, तस्माद् द्विगोरिति नैषा पञ्चमी, का तर्हि, षष्ठी, द्विगोर्यस्तद्धितः, कश्च द्विगोस्तद्धितो यस्तस्य निमित्तं यस्मिन् द्विगुर्भवति, द्विशूर्प्या क्रीतमित्यत्र त्वनभिधानात्प्रत्ययो न भविष्यति, उभे शब्दरूपे हि नः साध्ये, द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं द्विशूर्प्या क्रीतमिति, तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रह एव द्विशूर्प्या क्रीतमिति न तु वृत्तिरनभिधानात्, अपरेण विग्रहश्च वृत्तिश्च द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पमिति, अश्वविकल्पायेन, व्याख्यातो ऽश्वविकल्पायः । इदं तावदर्थतत्त्वं, द्विगोर्लुगनपत्यइत्यत्र च वृत्तिकारेणाप्येवमेव व्याख्यातम्, इह तु तदनुसारेण गम्यमानत्वाच्चैवं विविच्य व्याख्यातं, यस्य तद्धितस्य लुगिष्यते सोपि द्विगोः पर इत्येतावता द्विगोः परस्येत्युक्तम् । 'पाञ्चलोहितिकं पाञ्चकलापिक[1]मिति'*। पञ्च लोहिन्यः परिमाणमस्य पञ्च कलापाः परिमाणमस्येति विगृह्य तद्धितार्थे समासः, तदस्य परिमाणमिति ठञ्, भस्याढे तद्धितइति पुंवद्भावाल्लोहिनीशब्दस्येकारनकार-

१ कापिलकमिति पु० २ पाठः ।

योर्निवृत्तिः, परिमाणविशेषस्य नामधेये एते । 'प्रत्ययान्तस्य विशेषणमसञ्ज्ञायहणमिति'। न तु संनिहितस्यापि द्विगोः, असञ्ज्ञायामिति सप्तमीनिर्देशात्, वार्तिककारस्तु मन्यते द्विगुविशेषणमसञ्ज्ञाग्रहणं पञ्चलोहितपञ्चकलापशब्दावपि द्विगू कृततद्धितलुकावेव संज्ञे ततो नार्थोऽसञ्ज्ञायामिति प्रतिषेधेनेति, तदाह संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्येति, तस्याः संज्ञायाः लोप एव निमित्तमित्यर्थः । 'अध्यर्द्धशब्दः संख्येवेति'। संख्यावाच्येवेत्यर्थः । अध्यर्द्धस्याप्येकादिवत् परिच्छेदहेतुत्वात्, अत एवाध्यर्द्धेन क्रीतमध्यर्द्धकमिति संख्यालक्षणः कन् भवति, अध्यर्द्धरूपमित्यादौ तद्धितार्थे द्विगुश्च । 'क्व चिदिति'। कन्समासोत्तरपदवृद्धिभ्योऽन्यत्र । 'संख्यायाः क्रियाभ्यावृत्तिगणनइति'। यदा सकृत्फलां तां क्रियामभिनिर्वर्त्य[1] तामेव कुर्वन्[2] निवर्त्तते तदा कृत्वसुचो भावादध्यर्द्धं करोतीत्येव भवति ॥

"विभाषा कार्षापणसहस्राभ्याम्"॥ 'अध्यर्द्धसहस्रमिति'। शतमानविंशतिकेति विहितस्याणो लुक्, अलुक्पक्षे संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः, इदानीमेव ह्युक्तम् अध्यर्द्धशब्दः संख्येवेति । 'अध्यर्द्धसुवर्णमिति'। ठञो लुग् न तु ठकः, आर्हादित्यत्र क्रियानिमित्तकस्य परिमाणस्य ग्रहणाद् येषां तु रूढिपरिमाणस्य तत्र ग्रहणं तन्मते ठको लुक् । 'अध्यर्द्धसौवर्णिकमिति'। परिमाणान्तस्येत्युत्तरपदवृद्धिः, तत्र ह्युन्मानस्यापि ग्रहणं शाणप्रतिषेधात्, अध्यर्द्धं कार्षापणस्य द्विगो सहस्रस्येत्येवमत्र यथासंख्यं नेष्यते ॥

"द्वित्रिपूर्वान्निष्कात्"॥ अध्यर्द्धपूर्वग्रहणमुत्तरार्थमनुवर्त्तते, इह तु न संबध्यते द्विगुग्रहणं तु संबध्यते द्वयोर्निष्कं त्रयाणां निष्कमिति षष्ठीसमासे माभूत्, अत्र च व्याख्यानमेव शरणम्, अन्यथा ऽध्यर्द्धपूर्वाद् द्वित्रिपूर्वाच्च निष्कादिति समुच्चयो विज्ञायेत । 'द्विनैष्किकमिति'। प्राग्वतेष्ठञ्, परिमाणान्तस्येत्युत्तरपदवृद्धिः, द्वित्रिभ्यां निष्कादित्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनम् ॥

१ पुनरित्यधिकं २ पुस्तके ।

"बिस्ताच्च" ॥ 'चकारेणानुकृष्यतइति'। तेन चानुकृष्टमुत्तरत्र नानुवर्त्ततइत्युत्तरत्रानुवृत्त्यभाव इति भावः, बिस्तशब्दः परिमाणवाची ॥

"विंशतिकात्खः" ॥ शतमानविंशतिकेत्यणि प्राप्ते तस्य च लुकि खोत्र विधीयते ॥

"खार्या ईकन्" ॥ खारी परिमाणमिति ठञि प्राप्ते तस्य च लुकि ईकन्विधीयते । 'केवलायाश्चेति'। अध्यर्द्धपूर्वद्विगोरित्यधिकारात्केवलाया न प्राप्नोतीति वचनम् । अथाध्यर्द्धपूर्वेति न संबध्येत ततः केवलायामीकनश्चरितार्थत्वादध्यर्द्धपूर्वद्विगोर्लुक् प्राप्नोति, दीर्घोच्चारणं किमर्थं नेकनेवोच्यते सवर्णदीर्घत्वे सति सिद्धं, यस्येतिलोपः प्राप्नोति, इकारोच्चारणसामर्थ्यान्न भविष्यति, अन्यथा कनमेव विदध्यात्, केण इति ह्रस्वत्वे कृते सति सिद्धम् । अवयवः प्रप्नोति, न लक्षणेन पद्काराः अनुस्युः पद्कारैर्नाम लक्षणमनुवर्त्त्यम् ॥

"पणपादमाषशताद्यत्" ॥ 'पद्भावोत्र न भवतीति'। पद्यत्यतदर्थइत्यनेन, किं कारणमित्याह । 'प्राण्यङ्गस्येति'। पादस्य पदाज्यातिगोपहतेष्वित्यत्र तावत्प्राण्यङ्गस्य पादस्य ग्रहणं तस्यैवाज्यादिभिर्गतिवचनैः संबन्धसद्भावात् पद्यतीत्यादावपि तस्यैवानुवृत्तिः । 'इह तु परिमाणमिति'। गृह्यतइति शेषः । पणमाषाभ्यां साहचर्यादिति भावः ॥

"शाणाद्वा" ॥ 'ठञापवादइति'। यद्यप्युन्मानवचनः शाणशब्दस्तथाप्याहीर्दित्यत्र क्रियापरिमाणस्य ग्रहणादस्यापि पर्युदासाट्ठञ एव प्रसङ्ग इति भावः । 'शताच्चेति वक्तव्यमिति'। पूर्वेण नित्ये यति प्राप्ते वचनं, यदभावपक्षे सङ्ख्यालक्षणस्य कनो लुक् ॥

"द्वित्रिपूर्वादण् च" ॥ वार्त्तिके दर्शनात्सूत्रेष्वेतत्प्रक्षिप्तम् । 'त्रैरूप्यं भवतीति'। अण्येकं, यति द्वितीयं, ठञो लुकि तृतीयम् ॥

"तेन क्रीतम्" ॥ 'तेषामिति'। अस्य समर्थविभक्तय इत्यनेनैव संबन्धो न प्रत्ययार्थ इत्यनेन, नहि तेषां प्रत्ययानां प्रत्ययार्थो निर्द्दि-

१ केवलायाश्चेति २ पु० पाठः स एव मुद्रितमूलपुस्तकानुगुणः ।
२ चेत्यधिकं २ पुस्तके ।

श्यन्तद्दत्यन्वयो घटते । ओदनपाकं पचतीतिवद्वा कथं चिदन्वयः । 'तेनेति मूल्यादिति' । मूल्यभूतार्थाभिधायिनः करणे या तृतीया सा चेह समर्थविभक्तिरित्यर्थः । मूलेनानाम्यं मूल्यं, मूल्यं लाभ इत्युक्तम् । इह तु यन्मूलं यश्च लाभस्तदुभयं मिश्रितं मूल्यमित्युक्तम्'। 'अन्यत्रेति' । अमूल्यादकरणे वा या तृतीया तत्रेत्यर्थः । 'अनभिधानादेवेति' । एवं-कारः पौनर्वचनिकः, किं च प्रस्थादयः शब्दा नियतपरिमाणानामर्थानां वाचका न मात्रयापि न्यूनाधिकभावे प्रवर्तन्ते, नहि यथाजलमिति प्रस्थेपि भवति, कुडवेपि भवति यथा वाग्निरिति [1]आघ्राणावपि भवति, दावाग्नावपि भवति यथा वा एको व्रीहिः संपन्न इत्यादौ जात्यात्मना सर्वासां व्यक्तीनामैक्यं प्रतीयते तथा प्रस्थादिषु भवति, तस्मात्तेषु विभ-क्त्यभावे यावतस्ते वाचकास्तावदेव गम्यते, वाक्ये तु प्रस्थाभ्यां प्रस्थै-रिति द्विवचनबहुवचनबलात्तावतानेकस्यावगतिर्भवति । 'द्विकं त्रिक-मिति' । अत्र हि प्रकृतेरेव वाच्ये द्वित्वबहुत्वे विभक्तिस्तु करणत्वमात्रमा-चष्टे, सा च प्रकृतिर्वृत्तावपि विद्यते । 'नह्येकेन मुद्गेनेति' । एकया मु-द्गव्यक्त्येत्यर्थः । जात्याख्यायां त्वेकवचनान्तादपि भवत्येव । ननु यद् निष्केण क्रीतं तस्य निष्को वशो भवति ततश्च सास्यांशवस्नभृतय इत्येव सिद्धः प्रत्ययो नार्थ एतेन, एवं तर्हि यस्य शतं मूल्यं न भवत्यथ च तेन क्रीतं कार्यवशात्तदर्थमिदम् ॥

"तस्य निमित्तं संयोगोत्पातौ"। 'शुभाशुभसूचक इति'। तत्प्रयो-जक इतिवत्षष्ठीसमासः । 'महाभूतानामिति' । पृथिव्यादीनाम् । 'दक्षि-णाक्षिस्पन्दनमिति' । पाञ्चभौतिकशरीरं द्रव्यमेव च क्रियारूपेण परि-णमतइति दक्षिणाक्षिस्पन्दनं महाभूतपरिणामः, तस्य च शुभस्य प्रति निमित्तत्वं ज्ञापकहेतुत्वाद् न तु कारकहेतुत्वात् । 'वातिकमिति' । शमनकोपने एवात्र प्रत्ययार्थौ न तु निमित्तं ताभ्यां विशेष्यते प्रकरणा-दिना च तयोरन्यतरावसायः, संनिपातो वातादीनां युगपदुद्भवः ॥

[1] कारीषाग्नावपि· २ पु· पाठः ।

"गोद्व्यचो ऽसंख्यापरिमाणाश्वादेर्यत्" ॥ 'ठञादीनामिति' । आदिशब्देन ठञो ग्रहणम् । अतद्गुणसंविज्ञानो बहुव्रीहिः, बहुवचनं तु ठञ एवैकस्य विषयबहुत्वमाश्रित्य कृतं, ठञोपवाद इत्यर्थः । किं पुनः कारणमेवं व्याख्यायते, संख्यापरिमाणाश्वादिवर्जिताद्गोद्व्यचष्ठञ एव प्राप्तत्वात् । 'ब्रह्मवर्चसादिति' । ब्रह्मणो वर्चो ब्रह्मवर्चसं वृत्तस्वाध्यायसंपत्, ब्रह्महस्तिभ्यां वर्चस इत्यच् समासान्तः ॥

"पुत्राच्छ च" ॥ कथं पुत्रीयः क्रतुरिति नहि क्रतुः संयोग उत्पातो वा भवति, संयुज्यतेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, येन यागादिकरणेन पुरुषः फलेन संयुज्यते स यागादिरपि संयोगो न केवलं संबन्ध एवेत्यर्थः । एतेन पुरोडाशसत्रं लोक्यमित्यादि व्याख्यातम् ॥

"सर्वभूमिपृथिवीभ्यामणञौ" ॥ संयोगोत्पातौ प्रति यथासंख्यं न भवति, तयोः प्रत्ययार्थविशेषणत्वेन प्रकृतिभ्यां प्रत्ययाभ्यां चासंबन्धात् ॥

"तत्र विदित इति च" ॥ योगविभागो यथासङ्ख्यनिरासार्थ उत्तरार्थश्च ॥

"तस्य वापः" ॥ तस्येति वापापेक्षया कर्मणि षष्ठी न तु कर्त्तरि, तेन देवदत्तस्य वापः क्षेत्रमित्यादौ न भवति ॥

"तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते" ॥ 'दीयतइत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसंबध्यतइति' । तेन वृद्ध्यादीनां बहुत्वेपि बहुवचनं न भवतीतिभावः । प्रत्येकं संबन्धस्तु द्वन्द्ववर्त्तिनां पदानां बुद्ध्या निष्कर्षाल्लभ्यते, एतच्च दीयतइत्यस्य विशेषणस्य वृद्ध्युपक्रमत्वउक्तं, यदा तु यत्तत्प्रथमासमर्थं दीयते चेत्तद्भवतीत्येवमुपक्रम्यते पश्चात्तु किं पुनस्तद्दीयतइत्यपेक्षायां वृद्ध्यादयः संबध्यन्ते तदा न किं चिदवसाध्यम् । 'उत्तमर्णधनातिरिक्तमिति' । उत्तमर्णेन यद्दत्तं धनं तस्मादधिकमित्यर्थः, सञ्ज्ञा,वृद्धिस्तु न गृह्यते आयादिभिः साहचर्यात् । 'उपादानमूलातिरिक्तमिति' । पटादीनामुपादानं तन्त्वादि तस्य मूल-

१ आदीत्यधिकं २ पुस्तके ।

मुत्पत्तिकारणं द्रव्यं तस्मादधिकं पटादि विक्रयेण यल्लभ्यते स लाभः, निर्वेशो भृतिः, रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः संबन्धषष्ठ्या समासः, शुल्कग्रहणं प्रपञ्चार्थम्, तस्याप्यायविशेषत्वात्, तथा च ठगायस्थानेभ्य इति शुल्कस्थानादपि भवति शौल्कशालिक इति, यत्र ग्रामादौ वृद्ध्यादि दीयते तत्र प्रत्ययो विधीयमानः संप्रदाने न प्राप्नोतीत्यत आह । 'चतुर्थ्यर्थउपसङ्ख्यानमिति' । 'सिद्धन्त्विति' । विवक्षातः कारकाणि भवन्तीति संप्रदानस्यैवाधिकरणत्वेन विवक्षितत्वात्सिद्धमिष्टमित्यर्थः । क्व यथेत्याह । 'सर्वमिति' ॥

"पूरणार्द्धाट्ठन्" ॥ 'पूरणवाचिन इति' । पूर्यते येनार्थः स पूरणस्तद्वाचिन इत्यर्थः, एतेन पूरणइत्यर्थस्येदं ग्रहणं न तु प्रत्ययस्येति दर्शयति, यदि तु पूरणग्रहणं स्वर्येत ततः स्वरितेनाधिकारगतिर्भवतीति तस्य पूरणे डडिति पूरणाधिकारविहिता डडादयः प्रत्यया गृह्येरन् यथा-गोस्त्रियोरित्यत्र स्त्र्यधिकारविहिताष्टाबादयः, ततश्च पूरणाद्भागे तीयादन्वित्यनन्ताच्च स्यात्, अर्थग्रहणे ततोपि भवति तदन्तमपि हि पूरणएवार्थे वर्त्तते, स्वार्थिकत्वादनः, तस्मादर्थग्रहणमेव न्याय्यम् । 'ठकृटिठनोरपवाद इति' । पूरणाद्धाद्यीयस्य ठकोपवादः । अर्द्धादप्यर्द्धाच्चेति वक्तव्यमिति टिठनः, स्त्रियां च विशेषः, टिठनि हि सति ङीप् स्यात्, ठनि तु टाप् भवति । 'अर्द्धशब्दो रूपकार्द्धस्य रूढिरिति' । रूपकं कार्षापणं तदीयस्य भागस्यार्द्धशब्दो वाचकत्वेन प्रसिद्ध इत्यर्थः । तेनार्द्धिक इति भागवत्सापेक्षत्वेनासामर्थ्यं नोद्भावनीयमिति भावः ॥

"भागाद्यच्च" ॥ 'भागशब्दादपीति' । न केवलमर्द्धशब्द एवेत्यपिशब्दार्थः ॥

"तद्धरति वहत्यावहति भाराद्वंशादिभ्यः" ॥ 'प्रकृतिविशेषणमिति' । प्रकृतिः प्रातिपदिकं तस्य विशेषणं, विशेषणप्रकारमेव दर्शयति । 'वंशादिभ्य इत्यादि' । 'वंशादिभ्य इति किमिति' । भारान्तादिति कस्मान्नोक्तमिति भावः । अत एव तदन्तं प्रत्युदाहरति । 'व्रीहिभारं वहतीति' । 'भारभूतेभ्यो वंशादिभ्य इति' । ननु वंशादयः

शब्दास्ते कथं भारभूता इत्यत आह । 'भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणमिति'। भारभूतार्थाभिधायित्वाद्भारभूतेभ्यो वंशादिभ्य इत्युक्तमित्यर्थः । सूत्रे तु प्रत्येकं संबन्धादेकवचनम् ॥

"वस्नद्रव्याभ्यां ठन्कनौ" ॥ वस्नशब्देन मूल्यमुच्यते ॥

"संभवत्यवहरति पचति" ॥ 'प्रमाणानतिरेक इति'। आधारप्रमाणादाधेयप्रमाणस्यानाधिक्यमित्यर्थः । तदुपसर्जने च धारणे संभवतेर्वृत्तिरिति सकर्मकत्वम् । 'उपसंहरणमवहार इति' । आधारप्रमाणादाधेयप्रमाणस्य न्यूनतेत्यर्थः, तदुपसर्जने च धारणेऽवहरतेर्वृत्तिः सकर्मकत्वं, सूत्रे स्पष्ट उपसर्गः । 'नास्त्यत्र नियोग इति'। नियोगोऽवश्यंभावः । 'तत्पचतीति द्रोणादण् चेति'। पचतिग्रहणं संभवत्यवहरतीति निवृत्त्यर्थं, द्रोणपरिमिते च व्रीह्यादौ द्रोणशब्दस्तस्य[1] पाकसंभवात् ॥

"आढकाचितपात्रात्खोऽन्यतरस्याम्" ॥ 'ठञोऽपवाद इति'। न ठकः, आढकादीनां परिमाणत्वात्, पात्रं भाजनमप्यस्ति तस्य तु संभवत्यादिभिः संबन्धानुपपत्तेः, आढकाचितसाहचर्याच्च परिमाणस्यैव ग्रहणम् ॥

"द्विगोष्ठंश्च" ॥ 'द्व्याचितिकेति'। ठञो लुक्, अपरिमाणबिस्ताचितेति ङीपः प्रतिषेधः ॥

"कुलिजाल्लुक्खौ च" ॥ 'अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यतइति'। तच्च लुक्खग्रहणाद्विज्ञायते, अन्यथा कुलिजाच्चेत्येव वक्तव्यं, द्विगोश्चेत्येव खोऽन्यतरस्यामिति च तत्र ठन्खाभ्यां मुक्ते पक्षे ठञ्, तस्याध्यर्द्धपूर्वेति लुक्, एवं रूपत्रये सिद्धे लुक्खग्रहणं कुर्वतः सूत्रकारस्य लुकोऽपि विकल्प इष्ट इति लक्ष्यतइति मन्यते, वार्त्तिककारस्तु ठञो नित्यं लुकं मन्यमानः पूर्वसूत्रवत् त्रैरूप्यमेवेच्छन् लुक्खग्रहणं प्रत्याचष्टे, कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावादिति ॥

१ पचेत्यधिकं २ पुस्तके ।

"सोऽस्यांशवस्नभृतयः" ॥ इह च शतं यस्य वस्नो भवति स तेन क्रीतो भवति तत्र तेन क्रीतमित्येव सिद्धं नार्थो वस्नग्रहणेन, नैतदस्ति। योग्यतामात्रेऽप्यस्येदं मूल्यमिति व्यवहारात् ॥

"तदस्य परिमाणम्" ॥ इह परिच्छेदहेतुमात्रं परिमाणं न सर्वतो मानमेव, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात्। 'खारशतिक इति'। खारशब्दोऽकारान्तो वार्तिककारवचनात्साधुः, तेन हि तदस्य परिमाणमित्यत्र योगविभागः कर्तव्य इति दर्शयितुमुक्तम् अन्येभ्योऽपि दृश्यते खारशताद्यर्थमिति। 'वार्षशतिक इति'। यज्ञादौ परिमाणिनि प्रत्ययः। 'षाष्टिक जीवितपरिमाणस्येति'। संवत्सरेषु षष्टिशब्दः, संवत्सरसंख्यया हि जीवितं प्रायेण परिच्छिद्यते, जीवितपरिच्छेदद्वारेण तद्वतोऽपि षष्टिः संवत्सराः परिमाणमिति। तद्वस्मिन्परिमाणिनि प्रत्ययः। ननु यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भृतो भवति तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम्, एवं च द्विषाष्टिक इत्यादौ नैवाध्यर्द्धपूर्वेति लुक्प्रसङ्गस्तस्यानार्हीयत्वात्, ततश्च समर्थविभक्तेः प्रत्ययार्थस्य च पुनरुपादानेन विधानमपि न कर्तव्यं, न च जीवितपरिमाणादन्यत्र पुनर्विधानेन लुगभाव इष्यते, एवं मन्यते तमधीष्ट इत्यत्र कालादिति वर्तते न च षष्ट्यादयः कालशब्दाः, अथ काले संख्येये वर्तमानत्वात्तेऽपि कालशब्दाः, रमणीयादिष्वतिप्रसङ्गः, रमणीयं कालं भूत इति। तस्माद्यः कालं न व्यभिचरति स एव कालशब्द इति। 'द्विषाष्टिक इति'। संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः ॥

"संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" ॥ 'परिमाणोपाधिकादिति'। नात्र रूढिपरिमाणं गृह्यते किं तर्हि क्रियाशब्दः, परिमीयते येन तत्परिमाणं, संख्ययापि च परिमीयतइति नासम्भवि विशेषणं, नन्वेवमप्यव्यभिचाराद्विशेषणं, नह्यपरिच्छेदिका संख्यास्ति। सत्यम्, इह तु प्रत्ययार्थस्य सङ्घादेर्यदा परिच्छेदिका संख्या तदा प्रत्ययो यथा स्यात् पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इति, इह माभूत् पञ्च गावः स्वभूता अस्य ब्राह्मणसङ्घस्येति, नह्यत्र सङ्घस्येयत्तागम्यते, तस्मात्प्रत्य-

यार्थस्य यदा परिच्छेदिका संख्या तदा यथा स्यादिति विशेषणमर्थवद्भवति । 'तत्रेत्यादि' । इहादशभ्यः संख्याः संख्येये वर्तन्ते न तु संख्यानमात्रे तत्र य एव शकुनयः पञ्चत्वसंख्यायुक्ताः पञ्चन्शब्दवाच्यास्तएव पञ्च कशब्दस्यापि, ततश्च परिमाणपरिमाणिभावाभावात्स्वार्थएव प्रत्ययो वक्तव्यः, यदा तु वृत्तिविषये संख्यानमात्रवृत्तित्वं पञ्चादीनामाश्रीयते यथा द्व्यकयोरित्यत्र तदा सम्भवत्येव परिमाणी प्रत्ययार्थः पञ्चत्वसंख्या परिमाणमेषां पञ्चकाः शकुनय इति । 'पञ्चकमध्ययनमिति' । पूर्वं तु पञ्चकोऽधीतइति सम्पाठापेक्षया पुल्लिङ्गनिर्देशः, अधीतइति च कृत इत्यर्थः, यथौदनपाकं पचतीत्यौदनपाकं करोतीत्यर्थः । 'स्तोमे डविधिरिति' । सोमयागेषु छन्दोगैः क्रियमाणा पृष्टादिस्तुतिः स्तोमः । 'पञ्चदश मन्त्राः परिमाणमस्येति' । साम्ना स्तुवीत, एकं साम तृचे क्रियते इति स्तुतिविधिः, तत्र त्रिकस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्रा भवन्ति, सप्तदशस्तोमे अन्त्यायाः सप्तकृत्व आवृत्तिः, एकविंशे तृचस्य, डित्करणमेकविंशतिलोपार्थं त्रयस्त्रिंशादौ टिलोपार्थं च, पञ्चदशः सप्तदश इत्यत्र तु नस्तद्धितइत्यनेनैव टिलोपः सिद्धः । 'शन्शतोर्डिनिरिति' । स्तोमइति न सम्बध्यते, अत्रापि डित्करणं शदन्तस्य टिलोपार्थम् । 'पञ्चदशिन इति' । पञ्चदशाहानि परिमाणमेषामिति डिनिः, एतेन त्रिंशिनो व्याख्याताः । 'विंशीनोऽङ्गिरस इति' । आङ्गिरसायास्यगौतमेत्यादिप्रवरभेदेन भिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः । योगश्चायं पूर्वस्यैव प्रपञ्चः ॥

"पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्" ॥ 'पङ्क्त्यादयः शब्दा निपात्यन्तइति' । प्रकृतिनिर्देशस्त्वयं न भवति पङ्क्त्यादिभ्यः प्रकृतेऽर्थेऽधिकृतः प्रत्ययो भवतीति पञ्चम्या अनुपादानात्, पूर्वेणैव च सिद्धत्वात्, उत्तरेषां निपातनेन साहचर्याच्च, प्रत्ययनिर्देशोऽपि न भवति, ङ्याप्प्रातिपदिकात्प्रकृतेर्थे पङ्क्त्यादयः प्रत्यया भवन्तीति, लोके शास्त्रे च शताच्च ठन्यतावशतइत्यादौ केवलानां प्रयोगदर्शनाद् यत्र समुदायः श्रूयते ऽवयवा अनुमीयन्ते तन्निपातनं, विप-

रीतो विधिः । 'पञ्चानामिति' । अर्थगतस्य बहुत्वस्य शब्दे समारोपाद्बहुवचनं, पञ्चशब्दस्य अर्थः । 'टिलोपस्तिच्च प्रत्यय इति' । निपात्यत इत्यर्थः । अवयवनिपातननान्तरीयकत्वात्समुदायनिपातनस्य, यद्वा निपातनात्सिद्धमित्यस्य पुल्लिङ्गविपरिणामेनान्वयः, कुत्वं तु चकारजकारयोर्न निपात्यं चोः कुरित्येव सिद्धम् । 'पञ्च पदानीति' । पदशब्दः पादपर्यायः । 'पङ्क्तिश्छन्द इति' । तत्पुनः पदपङ्क्तिः, यस्य पञ्चाक्षराः पञ्च पादा भवन्ति । 'द्वयोर्दशतोरिति' । दशद्वयरूपसङ्ख्येयमात्रवाचिनस्य द्विशब्दस्येत्ययमत्रार्थो विवक्षितः, एवं त्रयाणां दशतामित्यादावपि द्रष्टव्यम् । 'शतिच्च प्रत्ययइति' । चित्करणमन्तोदात्तार्थम् । 'अपदत्वं चेति' । तेन जश्त्वचर्त्वे न भवतः, अत्र तदस्य परिमाणमिति वर्त्तत इत्युक्तं, द्वौ दशतौ परिमाणमस्येत्यादिश्च विग्रहो दर्शितः, यदा तु नानुवर्त्तते तदा द्विशब्दादेर्दशदर्थाभिधायिनः स्वार्थे प्रत्ययो निपात्यः, द्वौ दशतौ विंशतिः, त्रयोदशतस्त्रिंशद् इति, ततश्च स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्द्विशब्दादेरिव द्विवचनबहुवचनप्रसङ्गः, विंशत्यादिभिश्च दशतामभिधानमिति गवादिभिर्वैय्यधिकरण्यमेव स्याद् गवां विंशतिरिति, न तु विंशतिर्गाव इति सामानाधिकरण्यं नापि द्विगुः विंशतिगवमिति, तस्मादनुवर्त्त्यम्, अथास्येत्यनेन कः प्रतिनिर्दिश्यते परिमाणी, कः पुनरसौ भिन्नानि द्रव्याणि, द्वौ दशतौ परिमाणमेषां विंशतिरिति, यद्येवं विंशत्यादिभिर्द्रव्याणामभिधानमिति बहुवचनप्रसङ्गाद्विंशतिर्गाव इति न स्यात्, गवां विंशतिर्गोविंशतिरिति च न स्याद् व्यतिरेकाभावात् । अथास्मिन् पक्षे किञ्चिदिष्टमपि सिद्धम् अहोस्विद्दोषान्तमेवास्तीत्याह, इह वंशतिगवं त्रिंशत्पलीति समानाधिकरणलक्षणो द्विगुः सिद्धः, तस्मात्र भिन्नानि द्रव्याणि परिमाणीनि, एतच्च सर्वेष्वेव विग्रहवाक्येष्वस्येत्येकवचनेन दर्शितं, कस्तर्हि परिमाणी, सङ्घः, द्वौ दशतौ परिमाणमस्य गोसङ्घस्य विंशतिरिति, एवमपि सिद्धं गवां विंशतिर्गोविंशतिरिति, विंशतिर्गावः विंशतिगवमिति तु न सिद्ध्यति तथा विंशतिशब्देन सङ्घस्याभिधानाद्विंशतिः परिमाणमस्य गोसङ्घस्य विंशतिस्त्रिंशद्वा

इयुन्, विंशकः सङ्घ इति न स्यात्, सङ्घान्तरस्य परिमाणिनो ऽसम्भवात् । अथोभयं परिमाणिभिन्ना द्रव्याणि तत्संघश्च, तत्र सङ्घपरिमाणिनि व्यधिकरणप्रयोगाः, द्रव्येषु तु परिमाणिषु सामानाधिकरण्यप्रयोगाः, तत्रैव विंशतिर्गावः परिमाणमस्य विंशको गोसङ्घ इति भविष्यतीत्युच्यते एवमपि विंशतिर्गाव इत्यत्र बहुवचनप्रसङ्गः, तथा सङ्घस्य परिमाणित्वे विंशतिर्गोसङ्घ इति प्राप्नोति, न चेष्यते, विंशक इत्येव हि तत्रेष्यते, एवं तर्हि द्वावत्र सङ्घौ स्तः, द्रव्याणामेकः द्रव्यवर्गयोर्दशतोश्चापरः, तत्र निपातनसामर्थ्याद्दशत्सङ्घे परिमाणिनि प्रत्ययः, सङ्घश्च समुदायमात्रं न प्राणिनामेव, किं हि निपातनादलभ्यं, तत्र दशत्सङ्घस्य विंशतिशब्देनाभिधानाद्गोसङ्घे विवक्षिते विंशतिः परिमाणमस्य विंशको गोसङ्घ इति च भविष्यति, विंशतिर्गोसङ्घ इति च न भविष्यति, गवां विंशतिर्गावो विंशतिरिति च भविष्यति । ननु दशत्सङ्घस्य दशतो गुणिनो न गावस्तेन दशतोर्विंशतिरिति प्राप्नोति गवां विंशतिरिति तु न सिद्ध्यति, उच्यते, द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च न पारमार्थिको भेदोऽस्ति केवलं बुद्ध्या परिकल्प्यते, ततश्च गवां दशतोश्च तात्त्विकभेदाभावाद्दशत्सङ्घमपि प्रतिगवामपि गुणित्वमुपपद्यते व्यभिचाराभावात्तु दशद्भ्यां विंशतिर्न विशेष्यते गवादिभिरेव तु विशेष्यते यथा पटस्य शौक्ल्यमिति भवति न शुक्लस्य शौक्ल्यमिति व्यभिचाराभावात्, तद्वदत्रापि । एवं तावद्व्यधिकरणप्रयोगा उपपादिताः, विंशतिर्गाव इत्यादिकास्तु समानाधिकरणप्रयोगा उपपादनीयाः, धर्मवचना एते विंशत्यादयो गुणवचना इति शुक्लादिवद्भविष्यति यथा हि पटस्य शुक्लो गुण इति गुणमात्रे दृष्टः शुक्लशब्दो गुणगुणिनोर[1]व्यतिरेकविवक्षायां मतुब्लोपाद्वा सामानाधिकरण्यो भवति शुक्लः पट इति, एवं विंशत्यादयोऽपि, यद्येवं यथान्ये गुणवचना द्रव्यस्य लिङ्गसंख्ये अनुवर्तन्ते यथा शुक्लं वस्त्रं शुक्ला शाटी शुक्लः कम्बलः शुक्लौ शुक्ला इति, एवं विंशत्यादयोऽप्यनुवर्तेरन्, इह पुनर्विंशतिर्गावः विंशतिर्बलीवर्द्दाः विंशतिर्गोकुलानीति नित्यमेकवचनं स्त्रीलिङ्गं च भवति, शतशब्दात्तु नपुंसकत्वं

१ रभेद इति पाठः २ पुस्तके ।

विंशती विंशतयः शते शतानीति तु प्रचयभेदविवक्षायामेकशेषः, अत्रोच्यते। यस्य धर्मस्य धर्मिणा सहाभेदः प्रतिपाद्यते स चेत्तेषु प्रत्येकपरिसमाप्तस्तदा तस्यापि धर्मिवद्भिन्नत्वाद् द्विवचनबहुवचने न भवतः, यथा शुक्लौ शुक्ला इति, शौक्ल्यं हि कम्बलेषु प्रत्येकपरिसमाप्तं, कोऽर्थः, एकैकस्मिन्नपि कम्बले शुक्लशब्दार्थः पुष्कलो न मात्रयापि न्यून इत्यर्थः। विंशतिर्गाव इत्यत्र तु विंशतिसंख्या न प्रत्येकपरिसमाप्ता किं तर्हि बहुष्विति, तद्रूपभेदाभावादेकवचनमेव भवति यथा गावो धनम् इन्द्राग्नी देवता वेदाः प्रमाणमिति, धिनोतेर्धनं प्रीतिहेतुः समुदितानां च गवां प्रीतिहेतुत्वं विवक्षितं नैकैकस्या इति धनमेकं गोभिर्विशेष्यते, तत्र धनाकारे भेदाभावाद्बहुवचनाभावः। इन्द्राग्नी देवतेति द्विवैश्वर्यकर्मणो देवतामन्त्रस्य च देवतात्वमेकं हविः प्रतीति द्विवचनाभावः, देवते इति तूच्यमाने प्रत्येकमैश्वर्यं प्रतीयेत ततश्च व्रीहियवयोरिव विकल्पः स्यात्, वेदाः प्रमाणमिति चतुर्णां समुदितानां वेदानामेकं प्रमाणत्वं विवक्षितमिति तस्मिन्नाकारे भेदाभावाद्बहुवचनाभावः, प्रत्येकं तु प्रमाण्ये वेदाः प्रमाणानीति भवत्येव, यद्येवं त्रयश्चत्वारः पञ्च षट् सप्तेत्यत्राप्येकवचनप्रसङ्गः, नहि त्रित्वादिकमपि प्रत्येकपरिसमाप्तम्, उच्यते। त्र्यादयो नित्यं संख्येयवचना न तु कदा चिदपि संख्यानमात्रवचना इत्येकेन धर्मेण व्यासज्यवृत्तिना सहानेकस्य धर्मिणो भेदप्रतिपादनाभावाद्धर्मिभेदाद्यं बहुवचनमेव भवति, यद्यपि त्रित्वमित्यादौ संख्यानमात्रमपि निष्कृष्टं प्रतीयते त्र्यादिभिस्तु न प्रतीयते देवताशब्दस्तु यद्यपि निष्कृष्टदेवतात्वमाचष्टे तथाप्यग्निर्देवतेत्येकेनापि स भिन्नदेवतात्वमाचष्टे नानेकेनैव सर्वदा, त्र्यादयस्तु न क्व चिदप्येवमिति विशेषः। लिङ्गमपि लोकाश्रयत्वाद्यथादर्शितं व्यवतिष्ठते न तद्धितान्तत्वेनाभिधेयवदिति सर्वमनाकुलम्, एवं भाष्यकारमतेन व्याख्याय संप्रति वार्त्तिककारमतं दर्शयति। 'विंशत्यादय इति'। 'गुणशब्दा इति'। रूढिरूपा इति भावः। 'यथाकथंचिद्व्युत्पाद्या इति'। स्वरवर्णानुपूर्वीज्ञानार्थं न त्ववयवार्थप्रदर्शनाय तदाह।

१ केवलमित्यधिकं २ पुस्तके।

'नात्रावयवार्थाभिनिवेष्टव्यमिति' । अवयवार्थविषयोऽभिनिवेशो न कर्तव्य इत्यर्थः । स तु प्रतीतिपथं नारोहतीति परित्यज्यते । 'या चैषामित्यादि' । दर्शिता च गुणमात्रे गुणिनि च वृत्तिः, एतदपि सर्वं स्वाभाविकमेवेति दर्शितामुपपत्तिं स्थिरां मन्यते । 'सहस्रादयोऽप्येवञ्जातीयका इति' । गुणमात्रे गुणिनि च वर्तन्ते स्वलिङ्गसंख्यानुविधायिनश्चेत्यर्थः । 'तद्वदेव द्रष्टव्या इति' । स्वरवर्णानुपूर्वीज्ञानार्थं विंशत्यादिवद्व्युत्पाद्या इत्यर्थः । तद्यथा शतस्य दशतां सहभावः स्नच्च प्रत्ययः, क्व पुनरेते व्युत्पाद्याः, पृषोदरादिषु, उदाहरणमात्रं, प्रदर्शनमात्रमेतद्विंशत्यादीनामुपादानम्, इतिशब्दः समाप्तौ । अत्र वार्तिकमनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिष्विति ॥

"पञ्चद्दशतौ वर्गे वा" ॥ संघग्रहणे प्रकृते वर्गग्रहणं सूत्राध्ययनयोरनुवृत्तिर्माभूदिति, अप्राण्यर्थं च, संघशब्दस्य प्राणिविषयत्वात् ॥

"त्रिंशच्चत्वारिंशतोर्ब्राह्मणे सञ्ज्ञायां डण्" ॥ 'न विषयसप्तमीति' । ब्राह्मणविषयश्चेत्प्रयोगो भवतीति नैवमत्रार्थः, तथा हि सति मन्त्रे भाषायां च प्रयोगो न स्यात्, ब्राह्मणादन्यस्य च सञ्ज्ञायां शङ्क्येत, एवं च ब्राह्मणसञ्ज्ञायामिति षष्ठीसमासेन निर्देष्टव्यं, तथा तु न कृतमित्येव, सूत्रे च ये ओकारादनन्तरं रेफमधीयते तेषां पञ्चम्यर्थे षष्ठीद्विवचनं, ये तु[1] न तेषां समाहारद्वन्द्वे पञ्चम्येकवचनम् ॥

"तदर्हति" ॥ अर्हति लब्धुं योग्यो भवतीत्यर्थः ॥

"छेदादिभ्यो नित्यम्" ॥ 'नित्यग्रहणं प्रत्ययार्थविशेषणमिति' । अथ यथा नित्यं क्रीडाजीविकयोरित्यत्र महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं नित्यग्रहणं तथेहापि कस्मान्न भवति, दृष्टत्वात्, दृष्टत्वाच्च, दृश्यते च दृश्यते च छेदमर्हतीति, न च वाक्यनिवृत्त्यर्थमेव नित्यग्रहणं कर्तव्यं छेदादिभ्य, इत्येवास्तु पूर्वेण सिद्धे पुनरारम्भो वाक्यनिवृत्त्यर्थो भविष्यति, यथा तर्हि त्रेर्मम्नित्यमित्यत्र स्वातन्त्र्यनि-

[1] तथा नाधीयतइति २ पुस्तके पाठः ।

वृत्यर्थं नित्यग्रहणं तथेह कस्मान्न भवति, इष्टत्वात्, इष्टत्वाच्च, दृश्यते च स्वातन्त्र्यं दृश्यते च छेदादिषु पठितस्य सम्यग्शब्दस्य स्वतन्त्रस्य प्रयोगो विधिनिमन्त्रणादिसूत्रे यथा, तर्ह्येकगोपूर्वादित्यत्र प्रत्ययान्तरस्य मतुपो निवृत्यर्थं नित्यग्रहणं तथेह कस्मान्न भवति, अप्राप्तत्वात्, नह्यत्र कस्य चित्प्रत्ययान्तरस्य प्राप्तिः, यथा तर्हि नित्यं कौटिल्ये गतावित्यत्रार्थान्तरनिवृत्यर्थं नित्यग्रहणं, गतिवचनाद्धातोः कौटिल्यएव न क्रियासमभिहारइति, तथेह कस्मान्न भवति, इष्टत्वात् दृश्यते ह्यर्थान्तरेपि यथायोगं छेदादिभ्य आर्हीयः प्रत्ययः, तस्माद्यथोक्तमेव प्रयोजनं नित्यग्रहणस्य । 'छेदं नित्यमर्हतीति' । ननु न कश्चित् पदार्थो नित्यं छेदमर्हति योपि वेतसादिश्छिन्नश्छिन्नः प्ररोहति सोपि न सर्वैवच्छेदनार्हः प्ररूढस्तु भवति, यस्तर्हि दस्युवंशादिर्नित्यं छेदनार्हः मप्रत्ययार्थे अपर आह। आभीक्ष्ण्ये नित्यशब्दो यथा नित्यप्रहसितादाविति। 'विराग विरङ्गं चेति' । विरागशब्दः प्रत्ययमुत्पादयति तत्सन्नियोगेन विरङ्गमादेशमापद्यते, विरागं नित्यमर्हति वैरङ्गिकः ॥

"शीर्षच्छेदाद्यच्च" ॥ 'प्रत्ययसंनियोगेनेति' । तथा च शिरःशब्देन विग्रहो दर्शितः, कथं तर्हि पूर्वमुक्तं शीर्षच्छेदशब्दात् द्वितीयासमर्थादिति, न प्रयोगार्हे वाक्ये द्वितीयासमर्थता किं तर्हि यदुपमर्देनेन वृत्तिर्भवति तत्र प्रक्रियावाक्ये प्रत्ययौ द्वौ यच्च ठञ्च,एवं च प्रत्ययाभ्यां संनियोग इति द्विवचनान्तेन समासः ॥

"दण्डादिभ्यो यः" ॥ उपायविशेषो दण्डो हस्तालम्बश्च, इह दण्डादिभ्य इत्येतावत्सूत्रमनन्तरश्च यत्प्रत्ययो विधीयते, तथा च वधशब्दव्युत्पादनाय क्यब्विधावुक्तं हनो वध च तद्धितो वेति, यदि चात्र यद्विधीयते तत एव तदुपपद्यते तद्धितो वेति, कथं, क्यप्याद्युदात्तत्वं यत्यपि तद्धिते यतो नाव इत्याद्युदात्तत्वमेव, यदि त्वत्र यो विधीयेत ततः स्वरे विशेषादनुपपन्नमेतत्स्यात्, उत्तरसूत्रे चास्य यस्यैवानुवृत्तिः स्यान्न यतः, अथापि स्वरितत्वाद्यत एवानुवृत्तिरुच्यते एवमपि वृत्तिकारस्यैतद्वक्तव्यमापद्येत यदनुवर्तते नानन्तरो य इति, यो

वित् पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिनिर्देशान्निरतिशयासङ्ख्येयाश्च गुणाः सकलेतरविलक्षणाः, तथा आदित्यवर्णमित्यादिनिर्देशात् रूपपरिजनस्थानादयश्च सकलेतरविलक्षणाः स्वासाधारणाः अनिर्देश्यस्वरूपस्वभावा इति वेदाः प्रमाणं चेद्विध्यर्थवादमन्त्रगतं सर्वमपूर्व्वमविरुद्धमर्थजातं यथाऽवस्थितमेव बोधयन्ति, प्रामाण्यं च वेदानाम् औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः—इत्युक्तं, यथाऽग्निजलादीनामौष्ण्यादिशक्तियोगः स्वाभाविकः, यथा च चक्षुरादीनामिन्द्रियाणां बुद्धिविशेषजननशक्तिः स्वाभाविकी, तथा शब्दस्यापि बोधनशक्तिः स्वाभाविकी, न च हस्तचेष्टादिवत्सङ्केतमूलं शब्दस्य बोधकत्वमिति वक्तुं युक्तमनाद्यनुसन्धानाविच्छेदेऽपि

रूपस्य भोग्यतमत्वे स्वरूपस्य निरतिशयभोग्यत्ववैकल्यं स्यादिति चेन्न स्वरूपस्य भोग्यतमत्वं स्वसम्बन्धिनोऽपि भोग्यतमत्वावहमिति स्वरूपभोग्यतमत्वपूर्तिरेवेति अर्थवादादेः स्वार्थे तात्पर्याभावात् ब्रह्म स्वरूपमपि नाभ्युपेतमिति पूर्व्वमीमांसकशङ्कायामाह वेदाः प्रमाणञ्चेदिति, अपूर्व्वाविरुद्ध–शब्दाभ्यां साधकबाधकाभावोऽभिप्रेतः प्रामाण्य चेति चोदनासूत्रेऽपि अवधारणद्वयमस्ति चोदनैव प्रमाणं प्रमाणमेव चोदनेति प्रथमावधारणं प्रत्यक्षसूत्र उपपादितं, द्वितीयावधारणम् औत्पत्तिकसूत्रप्रतिपाद्यमित्यर्थः । औत्पत्तिकः सत्ताप्रयुक्तः–नित्य इत्यर्थः । स्वाभाविकत्वं विवृणोति यथेति, स्पष्टं बोधव्यतिरिक्तकार्यकरत्वशक्तिः स्वाभाविकी बोधकार्यकरत्वं तु न स्वाभाविकमिति विभागमाशङ्क्य

तत्परिहारायाह यथा चेति, हस्तचेष्टादिवद् बोधकत्वाच्छब्दस्य सङ्केतितत्वं स्यादित्यत्राह अनादीति, अनुसन्धानविच्छेदात्

**सङ्केतयितृपुरुषाज्ञानात् यानि सङ्केतमूलानि तानि सर्वाणि साक्षाद्वा परम्परया वा ज्ञायन्ते, न च देवदत्तादिशब्दवत्कल्पयितुं युक्तं तेषु च साक्षाद्वा परम्परया वा सङ्केतो ज्ञायते,गवादिशब्दानां त्वनाद्यनुसंधानाविच्छेदेऽपि संकेतयि*त्रज्ञानादेव बोधकत्वशक्तिः स्वाभाविकी अतोऽग्न्यादीनां दाहकत्वादिशक्तिवदिन्द्रियाणां बोधकत्वशक्तिवच्च शब्दस्यापि बोधकत्वशक्तिराश्रयणीया ।**

तत्संङ्केतयितृपुरुषाज्ञानमिति शङ्कापरिहारार्थमनाद्यनुसन्धानाविच्छेदेऽपीत्युक्तं, सङ्केतयितृपुरुषज्ञानं सङ्केतमूलत्वे प्रयोजकं, न बोधकत्वे इत्यर्थः । एवं बोधकत्वात्सङ्केतमूलत्वमाशङ्क्य परिहृतं, शब्दत्वाद्देवदत्तादिशब्दवत्साङ्केतिकत्वमाशङ्क्य परिहरति न चेति, अत्र शङ्कामुखभेद एव परिहारस्तुल्यः अत इत्यादि स्पष्टं,बोधकत्वं स्वाभाविकं चेद् व्युत्पत्तिग्रहणमापेक्षत्वमयुक्तम् अतः साङ्केतिकमिति शङ्कायामाह गृहीतसम्बन्धस्येति, सम्बन्धग्रहणमपि सामग्र्यन्तर्भूतं यथा चक्षुरादेरालोकाद्यपेक्षत्वं न बोधकत्वशक्तिविरोधि तस्मात्स्वाभाविकी बोधकत्वशक्तिरित्यर्थः । सम्बन्धग्रहणमापेक्षत्वाच्छब्दोऽपि लिङ्गं स्यादिति चेन्न जन्यजनकभावादिसम्बन्धान्तरज्ञानसापेक्षं लिङ्गं शब्दार्थयोर्बोध्यबोधकभावसम्बन्ध एव ज्ञातव्य इति लिङ्गशब्दयोर्भेदः सर्वशब्दानां बोधकत्वशक्तिः स्वाभाविकीति चेत् लौकिकवैदिकविभागः कथमित्यत्राह एवमिति, स्मृतिपूर्वकत्वेऽप्युच्चारणस्य पुरुषाधीनत्वात् कथं वेदस्यापौरुषेयत्वं स्यादित्यत्राह एतदिति, अपौरुषेयत्वं–पुरुषबुद्धिमूलत्वाभावः, नित्यत्वं–सर्वकालसम्बन्धित्वं पदनित्यत्वं वर्णनित्यत्वं वा नापौरुषेयत्वे प्रयोजकं तथा सति कालिदासादिग्रन्थानामपि अपौरुषेयत्वप्रसङ्गात्, तस्मात् अनाद्यानुपूर्वीविशेषविशिष्टत्वेन

* संकेतात्राज्ञानादिति पा॰ ।

ननु च इन्द्रियवच्छब्दस्यापि बोधकत्वं स्वाभाविकं संबन्धग्रहणं बोधकत्वाय किमित्यपेक्षते—लिङ्गवदित्युच्यते, यथा ज्ञातसंबन्धनियमं धूमादि अग्न्यादिविज्ञानजनकं तथा ज्ञातसंबन्धनियमः शब्दोऽप्यर्थविशेषबुद्धिजनकः । एवं तर्हि शब्दोऽप्यर्थविशेषस्य लिङ्गमित्यनुमानमेव स्यात्, मैवं शब्दार्थयोः संबन्धो बोध्यबोधकभाव एव, धूमादीनां तु संबन्धान्तरमिति तस्य संबन्धस्य ज्ञानद्वारेण बुद्धिजनकत्वमिति विशेषः । एवं गृहीतसंबन्धस्य बोधकत्वदर्शनादनाद्यनुसन्धानाविच्छेदेऽपि सङ्केताज्ञानात् बोधकत्वशक्तिरेवेति निश्चीयते । एवं बोधकानां पदसंघातानां संसर्गविशेषबोधकत्वेन वाक्यशब्दाभिधेयानामुच्चारणक्रमो यत्र पुरुषबुद्धिपूर्व्वकः ते पौरुषेयाः शब्दा इत्युच्यन्ते, यत्र तु तदुच्चारणक्रमः पूर्व्वपूर्व्वोच्चारणक्रमजनितसंस्कारपूर्व्वकः सर्वदा ऽपौरुषेयास्ते च वेदा इत्युच्यन्ते, एतदेव वेदानामपौरुषेयत्वं नित्यत्वं च—यत्पूर्व्वपूर्व्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं

पश्चादप्युच्चार्यमाणत्वमपौरुषेयत्वं नित्यत्वं चेत्यर्थः । तर्ह्युपबृंहणापेक्षा कथमित्यत्राह ते चेति, आनन्त्येन दुर्ग्रहत्वादुपबृंहणापेक्षा न त्वनित्य*त्वमित्यर्थः । नानन्त्यम् ऋग्यजुःसामाथर्वणरूपेण संख्यातत्वादिति चेन्न ऋग्यजुःसामादिकोटिचतुष्टयान्तर्भावेऽप्येकैककोटौ शाखाद्वाराऽऽनन्त्यमित्यर्थः । ते च विध्यर्थेति, तत्र विधिभाग एवाऽपौरुषेयः । अर्थवादादयः पौरुषेया इति विभागश्चेदर्थवादादीनां स्वार्थे प्रामाण्यं न

* न त्वनित्यतयेत्यर्थः ।

स्यात् न च तथाऽस्ति, अतोऽपौरुषेयतया प्रमाणत्वाविशेषादर्थवादाद-योऽपि स्वार्थप्रतिपादका इति सर्वार्थसिद्धिरित्यर्थः । लोके सिद्धवस्तुपर-शब्दानां प्रतिपाद्यात् पश्चात्तनत्वं दृष्टं तस्मात्सिद्धवस्तुपरत्वे वेदानाम-नादित्वहानिरिति तत्राह परमपुरुषवदिति, यथा जातिवाचित्वेन ब्रीह्या-दिशब्दानां जातेश्च नित्यत्वात् तेषां न नित्यत्वहानिरभ्युपेता । एवं प्रतिपाद्यप्रतिपादकयोरुभयोरप्यनादित्वमभ्युपपन्नमित्यर्थः ।

**स्मृत्वा तेनैव क्रमेणोच्चार्यमाणत्वं, ते चानुपूर्वीवि-शेषेण संस्थिता अक्षरराशयो वेदा ऋग्यजुःसामा-थर्वभेदभिन्ना अनन्तशाखा वर्तन्ते, ते च विध्यर्थवा-दमन्त्ररूपा वेदाः परब्रह्मभूतनारायणस्वरूपं तदारा-धनप्रकारम्, आराधितात्फलविशेषं च बोधयन्ति, परमपुरुषवत्तत्स्वरूपतदाराधनतत्फलज्ञापकवेदाख्य-शब्दजातं नित्यमेव, वेदानामनन्तत्वाद्दुरवगाहत्वाच्च परमपुरुषनियुक्ताः परमर्षयः कल्पेकल्पे निखिलज-गदुपकारार्थं वेदार्थं स्मृत्वा विध्यर्थवादमन्त्रमूलानि धर्म्मशास्त्राणीतिहासपुराणानि च चक्रुः ।**

पूर्व्वमानन्त्यं प्रपञ्चितं तेनोपबृंहणमपेक्षितमित्युक्तम् । इदानीं दुरवगा-हत्वात् तदपेक्षितमित्याह वेदानामिति, दुरवगाहत्वम् अधीयमानशाखा-नामपि दुरवबोधार्थत्वेन धर्म्मशास्त्राणि पूर्व्वभागोपबृंहणानि उपनिषदु-पबृंहणानीतिहासपुराणानि, व्युत्पन्नलौकिकशब्दस्य वैदिका न बोधकाः स्युरित्यत्राह लौकिकाश्चेति,—नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेद-शब्देभ्य एवादौ देवादीनां चकार सः ॥ इत्यादिवचनात् वेदशब्दा एव लौकिकैः प्रयुज्यन्त इति लौकिकवैदिकशब्दाभेदाद् बोधका इत्यर्थः । लक्ष-णभेदाच्छब्दभेद इति चोदयति ननु चेति, परिहरति उच्यत इति, आनुपूर्व्वी-भेदकृतो लक्षणभेदः । न तु शब्दभेदकृत इत्यर्थः । एतस्मिन्प्रकरणे विस्तरेण

प्रतिपादितानामर्थानां सुग्रहत्व.योक्तार्थजातं संग्रहेणानुक्रमते एवमित्यादिना, परब्रह्मनारायण-शब्दौ सामान्यविशेषशब्दौ निखिलहेयमित्यादिनोभयलिङ्गत्वमुक्तम्। विभूतिमत्त्वमाह स्वसङ्कल्पेति, नित्यविभूतिमत्त्वमाह

लौकिकाश्च शब्दा वेदराशेरुद्धृत्यैव तत्तदर्थविशेषनामतया पूर्ववत्प्रयुक्ताः पारम्पर्येण प्रयुज्यन्ते । ननु च वैदिका एव सर्वे वाचकाः शब्दाश्चेच्छन्दस्येवं भाषायामेवमिति लक्षणभेदः कथमुपपद्यते—उच्यते तेषामेव शब्दानां तस्यामेवानुपूर्व्यां वर्तमानानां तथैव प्रयोगः, अन्यत्र प्रयुज्यमानानामन्यथेति न कश्चिद्दोषः। एवमितिहासपुराणधर्मशास्त्रोपबृंहितसाङ्गवेदवेद्यः परब्रह्मभूतो नारायणो निखिलहेयप्रत्यनीकः सकलेतरविलक्षणोऽपरिच्छिन्नज्ञानानन्दैकस्वरूपः स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरः स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदचिदचिद्वस्तुजातोऽपरिच्छेद्यस्वरूपस्वभावानन्तमहाविभूतिर्नानाविधानन्तचेतनाचेतनात्मकप्रपञ्चलीलोपकरण इति प्रतिपादितं, सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदम्

अपरिच्छेद्येति अपरिच्छेद्यस्वरूपस्वभाव-शब्देनयत्तारहित्यमौज्ज्वल्यादिगुणोत्कर्षश्च विवक्षितः । अनन्त-शब्देन नित्यत्वं विवक्षितं, तद्गतपदार्थानन्त्यं वा, महाविभूतिरिति भोग्यविभूतिरुच्यते शुद्धे महाविभूत्याख्य इति वचनात् । लीलाभूतिमत्त्वमाह नानाविधेति, एवं सर्वविलक्षणत्वमुक्तं तर्हि कथमैक्यश्रुतिरित्यत्राह सर्वं खल्विति, त्वं यज्ञ इत्यादिश्लोकानन्तरभावित्वाज्जगत्सर्वं शरीरं ते इति श्लोक उदाहृतः । अनेन सामानाधिकरण्यस्यार्थः स्पष्टो भवति, कारणावस्थायामेकत्वावधारणाच्छरीरात्मभावस्तदानीं नोपपद्यत इति स्वरूपैक्यनि-

बन्धनमेव सामानाधिकरण्यमित्यत्राह सत्यसङ्कल्पमिति, न हि सत्यसङ्कल्पं ब्रह्मस्वरूपमेव स्वर्गनरकादिभाग् भवति ।

सर्वं तत्त्वमसि श्वेतकेतो एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिं इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतं ज्योतींषि शुक्लानि च यानि लोके त्रयोलोकालोकपालास्त्रयी च त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव, त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः, ऋतुधामा वसुः पूर्व्वो वसूनान्त्वं प्रजापतिः जगत्सर्वं शरीरं ते स्थैर्यन्ते वसुधातलम् । अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयोदिशश्च । नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य! ॥ इत्यादिसामानाधिकरण्यप्रयोगेषु सर्वैः शब्दैः सर्वशरीरतया सर्वप्रकारं ब्रह्मैवाभिधीयत इति चोक्तं, सत्यसङ्कल्पं परं ब्रह्म स्वयमेव बहुप्रकारं स्यामिति सङ्कल्प्याचित्समष्टिरूपमहाभूतसूक्ष्मवस्तु भोक्तृवर्गसमूहं च

अत उभयविल*क्षणमेव ब्रह्मेति सत्यसङ्कल्पशब्दाभिप्रायः, बहुप्रकारं स्यामित्यनेन बहु स्यामित्येतद्व्याख्यातम् । अचित्समष्टिरूपमहाभूतसूक्ष्ममिति महदाद्यपेक्षया प्रकृतिस्समष्टिस्सैव महाभूतसूक्ष्ममिति व्याख्यानव्याख्येयभावः। भोक्तृवर्गसमूहं चेति, अनेन यतः प्रधानपुरुषावित्यत्र पुरुषशब्दो व्याख्यातः पुरुषशब्दो नैकजीवपरः अपि तु जीवसमष्टिपर इत्यर्थः । स्वस्मिन्प्रलीनं स्वयमेव विभज्येति एकीभूतमव्यक्तावस्थं व्यक्तं कृत्वेत्यर्थः । तस्मादिति सृष्टेति समष्टितत्त्वसृष्टिरुक्ता । जीवानामचित्संसर्गस्य अनादि-

* अतोविलक्षणमेव ब्रह्मेति पा० ।

त्वात् तद्व्यावृत्त्यर्थमात्मतये-युक्तं, व्यष्टिदेहाभिमानितया प्रवेश्येत्यर्थः। व्यष्टिसृष्टिरुच्यते तैरिति, चिदधिष्ठितैः-चित्संसृष्टैरित्यर्थः। पुरुषाधिष्ठितत्वाच्चाव्यक्तानुग्रहेण च महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते। इति

**स्वस्मिन् प्रलीनं स्वयमेव विभज्य तस्माद्भूतसूक्ष्माद्वस्तुनोमहाभूतानि सृष्ट्वा तेषु च भोक्तृवर्गमात्मतया प्रवेश्य तैश्चिदधिष्ठितैर्महाभूतैरन्योन्यसंसृष्टैः कृत्स्नं जगद्विधाय स्वयमपि सर्वस्यात्मतया प्रविश्य परमात्मत्वेनावस्थितं सर्वशरीरं बहुप्रकारमवतिष्ठते, यदिदम्महाभूतसूक्ष्मं वस्तु तदेव प्रकृति-शब्देनाभिधीयते, भोक्तृवर्गसमूह एव पुरुष-शब्देन चोच्यते, तौ च प्रकृतिपुरुषौ परमात्मशरीरतया परमात्मप्रकारभूतौ तत्प्रकारः परमात्मैव प्रकृतिपुरुषशब्दाभिधेयः**

अत्र पुरुषाधिष्ठितशब्दस्य चित्संसृष्टतापरत्वज्ञापनाय चिदधिष्ठितैरित्युक्तम्,। अन्योन्यसंसृष्टैरिति पञ्चीकरणं विवक्षितं, कृत्स्नं जगदिति ब्रह्माण्ड-तदन्तर्गतभोक्तृभोगोपकरणभोगस्थानदेव मनुष्यादिस्थावरजातमुच्यते, प्रविश्येति तदवस्थचिदचिन्नियन्तृतयाऽवस्थानमुच्यते, प्रवेश्य प्रविश्येति पदाभ्यां जीवप्रवेशस्य पराधीनत्वं, परात्मप्रवेशस्य स्वेच्छाकृतत्वं च दर्शितं, तत्र प्रवेश्य-विधाय प्रविश्येति ल्यबन्तपदानां न पौर्वापर्यविवक्षा, अपि तु कार्यभेदमात्रविवक्षैव तस्य त्वष्टा विदधद्रूपमेतीत्यादिश्रुत्यविरोधात्, परमात्मत्वेनावस्थितमिति अप्रच्युतस्वरूपमवस्थितमित्यर्थः। पूर्ववाक्ये गर्भितमर्थं विवृणोति यदिदमिति, ब्रह्मणश्चिदचिद्विलक्षणत्वे तयोरपि भेदे ब्रह्मणस्तदनुप्रवेशकृततत्तन्नामभाक्त्वे च श्रुतिमाह सोऽकामयतेति, एवं सिद्धवस्तुविषयसंग्रहः कृतः। अथोपायविषयं वक्तव्यमाह ब्रह्मेति, भक्तिनिष्ठा-भक्तियोगाभ्यासः तेन साध्या परभक्तिः प्राप्तिपूर्वावस्था तर्हि ज्ञानस्य कथं मोक्षोपायत्वमित्यत्राह-

सोऽकामयत बहु स्यां प्रजायेयेति तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवदिति पूर्वोक्तं सर्वमनयैव श्रुत्या व्यक्तं, ब्रह्मप्राप्त्युपायश्च शास्त्राधिगततत्त्वज्ञानपूर्व्वकस्वकर्म्मानुगृहीतभक्तिनिष्ठा—साध्यानवधिकातिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपपरभक्तिरेवेत्युक्तं, भक्ति—शब्दश्च प्रीतिविशेषे वर्त्तते, प्रीतिश्च ज्ञानविशेष एव । ननु च सुखं प्रीतिरित्यनर्थान्तरं, सुखं च ज्ञानविशेषसाध्यं पदार्थान्तरमिति हि लौकिकाः, नैवं येन ज्ञानविशेषेण तत्साध्यमित्युच्यते स एष ज्ञानविशेषः सुखम् । एतदुक्तं भवति

भक्तिशब्दश्चेति, प्रीतिविशेष—शब्देन स्वामिनि भृत्यस्यानुरागो विवक्षितः । ततः किमित्यत्राह प्रीतिश्चेति, तत्र वैशेषिकमतेन चोदयति ननु चेति, परिहरति नैवमिति, व्याहतमिदं ज्ञानसाध्यं सुखं ज्ञानमेवेति, न हि दण्डचक्रादिरेव घट इत्यत्राह एतदुक्तम्भवतीति, सुखदुःखमध्यस्थशब्दा अनुकूलप्रतिकूलानुभयरूपविषयवाचिनः तेषां साधारणानीत्यर्थः । तथाभवन्ति सुखं दुःखमनुभयं च भवन्तीत्यर्थः । ज्ञानमेव सुखं स्यादित्यत्राह येनेति, ज्ञानं सुखजनकं चेद्घटज्ञानमपि सुखजनकं स्यात् नैवं स्रक्चन्दनादिविषयविशेषज्ञानं सुखजनकमिति चेत्स्रक्चन्दनादिविषयं ज्ञानमेव सुखमिति न दोष इत्यर्थः । ज्ञानातिरेकि सुखं किं दृष्टम् उत कल्प्यमिति विकल्प्य दूषणमाह तदतिरेकीति, पदाऽर्थान्तरानुपलब्धेरित्यर्थः । द्वितीयं शिरो दूषयति, तेनैवेति, तेनैव—विशेषविशेषितज्ञानेनैवेत्यर्थः । ततः किं प्रस्तुतोपासनस्य अनवधिकातिशयप्रीतिरूपत्वे इत्यत्राह एवं विधेति, ब्रह्मव्यतिरिक्तस्य वस्तुनः

विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि तानि च विषयाधीनविशेषाणि तथा भवन्ति येन च विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतं तद्विषयं ज्ञानमेव सुखं तदतिरेकि पदार्थान्तरं नोपलभ्यते। तेनैव सुखित्वव्यवहारोपपत्तेश्च, एवंविधसुखरूपज्ञानस्य विशेषकत्वं ब्रह्मव्यतिरिक्तस्य वस्तुनः सातिशयमस्थिरं च, ब्रह्मणस्त्वनवधिकातिशयं स्थिरं चेति आनन्दो ब्रह्मेत्युच्यते विषयायत्तत्वात् ज्ञानस्य सुखरूपतया ब्रह्मैव सुखं तदिदमाह रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति ब्रह्मैव सुखमिति ब्रह्म लब्ध्वा सुखी भवतीत्यर्थः ।

एवं विधसुखरूपज्ञानविशेषकत्वमनुकूलत्वमल्पमस्थिरं च ब्रह्मणस्त्वनवधिकातिशयं स्थिरं चानुकूलत्वमित्यर्थः । तत्र श्रुतिमाह आनन्दो ब्रह्मेतीति, । ननु आनन्द-शब्दस्य सुखपर्यायत्वादनुकूलविषयज्ञानस्य सुखशब्दवाच्यत्वोपपादनाच्च आनन्दो ब्रह्मेति ब्रह्मणः सुखत्ववचनमयुक्तमित्यत्राह विषयेति, । अयमर्थः आत्माऽनुकूलं सुखम् इत्यानुकूल्यं हि सुखशब्दप्रवृत्तिनिमित्तं तच्च ज्ञानस्य विषयानुकूल्यप्रयुक्तमिति विषयस्य स्वतोऽनुकूलस्य सुख-शब्दवाच्यत्वं युक्तमित्यर्थः । ज्ञानानुकूलत्वस्य विषयानुकूल्यप्रयुक्तत्वे श्रुतिमाह तदिदमिति, अस्यां श्रुतौ ब्रह्मणः सुखरूपत्वाप्रतीतेस्तां व्याचष्टे ब्रह्मैवेति, तच्छब्दः कारणतया प्रकृतब्रह्मपरामर्शीत्यर्थः । अत्र सुखवाची शब्दः कः, लोके यो यस्य सुखं भवति तत्र स्वस्यापि सुखं भवति, एवं परस्य भोग्यं ब्रह्म न स्वभोग्यमित्यत्राह परमपुरुष इति, स्वयं-स्वस्मै इत्यर्थः । सुखरूपत्वाविशेषादिति स्वपरविभागरहितमानन्दो ब्रह्मेत्यविशेषेणानन्दत्वकथना-

दित्यर्थः । तर्हि रसो वै सः रसं ह्येवायं लब्ध्वाऽनन्दी भवति इति परं प्रत्यानन्दत्वश्रवणं कथमित्यत्राह ब्रह्म यस्येति, ब्रह्म परस्य ज्ञानविषयश्चेत्तस्य सुखं भवति स्वस्य ज्ञानविषयत्वे स्वस्य सुखं भवति ।

**परमपुरुषः स्वेनैव स्वयमनवधिकातिशयसुखस्सन् परस्यापि सुखं भवति, सुखरूपत्वाविशेषात्, ब्रह्म यस्य ज्ञानविषयो भवति स सुखी भवतीत्यर्थः । तदेवं परस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणाकरस्य निरवद्यस्यानन्तमहाविभूतेरनवधिकातिशयसौ*शील्यसौन्दर्यवात्सल्यजलधेः सर्वशेषित्वादात्मनः शेषत्वात्प्रतिसम्बन्धितयाऽनुसन्धीयमानमनवधिकातिशयप्रीतिविषयः सत्**

अतो यस्य ज्ञानविषयभूतं ब्रह्म अविशेषेण तस्य तत्सुखमिति जीवस्यापि सुखरूपं भवतीति अस्याः श्रुतेरर्थ इत्यर्थः । प्रीतिविशेष–शब्देन अभिहि†तमर्थं विवृणोति तदेवमिति, महाविभूतेरित्यन्तेन परत्वोपयोगिगुणजातमुक्तम् । अनवधिकेत्यनेन सौलभ्योपयोगिगुण उक्तः । प्रीतिविषयमिति स्वदास्यानुसन्धानगर्भा प्रीतिर्विवक्षिता । एवं विधप्रीतिरूपज्ञानविषयभूतं ब्रह्म स्वप्राप्त्युपायभूतमित्यर्थः । अपुरुषार्थत्वापादनमुखेन चोदयति ननु चेति, अत्यन्तेत्यादि स्पष्टं । सर्वलोकविरुद्धत्वमुपपादयति तथा हीति, तदिदमित्यादिना परिहरति देहात्माभिमानविजृम्भितत्वमुपपादयति तथा हीति, सुखत्वदुःखत्वे च न स्वातन्त्र्यपारतन्त्र्यप्रयुक्ते अपि तु कर्म्मकृतदेहात्माभिमानप्रयुक्ते इति सोपाधिकत्वं दूषणं वदन् विपरीतात्माभिमानं दर्शयति शरीरं हीति, ततः किमित्यत्राह आत्माभिमान इति, आत्माभिमानानुगुणपुरुषार्थप्रतीतावुदाहरणमाह सिंहव्याघ्रेति, परस्परविरुद्धानीति, परस्परविरुद्धेषु सुखदुःखेषु तत्तदसाधारणं प्रयोजकं न भवति व्यभिचारात् तस्मादनुवार्यप्रयोजकं विपरीतात्माभिमानानुरूपमित्यभिप्रायः ।

* सौशील्येति पा० । † अभिप्रेतमर्थमिति पा० ।

परं ब्रह्मैवैनमात्मानं प्रापयतीति । ननु चात्यन्तशेषतैवात्मनोऽनवधिकातिशयं सुखमित्युक्तं भवति, तदेतत्सर्वलोकविरुद्धं, तथा हि सर्वेषामेव चेतनानां स्वातन्त्र्यमेवेष्टतमं दृश्यते पारतन्त्र्यं दुःखतरं, स्मृतिश्च—सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । तथा च—सेवा श्ववृत्ति*र्व्याख्याता तस्मात्तां परिवर्जयेत् । इति तदेतदनधिगतदेहातिरिक्तात्मस्वरूपाणां शरीरात्माभिमानविजृम्भितं, तथा हि शरीरं हि मनुष्यत्वादिजातिगुणाश्रयपिण्डभूतं स्वतन्त्रं प्रतीयते तस्मिन्नेवाहमिति संसारिणां प्रतीतिः, आत्माभिमानो यादृशः

सोपाधिकत्वमुपसंहरति तस्मादिति, आत्मानुकूलं सुखमात्मप्रतिकूलं दुःखमिति सुखदुःखलक्षणं, तस्मात्स्वतन्त्रतयाऽऽत्माभिमाने प्रतिकूलत्वात् पारतन्त्र्यं दुःखं भवति न तु पारतन्त्र्यादित्यर्थः । कथं समाहितमित्यत्राह आत्मस्वरूपं त्विति, । ज्ञानैकाकारत्वे परशेषतैकस्वरूपत्वे च प्रमाणमाह आत्मा ज्ञानमय इति, अत इत्यादि स्पष्टम् । एवं सोपाधिकत्वं कण्ठोक्तम् अनैकान्त्यं च लोकसिद्धमित्यनुक्तं केवलमुपायतया स्वीकृतं पतिपारतन्त्र्यमेवापुरुषार्थः भोग्यतमत्वेन स्वीकृतं पतिपारतन्त्र्यं पुरुषार्थ एव लोके दृश्यते इति । किञ्च कालात्ययापदिष्टश्चाभिप्रेतः, तथा हि भगवत्पारतन्त्र्यस्य दुःखरूपत्वं साध्यते किमितरपारतन्त्र्यस्य, इतरस्य चेत्साध्यतां, भगवत्पारतन्त्र्यस्य दुःखरूपत्वं केन प्रमाणेन साध्यते न तावत्प्रत्यक्षादिना तदगोचरत्वात्, आगमैस्तु भगवत्पारतन्त्र्यं सुखरूपमेवावगम्यत इति पारतन्त्र्यसाम्याल्लोकसिद्धपारतन्त्र्यं सपक्षीकृत्य दुःखरूपत्वं साध्यते चेदत्र किमागममभ्युगम्य साध्यते, उतानभ्युपगम्य अनभ्युपगमे आश्रयासिद्धिः ।

तदनुगुणैव पुरुषार्थप्रतीतिः सिंहव्याघ्रवराहमनुष्ययक्षरक्षःपिशाचदेवदानवस्त्रीपुंसव्यवस्थितात्माभिमानानां सुखानि व्यवस्थितानि, तानि च परस्पर-

* श्ववृत्तिराख्यातेति पा० ।

विरुद्धानि, तस्मादात्माभिमानानुगुणपुरुषार्थव्यवस्थया सर्वं समाहितम् ।

आत्मस्वरूपं तु देवादिदेहविलक्षणं ज्ञानैकाकारं तच्च परशेषतैकस्वरूपं, यथाऽवस्थितात्माभिमाने तदनुगुणैव पुरुषार्थप्रतीतिः, आत्मा ज्ञानमयोऽमलः इति स्मृतेर्ज्ञानैकाकारता पुरुषार्थता प्रतिपन्ना, पतिं विश्वस्येत्यादिश्रुतिगणैः परमात्मशेषतैकाकारता च प्रतीता । अतस्सिंहव्याघ्रादिशरीरात्माभिमानवत् स्वातन्त्र्याभिमानोऽपि कर्म्मकृतविपरीतात्मज्ञानरूपो वेदितव्यः । अतः कर्म्मकृतमेव परमपुरुषव्यतिरिक्तविषयाणां सुखत्वम् । अत एव तेषामल्पत्वमस्थिरत्वं च परमपुरुषस्यैव स्वत एव सुखत्वम् । अतस्तदेव स्थिरमनवधिकातिशयं च, कं ब्रह्म खं ब्रह्म आनन्दो ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः, ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य वस्तुनः स्वरूपेण सुखत्वाभावः कर्म्मकृतत्वेन चास्थिरत्वं भगवता पराशरेणोक्तं—नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ! । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च । कोपाय च यतः

अभ्युपगम्य चेद्धर्म्मिग्राहकप्रमाणबाध इत्यभिप्रेतं दूषणं, परशेषतैकस्वरूपत्वे पतिं विश्वस्येत्यादिप्रमाणतया भाष्यकारेणाभिप्रेतं भगवत्पारतन्त्र्यं सुखरूपमस्तु विपरीतात्माभिमानेऽपि सुखमनुभूयते चेत् किं ब्रह्मप्राप्त्येत्यत्राह अतः कर्म्मकृतमेवेति, इतरसुखानां कर्म्मकृतत्वात्तत्तारतम्यानुगुणे तदल्पत्वास्थिरत्वे च स्वाभाविकसुखरूपत्वाद् ब्रह्मणोऽनन्तत्वस्थिरत्वे इत्यर्थः । अत्र प्रमाणमाह कं ब्रह्मेति, ब्रह्मणोऽपरिमितसुखत्वश्रुतिरुक्ता व्यतिरिक्तसुखास्थिरत्वादिके प्रमाणं श्रीविष्णुपुराणवचनमाह ब्रह्मेति, पापपुण्ये--पापपुण्यकृते इत्यर्थः । वस्तु वस्त्वात्मकं कुत इत्येतद्

व्याचष्टे सुखदुःखादीति, तस्माद्दुःखात्मकं नास्ति न च किञ्चित् सुखात्मक-मित्यत्रापि कथनादत्राप्येकान्तसुखतया वस्तुत्वमेकान्तदुःखतया वस्तुत्वं च न *सिद्धमिति भावः । सुखाद्येकान्तत्वप्रतीतिः कथमित्यत्राह तदेकान्तेति,

**तस्माद्वस्तु वस्त्वात्मकं कुतः । सुखदुःखाद्येकान्त-रूपिणो† वस्तुनो वस्तुत्वं कुतः तदेकान्तता पुण्यपा-पकृतेत्यर्थः । एवमनेकपुरुषापेक्षया कस्यचित्सुखमेव कस्यचिद्दुःखं भवतीति व्यवस्थां प्रतिपाद्य एकस्मि-न्नपि पुरुषे न व्यवस्थितमित्याह—तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते ॥ तस्माद्दुःखात्मकं नास्ति न च किञ्चि-त्सुखात्मकम् ॥ इति, सुखदुःखात्मकत्वं सर्वस्य व-स्तुनः कर्म्मकृतं न वस्तुस्वरूपकृतम्, अतः कर्म्माव-साने तदपैतीत्यर्थः । यत्तु सर्वं परवशं दुःखमित्युक्तं तत्परमपुरुषव्यतिरिक्तानां परस्परशेषशेषिभावाभा-वात् तद्व्यतिरिक्तं प्रति शेषता दुःखमेवेत्युक्तम् ।**

उक्तवक्ष्यमाणश्लोकयोरपौनरुक्त्यार्थमाह एवमिति, एकस्मिन्नपि पुरुषे न व्यवस्थितमिति कालभेदेनेत्यध्याहारः । उदाहृतश्लोकार्थमाह सुखदुःखात्मकत्वमिति, । फलितमर्थमाह अत इति, पूर्वपक्षोक्तग्रन्थार्थमाह यत्त्विति, परस्परं शेषशेषिभावाभावादिति स्वभावतोऽभावादित्यर्थः । सेवे-त्यादि स्पष्टं, कथमस्य वचनस्यापसेवाविषयत्वमित्यत्राह स हीति, तद्व्या-चष्टे सर्वेति, भगवद्वचनमाह यथोक्तमिति, कथं सेवाया मोक्षोपायत्वं ज्ञानं हि मोक्षोपाय इत्यत्राह इयमेवेति, -भज इत्येष धातुर्वै सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ॥ इति भगवद्बो-धायनवचनं, सेवा भक्तिरुपास्तिरिति निघण्टुः, तस्माद्भक्तिरूपसेवा वेदना-दिशब्दवाच्येत्यर्थः । सेवा भक्तिस्तु कथं वेदनादिशब्दवाच्या भक्तिरित्य-

* निषिद्धमिति । † एकान्तरूपेणेति पा ।

त्राह इयमेवेति, कथं शेषित्वमित्यत्राह यमेवेति, ततः किमित्यत्राह वरणीयश्चेति, प्रियतमश्च क इत्यत्राह यस्येति, तत्र भगवद्वचनमाह तदुक्तमिति, तस्माद्दिति, पुत्रत्वादिरूपेण भगवत्प्राप्तिर्व्दारयादेरप्यस्तीति तद्व्यावृत्त्यर्थं तत्त्वत इत्युक्तम्,

**सेवा स्मृतिर्व्याख्याता इत्यत्राप्यसेव्यसेवा स्मृत्तिरेवेत्युक्तं,—स ह्याश्रमैस्सदोपास्यस्समस्तैरेक एव चेति सर्वैरात्मयाथात्म्यवेदिभिः सेव्यः पुरुषोत्तम एक एव यथोक्तं भगवता—मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ इतीयमेव भक्तिरूपा सेवा ब्रह्मविदाप्नोति परं, तमेवं विद्वानमृत इह भवति, ब्रह्म वेद ब्रह्मैव भवतीत्यादिषु वेदन—शब्देनाभिधीयत इत्युक्तं, यमेवैष वृणुते तेन लभ्य इति विशेषणात् यमेवैष वृणुते इति भगवता वरणीयत्वं प्रतीयते वरणीयश्च प्रियतमः ।**

यथावदनुभवसाधनमित्यर्थः । तत्र महाभारते वचनमाह यथोक्तमिति, न संदृशे तिष्ठतीत्यादिश्रुतिगणरूपत्वात्सर्वोपनिषद्व्याख्यानरूपमित्युक्तं. न संदृश इत्यादि पूर्वार्द्धं वेदे महाभारते च तुल्यं, भात्यनेनोत्तरार्द्धगतहृच्छब्दो व्याख्यात इति ज्ञायते, स्थानप्रमाणाद् धृतिरिन्द्रियाणां विषयवैमुख्यकरणम्, अनेन शमदमादय उपलक्षिताः । हृदा मनीषा मनसाऽभिक्लृप्तः भक्त्या शमदमादिना चान्वितेन मनसा सम्पद्यत इति तस्य वाक्यस्यार्थः । श्लोकमन्वयक्रमेण व्याचष्टे धृत्येति, । अन्वयक्रम एवमिति कथमवगम्यते इत्यत्राह भक्त्या त्विति, ततः किं वेदनादिशब्दैः भक्तेरभिधेयत्वे इत्यत्राह भक्तिश्च ज्ञानविशेष एवेति, भक्तिः—प्रीतिविशेषः प्रीतिश्च ज्ञानादनर्थान्तरमिति पूर्वमेवोक्तं, तस्मात्प्रीतिरूपा भक्तिर्ज्ञानविशेष इति । सर्वमुपपन्नमिति । स्वपक्षस्थापन—परपक्षप्रतिक्षेपरूपयोर्यत्प्रमाणजातमुक्तं तेनैवानुक्तमन्यदपि च वक्तव्यं सर्वं निर्वाह्यम् । अत्रैव कृत्स्नान्तर्भावादित्यर्थः । अस्य प्रबन्धस्यातिगम्भीरताप्रदर्शनार्थमाह सारासारेति, अनेन

सर्वजनापरिग्रहो न दोषः, अशिष्टपरिग्रह एव दोषः । तस्माद्विशिष्टजन-परिग्रह एव श्लाघ्यताहेतुरिति चोक्तं भवति, । सारासारविवेकज्ञाः परस्परविरुद्धानेकार्थेषु प्रतिपन्नेषु

यस्य भगवत्यनवधिकातिशया प्रीतिर्जायते स एव भगवतः प्रियतमः, तदुक्तं भग*वता—प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ इति, तस्मात्परभक्तिरूपापन्नमेव वेदनं तत्त्वतोभगवत्प्राप्तिसाधनं, यथोक्तं भगवता द्वैपायनेन मोक्षधर्म्मे सर्वोपनिषद्व्याख्यानरूपं —न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह ॥ धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति—साक्षात्करोति प्राप्नोतीत्यर्थः । भक्त्या त्वनन्यया शक्य इत्यनेनैकार्थ्यात्, भक्तिश्च ज्ञानविशेष एवेति सर्वमुपपन्नम् ।

सारासारविवेकज्ञा गरीयांसो विमत्सराः ।
प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसंग्रहः ॥

इति श्रीभगवद्रामानुजाचार्यविरचितो वेदार्थसंग्रहः समाप्तः ॥

श्रीपुराणपुरुषोत्तमोलक्ष्मीविलासलालसो गोपीजनस्वजनोराधासमाराधनव्यग्रो विजयतेतराम् ॥

तत्र प्रमाणतर्कैः प्राबल्यदौर्बल्यविभागविदः, गरीयांसः,—बहुश्रुताः, न बाहुश्रुत्याभावे तत्तच्छास्त्रोक्तानां प्राबल्यदौर्बल्यविभाग उपपद्यते । बहुश्रुतस्याप्यस्मिन् शास्त्रेऽयमर्थ उक्तः अन्यत्रान्यः किमत्र तत्त्वमिति व्यवस्थितिर्नास्तीति केचिन्मन्दधियो मन्यन्ते, अतः सारासारविवेकज्ञत्वमपेक्षितम्, एवमुभयस्मिन्सत्यप्यस्मत्सवयसाऽनेनोक्तं कथं वयमङ्गीकुर्म इति मत्सरो-

* भगवतैवेति पा० ।

पहताश्चेदुभयमपि निष्फलमिति तद्व्यावृत्त्यर्थं विमत्सरा इत्युक्तम् । उक्तविशेषणत्रयफलमाह प्रमाणतन्त्रा इति, ये प्रमाणानुसारिणः तदनुगुणैस्तर्कैरर्थं निरूपयन्ति न तु स्वापेक्षितार्थे प्रमाणजातं क्लेशेन नयन्ति ते प्रमाणतन्त्राः । कालो ह्ययं निरवधिर्विपुला च पृथ्वीति प्रकारेण यत्र कुत्रचिद्यदा कदाचिदेवंविधाः पुरुषास्सम्भविष्यन्तीति मत्वा तेषामभिमतिविषयत्वेन वेदार्थसंग्रहः कृत इत्यर्थः ॥

वेदार्थसंग्रहसुधां वेदान्ताब्धेर्य आहरत् ।
रामानुजाय मुनये तस्मै भगवते नमः ॥
वेदार्थसंग्रहव्याख्याऽभिहितेयं यथाश्रुता ।
वेदव्यासापराख्यानश्रीसुदर्शनसूरिणा ॥

इति श्रीहरितकुलतिलकश्रीवाग्विजयिसूनुना श्रीवत्साङ्कमिश्रवंश्येन श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवांसमधिगतवेदार्थसंग्रहतात्पर्येण श्रीसुदर्शनसूरिणा विलिखिता तात्पर्यदीपिका समाप्ता ॥

श्रीसंवत् १९५० आश्विनशुक्लदशम्यां, शुक्रवासरान्वितायां पूर्तिमाप शोधनकार्यं, पूर्वाचार्यकृपास्पदस्य परमपूरुषकृपासरित्पूरपरीवाहपूर्णपात्रस्य सत्संप्रदायाचार्यपण्डितस्वामिश्रीराममिश्रशास्त्रिणः श्रमसेवया ॥

तत्तत्कल्पितयुक्तिभिः शकलशः कृत्वा तदीयं मतम् ।
यच्छिष्यैरुदमर्दि सात्त्वतमतस्पर्धावतामुद्धतिः ॥
यच्चेतः सततं मुकुन्दचरणद्वन्द्वास्पदं वर्तते ।
जीयान्नाथमुनिः स योगमहिमप्रत्यक्षतत्त्वत्रयः ॥ १ ॥
वन्दिषीय वरणीयवाङ्मयं वारिधिं वरगुणौघसम्पदाम् ।
वत्सवंश्यवरदार्यमंशयं वादिहंसनववारिदं गुरुम् ॥ २ ॥
श्रीविष्णुचित्तपदपङ्कजसङ्गमाय चेतो मम स्पृहयते किमतः परेण ।
नोचेन्ममापि यतिशेखरभारतीनाम्भावः कथम्भवितुमर्हति वाग्विधेयः ॥ ३ ॥
यः पर्याप्तकलः ख्यातो यतिराजाब्धिचन्द्रमाः ।
कुशलं दिशतान्मेऽसौ कुरुकेश्वरदेशिकः ॥ ४ ॥
तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ ५ ॥
नमो नमः पूर्वाचार्येभ्यो बोधायनप्रमुखेभ्यः ।

नोपसंहार्यत्वमिति प्रसक्तात्सङ्गतिः, उद्गीथोपासनादीनि किं सर्वे[१]विद्यासु प्रोक्षणावघातादिवन्नियमेनोपादेयानि? उत गोदोहनादिवदनियमेनोपसंहार्याणी? ति विचारः, किमेतानि क्रत्वर्थानि? उत गोदोहनादिवत् पुरुषार्थभूतानि? यश्चैतदेवं वेद यश्च न वेदेत्यनियमदर्शनं किं पुरुषार्थतामवगमयति? नेति? वीर्यवत्तरत्वश्रुतिः किमपापश्लोकश्रवणवदर्थवादः? उत फलविधि? रिति, अर्थवादश्चेत् यश्चैतदेवमित्यादिवाक्यस्य पुरुषार्थताऽवगमकत्वाभावेन क्रत्वर्थत्वान्नियमेनोपादेयता, फलविधिश्चेदनियमवाक्यस्य पुरुषार्थत्वगमकतया गोदोहनतुल्यत्वादुपादानानियमः उपासनस्य निर्धारणशब्दवाच्यत्वे हेतुरयं छान्दोग्ये "कतमत् कतमत् साम कतम उद्गीथ". इति विमृश्य "वागेवर्क् प्राणस्सामोमित्युद्गीथ" इति निर्द्धारणम् ऊमित्येतदित्यादि क्रतुप्रकरणाधीते जुह्वा जुहोतीति वाक्ये जुहूर्होमसाधनत्वेन विहिता, प्रकरणान्तराधीतमपि यस्य पर्णमयी जुहूर्भवतीति वाक्यं जुहूमनूद्य तस्याः पर्णमयत्व विदधाति, तत्र जुहूद्वारा पर्णमयत्वमङ्गं तद्वत् प्रकरणान्तरविहितमप्युपासनमुद्गीथद्वारा क्रत्वङ्गमित्यर्थः । उद्गीथादिविषयस्योपासनस्य प्रकरणान्तराधीतस्यापि क्रत्वङ्गत्वं हि निरूप्यते, तत्र प्रकरणान्तराधीतं. क्रत्वङ्गद्वारा तदङ्गभूतं किंचिद्दृष्टान्तीकर्त्तव्यमित्यभिप्रायेण प्रोक्षणादिषु सत्स्वपि पर्णता दृष्टान्तिता, फलसाधनमेव ह्यनुष्ठेयम्, उपासनस्य च पृथक्फलसाधनत्वे सत्यङ्गत्वमनुपपन्नमित्यचाह "कर्माङ्गत्वेन निरूढानुष्ठानानी"ति, अफलस्याप्यङ्गत्वेनानुष्ठानं निरूह्यत इत्यर्थः । पृथक्फलसाधनत्वं श्रुतमिति शङ्कायां न स पापं श्लोकं शृणोतीति पर्णत्वार्थवादवदिदमप्यर्थवाद इत्याह उद्गीथाद्युपासनसम्बन्धिन इत्यादिना,

सू० वर्त्तमाननिर्देशस्य पर्णतादिसम्बन्ध्यपापश्लोकश्रवणवत्पृथक्फलत्वकल्पनायोगात् .क्रतुषु नियमेनोपसंहार्याणीत्येवं प्राप्ते प्रचक्ष्महे तन्निर्धारणानियम इति, निर्धारणं नि-

१ सर्वक्रतुषु इति पा० ।

श्वयेन मनसोऽवस्थापनं ध्यानमित्यर्थः । तन्निर्धारणानियमः कर्मसूद्गीथाद्युपासनानामनियमः, कुतः तद्दृष्टेः, उपलभ्यते ह्युपासनानुष्ठानानियमः, "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद"त्यविदुषोऽप्यनुष्ठानवचनात्, न चाङ्गत्वे सत्युपासनस्यानुष्ठानाऽनियम उपपद्यते, एवमुपासनस्यानङ्गत्वे निश्चिते सत्युपासनविधेः फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वं कर्मफलात्पृथग्भूतमेव फलमित्यवगम्यते । किमिदं वीर्यवत्तरत्वं कर्मफलस्यैवाप्रतिबन्धः, प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन तावन्तं कालं तदभावोऽप्रतिबन्धः, कर्मफलात्स्वर्गादिलक्षणात् पृथग् भूतमेव फलं, तदिदमुच्यते पृथग्ध्यप्रतिबन्धः फलमिति, अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वात् ।

टी० वर्त्तमाननिर्देशस्येति वर्त्तमानवन्निर्देशो यस्येति बहुव्रीहिः वीर्यवत्तरत्वस्येत्यध्याहार्यं गोदोहेन 'पशुकामस्य प्रणयेदित्यत्र हि विधिप्रत्ययोऽस्तीति तद्व्यावृत्तिः पशुकामस्य प्रणयनसाधनत्वं हि गोदोहनस्य विधेयं नान्यस्य, अतः फलेऽपि विधिकटाक्षोऽस्ति स तु नात्र विवक्षित इत्यर्थः फलस्य वाक्यान्तरस्थत्वाद्विप्रकर्षोऽप्यभिप्रेतः । एवं प्राप्त इति अर्थवादोक्तमपि फलं विध्यपेक्षितं स्वीकार्यमित्यभ्युपगमयितुं रात्रिसत्रन्यायेनेत्युक्तम् ॥

सू० गोदोहनादिवत्कर्मसूद्गीथाद्युपासनानामनियमेनोपसंहारः ॥ तन्निर्धारणानियमाधिकरणं समाप्तम् ॥

प्रदानाधिकरणम् । **सू० प्रदानवदेव तदुक्तम् ॥ ४२ ॥**

दहरविद्यायां "यद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च स-

त्यान्कामा"निति दहराकाशस्य परमात्मन उपासनमुक्त्वा एतांश्च सत्यान्कामानिति गुणानामपि पृथगुपासनं विहितं, तत्र संशयः गुणचिन्तनेऽपि तद्गुणविशिष्टतया दहरस्यात्मनश्चिन्तनमावर्त्तनीय ? मुत ने ? ति, दहराकाशस्यैवापहतपाप्मत्वादीनां गुणित्वात् तस्य च सदैवा[1] नुसन्धातुं शक्यत्वात्, गुणार्थं तच्चिन्तनं नानु[2]वर्त्तनीयमिति प्राप्त उच्यते "प्रदानवदेवे"ति, प्रदानवदावर्त्तनीयमेवेत्यर्थः । यद्यपि दहराकाश एक एवापहतपाप्मत्वादीनां गुणानां गुणी स च प्रथमं चिन्तितः तथाऽपि स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वादपहतपाप्मा विजर इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात्पूर्वं स्वरूपेणानुसंहितस्यापहतपाप्मत्वादिविशिष्टतयाऽनुसन्धानार्थमावृत्तिः कर्त्तव्या, यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालमनुनिर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञ इतीन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि तत्तद्गुणसम्बन्ध्याकारस्य भिन्नत्वात्प्रदानावृत्तिः, क्रियते, तदुक्तं सांकर्षणे "नाना वा देवता पृथक्त्वा"दिति, प्रदानाधिकरणं समाप्तम् ।

लिङ्गभूयस्त्वाधिकरणम् ।

**सू० लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥**

तैत्तिरीयके दहरविद्यानन्तरमधीयते "सहस्रशीर्षं देवं

1 सकृदेवानुसंधातुमिति पा० ।
2 नावर्त्तनीयमिति पा० ।

विश्वाक्षं विश्वशम्भुवं विश्वं नारायणं देवमक्षरं परमं प्रभुमि"त्यारभ्य "सोऽक्षरः परमः स्वराडि"त्यन्तं. तत्र संशयः किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्द्धारणमनेन क्रियते? उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धारणं?मिति, किं युक्तं दहरविद्योपास्यविशेषनिर्धारणमिति, कुतः, प्रकरणात् पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता "दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्य"मिति, अस्मिंश्चानुवाके पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखमित्यादिना हृदयपुण्डरीकाभिधानमस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणार्थत्वमुपोद्बलयतीति, एवं प्राप्ते प्रचक्ष्महे लिङ्गभूयस्त्वादिति, अस्य निखिलपरविद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते, तथा हि परविद्यास्वक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं विधीयते, भूयसीषु विद्यासु श्रुतानन्नूद्य नारायणत्वविधानभूयस्त्वं नारायण एव सर्वविद्यासूपास्यमस्थूलत्वादिविशेषितानन्दादिगुणकं परं ब्रह्मेति विशेषनिर्णये भूयो-बहुतरं लिङ्गं भवति, अत्र लिङ्ग-शब्दश्चिन्हपर्यायः, चिन्हभूतं वाक्यं बहुतरमस्तीत्यर्थः ॥ तद्धि प्रकरणाद्बलीयः तदप्युक्तं प्रथमे

१ शंभुवमिति पा॰ ।

काण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति, यत्तूक्तम्-

टी० 'गोदोहनादिव'दिति नियमेनोपादेयं ह्यङ्गं पशुकामनाऽस्तीति चेत् गोदोहनोपसंहारः न त्वन्यदा, अतोऽङ्गत्वाभावात् गोदोहनस्य न क्रत्वर्थत्वम् अपि तु पुरुषार्थत्वमेवेति निर्णीतं कर्मकाण्डे, । अन्ये तु यदेव विद्यया करोतीति कर्मणि विद्याया नियमितत्वात् क्रत्वर्थमिति पूर्वपक्षयुक्तिमाहुः । तदयुक्तं तरपा फलातिशयप्रतीतिः, विद्यावतः कर्मणो वीर्यवत्तरत्वाद्विद्याहीनस्य कर्मणोऽवीर्यवत्त्वं ह्यनुज्ञायते, अतो-वीर्यवत्तरत्वफलसत्तामुपगम्य तच्छ्रवणस्यार्थवादत्वं पूर्वपक्षिणा वाच्यम् अर्थवादत्वं च हेत्वन्तरेणाङ्गत्वे सिद्धे वक्तव्यम् अतोऽव्यभिचरितक्रतुसम्बन्धिपदार्थसम्बन्ध एव पूर्वपक्षहेतुः ॥ तन्निर्धारणानियमाधिकरणं समाप्तम् ॥ सू० प्रदानवदेव तदुक्तम् ॥ ४२ ॥ पूर्वाधिकरणं प्रसङ्गान्निरूपितम् । अथ तत्पूर्वदहरविद्याविषयं निरूपणं क्रियत इति सङ्गतिः, दहरविद्यायां तत्तद्गुणचिन्तने तत्तद्गुणविशिष्टतया दहरचिन्तनमावर्त्तनीयं ने? ति किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनमपि कृतं ने? ति कृतं चेन्नावर्त्तनीयं, न चेदावर्त्तनीयं, दहरेत्यादि केवलगुणिचिन्तनं नामानन्दत्वादिविशिष्टस्वरूपचिन्तनं. गुणाष्टकचिन्तनं गुणचिन्तनं, तस्य च सकृदेवानुसन्धातुं शक्यत्वादिति, सकृदेव तन्त्रेणेत्यर्थः स्वरूपचिन्तनार्थं गुणचिन्तनार्थं च तन्त्रेणानुसन्धातुं शक्यत्वादित्यर्थः, गुणविशिष्टाकारस्य भिन्नत्वात् गुणविशिष्टाकारः गुणसम्बन्धिरूपसमुदाय इत्यर्थः, तस्य स्वरूपमात्राद् भिन्नत्वात्, न हि स्वरूपमात्रं गुणानां गुणिनश्च समुदायो भवतीत्यर्थः । अपहतपाप्मा विजर इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वादिति, अपहतपाप्मा विजर इत्यादिशब्दानां गुणिपर्यन्ताभिधायित्वादेतांश्च सत्यान् कामान् इत्यत्रापि गुणिपर्यन्तानामेव गुणानामुपासनं विहितमित्यर्थः । परे चापरे छान्दोग्ये वाजसनेयके च अध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः, अधिदैवमग्न्या-

द्रीनां वायुरिति तदेतदुदाहृत्य वायुप्राणयोस्तत्त्वैक्यात् अपृथक् चिन्तनमिति विमृश्य पृथक्कीर्त्तनं सिद्धान्तयन्ति । अन्ये तु वाजसनेयके "तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षि"त्येतदुदाहृत्य पूर्ववत् पूर्वपक्षसिद्धान्तौ वदन्ति, तदयुक्तं सम्बन्धादेवमन्यत्रापीत्यत्र स्थानभेदत एव विद्याभेदस्य समर्थितत्वात्, तस्य विद्याभेदहेतुत्वं वेद्यान्तर्भावाद्विद्याबहिर्भावे वित्तिभेदापादकत्वानुपपत्तेः, अतोऽमावास्यायां दधिपयसोः प्रदानवत् तन्त्रेणेति पूर्वपक्षशङ्काऽनुपपन्ना, तत्र हीन्द्र एवोद्देश्य इति नोद्देश्यभेदः, अत्र तूपास्यरूपभेदात्तन्त्रेण चिन्तनं शङ्कनीयं स्यात्तदुर्यविशिष्टमेकमिति चिन्ता युज्यत इति चेत् न विद्याद्वयोत्तीर्णत्वेन द्वयोस्तन्त्रानुष्ठानासिद्धेः, तस्माद्विद्यैकत्वे स्थिते पृथगपृथक् चिन्तनविचारो यथोपपद्यते तथा विषयः प्रदर्शनीयः, अतो दहरविद्यायामेवैषा चिन्ता युक्ता ॥ प्रदानाधिकरणं समाप्तम् ॥ सू॰ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥ पूर्वप्रकृतविद्यैकवाक्यत्वेन सङ्गतिः किं पूर्वप्रकृतेति परविद्येति दृष्टिविधिव्यावृत्तिः । किं सर्वासु परविद्यासु नारायण एवोपास्यः? उत दहरविद्यामात्रे? किं नारायणानुवाके सर्वविद्यानामुपास्यविशेषो निर्धार्यते? उत दहरविद्याया एव किमत्र दहरोद्देशेन नारायणत्वं विधीयते? उत सर्वविद्योपास्योद्देशेने? ति किं हृदयायतनत्वश्रवणमनुरोद्धव्यम्? उत लिङ्गभूयस्त्वं? हृदयायतनश्रवणानुरोधे दहरोद्देशेन नारायणत्वविधानान्नारायणानुवाकस्य दहरविद्यामात्रोपास्यविषयत्वात्तस्यामेव नारायण उपास्यः स्यात्, लिङ्गभूयस्त्वानुरोधे सर्वोपास्योद्देशेन नारायणत्वविधानान्नारायणानुवाकस्य सर्वविद्योपास्यविशेषनिर्द्धारकतया सर्वासु परविद्यासु नारायण एवोपास्य इति परविद्येति दृष्टिविधिव्यावृत्तिः आत्मा गुहायां निहितोऽस्य जन्तोरिति पूर्वानुवाके आत्म-शब्दः श्रुतः, अत्राप्यात्मा नारायणः पर इत्यात्म-शब्दश्रवणाद्दहरविद्यामात्रान्वयीत्यर्थसिद्धम् । एवं प्राप्त इति विद्रूपर्याय इति, न तु श्रुतिलिङ्गादिषु लिङ्गमित्यर्थः ॥

सू० पद्मकोशप्रतीकाशमित्यादि वचनं दहरविद्याशेषत्वम-मस्योपोद्बलयतीति तन्न बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः न च सहस्रशीर्षमित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासिना सम्बन्धः शङ्कनीयः, तस्मिन् यदन्तस्तदुपासितव्यमित्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणोऽभिहितत्वात्तदुपास्ये द्वितीयाऽनुपपत्तेः, विश्वमेवेदं पुरुषः तत्त्वं नारायणः पर इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या, "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः स ब्रह्म स शिवः सेन्द्रः सोऽक्षरः परमः स्वराडिति"ति निर्देशैः ।

टी० पद्मकोशेत्यादि, यथा ऐतदात्म्यमिदं सर्वमिति सामान्येनोक्तं ब्रह्मात्मकत्वं तत्त्वमसीति जीवविशेषे निगमितं, तथा नारायण एव सर्वविद्योपास्यः तस्माद्दस्मिन्नपि विद्याविशेषे स एवोपास्य इति विशेषे तत्प्रदर्शनमित्यर्थः । न च सहस्रशीर्षमित्यादीति, येनावृतं खं च दिवं महीं चेति वद् द्रष्टव्यमिति भावः । विश्वमेवेदमित्यादिना प्रथमार्थत्वमेव सन्निकृष्टवाक्यैरुपपादितं द्वितीयाविभक्त्यन्तवाक्यानुगुणं प्रथमान्तानि वाक्यानि किं न नेयातीति शङ्कायामुपरितनवाक्यैश्च प्रथमार्थत्वमुपपादयति "अन्तर्बहि"श्चेति, उपासीतेति विधिपदाध्याहारश्च स्यादित्यर्थसिद्धं विद्यादुपासीतेत्यादिविधायकपदरहितानां भगवत्परत्वपराणामनेकवाक्यानां पर्यालोचनया सर्वविद्यासूपास्यविशेषनिर्धारणपरत्वम् अस्यानुवाकस्य प्रतीयते पूर्वानुवाकोक्तदहरविद्याशेषत्वे पूर्वापरवाक्यानामर्थस्वभावविरोधः, विधिपदाध्याहारः प्रथमान्तपदानामस्वारस्यं च

सर्वविद्योपास्यविशेषनिर्द्धारणपरत्वे येनावृतं खं च दिवं महीं चेत्यादिवद् द्वितीयान्तपदमात्रास्वारस्यं न तु विधिपदाध्याहार, नापि पूर्वापरवाक्यावगतार्थस्वभावविरोधः ॥ ननु प्रथमार्थत्वे सति पूर्वानुवाकस्थितेनोपासितव्यमिति पदेनान्वयो घटते नैवं स्वारसिकेभ सर्वस्मात्परत्वप्रतिपादनेन वाक्यस्य निराकाङ्क्षत्वे सत्यपि पूर्वानुवाकस्थपदाकर्षणेनान्वयकल्पनायोगात् ।

मू० सर्वस्मात्परो नारायण एव सर्वत्रोपास्य इति निर्णयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ लिङ्गभूयस्त्वाधिकरणं समाप्तम् ॥

टी० सर्वस्मात्परो नारायण एवेत्यस्यायमभिप्रायः केचिन्नारायणपरं ब्रह्मेति वाक्ये नारायणात्परमिति अन्तर्गतमिति अन्तर्गतसमासं वदन्ति तदयुक्तं प्राप्तिपदकेन विभक्त्यर्थलक्षणा हि समासः मुख्यार्थे सम्भवति लक्षणानुपपत्तेः, समासेऽपि निषादस्थपतिन्यायेन नारायण एव परमिति प्रथमाविभक्तिस्वीकारोपपत्तेः, महोपनिषदि नारायणः परं ब्रह्मेति व्यासेन समासार्थावगमात्, अन्यथा पूर्वापरवाक्यविरोधात् तत्त्वं नारायणः पर इति विरोधात् श्रुत्यन्तरविरोधात् सुपां सुलुगित्यादिसूत्रेण विभक्तिलोपेनासमासेऽपि नारायणशब्दस्य प्रथमान्तत्वसाधुत्वाच्चेति आत्म-शब्दश्चात्मा वा अरे द्रष्टव्यः आत्मा वा इदमेक एव आत्मनस्तु कामाय आत्मानमेव लोकं तमेवैकं ध्यायथात्मानमित्यात्म-शब्दस्य बहुपूपनिषत्सूद्घोषात्तेष्वपि नारायणस्यैवोपास्यत्वसाधकः, इतरे त्वयोऽपि लिङ्गभूयस्त्वादिति सूत्रमुत्तराधिकरणशेषं सिद्धान्तोपक्रमं व्याचक्षते तान् हैतानेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्ति अपि स्वपत इत्यादीनि भूयांसि लिङ्गानि, लिङ्गं च प्रकरणात् बलीय इति, पूर्वविकल्प इत्यादिपूर्वपक्षसूत्रद्वयं तदयुक्तं लिङ्गे उपन्यस्ते दुर्बलप्रकरणेन पूर्वपक्षोत्थानायोगात् । ननु सत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानत्वल्लिङ्गं न प्रकरणं बाधितुमुत्सहत इति चेत् तर्हि श्रुत्यादिबलीयस्त्वा-

दिति सिद्धान्तदशायाम् आदि-शब्दोपात्तत्वं दुर्बलस्य लिङ्गस्यानुपपन्नं, ननु तत्र प्राबल्यहेतुर्विवक्षित इति चेत् अशाब्दत्वात् अभिप्रेत इति चेत् कथमभिप्रायः श्रुतविध्युद्देशानामन्यार्थदर्शनानां तदेकवाक्यत्वादर्थान्तराप्रापकत्वम्, अत्र तु विस्पष्टविध्यन्तरानुपलब्धेर्नार्थवादत्वं किन्तु वचनानि त्वपूर्वत्वादित्यादिना विधिः कल्पनीय इति चेत् तर्हि लिङ्गभूयस्त्वादिति सूत्रवैयर्थ्यम्, अत्रोक्तस्य सिद्धान्तहेतोस्तत्प्राबल्यस्य च सूत्रान्तरसिद्धत्वात् पृथगधिकरणत्वे तु सप्रयोजनत्वं, दर्शनाच्चेत्येतत् पूर्वोक्तलिङ्गदर्शनादिति परे चापरे चाहुः, तदयुक्तं लिङ्गभूयस्त्वादित्यनेन श्रुत्यादीत्यादि-शब्देन च पुनरुक्तेः, दृष्टश्च तदुक्तमित्यस्य क्रियाप्रकरणादुत्कर्षेण स्वातन्त्र्याङ्गीकारो मनश्चितादीनां न्याय्यः राजसूयप्रकरणादवेष्टेरुत्कर्षो दृष्ट इति, तदुक्तं भेदलक्षणे "अवेष्टौ यज्ञसंयोगादिती"ति त्रयोऽप्याहुः ततोऽपि विधिकल्पनपरत्वमुचितं स्वातन्त्र्यस्यापि विधिकल्पनमूलकत्वाच्च ह्यविहितस्य कस्यचित् स्वातन्त्र्यं शक्यमुपगन्तुम् । अन्ये तु प्रज्ञान्तरशब्दमेवमाहुः योऽश्वमेधेन यजते य उ चैनमेवं वेदेत्यश्वमेधाद्युपासनमश्वमेधादिभ्यः पृथगिति ततोऽपि शाण्डिल्यविद्यादिपरत्वं युक्तं प्रतीतिशैघ्र्यात् मानसग्रहस्तुत्यादिसामान्येन न क्रियाशेषत्वं पुरुषार्थत्वोपलब्धेरित्येतदर्थपरं न सामान्यादिति सूत्रं परे चापरे चाहुः । विद्यामयस्य क्रियानुप्रवेशसम्भवमात्रे दृष्टान्तत्वान्मानसग्रहस्य तत्र परिहरणीयाभावादतिदेशहेतोः परिहरणीयत्वाच्च तदयुक्तं, न हि लोकापत्तिरित्यस्यैवार्थमाहुः, "असौ वै लोकोऽग्निरि"त्यत्र न ह्यग्नेर्लोकस्वरूपतापत्तिरिति ततोऽपि पूर्वदृष्टान्तस्योपपादकत्वं युक्तं, हि-शब्दस्वारस्यात् परेणेत्यत्र ताद्विध्यं त्रिआविधित्वमिति व्याख्यातं तस्याप्रकृतत्वेन तच्छब्दोपस्थाप्यत्वायोगात् तदयुक्तम् ॥ लिङ्गभूयस्त्वाधिकरणं समाप्तम् ॥

पूर्वविकल्पाधिकरणम् ।

**सू० पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥**

भा० वाजसनेयकेऽग्निरहस्ये मनश्चितादयोऽग्नयः श्रूयन्ते "म-

नश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित" इति, तत्र संशयः किमेते मनश्चितादयः साम्पादिकत्वेन विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः ? आहोस्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवे ? ति विशये क्रियारूपत्वं तावदाह पूर्वविकल्प इत्यादिना, चित्याग्नित्वेन सम्पादितानामेषां मनश्चितादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वरूपे क्रतुविध्यभावात् पूर्वचासदा इदमग्र आसीत् इत्यादिनेष्टकचितस्याग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तच्च-

टी० सू· पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥ प्रकरणात् बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम्, इह तु प्रकरणस्य बाधकाभावान्मनश्चितादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः; सौत्रनिर्देशानुरोधेन क्रियारूपा विद्यारूपा इति निर्दिष्टं, तद्विवरणं क्रियामयक्रत्वनुप्रवेशेन विद्यामयक्रत्वनुप्रवेशेनेति च मनश्चितादीनां स्वरूपस्य विद्यारूपत्वे हि न विप्रतिपत्तिः, अङ्गद्वारा विद्यारूपत्वे तु विप्रतिपत्तिः अतः सूत्रे क्रियाशब्दो लाक्षणिकः क्रियामयक्रत्वङ्गतया क्रियास्तत्संबन्धिन इत्यर्थः । किं मनश्चितादयः क्रियामयक्रत्वन्वयिन ? उत विद्यामयक्रत्वन्वयिनः ? किमिष्टकचिताग्निद्वारा संनिहितक्रियामयक्रतौ एषां विनियोगोऽस्ति ने ? ति, किं श्रुतिलिङ्गवाक्यैर्विद्यामयक्रतौ विनियोगोऽवगम्यते ? उत नेति ? किमनुबन्धादिभिरतिदिष्टफलान्वयाच्च विद्याविधिः कल्प्यः ? उत ने ? ति, अकल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगायोगात् प्रकरणविनियोगेन क्रियामयक्रत्वन्वयिनः स्युः, विधेः कल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगात् प्रकरणस्य दुर्बलत्वाच्च विद्यामयक्रत्वन्वयिनः स्युः, होमस्थानत्वादग्नि-शब्देन निर्देशः, न हि

होमस्थानत्वमात्रेण क्रत्वनुप्रवेश इति तद्व्यावृत्त्यर्थं चित्याग्नित्वेनेत्युक्तम्, इष्टकचिताग्निः प्रकृतः स्यात्ततः किं क्रियामयक्रत्वनुप्रवेशस्येत्यत्राह "तस्य चे"ति, ।

सू० क्रतुसन्निधानात् तत्प्रकरणगृहीता मनश्चिताद्यः तेनेष्टकचितेनाग्निना विकल्प्यमानाः क्रियारूपा एव स्युः । विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते, यथा द्वादशाहे अविवाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वं, तथेहापि ॥

## सू० अतिदेशाच्च ॥ ४५ ॥

इतश्चेष्टकचितेनाग्निना मनश्चितादीनां विकल्पः क्रियारूपत्वं चावगम्यते, तेषामेकैक एव तावान् यावानसौ पूर्व इति पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चितादिष्वतिदिश्यते तेन तुल्यकार्यत्वाद्विकल्पः, ततश्चेष्टकचितवत्क्रतुनिर्वर्त्तनेन तदङ्गभूता मनश्चिताद्यः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एवेत्येवं प्राप्ते प्रचक्ष्महे—

## सू० विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

तु—शब्दः पक्षं व्यावर्त्तयति, यदुक्तं मनश्चिताद्यः क्रियामयक्रत्वनुप्रवेशेन क्रिया[1]मया एवेति नैतदस्ति विद्यारूपा एवैते विद्यारूपक्रत्वन्वयिन इत्यर्थः । कुतः निर्धारणाद्दर्श-

१ क्रियारूपापयेवेति पाठान्तरं युक्तमीक्षामहे पा० ।

नाच्च, निर्धारणं तावत् "ते हैते विद्याचित एव विद्यया हैवैते एवं विदश्चिता भवन्ती"ति वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि विद्याचित एव विद्यया हैवैते इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थम् इति निश्चीयते ॥

टी० क्रतुमच्चिधानं बुद्धिस्थत्वं सम्पादितानां तथात्वेनानुसंहितानामित्यर्थः, इष्टकाचिताग्न्यङ्गकत्वेन मनश्चितादिनिरपेक्षत्वात् नैषां क्रियामयक्रत्वनुप्रवेश इत्यत्राह "विकल्पमाना"इति, विद्यारूपाणां क्रियामयक्रत्वनुप्रवेशः कथमित्यत्राह "विद्यारूपाणामपी"ति, ग्रहः—पात्रविशेषः । तस्य विद्यारूपत्वमुपपादयति "यथे"ति, विवाक्ये -विगतवाक्ये । यद्वा अविवाक्ये—विविधवाक्यरहिते मनोनिष्पाद्योपयोगित्वेन ग्रहस्य मानसत्वं, न हि स्वरूपेण विद्यते ॥ सू· अतिदेशाच्च ॥ ४५ ॥ वीर्यं कार्यकरत्वसामर्थ्यमङ्गमुपकारकं कुर्वन्तो मनश्चितादयोऽङ्गानि इत्यत्राह "तत्रश्चे"ति, एवं प्राप्त इति सू० विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥ विद्यारूपक्रत्वन्वयिन इति सूत्रे विद्या—शब्दो लाक्षणिक इत्यर्थः । विद्याचित एवेत्येतच्छ्रुतिरेवोपपादयति "विद्यया हैवैत" इति, दर्शनाच्चेति सूत्रखण्डं व्याचष्टे—

श्रु० दृश्यते चार्थैषां शेषो विद्यारूपः क्रतुः ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन् मनसा पश्यति यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत इति, इष्टकाचितेष्वग्निषु यत्क्रियामयं यज्ञियं कर्म क्रियते तन्मनोनिर्वर्त्येषु मनश्चिताद्य-

ग्निषु मनोमयमेवाक्रियते" ति वचनात्, क्रतुरपि विद्यामयोऽच प्रतीयते। नन्वच विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्चेष्टकचिताग्न्युस्थापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्याङ्गत्वमेषां बाध्येत, नेत्याह—

**सू० श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥**

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते, श्रुतिस्तावत् "ते हैते विद्याचित एवे"ति तान् विद्योति विद्यया हैवैत एवं विदश्चिता भवन्ती"ति, विद्यया—विद्यामयेन क्रतुना सम्बद्धा मनश्चिताद्यश्चिता भवन्तीत्यर्थः, तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते" इति लिङ्गं, वाक्यं च "एवंविदे चिन्वन्ती"ति, समभिव्याहारोवाक्यम् एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि विचिन्वन्तीत्यर्थः ॥

टी० दृश्यते चेत्यादिना, मनसैवेति एषु मनश्चितादिषु यत् किञ्च यज्ञे कर्म क्रियते प्रधानभूतं कर्म क्रियते यत् किञ्च यज्ञियं कर्म अङ्गभूतं कर्मेत्यर्थः । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, विधिपदाश्रवणेऽपि फलसम्बन्धे सति विधिः कल्प्यते सोऽपि नास्तीत्याह "फलसम्बन्धाप्रतीतेश्चे"ति, सू० श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥ विद्ययेति प्रयोजनतया हेतुः विद्यामयक्रतुसम्बन्धेन तन्निर्वर्तनार्थमित्यर्थः । वाक्यत्वमुपपादयति "समभिव्याहार"इति, यथोक्तविद्यामयक्रतुमतः पुरुषस्य कृते हि एतानग्नीन् सर्वभूतानि चिन्वन्ति इत्यर्थः । लिङ्गत्वमुपपादयति ।

सू० सर्वभूतकर्तृकं सर्वकालव्यापिचयनं मनसा सम्पादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशासम्भवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति, यत्त्वेदमुक्तं विधिप्रत्ययाश्रवणात् फलसंबन्धाप्रतीतेश्च क्रियामयात्क्रतोरन्योऽत्र विद्यामयः क्रतुर्न सम्भवतीति तत्राह—

## सू० अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥

इष्टकाचितादग्न्यधिनः क्रियामयात्क्रतोर्विद्यामयोऽयं क्रतुः पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते, अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः । मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन्नित्यादिना प्रतिपादिताः, आदि-शब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते, श्रुतिलिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञाऽन्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते एवमयमपि, एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते दृष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः तदुक्तं "वचनानि त्वपूर्वत्वा"दिति फलं च तेषामेवैकैक एव तावान् यावानसौ पूर्व इत्यतिदेशात्, स्वक्रतुद्वारेणेष्टकाचितस्याग्नेर्यत्फलं तदेव मनश्चितादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥

टी० "सर्वभूते"ति, सर्वभूतकर्तृकत्वेन सर्वकालव्यापित्वेन च मनसाऽनुसंहितस्य चयनस्य परिमितकालकर्तृक्रियामयेष्टकाचिततुल्य...ये-तया क्रत्वनुप्रवेशासम्भवो विद्यामयक्रत्वनुप्रवेशे लिङ्गमित्यर्थः । विद्यामयः क्रतुः सर्वकालवर्त्तित्वेन सर्वभूतकर्तृकत्वेचानुसन्धीयते, अतस्तादृशं चयनन्तादृशक्रत्वयीति भावः ।° अनन्तरसूत्रमवतारयितुं पूर्वमुक्तं पूर्वपक्षहेतुमनुवदति "यच्चेदमि"ति, । सू० अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥ दृष्टश्चानुवादमत्स्वपेष्विति फलसम्बन्धश्रवणाद्विधिकल्पनं श्रुतहानप्रसङ्गभयाद्धि, क्रियते तदत्रापि तुल्यं, सानुबन्धैः श्रुत्यादिभिर्विद्यामयक्रतोरवगतत्वात् श्रुतहानप्रसङ्गपरिहारार्थं विधिः कल्प्यत इति भावः । किञ्च अधिकं फलश्रवणमस्तीत्याह "फलं चे"ति, इष्टकाचितस्याग्नेर्यत्फलमिति फलकामनया कृतं चेत् तत्फलावाप्तिः, अन्यथा चेन्मुक्तिः फलमिति भावः । अनन्तरसूत्रशङ्कामाह–

सू० यत्पुनरतिदेशेन तुल्य[1]वीर्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तं तत्राह–

## सू० न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

नावश्यमतिदेशाद्वान्तरव्यापारस्यापि तुल्यतया भवितव्यं येन क्रियामयक्रत्वनुप्रवेश एषां स्यात्, यस्मात् यस्मात्कस्माच्चित्सामान्यमात्रादतिदेशोपलब्धेः, उपलभ्यते हि "स एष एव मृत्युर्य एतस्मिन्मण्डले पुरुष" इत्यादिषु संहर्तृत्वादिसामान्यमात्रातिदेशः, न हि तत्र मण्डलपुरुषस्य मृत्युवत्तल्लोकापत्तिस्तद्देशप्राप्तिरपि भवति, एवमिहापि मनश्चितादीनामिष्टकाचिताग्निवद्भावातिदे-

[1] तुल्यकार्यत्वावगमादिति पा० ।

श्रमाचेष्टेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम्, अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलं तदेव मनश्चितादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥

## सू० परेण च-शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेनान्यापि मनश्चिताद्यभिधायिनः शब्दस्य ताद्विध्यं-तद्विधत्वं,विद्यामयप्रतिपादित्वमवगम्यते, परेण हि ब्राह्मणेन "अयं वाव लोक एषोऽग्निश्चितस्तस्याप एव परिश्रिता इत्यादिना स यो हैतदेवं वेद लोकं पृणानमेनं भूतमेतत्सर्वमभिसम्पद्यत इति पृथक्फला विद्यैव विधीयते, तथा वैश्वानरविद्यादौ विद्यैव विधीयते, अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति, एवं तर्हि विद्यामयामनश्चितादयो बृहदारण्यकेऽनुबन्द्धव्याः किमर्थमिहानुबध्यन्ते तत्रोच्यते भूयस्त्वात्त्वनुबन्ध इति, मनश्चितादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात्तत्सन्निधाविहानुबन्धः कृतः ॥ पूर्वविकल्पाधिकरणं समाप्तम् ॥

"यत्पुनरि"ति, सू० न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥ अवान्तरव्यापारस्य क्रियामयक्रत्वनुप्रवेशस्येत्यर्थः । तल्लोकापत्तिरिति व्याख्येयं पदं, तच्छब्दः पूरकतयाऽध्याहृतः । तद्व्याचष्टे "तद्देशप्राप्तिरि"ति, अग्निवद्भावातिदेशमात्रेण अग्निवद्भावः-अग्नितुल्यत्वम् इष्टकाचिताग्निदेशरूपेति, देशः-आश्रयः अङ्गस्याश्रयोऽङ्गी इष्टकाचिताग्न्याद्गिरूपेत्यर्थः । एवं प्रकरणादपि प्रबलैः श्रुत्यादिभिर्विद्यामयक्र-

त्वङ्गत्वमुक्तम् । अथ प्रकारेणेनाप्ययमर्थउपपाद्यते । सू० परेण च–शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥ "एष लोको भूः आपस्समुद्राः परिवृताः परिस्तरणानि एतं लोकं पृणानं, पृ पालनपूरणयोः पूरयन्तं भुवं एतदेवं वेद लिङ्गव्यत्ययः एतमग्निं वेदेत्यर्थः । पूर्वविकल्पाधिकरणं समाप्तम् ॥

शरीरे भावाधिकरणम् ।

## सू० एक आत्मनः शरीरे भावात् ॥ ५१ ॥

वृ० सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तं, त्रयाणामेव चैवमुपन्यासः प्रश्नश्चेति, वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानमा"त्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति किमयं प्रत्यगात्मा ज्ञाता कर्त्ता भोक्तेत्यामुत्र संचारक्षमोऽनुसंन्धेयः ? उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः ? किं युक्तम्, ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते, कुतः अस्योपासकस्यात्मनः शरीरे भावात्, आत्मनः शरीरे वर्त्तमानस्य तादृशमेव रूपं तावतैवानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च, न हि कर्मस्वधिकृतानां स्वर्गादिफलार्थिना ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपं तादृशं रूपं साधनानुष्ठानदशायामनुसन्धातव्यं तावतैव साधनानुष्ठानतत्फलयोः सिद्धेरतिरिक्तानुसन्धाने प्रयोजनाभावात्तदविशेषादिहापि तथैव । ननु चात्र "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति विशेषवचनादपहतपाप्मत्वाद्याकार एवानुसन्धातव्य इत्यवगम्यते ॥

टी० सू० एक आत्मनः शरीरे भावात् ॥ ५१ ॥ पूर्वाधिकरणं प्रासङ्गिकम्, अतस्तत्पूर्वाधिकरणेन सङ्गतिः तत्र सर्वविद्यासु भगवत एवोपास्यत्वमुक्तं, तथा प्रत्यगात्माऽप्यनुसन्धेय इति सङ्गतिः सर्वास्वित्यादिना सूचिता, त्रयाणामित्यादिसूत्रे त्रयाणामिति पदमुपायोपेयोपेतृपरं व्याख्यातं भाष्ये, दीपसारयोरुपास्योपासकोपासनपरं व्याख्यातम् । एतदभिप्रायेणाह "सर्वास्वि"ति, सिद्धान्ते प्रत्यगात्मन उपास्यकोटिनिक्षेपस्य वक्ष्यमाणत्वात् तदुपयोगित्वेनाह "वक्ष्यति चे"ति, सूत्रद्वयोक्तार्थोपजीवनेनेदमधिकरणं प्रवर्त्तत इत्यर्थः । परमात्मशरीरत्वेनानुसन्धेयः प्रत्यगात्मा किं ज्ञातृत्वकर्तृत्वभोक्तृत्वमात्राकारोऽनुसन्धेयः? उतापहतपाप्मत्वाद्याकारः? किं यथाक्रतुरिति यथोपासनप्राप्तिवचनं परविषयम्? उत प्रत्यगात्मविषयमपि भवती? ति, तं यथायथोपासत इति तच्छब्दः किं परमात्मपरः? उत जीवशरीरकपरमात्मपर? इति परमात्ममात्रपरत्वे यथोपासनप्राप्तिवचनस्य परविषयत्वात् ज्ञातृत्वादिमात्राकारेण प्रत्यगात्माऽनुसंन्धेयः स्यात्, जीवशरीरकपरमात्मपरत्वे यथा क्रतुरिति श्रुतेर्विशेषणभूतजीवांशविषयत्वस्यापि सम्भवात् अपहतपाप्मत्वाद्याकारोऽनुसन्धेयः स्यात् शरीरस्थस्य रूपं तादृशमस्तु ततः किं तथाऽनुसन्धानस्येत्यत्राह "तावते"ति, फलसिद्ध्युपपत्तिं दर्शयति "न ही"ति, तावता फलसिद्ध्यनुपपत्तिमुखेन चोदयति "ननु चे"ति, विषयव्यवस्थया परिहरति—

श्रु० नैवं "तं यथा यथोपासत" इत्युपास्यविषयत्वात्तस्येत्येवं प्राप्ते प्रचक्ष्महे ॥

## सू० व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

न त्वेतदस्ति यज्ज्ञातृत्वाद्याकार एवानुसन्धेय इति, आत्मनः संसारदशायां मोक्षदशायां योऽतिरेकः सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः । अस्य मोक्षदशायां

यादृशं रूपं तादृगरूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः । कुतः तद्भावभावित्वात्तद्रूपापत्तेर्यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथा यथोपासते तथैव भवती"ति यथोपासनमेव हि प्राप्तिः श्रूयते, न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात्, अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य तथा रूपमेव प्राप्यमित्युक्तं भवति, अत एवैवं क्रतुरिहाऽमुं लोकं प्रेत्याऽभिसम्भावितास्मी"त्युच्यते, तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः । उपलब्धिवत्–ब्रह्मोपलब्धिवत्, यथा ब्रह्मोपलब्धिर्विहिता यथाऽवस्थितब्रह्मस्वरूपविषया तथाऽऽत्मोपलब्धिरपि यथाऽवस्थितात्मस्वरूपविषयेत्यर्थः । कर्मस्वात्मस्वरूपानुसन्धानं कर्माङ्गं, "यजेत स्वर्गकाम" इति कर्मानुष्ठानमेव हि फलाय चोद्यते, देहाद्यतिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसधानकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम् ॥ शरीरे भावाधिकरणं समाप्तम् ॥

टी० "नैव"मिति, एवं प्राप्त इति । सू० व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥ व्यतिरेक इत्युक्ते धर्ममात्रस्यानुसन्धेयत्वशङ्कानिवृत्त्यर्थमाह "अस्य मोक्षदशाया"मिति, तद्भावभावित्वात् तद्रूपापत्तेरिति, अपहतपाप्मत्वादिरूपापत्तेः तथाऽनुसन्धानसद्भावभावित्वादित्यर्थः । न चेत्यादि यथोपासनफलश्रुतिर्न विशेष्यमात्रविषया अपि तु

विशिष्टविषयेत्यर्थः । फलितमर्थमाह "अत" इति, तस्मात् ब्रह्मगुणानामिव शुद्धस्वरूपस्यापि ब्रह्मविशेषणत्वात्तदनुसन्धेयमित्यर्थः । तं यथा यथोपासत इत्यत्र तच्छब्दो विशिष्टविषय इति भावः । अत एवेति प्राप्याकारस्यानुसन्धेयत्वादेव हि प्राप्यचिन्तनमुच्यत इत्यर्थः । परे चापरे च देहात्मभेदसमर्थनपरमधिकरणं व्याचक्षते, तदयुक्तं पादसङ्गत्यभावात्, उपासनेषु गुणोपसंहारानुपसंहारचिन्तनं हि पादकृत्यं प्रासङ्गिकचिन्तनमपि शास्त्रारम्भे करणीयं देहस्यैवात्मत्वे शास्त्रस्यानारम्भणीयत्वात्। ये पुनः साधनचतुष्टयं पूर्ववृत्तं वदन्ति, तेषामथातो ब्रह्मजिज्ञासेत्यस्मात्पूर्वमेव निवेशनीयं देहोत्तीर्णनित्यात्मविवेकस्य नित्यावस्तुविवेकान्तर्गतत्वादिहामुत्र फलभोगविरागमुमुक्षुत्वयोस्तन्मूलत्वाच्च, ऐकशास्त्र्यं वदतामपि धर्मजिज्ञासायाः पूर्वमेव देहात्मविवेकः प्रसजेदिति चेत् न माणवकहितैषिभिः पित्रादिभिरध्ययने कारिते सत्यपातप्रतीत्यवगतविलक्षणस्वर्गादिफलरागात् नित्यानित्यसन्देहेऽपि तदुपपत्त्यनुपपत्तिनिरूपणाय स्वयमेव शास्त्रप्रवृत्त्युपपत्तेर्देहव्यतिरेकनिश्चयानपेक्षत्वात्, प्रवृत्तस्य च देहातिरेकनिश्चयो भवत्येव "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेती" त्यत्रलोकान्तरप्राप्तुरात्मनो देहातिरेकस्यापि निरूपितत्वात्, "शारीरके वक्ष्याम" इति वृत्तिकारोक्तिस्तु न देहातिरेकमात्राभिप्राया किन्तु जडत्वज्ञानात्मकत्वस्थूलत्वविभुत्वाणुत्वाद्याकारविषया मन्तव्या । अन्ये तु ब्रह्माहमस्मीत्युपासने स्थूलत्वाद्याकारोऽहं ब्रह्मेत्येवमनुसन्धेयं मानसप्रतिपत्तेर्दृष्टसजातीयाकाराविकल्पितविषयत्वनियमात् स्वर्णमात्रमित्युक्तेऽपि कुण्डलत्रिकोणचतुरस्राद्याकारेण विना स्वर्णप्रतीत्यनुपपत्तेः, नीरूपं ब्रह्मेत्युक्तेऽपि दीपादिवन्नीलपीताद्यवच्छेदेन विना प्रतीत्यनुपपत्तेश्च, स्थूलत्वाद्याकारेण[1] विरहेणात्मप्रतिपत्तेर्विधातुमशक्यत्वादिति पूर्वपक्षं कृत्वा देहातिरेकः प्रतिपत्तव्यः, "तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकामित्यादिशास्त्रप्रवृत्तेः शरीरव्यतिरेकभावभावित्वात्! न च निराकारप्रतीत्यनुपपत्तिः, सत्त्वमसत्त्वं वा कश्चन नीलपीताद्याकारमवर्जनीयं मनः

१ स्थूलत्वाद्याकारेण विनेति पा० ।

स्वयमेव वक्ष्यति, न च मिथ्याप्रतिपत्तिर्दोषः अन्यथा तत्प्रतीत्यनुपपत्तेः, अङ्गुष्ठमात्रो रवितुल्यरूप इत्यादिकाराश्च शास्त्रोपदिष्टः परस्य च महारजनाद्याकारोपदेशात् जीवस्यापि तुल्यस्वभावत्वात् तादात्म्यध्यानसौकर्याय तथाऽनुसन्धेयः सम्भूत्युपासनेषु विनाशोपासनेष्वस्तित्वमुभयोराकारः, अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोरिति श्रवणात्, अतो देहातिरिक्त आत्मा ब्रह्माऽहमस्मीति प्रतिपत्तव्य इति सिद्धान्तयन्ति, तदयुक्तं स्थूलत्वादिविरहेणापि सुखादिविशिष्टात्मावभासदर्शनादशक्यविधानत्वाप्रसक्तेः, । ननु सुखदुःखादयोऽप्यौपाधिका निरुपाधिकस्वरूपं दुरनुसन्धानमिति चेत् सत्यं, तत् कदेति निरूपणीयं शुभाश्रयध्यानेन मनःपरिशोधनात् पूर्वं हि तत्तदा चाहं ब्रह्मेत्युपासनमविहितम् अशक्यत्वादेव, यदा तु शुभाश्रयसंशीलनपरिशोधितमुपदेशसहकृतं च मनः तदा निरुपाधिकस्वरूपानुसंधानक्षममिति नाशक्यविधिः, अत एव सिद्धान्ते मिथ्याभूतस्य यस्य कस्यचिदाकारस्यावलम्बनेऽपि न दोष इति कल्पनमप्ययुक्तं, नीलपीताद्याकारेणात्मानुसन्धानं परिशुद्धात्मसाक्षात्कारस्य न दृष्टोपकारकं विरुद्धत्वात्, अदृष्टोपकारकत्वं तु निष्प्रमाणकं, रवितुल्यरूपतोक्तिः प्रकाशस्वरूपताऽभिप्राय "यथा प्रकाशयत्येक" इति व्याख्यातत्वात्, यदि तत्किञ्चिन्नीलपीताद्याकारावलम्बनेन चिन्त्यमिति सिद्धान्तः तर्हि पूर्वपक्षसिद्धान्तयोरवैषम्यमेव स्यात्, महारजनाद्याकारेण तादात्म्यानुसन्धानमप्ययुक्तं तस्येश्वराकारत्वात्, घटशरावयोरिव तुल्यरूपयोर्देवदत्तयज्ञदत्तयोरिव च जीवेश्वरयोस्तादात्म्यानुपपत्तेः, सम्भूत्युपासने विनाशोपासने चास्तित्वमुभयोराकार इत्यपि दुरुक्तं, जीवब्रह्मतादात्म्यज्ञानस्य जडजीवतादात्म्यानुसन्धानस्य च वैषम्याभावात्, आधारणाकारानुसन्धाने हि वैषम्यसिद्धिः, सत्ता च सर्वसाधारणी, सदस्मीत्यनुसन्धाने च शास्त्रवैयर्थ्यं न ह्यसदस्मीति कश्चिदात्मानं जानाति, असाधारणाकारानुसन्धाने च भेद एवानुसंहितः स्यात्, न तु तादात्म्यम्, साधारणाकारप्रतिपन्नयोर्जीवपरयोः साधारणाकारानुसन्धानमेव तादात्म्यप्रतिपत्तिरिति चेत्तर्हि खण्डो मुण्डो गौरितिवदेकजातीयत्वमेवानुसंहितं स्यात्,

ततश्च तादात्म्यविधानवैयर्थ्यं, न हि साधारणाकारविधुरं किञ्चित् द्रव्यमस्ति "अस्तीत्येवोपलब्धव्य" इति श्रुतिस्तु जन्मादिभावविकारराहित्यविषया न तु सन्मात्रं ब्रह्मेत्येवं परा, अतो यथाभाष्यमेवाधिकरणं युक्तम् ॥ शरीरे भावाधिकरणं समाप्तम् ॥

अङ्गावबद्धाधिकरणम् । **सू० अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥**

**भू० "ओमित्येतदक्षरमुद्गीथमुपासीत लोकेषु पञ्चविधं सामोपासीत उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वा लोक एषोऽग्निर्नचित" इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति ताः किं यासु शाखासु श्रूयन्ते तास्वेव नियताः? उत सर्वासु शाखासु उद्गीथादिषु सम्बध्यन्त इति विचारः ॥**

टी० सू० अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥ यत्र यत्र ब्रह्मण उपास्यत्वं तत्र तत्र शुद्धस्य जीवस्योपास्यत्वमुक्तम्, एवं यत्र यत्र शाखासूद्गीथाद्यनुप्रवेशः तत्र तत्र सर्वत्रउद्गीथाद्युपासनानुप्रवेशोऽस्ति न वेति शङ्कया संगतिः, उद्गीथाद्युपासनानि किं प्रतिशाखं व्यवतिष्ठेरन्? उत ने? ति, उद्गीथमुपासीतेत्युद्गीथ–शब्दः किमुद्गीथमात्रे वर्त्तते? उत स्वरादिभेदभिन्नोद्गीथे? किं स्वरादिविशेषविशिष्टोद्गीथव्यक्तेः, सन्निधिः? उत सर्वोद्गीथव्यक्तीनां संनिधि? रिति व्यक्तिविशेषस्य संनिधिश्चेत् तस्येवोद्गीथ–शब्दवाच्यत्वात् तत्तच्छाखाविशेषेषूपासनव्यवस्था, सर्वव्यक्तिसंनिधिश्चेदुद्गीथ–शब्दस्य उद्गीथमात्रवाचित्वात्तद्विषयोपासनानि न व्यवतिष्ठन्त इति अधिकरणारम्भाक्षेपशङ्कां परिहरति–

**भू० सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्र तत्र व्यवतिष्ठेरन्निति युक्ता**

शङ्का, किं युक्तं व्यवतिष्ठेरन्निति, कुतः उद्गीथमुपासीतेति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य सन्निधानात्तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति, इत्येवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्नित्येवं प्राप्ते प्रचक्ष्महे अङ्गावबद्धास्त्विति, तु-शब्दः पक्षं व्यावर्त्तयति, न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन् अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः हि-शब्दो हेतौ, यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धास्तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन् । यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद् व्यवस्थायां प्रमाणमस्ति, सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः, अतः सर्वासु शाखास्वेकस्य क्रतोः सन्निधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि सन्निहिता इति नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था ॥

टी० "सर्ववेदान्ते"ति, यथा कर्म चोपासनं च सर्वशाखास्वेकं तथोद्गीथस्याप्येकत्वात् सर्वत्रोद्गीथानुसारेण प्राप्नुवन्त्युपासनानीत्यधिकरणारम्भाक्षेपः । उद्गीथादीनां स्वरभेदेन व्यक्तिभेदात् तत्तत्स्वरविशेषविशिष्टव्यक्तिविषया उपासना? उत सर्वोद्गीथव्यक्तिविषया? इति संशयः स्यादित्याक्षेपसमाधिरित्यर्थः तस्मिन्नेव विशेष इति लोके गामानयेत्यादिषु सामान्यशब्दानां व्यक्ति[1]विशेषपर्यन्तत्वदर्शनादिति भावः । एवं

१ सन्निहितविशेषपर्यन्तत्वादिति पा० ।

प्राप्ता इति यस्मात् श्रुत्यैवोद्गीथाद्यङ्गमात्रविषयाः प्रतीयन्त इति तस्मादित्यर्थः । पूर्वपक्षयुक्तिमनूद्य प्रतिवक्ति "यद्यपी"ति, न क्वचिद्व्यवस्थायां प्रमाणमस्तीति, गामानयेत्यादिषु सर्वव्यक्तीनामानयनायोग्यत्वं व्यक्तिविशेषे शब्दस्य व्यवस्थापकं न त्वसन्निधिः सामान्येन व्यक्तीनां धीस्थत्वात्, धीस्थत्वं हि सन्निधिः, अत्र तु तादृशायोग्यत्वादिव्यवस्थापकाभावात् शब्दस्य स्वतःप्राप्तं सर्वव्यक्तिविषयत्वं तिष्ठतीति भावः । सन्निहिताः—बुद्धिस्थाः, अनेन सन्निधेर्व्यवस्थापकत्वमपास्तं निरङ्कुशया शब्दशक्त्या सर्वव्यक्तीनां बुद्धिस्थत्वात् । अथार्थस्वभावादपि सर्वोद्गीथव्यक्तिसन्निधिमाह "सर्वशाखाप्रत्यये"ति, अङ्गिनस्सन्निधानादङ्गान्यपि सन्निहितानि भवन्ति इत्यर्थः ॥

## सू० मन्त्रादिवद्वा विरोधः ॥ ५४ ॥

मू० वा–शब्दश्चार्थे, आदि–शब्देन जातिगुणसंख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते, यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते तद्वदिहाप्यविरोधः ॥ अङ्गावबद्धाधिकरणं समाप्तम् ।

भूमज्यायस्त्वाधिकरणम् ।

## सू० भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

"प्राचीनशाल औपमन्यव इत्यारभ्य वैश्वानरविद्याऽऽम्नाता तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः अतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः, तत्र च द्यौर्मूर्द्धा आदित्यश्चक्षुर्वायुः प्राणः आकाशः सन्देहोमध्यकाय इत्यर्थः, आपो वस्तिः पृथिवी पादावित्यवयवविशेषाः, तत्र संशयः किमस्य त्रैलोक्यशरीरस्य व्यस्तस्यो-